# धर्मशास्त्रशब्दकोष:

(न-ह)

ग्रन्थकार:

राष्ट्रपतिसम्मानित: पण्डितश्रीकुलमणिमिश्रशर्मा

## द्वितीयभाग:





ISSAN ORIENTAL TEXT SERIES—(SANSKRIT)—19

# DHARMASASTRASABDAKOSA

( NA—HA )

by

PANDITA SRI KULAMANI MISHRA SHARMA
SAHITYA-DHARMASASTRACHARYA-VEDA SHASTRI
PRAKTANA-DHARMASASTRADHYAPAKA
SRI SADASIVA KENDRIYA SANSKRIT VIDYAPITHA, PURI,

Vol. II

Edited by
SRI BHAGABAN PANDA, M.A. Ph.D
SAHITYACHARYA
Editor,

DIRECTORATE OF TOURISM, SPORTS AND CULTURE
ORISSA. BHUBANESWAR

उत्कलीय-प्राच्यग्रन्थमाला—(संस्कृतम्)-१९

# धर्मशास्त्रशब्दकोषः

(न-ह)


ग्रन्थकारः

पण्डितश्रीकुञ्जमणिमिश्रशर्मा

साहित्य-धर्मशास्त्राचार्य्य-वेदशास्त्री

प्राक्तन-धर्मशास्त्राध्यापकः

श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठः, पुरी


द्वितीयो भागः


सम्पादकः,

श्रीभगवान्पण्डाशर्मा, एम्° ए°, पि° एच्° डि.

साहित्याचार्य्यः



ओड़िशा–राज्य-पर्य्यटनक्रीड़ासंस्कृतिनिर्देशालयः,

भुवनेश्वरम्

# पूर्णाहुतिः

शब्दब्रह्म-परंब्रह्मणोर्वाचकवाच्यसम्बन्धः प्राग्व्याहृतौ प्रतिपादितः । तत्रादौ वाच्यं ब्रह्म नित्यं सत्यमनन्तमिति वेदान्तिनः । तच्च श्रुत्या प्रतिपादितम् । सत्यं ज्ञानमनन्तं ब्रह्मेति हि तैत्तिरीया श्रुतिः (२-१-२) तद्वाचकं ब्रह्म वेदः अक्षरसमाम्नायरूपः । तस्य नित्यतायां मीमांसकाः प्रमाणम् । वाच्यस्य वाचकस्य वाच्य-वाचकसम्बन्धस्य चेति त्रितयस्य नित्यत्वमिति शाब्दिकाः तदुक्तं वाक्यपदीये—

नित्याः शब्दार्थसम्बन्धास्तत्राम्नाता महर्षिभिः ।

सूत्राणामनुतन्त्राणां भाष्याणां च प्रणेतृभिः ॥ (१-२३) इति,

तदेव वाच्यं ब्रह्म अवस्थाभेदेन भिद्यते । तदेव कारणावस्थायां सूक्ष्ममग्राह्यं विभु । तदुक्तं कठश्रुतौ (१-३-१५)

अशब्दमस्पर्शमरूपमव्ययं तथा रसं नित्यमगन्धवच्च यत् ।

अनाद्यनन्तं महतः परं ध्रुवं विचार्य्य तन्मृत्युमुखात् प्रमुच्यते ॥ इति

तदेव ब्रह्म कारणावस्थायामरूपमपि कार्यावस्थायां सरूपं भवति ॥ तदुक्तं योगीश्वरेण (३-६६)—

निमित्तमक्षरः कर्त्ता बोद्धा ब्रह्म गुणी वशी ।

अजः शरीरग्रहणात् स जात इति कीर्त्यते ॥ इति कार्यावस्थायां तत् व्याकृतं भवति । तत्रापि शरीरशरीरिभेदेन तत् द्विधा भवति । अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ॥ इति छान्दोग्यश्रुतिः (६-३-२) तदेव स्पष्टयति । अतएव प्रपञ्चसमुदायोपि ब्रह्मैव ॥ तच्च पुरुषसूक्तेन प्रतिपादितं सहस्रशीर्षा पुरुष इत्यादिना । संसारे वर्त्तमानानां सर्वेषां शिरांसि एव परमपुरुषस्य भगवतः परब्रह्म ऐव शिरांसि । तथैव सर्वेषां नयनानि तस्यैव नयनानि ॥ रुद्राध्याये च नमो हिरण्यबाहवे इत्यादिना भगवतः विविधाः प्रकाराः विविधाश्च अवस्थाः समाम्नाताः । तदेवहि तस्य स्थूलं रूपम । भगवद्गीतायां विश्वरूपवर्णनेन तच्चानूदितम् ॥ ब्रह्मणस्तदेव स्थूलं रूपं क्षरं परिच्छिन्नं महतो महीयान् (श्वेता॰, ३-२०) इति शब्द्यते ॥ तद्वारकं तदन्तःपाति परिछिन्नमपि अक्षरं भवति । तस्य अक्षरत्वंच अन्तवन्त इमे देहा नित्यस्योक्ता शरीरिणः । अनाशिनोऽप्रमेयस्य इति (गीता २-१८)

न जायते म्रियते वा कदाचिन्नायं भूत्वाऽभविता वा न भूयः ।

अजो नित्यो शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे ॥ (गीता २ २०)

इत्यादिना प्रतिपादितम् । एतच्च अक्षरत्वं तस्य आपेक्षिकम् । तदुभयविलक्षणं क्षयोदयरहितं त्रिकालाबाध्यं यत् तत् पुरुषोत्तम इत्युच्यते पुराणाचार्यैः । श्रुतौ च स अमृतत्वस्येशानो इत्याम्नायते । तद् यथा—

पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् ।

उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ (यजुः ३१-२)

इदं दृश्यमानं भूतं भविष्यं सर्वं भगवतः स्थूलं रूपं यच्च क्षरमिति दर्शितम्। यच्च अन्नेन प्राणिभोग्येन कर्मफलेन अतिरोहति शरीराणि धारयति स शरीरी, भगवतः अक्षरं रूपम्। शरीरापेक्षया तस्य स्थायित्वात् स अक्षरः। एतदुभयभिन्नं यत् नित्यं सत्यम् अमृतस्य ईशानः जीवस्य मुक्तिदानसमर्थत्वेन उपास्यं तदेव पुरुषोत्तम इत्युक्तं भगवद्गीतायाम्।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥

उत्तम पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः ॥ १७ ॥

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ इति ( १५-१८ )

स च अपरिच्छिन्नोऽपि त्रिपात् इति श्रूयते । त्रिपादस्यामृतं दिवि इति। तथा त्रिपादूर्ध्वम् उदैत् पुरुषः पादोऽस्येहाऽभवत् पुनरिति । अत्र त्रिपात् इति त्रिगुणः। त्रिगुणत्वं चानाकलनीयत्वम् । दृश्यते हि लोके पृथिव्या उपरि क्षुद्रो भागः शस्योपयोगी तदधो महानंशः शस्यवृक्षाद्युपयोगाय न कल्पते। तथा समुद्रस्य अल्पीयान् भाग आतपशोषित वृष्टिरूपेणागच्छति; सुमहान् भागस्तु क्षयोदयवर्जितो वर्त्तते । तथात्र त्रिपादेकपात्कल्पना ॥

एकमपि तद्ब्रह्म कार्यकारणभेदेन जगद्ब्रह्मभेदेन वा भिद्यते । अत्र सत्ये ब्रह्मणि असतस्य जगत आरोप इति भगवन्तः श्रीशंकराचार्यपादाः । द्वयोरपि नित्यत्वमित्यन्ये ॥ तत्र उभयत्रापि श्रुतिर्लभ्यते। अत्र अद्वैतश्रुतिर्यथा सदेव सौम्येदमग्र आसीदेकमेवाऽद्वितीय (छान्दो ६-२-१) इत्यादिः ॥
द्वैतश्रुतिर्यथा –

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ (ऋक् १-१६४-२०)

श्रुतिद्वैधे उभावपि धर्मावित्याह मनुः—(१-१४)

श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृताविति वाचकं ब्रह्म वेदः । स च नानाभेदविभिन्न इति प्रदर्शितं प्राक् स च वेदो धर्मस्य मूलमिति गौतमः ओं वेदो धर्ममूलम् इति मनुरपि (२-६)

वेदोखिलं धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव चेति ॥

अत्र मनूक्तधर्मलक्षणे वेदानां प्रमुखतया धर्मज्ञापकत्वमुक्तम् । अतएव मनुस्मृतेः प्रामाण्यं द्रढयितुं स स्वयमेवाह (२-७)

य: कश्चित् कस्यचिद्धर्मो मनुना परिकीर्त्तितः ।

स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥ इति

सर्वत्र मनुवचनानां मूले वेदाः सन्त्येव, इत्यस्य श्लोकस्य तात्पर्यम् । वसिष्ठापस्तम्बबौधायनाश्च वहुषु स्थानेषु स्वसूत्रं प्रमाणयितुं मन्त्रानुद्धरन्ति । यथा वसिष्ठः आसुरविवाहमानुषविवाहनाम्नाभिधाय तस्य वैधता-प्रतिपादनाय तस्माद् दुहितृमतेऽधिरथं शतं देयम् । (१-३६) तथा—या पत्यु क्रीता सत्यथान्यैश्चरतीति । (१-३७) श्रुतिद्वयं दर्शयति । एवं विषयान्तरेष्वपि ॥ साकल्येन स विषयभेदेन (५-६) एकोनषष्टि श्रुती-रुदाजहार । तथा बौधयनापस्तम्बावपि श्रुतिमुदाहरतः । अतएव स्मृतेः वेदमूलकतां साधयितुं मुनीनां भूयान् कटाक्षः ॥

वेदविदां मन्वादीनां स्मृतयश्च धर्मे प्रमाणभूताः । तत्र स्मृतयश्चाष्टादश प्रदर्शिताः परिभाषाप्रकाशो-द्धृतप्रयोगपारिजाते—

मनुर्बृहस्पतिर्दक्षो गौतमोऽथ यमोऽङ्गिराः ।

योगीश्वरः प्रचेताश्च शातातपपराशरौ ॥

सवर्त्तोशनसौ शङ्खलिखितावत्रिरेवच ।

विष्ण्वापस्तम्बहारीता धर्मशास्त्रप्रवर्त्तकाः ॥

एते ह्यष्टादश प्रोक्ता मुनयो नियतव्रताः ॥

तत्राप्युपस्मृतयश्चाष्टादश संगृहीता यथा—

जावालिर्नाचिकेतश्च स्कन्दो लौगाक्षिकाश्यपौ ।

व्यासः सनत्कुमारश्च शन्तनुर्जनकस्तथा ॥

व्याघ्रः कात्यायनश्चैव जातूकर्ण्यः कपिञ्जलः ।

बौधायनश्च काणादो विश्वामित्रस्तथैव च ॥

पैठीनसिर्गोभिलश्चेत्युपस्मृतिविधायकाः ॥

एकविंशतिः स्मृतिकारा प्रदर्शितास्तत्रैव—

वसिष्ठो नारदश्चैव सुमन्तुश्च पितामहः ।

विष्णुः कार्ष्णाजिनिः सत्यव्रतो गार्ग्यश्च देवलः ॥

जमदग्निर्भरद्वाजः पुलस्त्यः पुलहः क्रतुः ।

आत्रेयश्च गवेयश्च मरीचिर्वत्स एव च ॥

पारस्करश्चर्ष्यशृङ्गो वैजवापस्तथैव च ।

इत्येते स्मृतिकर्त्तार एकविंशतिरीरिताः । इति (परिभाषाप्रकाशः १८)

एतद्भिन्नान्यपि कानिचित् नामानि आपस्तम्बादिभिः स्मर्यन्ते यानि स्मृतिकाराणां नामानीव आभासन्ते परन्तु तेषां ग्रन्था न दृश्यन्ते । तद्यथा—कण्वः, कौत्सः, वार्ष्यायणिः एकः, कुणिकः, पुष्करसादिः श्वेतकेतुरित्यादयः ॥

स्मृतिस्तु स्वरूपतः पञ्चधा प्रदर्शिता परिभाषाप्रकाशोद्धृते (१६) भविष्ये—

(१) दृष्टार्था तु स्मृतिः काचिद् (२) अदृष्टार्था तथाऽपरा ।

(३) दृष्टाऽदृष्टार्थरूपान्या (४) न्यायमूला तथापरा ॥

(५) अनुनादस्मृतिस्त्वन्या शिष्टैर्दृष्टा तु पञ्चमी ।

सर्वा एता वेदमूला दृष्टार्थाः परिहृत्य तु ॥

अनुनादः—अनुवादः ॥

(१) तत्र दृष्टार्था स्मृतिर्यथा—

षड्गुणस्य प्रयोज्यस्य प्रयोगः कार्यगौरवात् ।

सामादीनामुपायानां योगो व्याससमासतः ॥

अध्यक्षाणां च निक्षेपः कण्टकानां निरूपणम् ।

दृष्टार्थेयं स्मृतिः प्रोक्ता ऋषिभिर्गरुडात्मज ॥

(२) अदृष्टार्था प्रदर्श्यते तत्रैव -

सन्ध्योपास्ति सदा कार्या शुनो मांसं न भक्षयेत् ।

अदृष्टार्था स्मृतिः प्रोक्ता ऋषिभिर्ज्ञानकोविदैः ॥

(३) उभयार्था यथा—

पालाशं धारयेद्दण्डमुभयार्थां विदुर्बुधाः ॥

(४) न्यायमूला यथा—

विरोधे तु विकल्पः स्याज्जपहोमश्रुतौ यथा ।

श्रुतौ दृष्टं यथा कार्यं स्मृतौ तत् तादृशं यदि ॥

(५) अनुवादस्मृतिर्यथा –

अनूक्तवादिनी सा तु पारिव्राज्यं यथा गृहात् ॥

अनूक्तवादिनी—अनूदितवादिनी ।

वेदविदां शीलमपि धर्मे प्रमाणम् । शीलं तु स्वभावः स्वभावस्तु प्रतिव्यक्ति भिद्यते । देश-जाति-कुल-धर्मा आम्नाय विरुद्धा प्रमाणम् (२-२-२०) इति सूत्रमुपनिबध्नता गौतमेन आम्नायविरुद्धं सर्वमप्रमाणमिति स्वमतं स्वकृतीकृतम् । तदनुसारं आम्नायविरुद्धं शीलमप्रमाणमेव ॥

यद्यपि शीलं हारीतोक्तं ब्रह्मण्यता देवपितृभक्तता समता सौम्यताऽपरोपतापिता-ऽनसूयता मृदुता अपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शारण्यता प्रशान्तिशीलचेति त्रयोदशविधं शीलम् परिगणितं तदपि प्रायिकमेव तदन्यथापि सम्भवात् ।

उक्तानि ब्रह्मण्यतादीन्यपि शीलानि आचरणसिद्धत्वेन आचाररूपाण्येव । अतः शीलसदाचार-योर्मध्ये कश्चन भेदोऽवश्यं परिकल्पनीयः । स च भेद इत्थं सम्भवति शीलमैतिहासिकमाचरणम् आचारश्च प्रत्यक्षीभूतस्तात्कालिक इति । सतामाचरणं दृष्ट्वा जनस्तत्र प्रवर्त्तते इति आचारस्य तात्कालिकत्वं न केनापि व्याहन्तुं शक्यते । शीलस्य तात्कालिकत्वे आचारादस्य को नाम भेदः ॥ तदनतिरिक्तत्वे च पुनर्वचनं व्यर्थं स्यात् अतः शीलमप्रत्यक्षीभूतमैतिहासिकमाचरणमित्यवधेयम् । तथा सति तत्प्रतिपादकयोरिति-हासपुराणयोरपि धर्मशास्त्राङ्गत्वमुपपद्यते । तच्चाभिहितं योगीश्वरेण - (१-३)

पुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशेति ॥

अनेन प्रमाणेन पुराणानामपि धर्मप्रतिपादकत्वं सिद्धम् ॥ तत्तुल्यकोटितया इतिहासस्यापि धर्मप्रतिपादकत्वं सिद्धत्येव ॥ प्रतिपादितं चैतन्मया प्रकृते धर्मशास्त्रशब्दकोषे वृत्तप्रधान इतिहासः उपदेशप्रधानं पुराणमिति । इदमस्य तात्पर्यं यत्—इतिहासः सर्वथा इतिवृत्तमेव प्रख्यापयति । सर्वमेवेतिवृत्तं धर्मानुमोदितं भवेदिति नास्ति नियमः । यत्रेतिवृत्तं धर्मं नानुसरति तत्र तत्प्ररोचकवाक्यानि धर्मप्रतिपादकानि न भवन्ति । अतस्ता-दृशानां वचनानां धर्ममूलत्वं नास्त्येव । पुराणानि तु नियततया किमपि वृत्तं न वर्णयन्ति । किन्तु प्रसङ्ग-क्रमेण किमपि तत्त्वं प्रतिपादयितुं किमपि चरितमुपस्थापयन्ति । यथा विष्णुपुराणे यमगीताप्रतिपादनाय कालिङ्गकोपाख्यानस्थापनम् । यथा वा पृथुपस्थानाय वेनकीर्त्तनमित्यादि । एवं वर्त्तनपि यत्र असद्वृत्तं वर्ण्यते न तत् धर्माय । पुनश्चेतिहासपुराणयोः बाहुल्येनार्थवादाः दृश्यन्ते येषां साक्षात् प्रामाण्यमङ्गीकर्त्तुं न शक्यते । यथा भारते पाण्डुं प्रति कुन्त्युक्तौ (१-१२०-३६)

सा तेन सुषुवे देवी शवेन भरतर्षभ ।
त्रीन् शाल्वांश्चतुरो मद्रान्, सुतान् भरतसत्तम ॥

इत्यत्र शवेन सन्तानोत्पादनम् । यथा ब्रह्माण्डे श्राद्धकल्पे दानप्रशंसायां—

तरुणादित्यसंकाशं विमानं हंसवाहनम् । ५ ।
अन्नदो लभते नित्यं कन्याकोटीस्तथैव च ॥ इति ॥

अत्रोक्तः बहुकोटिकन्यालाभः सर्वथा असम्भव इत्यप्रमाणम् । केवलमर्थवादानां स्तावकत्वं प्रत्येतव्यम् । तथाकृत नैव विप्रतिपत्तिः । अतएव पुराणेतिहासयोः वर्णितं शास्त्राविरुद्धं शीलं धर्ममूलम् ॥

धर्मशास्त्रेष्वपि देशकालावस्थाविशेषेण धर्मनिर्णयो विधेय इति मुनीनामुपदेशोऽस्ति—तथाह योगीश्वरः (३-२९३)

देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः ।
प्रायश्चित्तं प्रकल्प्यं स्याद् यत्र चोक्ता न निष्कृतिः ॥ इति ।

एतेन एकस्मिन्नपि विषये अनेके प्रायश्चित्तप्रकारा विषयविशेषमभिलक्ष्य शास्त्रकारैः प्रयुक्ता इति अनुमीयते । यथा एकस्मिन्नपि ब्रह्महत्याविषये मनुना वक्ष्यमाणानि सप्तदश प्रायश्चित्तानि समादिष्टानि—

१ । ब्रह्महा द्वादशसमाः कुटीं कृत्वा वने वसेत् ।
भैक्षाश्चात्मविशुद्ध्यर्थं कृत्वाशवशिरोध्वजम् ॥ ११-७२

२ । लक्ष्यं शस्त्रभृतां वा स्याद् विदुषामिच्छयात्मनः ॥

३ । प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ॥ ७३

४ । यजेत वाश्वमेधेन

५ । स्वर्जिता

६ । गोसवेन वा ।

७/८ अभिजिद्विश्वजिद्भ्यां वा

९ । त्रिवृता

१० । ऽग्निष्टुताऽपि वा ॥ ७४

११ । जपन् वान्यतमं वेदं योजनानां शतं व्रजेत् ।
ब्रह्महत्यापनोदाय-मितभुङ् नियतेन्द्रियः ॥ ७५

१२ । सर्वस्वं वेदविदुषे ब्राह्मणायोपपादयेत् ।

१३ । धनं वा जीवनायालं

१४ । गृहं वा सपरिच्छदम् ॥ ७६

१५ । हविष्यभुग्वानुसरेत् प्रतिस्रोतः सरस्वतीम् ।

१६ । जपेद्वा नियताहारस्त्रिर्वै वेदस्य संहिताम् ॥ ७८

१७ । शिष्ट्वा वा भूमिदेवानां नरदेवसमागमे ।
स्वमेनोऽवभृथस्नातो हयमेधे विमुच्यते ॥ ७९

इतीत्थं सप्तदश प्रायश्चित्तानि उक्तानि । एतेषां विषमकल्पानां पायश्चित्तानां समविषयता नैव कथंचिद्

युज्यते, तथा सति गुरुकल्पानां निरर्थत्वापत्तेः। अतएव निमित्तस्य ब्रह्मवधस्य प्रकारभेदमुद्दिश्य एतानि प्रायश्चित्तानि परिकल्पितानि इत्येवं ज्ञातव्यम्। तच्चोट्टङ्कितं भविष्यपुराणे—

१। हन्ता चेद् गुणवान् वीर अकामान्निर्गुणो हतः।
कर्त्तव्यानि मनूक्तानि कृत्वा वै आश्वमेधिकम्॥
ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्।
गच्छेदवभृथं वापि अकामान्निर्गुणे हते॥

२। लक्ष्यं शस्त्रभृतां वा स्याद् विदुषामिच्छयात्मन।
प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः॥
यजेतवाश्वमेधेन क्षत्रियो विप्रघातकः।
प्रायश्चित्तत्रयं ह्येतत क्षत्रियस्य प्रकीर्त्तितम्॥
क्षत्रियो निर्गुणं धीरं ब्राह्मणं वेदपारगम्।
निहत्य कामतो वीर लक्ष्यः शस्त्रभृतो भवेत्॥

३। चतुर्वेदविदं धीरं ब्राह्मणं चाग्निहोत्रिणम्।
निहत्य कामादात्मानं क्षिपेदग्नाववाक्शिराः॥

४। निर्गुणं ब्राह्मणं हत्वा कामतो गुणवान् गुद।
यष्टा वा आश्वमेधेन क्षत्रियो यो महीपतिः॥
स्वर्जितादेश्च यद् वीर कर्मणां पृतनापते। ५-१०।
अनुष्ठानं द्विजातीनां वधे ह्यमतिपूर्वके॥

११। जपन् वान्यतमं वेदं योजनानां शतं व्रजेत्।
ब्रह्महत्यापनोदाय मितभुङ् नियतेन्द्रियः॥
जातिमात्रं यदा विप्रं हन्यादमतिपूर्वकम्।
वेदविच्चाग्निहोत्री च तदा तस्य भवेदिदम्॥
जातिमात्रं यदा हन्याद् ब्राह्मणं ब्राह्मणो गुह। १२/१३/१४।
वेदाभ्यासविहीनो वा धनवानग्निवर्जितः॥
प्रायश्चित्तं तदा कुर्यात्तदा पापविशुद्धये।
धनं वा जीवनायालं गृहं वा सपरिच्छदम्।
जातिमात्रे हते विप्रे देवेन्द्रमतिपूर्वकम्। १५/१६।
हन्ता यदा वेदहीनो धनेन च भवेद् भृतः।

तदेतत् कल्पयेत् तस्य प्रायश्चित्तं निबोध मे ।
हविष्यभुक् चरेद्वापि प्रतिस्रोतः सरस्वतीम् ।
अथवा प्रमिताहारस्त्रीन् वारान् वेदसंहताम् ।
जातिमात्रं तु यो हन्याद् विप्रं त्वमतिपूर्वकम् ।
ब्राह्मणोऽत्यन्तगुणवांस्तेनेदं परिकल्पयेत् ।
जपेद्वा नियताहारस्त्रिवैं वेदस्य संहिताम् ।
यदा तु गुणवान् विप्रो हत्वा विप्रं तु निर्गुणम् ।
अकामतस्तदा गच्छेत् स्नानं चैवाश्वमेधिकम् ।। १७ ।इति

तदनुसृत्य टीकाकारैरपि तथैव समाहितम् । तथाहि विज्ञानेश्वराचार्याः परस्परोपमर्दपरिहारार्थं विषयव्यवस्थ कल्पनैवोचिता । सा च जातिशक्तिगुणाद्यपेक्षया कल्पनीया ।

जातिशक्तिगु॰ ापेक्षं सकृद् बुद्धिकृतं तथा ।
अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेत् ।।

इति देवलस्मरणात् इत्याहुः (३-२४३) इदं जातिशक्तिवचनं विश्वामित्रस्येति मन्वर्थमुक्तवल्यां कुल्लूकेनोक्तम् । (११-७२) एवमन्येष्वपि स्थलेषु विषयव्यवस्था ऊहनीया ।

गौतमोऽपि प्रायश्चित्तप्रकरणे गुरुलघुकल्पान् प्रदर्श्य "एतान्येवानादेशे विकल्पेन क्रियेरन्" (३-१-१८)

एनःसु गुरुषु गुरु ण लघुषु लघूनि (३-१-१६) इति समादधे ।।

पापक्षयार्थक प्रायश्चित्तेष्विव धर्मलाभार्थकदानहोमादिष्वपि देशकालाद्यपेक्षया विशेषः स्मर्यते । तदुक्तं योगीश्वरेण (१ ६)

देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम् ।
पात्रे प्रदीयते यत्तत् सकलं धर्मलक्षणम् ।।

इति अत्र देशकालेतिकर्तव्यताद्रव्यश्रद्धापात्राणि षट् धर्मस्य कारकाणि प्रदर्शितानि ।

तथा—धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ।।

इति मनूक (६-६७) साधारणधर्मेष्वपि देशकालाद्यपेक्षास्ति । यतः

१ । धृतिः—अधर्माचरणे धृतिः कदापि धर्माय न स्यात् ।।

२ । क्षमा—तथा दण्डधरस्य तस्करादौ क्षमापि न धर्माय अपि तु पापाय । अघ्नन् एनस्वी राजा (१-३-४२) इति गौतमस्मरणात् ।

३ । दमः—तथा दमोप्यनौद्धत्यलक्षणः युद्धादौ नादरणीयः ।

४ । अस्तेयम्—अस्तेयविपरीतम् अदत्तादानमपि क्वचित् अधर्माय न भवति ।।—(मनुः ११-१६)

तथव सप्तमे भक्ते भक्तानि षडनश्नता ।
अश्वस्तनविधानेन हर्त्तव्यं हीनकर्मणः ॥

इति मनूक्ते; ॥ श्रीमद्भागवतमपि अत्र तावति धने हर्त्तुः स्वत्वं दर्शयति (७-१४-८) यावद्भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम् ॥ इति

५ । शौचम्—क्वचित् स्नानादिशौचं विनापि धर्मः सिद्ध्यति । शिरःस्नानाशक्तौ तदनुकल्पस्मरणात्, तथा यज्ञादौ ऋत्विगादीनां सद्यःशौचविधानात् । तथा च याज्ञवल्क्यः—

ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् ।
सत्रि-व्रति-ब्रह्मचारी-दातृ-ब्रह्मविदां तथा ॥ २८ ॥

दाने विवादे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि हि कष्टायां सद्यःशौचं विधीयते ॥ इति ३-२९

तथा च पण्यद्रव्याणां श्वादिहतपशुमांसादीनां च नित्यशुद्धत्व-कीर्त्तनात् । तदाह वशिष्ठः (६-१५-४७)

श्वहताश्च मृगा वन्याः पातितं च खगैः फलम् ।
बालैरनुपरिक्रान्तं स्त्रीभिराचरितं च यत् ॥ ४५

प्रसारितं च यत् पण्यं ये दोषाः स्त्रीमुखेषु च ।
मशकैर्मक्षिकाभिश्च निलीनैर्नोपहन्यते ॥ ४६

क्षितिस्थाश्चैव या आपो गवां तृप्तिकराश्च याः ।
परिसंख्याय तान् सर्वाञ्छुचीनाह प्रजापतिः ॥ ४७ इति

पुनश्च—त्रीणि देवाः पवित्राणिः ब्राह्मणानामकल्पयन् ।

अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥ १४-२४
देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च ।

काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विसर्जयेत् ॥ १४-२५
तस्मादन्नमपोद्धृत्य शेषं संस्कारमर्हति ॥ इति

६ । इन्द्रियनिग्रहः—तथा इन्द्रियनिग्रहोऽपि गृहस्थविषये व्यभिचरति । तत्पक्षे ऋतुगमनस्य विहितत्वात्, अगमने दोषस्मरणाच्च ।

ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥ इति पराशरोक्तेः ।

७ । धीः—धीरपि अधर्मविषयिणी पापायैव ।

८ । विद्या—विद्या च आत्मज्ञानलक्षणा सर्वमान्यापि स्त्रीभोगादावनुपादेया । यतः गृहस्थधर्मे ऋतुगमन पुत्रोत्पादनार्थं विहितमस्ति । तदकरणे प्रायश्चित्तमपि स्मर्यते पूर्वोक्त पराशरादिवचनेन ।

९ । सत्यम्—सत्यस्यापि क्वचिदपवादः स्मर्यते उक्तं हि मनुना—(८-१०४)

शूद्रविट्क्षत्रविप्राणां यत्रर्तोक्तो भवेद् वधः ।

तत्र वक्तव्यमनृतं तद्धि सत्याद् विशिष्यते ॥ इति योगीश्वरेणापि– (२-८३)

वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ॥ इति एतदनुसृत्य अप्राणिपीडाकरं यथार्थवचनं सत्यमितित (१-१२२) विज्ञानेश्वरः सत्यलक्षणं कृतवान् । भूतहिताय यथार्थवचनं सत्यमिति च हेमाद्रिः । सत्यं भूतहितं प्रोक्तमिति भारते ॥ विस्तरस्तु सत्यशब्दे द्रष्टव्यः ।

१० । अक्रोधः—अक्रोधोऽपि शत्रुविषये नृपादेरविधेय एव

एतद्भिन्नं सर्वप्रशंसनीयमपि दानं क्वचिद्धर्माय न भवति, यथा कुटुम्बपीडाकरम् । तदुक्तं मनुना (११-९)

शक्तः परजने दाता स्वजने दुःखजीविनि ।

मध्वापातो विषास्वादः स धर्मप्रतिरूपकः ॥ इति

तथा स्वार्थसिद्धये उत्कोचादिदानमपि पापाय । यथा वा बलेर्दानमपि भूतये नाभूत् ॥ तथा माहिंस्या सर्वाणि भूतानि इति श्रुतिप्रसिद्धा सर्वशास्त्रादृतापि अहिंसा युद्धादौ बाध्यते । युगभेदेनापि धर्मो भिद्यते । तदुक्तानि कलिवर्ज्यानि समयप्रकाशोद्धृते (२६१) ब्रह्मपुराणे—

दीर्घकालब्रह्मचर्यं धारणं च कमण्डलोः ।

गोत्रान्मातृसपिण्डात्तु विवाहो गोवधस्तथा ।

नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः ॥ इति

तथा— ऊढायाः पुनरुद्वाहं ज्येष्ठांशो गोवधस्तथा ।

कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ।

क्रतुः देवराच्च सुतोत्पत्तिर्दत्ता कन्या न दीयते ।

न यज्ञे गोवधः कार्यः कलौ न च कमण्डलुः ॥

आदित्यपुराणे— शपथाः शकुनाः स्वप्नाः सामुद्रिकमुपश्रुतिः ।

उपयाचितमादेशाः सम्भवन्ति कलौ क्वचित् ॥

तस्मात् तन्मात्रलाभेन कार्यं यत्तन्न कारयेत् ॥

तथा— धर्मबासमयवशादन्यान्यपि कलौ वर्ज्यानि ॥ (समयप्रकाशे २६२)

विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् ।

बालिका क्षतयोन्याश्च वरेणान्येन संगतिः ॥

कन्यानामसवर्णानां विवाहश्च द्विजातिभिः ।

आततायि द्विजाग्र्याणां धर्मयुद्धेन हिंसनम् ॥

द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः ।
सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम् ॥
महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे ।
सौत्रामण्यामपि सुराग्रहणस्य च संग्रह ॥
अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः ।
वानप्रस्थाश्रमस्यापि प्रवेशो विधिचोदितः ॥
वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा ।
प्रायश्चितविधानं च विप्राणां मरणान्तिकम् ॥
संसर्गदोषः स्तेयान्यमहापातकनिष्कृतिः ।
वरातिथिपितृभ्यश्च पशूपाकरणक्रिया ।
दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ।
सवर्णानां तथा दुष्टैः संसर्गः शोधितैरपि ॥
अयोनौ संग्रहे वृत्ते परित्यागो गुरुस्त्रियाः ।
परोद्देश्यात्मसंत्याग उच्छिष्टस्यापि वर्जनम् ॥
प्रतिमाभ्यर्चनार्थाय संकल्पश्च सधर्मकः ।
प्रतिमाभ्यर्चनार्थाय संकल्पश्च सधर्मकः ।
अस्थिसंचयनादूर्ध्वमङ्गस्पर्शनमेव च ।
शामित्रं चैव विप्राणां सोमविक्रयणं तथा ।
षड्भक्ताऽनशनेनान्नहरणं हीनकर्मणः ।
शूद्रेषु दासगोपालकुलमित्रार्धसीरिणाम् ।
भोज्यान्नता, गृहस्थस्य तीर्थसेवातिदूरतः ॥
शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिशीलिता ।
आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा ॥
प्रजार्थं तु द्विजाग्र्याणां प्रजारणिपरिग्रहः ।
ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया ।
बलात्कारादिदुष्टस्त्रीसंग्रहो विधिचोदितः ।
यतेस्तु सर्ववर्णेषु भिक्षाचर्या विधानतः ॥
नवोदके दशाहं च दक्षिणा गुरु चोदिता ।

ब्राह्मणादिषु शूद्रस्य पचनादिक्रियापि च
भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथा ।
गोतृप्तिशिष्ट-पयसि शिष्टैराचमनक्रिया ।
पितापुत्रविरोधेषु साक्षिणां दण्डकल्पनम् ।
यतेः सायंगृहत्वं च मुनिभिस्तत्त्वतत्परैः ।
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ।
निवर्तितानि कर्माणि व्यवस्थापूर्वकं बुधै ॥
समयश्चापि साधूनां प्रमाणं वेदवद् भवेत् ॥

पुराणान्तरे— ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ॥

निगमेऽपि— अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥

देवलः— यावद्वर्णविभागोस्ति यावद्वेदः प्रवर्त्तते ।
अग्निहोत्रं च संन्यासं तावत् कुर्यात्कलौ युगे ॥ इति

तथा आपत्कालेऽपि धर्मः गौणकल्पेन उपदिश्यते तदाह मनुः (१०-८१)

अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा ।
जीवेत् क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः ।
उभाभ्यामप्यजीवंस्तु कथं स्यादितिचेद भवेत् ।
कृषिगोरक्षमास्थाय जीवेद् वैश्यस्य जीविकाम् ॥

तथा—(१०-१०३'१०४)

नाध्यापनाद् याजनाद्वा गर्हिताद्वा प्रतिग्रहात् ।
दोषो भवति विप्राणां ज्वलनाम्बुसमा हि ते ।
जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।
आकाशमिव पङ्केन न स पापेन लिप्यते ॥ इति

एतेन कालः धर्मसन्ययितुं प्रभवतीति वक्तुं शक्यते ॥ तथा देशभेदोऽपि—आहमाह बौधायनः—

पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः ॥ १ ॥ यानि दक्षिणतस्तानि व्याख्यास्यामः ॥ २ ॥ यथैतदनुपेतेन सहभोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृगमनमिति ॥ ३ ॥ अथोत्तरतः ऊर्णाविक्रयः शीधुपानमुभयतोदद्भिर्व्यवहारः आयुधीयकं समुद्रसंयानमिति ॥ ४ ॥ इतर इतरस्मिन् कुर्वन्

दुष्यति इतरदितरस्मिन् ॥ १-१-५ ॥ तत्र देशजातिकुलधर्मा अम्नायैरविरुद्धाः प्रमाणमिति (२-२-२०) गौतममतं सर्वशिरोग्राह्यत्वेनादरणीयम् । बौधायनमतेन अधर्मा अपि देशाचारा तद्देशवासिनाकृते न पापाय न राजदण्डायेति निष्कर्षः ।

धर्मशास्त्रेषु सर्वत्र कापि वैज्ञानिकी रीतिर्गूढतया अनुसृता भवति । सा अत्रोदाह्रियते यथा ब्रह्म वेदः) धर्मस्य मूलं भवति । तस्य रक्षा ब्राह्मणेषु निहिता अस्ति । अतस्तस्य हत्या सकलहत्यापेक्षाया गरिष्ठा भवति । अतएव तत्पापस्य महापातकेष्वन्तर्भावः । इतरपापापेक्षया हत्यापापस्य गरीयस्त्वेन ब्रह्महत्या सर्वपापमूर्द्धन्यामिति स्वीक्रियते ॥ ब्राह्मणस्य हत्यया ब्रह्मणो वेदस्यापि हत्या भवति, इति तत्र तत्त्वम् ।

तस्यैव ब्रह्मणः (वेदस्य) अनभ्यासादिना नाशो यद्यपि साक्षात् ब्रह्महत्या तथापि तस्य तत्र पुनरभ्यासापेक्षिजीवितत्वेन अपुनसम्भवितजीवनहत्यापेक्षया न्यूनत्वमिति तस्य पापस्य ब्रह्महत्यासमत्वमुक्तम्. तदाह योगीश्वरः—(३-२२८)

गुरूणामध्यधिक्षेपो वेदनिन्दासुहृद्वधः ।
ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् ॥ इति

तथा वेदानधिकारिमन्तानोत्पादनेन ब्राह्मणवर्णक्षीणतासम्पादनद्वारा परम्परया ब्रह्महत्या । किन्तु तत्र ब्राह्मणस्य साक्षात् हत्याभावात् ब्रह्महत्यातः न्यूनतैव । तत्राह मनुः (३-१२)

शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥ इति

तथा दानमधिकृत्य—

वेदस्य रक्षा ब्राह्मणेषु निहिता । स हि वेदं पठेत् , पाठयेच्चेतिनियमः । वेदाध्यनं विना तस्य ब्राह्मणत्वं सुदूरपराहतं स्यात् । तदाह मनुः—(२-१६८) वसिष्ठश्च (३-२)

योनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ इति

पातञ्जलमहाभाष्योद्धृतवचनमपि—

तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम् ।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥ इति

ब्राह्मणस्य वेदाध्ययनं ब्राह्मणत्वे एकं कारणमिति निर्दिशति ॥ तस्यैव वेदनिरतस्य ब्राह्मणस्य वृत्त्यर्थम् अध्यापनयाजनप्रतिग्रहा एव आदिष्टाः । ते च त्रयः परायत्ताः । कृषिवाणिज्यादीनि तत्कृते निषिद्धानि । अतस्तस्य जीवनम् इतरवर्णत्रयायत्तम् । तच्च कौशलेन सम्पाद्यते । यथा—

यत्र रोगाद्यनिष्टवारणार्थं पापक्षयार्थं धर्मप्राप्त्यर्थं वा दानमुपदिश्यते, तत्र ब्राह्मणायैव देयम् ।

ब्राह्मणश्च तत्र वेदज्ञ एव ।

श्रोत्रियायैव देयानि हव्यकव्यानि नित्यशः ।
अश्रोत्रियाय दत्तं हि पितॄन्नैति न देवताः ॥ (३-८)

इति वसिष्ठवचनात् । वेदज्ञाय दानं च वेदोपकाराय भवति । धर्ममूलस्य वेदस्य हि उपकारः धर्माये वा धर्मश्च अभ्युदयनिःश्रेयससाधनत्वेन कल्याणं साधयति । अतएव मूर्खाय दानं निषिध्यते— तदाह वसिष्ठः (३-९)

यस्य चैकगृहे मूर्खो दूरे वापि बहुश्रुतः ।
बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥ ९ ॥
ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥ १० ॥ इति

(ख) अन्यच्चोदाहरणं यमनियमावाश्रित्य—मनुः (४-२०४)

यमान् सेवेत सततं न नित्यं नियमान् बुधः ।
यमान् पतत्यकुर्वाणो नियमान् केवलान् भजन् ॥ इति ॥

नियमापेक्षया यमस्य प्राधान्यमाह । यमाश्च योगीश्वरेण उक्ता यथा— (३-३१२)

ब्रह्मचर्यं दया क्षान्तिर्ध्यानं सत्यमकल्कता ।
अहिंसाऽस्तेयमाधुर्ये दमश्चेति यमा दश ॥

एषां ब्रह्मचर्यादीनां यमानामत्यन्तपालनीयत्वमुक्तम् । अत्र नियमाः स्वगता एव । ब्रह्मचर्यादयो यमास्तु न केवलंकर्त्तृसंश्लिष्टः, अपि तु तदितरजनसंश्लिष्टाः सन्ति । नियमत्यागेन कर्त्तुर्हानिः, यमत्यागेन अन्येषामपि अनिष्टं भवति । यथा—

१—एकस्य ब्रह्मचर्यहानिः यया तमेव कर्त्तारं दूषयति तथा अन्यमपि तत्संयुक्तां नारीं नारीर्वा दूषयति ।

२ —एकस्मिन् दयाया अभावः अपरत्र दयापात्रे दुःखं सृजति ।
एकस्मिन् क्षमाया अभावेन अपरोऽपि परित्राणं न लभते ।

४—ध्यानाभावेन सम्यक् ज्ञानं न भवति । असमीचीनेन ज्ञानेन यत् किंचित् सम्पाद्यते तदपि समीचीनं भवति । तेन तैः कर्मभिर्येषां सम्पर्कस्ते पीड्यन्ते ।

५ —सत्यं सर्वेषां कल्याणं साधयति । तद्विपरीतो मृषावादः अन्येषामनिष्टं साधयतिः । यथा युधिष्ठिरवाचा हतो द्रोणः ।

यच्च क्वचिदपि सत्यमपि अन्येषामनिष्टं साधयतीति मनुः साक्षिप्रकरणे २३ त्रयोविंशत्या श्लोकैः सत्यवादं प्रशंसन्नपि—(८-१०३)

तद्वदन् धर्मतोऽर्थेषु जानन्नप्यन्यथा नरः ।
न स्वर्गाच्च्यवते लोकाद्दैवीं वाचं वदन्ति ताम् ।। इति

गौतमश्च नानृतवचने दोषो जीवनं चेत्तदधीनम् (२-४-२४) इति ब्रुवाणः सर्वथा मनुष्यजीवन-रक्षणं बहुमन्यते इति ज्ञायते । अत्र मिथ्यावादप्रायश्चित्तार्थके वाग्दैवत्यैश्च चरुभिर्यजेरंस्ते सरस्वतीम् (मनु ८-१०५) इति वचने यजेरन्निति बहुवचनं वर्णत्रयापेक्षं नतु साक्षिबहुत्वापेक्षम् । बहुज्ञातस्य अन्यथाकथनेन अन्यथाकरणं हि दुसाध्यं भवति । तेन एकजनज्ञातविषयोऽयमिति वेदितव्यं रहस्यप्रायश्चित्तवदत्र यागस्योपदेशात् । बहुज्ञातस्य आच्छादनसम्भवेऽपि तादृशहत्या-कर्त्तुः निर्भीकतया पौनःपुन्येन हत्याकरणसम्भवात् तत्र मृषावादो न श्रेयान् । यत्र वा एकेन ज्ञानमपि कर्म अत्यन्तमसमीचीनं तत्रापि मिथ्यावादो न युज्यते । अतएवाह गौतमः—न तु पापीयसो जीवनम् (२-४-२५) इति । एतेन कस्यचित् पुण्यात्मनः प्रामादिके अपराधे तस्यैव जीवनरक्षार्थमयं प्रतिप्रसव इति ज्ञातव्यम् ।

६—अकल्कता—कल्को दाम्भिकः, वञ्चक इत्यर्थः । वञ्चको हि स्वार्थसिद्धये बहून् प्रतारयति । तेन प्रतारितानामनिष्टं साध्यते ।

७—अहिंसा—हिंसा, नाम मरणानुकूलो व्यापारः । मरणं कस्यापि इष्टं न भवति । अतएव हिंसा सर्वथा वर्जनीया ।

८—अस्तेयम्—स्तेयं सर्वजनदुःखदम् । एकस्मिन् स्तेने वर्त्तमाने ग्रामेषु सर्वे गृहिणः नहि सुखं निद्रान्ति ।

९—माधुर्यम्—माधुर्यस्य विपरीतं पारुष्यं श्रोतृजनहृदयखेदकरं भवति ।

१०—दमः—दम अनौद्धत्यरूपः । औद्धत्यमन्येषां संपृक्तानां दुःखद मेव ।

अतएव एते परिसंख्याता यमाः स्वस्य पापानुत्पत्तये धर्मलाभाय च अन्येषामपि सुख-स्थित्यै अपि अवश्यं पालनीयाः ।
नियमास्तु दर्शिता योगीश्वरेण ( याज्ञ ३-३१३)

स्नानं मौनोपवासेज्या स्वाध्यायोपस्थनिग्रहाः ।
नियमो गुरुशुश्रुषा शौचाक्रोधाप्रमादता ।। इति

एते नादयो नियमास्तत्कर्त्तृणामवश्यं सिद्धिदाः । तदितरेषां न बाधकाः साधका वा । यतः एकस्य स्नानादिभिः सह अन्येषां सम्बन्धो नास्ति । यमानां तु इतरसंबद्धतया गुरुत्वम् । अत्र नियमे उपस्थनिग्रहः अविवाहरूपो विवक्षितः । अन्यथा ब्रह्मचर्यादस्य को विशेषः । अक्रोधश्च वैधक्रोधत्यागपरः । युद्धादौ तु क्रोधे विधीयते ।

(ग) तथा रहस्यप्रायश्चित्तमपि जनकल्याणपरकम् । तद् यथा—

ख्यापनेनानुतापेन तपसाध्ययनेन च ।
पापकृत् मुच्यते पापात् तथा दानेन चापदि ॥ २७७

यथा यथा नरोऽधर्मं स्वयं कृत्वाऽनुभाषते ।
तथा तथा त्वचेवाहिस्तेनाधर्मेण मुच्यते (११-२२८)

इति श्लोकाभ्यां मनुः पञ्चसु पापशोधकेषु पापख्यापनं प्रमुखतया प्रदर्शितवान् । पुनश्च सः (११-२२६)

एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः ।
अनाविष्कृतपापांस्तु मन्त्रैर्होमैश्च शोधयेत् । इति अनाविष्कृतपापस्य अल्पक्लेशसाध्येन जप-होमादिनापि शोधनमुक्तवान् । तस्य अनयोर्वचनयोर्विरोधो दुष्परिहर इव प्रतीयते । अत्रेत्थं तर्क्यते तत् यस्य जनविशेषस्य पापख्यापनेन अन्येऽपि जनास्तत्प्रभाविताः पापाचरणपराः स्युः, यत्र अन्येषामपि पापात् निग्रहः दुष्करः स्यात् तत्र तादृशस्य जनविशेषस्य वरं पापख्यापनापेक्षया पापसंगोपनम् । पापिना पापक्षयार्थं प्रायश्चित्तं तु कार्यमेव । एवमन्येष्वपि स्थलेषु मुनीनामाशय उहनीयः ।

(क) केषुचित् विषयेषु मुनीनां विचारः पार्थक्येनोपलभ्यते, यथा व्रात्यशुद्धौ । मनुः यथाकालमनुपनीतानां द्विजानां व्रात्यसंज्ञां विधाय तान् आर्यविगर्हितान् उक्त्वा व्रात्यतां गोवधाद्युपपातकमध्ये पठित्वा तेषां व्रात्यानां शुद्धये प्रातिस्विकतया कृच्छ्रत्रयं निर्दिदेश ।

येषां द्विजानां सावित्री नानूच्येत यथाविधि ।
तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेदिति ॥ (११-१९२)

याज्ञवल्क्यश्च तेषां शोधनाय व्रात्यस्तोम (१-३८) मुक्तवान् । वसिष्ठश्च पतितसावित्रीक उद्दालकव्रतं चरे (११-७६) दिति तच्छुद्धये उद्दालकव्रतमुल्लिलेख । एषां व्रतानामवस्थापेक्षाया व्यवस्थेत्याहुराचार्याः ।
आपस्तम्बस्तु एषां शुद्धिप्रकारमन्यथा दर्शयति । तद् यथा—
अतिक्रान्ते सावित्र्या ऋतुं त्रैविधकं ब्रह्मचर्यं चरेत् । अथोपनयनम् २१ ॥ ततः संवत्सरमुदकोपस्पर्शनम् ३० ॥ ततो ध्याप्यः ३१ ॥ इति । ये तु पितृपरम्परया व्रात्यास्तानधिकृत्य—
अथ यस्य पिता पितामह इत्यनुपेतौ स्यातां ते ब्रह्महसंस्तुताः ३२ ॥ तेषामन्यागमनं भोजनं विवाहमिति च च वर्जयेत् ३३ ॥ तेषामिच्छतां प्रायश्चित्तम् ३४ ॥ यथा प्रथमेतिक्रमे ऋतुरेवं संवत्सरः ३५ ॥ अथोपनयनम् ३६ ॥ तत उदकोपस्पर्शनम् ३७ ॥ गवे ३८ ॥ प्रतिपुरुषं संख्याय संवत्सरान् यावन्तोऽनुपेताः स्युः आप०—१-१-२-१

इत्येवंप्रकारेण तेषां शुद्धिमभिधाय येषां व्रात्यानां कुले उपनयनं न स्मर्यते तेषां कृतेऽपि शुद्धिव्यवस्थां दर्शयति ।

मन्वादयः उपनयनभ्रष्टस्य प्रथमपुरुषस्यैव शुद्धिमाहुः । आपस्तम्बस्तु कुलपरम्परया व्रात्यानामपि शुद्धि मुक्तवान् । एतेनेदं ज्ञायते यदा व्रात्यसंख्या ववृधे तदा व्रात्यसंख्यां न वर्द्धयितुं वेदप्रसारं च कामयमानः आपस्तम्बस्तात्कालिकीं परिस्थितिमभिलक्ष्य क्रमागतव्रात्यानां शुद्धिमाह ।

(ख) मरणान्तिकप्रायश्चित्तमाश्रित्य विचारः ।

मनुस्त्विषु ब्रह्महत्यासुरापानगुरुतल्पगमनेषु महापातकेषु मरणान्तिकं प्रायश्चित्तं दर्शयति ॥ सुवर्णस्तेये यत् मरणं तत् न पातकिन आयत्तम् अपितु नृपायत्तम्। योगीश्वरस्यापीत्थमेव मतम्। वसिष्ठस्तत्र मरणं स्वमायत्तमाह— तस्मै राजौदुम्बरं शस्त्रं दद्यात्, तेनात्मानं प्रमापयेत् मरणात् पूतो भवतीति विज्ञायते ॥ (२०·४१) इति। आपस्तम्बस्तु गुरुतल्पे मरणान्तिकं प्रायश्चित्तमुपदिश्य हारीतमतेन तत् निराकरोति मिथ्यैतदिति हारीतः १६ ॥ यो ह्यात्मानं परं वाभिमन्यते भिशस्त एव स भवति १७ ॥ एतेनैव विधिनोत्तमादुच्छ्वासाच्चरेन्नास्यास्मिल्लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निर्हण्यते ॥ इति

अत्र हारीतस्यायमभिप्रायः। परमारणवत् आत्महत्या अपि पापाय भवति। अतः प्रकरणेन पापक्षयः न युज्यते। अतोमरणान्तिकं प्रायश्चित्तं न कार्यम्। किन्तु त्रिषवणस्नानादि कायक्लेशसहितं व्रतम् अन्तिमनिःश्वासत्यागपर्यन्तमाचरेत्। तेन पापक्षयः स्यात् इति हारीतस्येदं मतमापस्तम्बेनापि समर्थितम्। स्वकारविरोधादर्शनात्।

क्वचित् क्वचित् स्मृतिकाराणामभिप्रायो व्याख्याकारैरन्यथा क्रियते।

(क) यथा कन्यादाये —

स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक्।
स्वात् स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः॥ मनुः—९-११८

इति तथा. भगिन्यश्च निजादंशाद्दत्वांशं तु तुरीयकम् ॥ या°—२-१२४ इति च मनुयोगीश्वरवचनाभ्यां कन्यायाः सजातीयभ्रातुश्चतुर्थभागो विहितः।

अत्र आत्मीयभागाच्चतुर्थभागं पृथक् कन्याभ्यो भगिनीभ्यो या यस्य सोदर्या भगिनी सा तस्या एव संस्कारार्थमिति एवं दद्युः इति कुल्लूकः। तन्मते यस्य पञ्च वा ततोधिका वा भगिन्यस्तत्र चतुर्थभागदानं कथं सम्भवतीति स एव प्रमाणम्।

मेधातिथिस्तु भ्रातरः कन्याभ्यश्चतुर्भागमंशं दद्युः स्वादंशात्। यत्र बहुः कन्याः सन्ति तत्र समानजातीयभ्रात्रपेक्षया चतुर्थांशे कल्पना कर्त्तव्या। तथा चायमर्थः। त्रीनंशान् पुत्र आददीत चतुर्थं कन्येति। अत्रापि मनोरभिप्रायो न सिध्यति। तथा हि यदि पितुर्धनं १०० शतं, तर्हि एतन्मतेन पुत्रः ७५ पञ्चसप्तति गृह्णाति कन्या च २५ पञ्चविंशतिम्। तत्र २५ पञ्चविंशतिः ७५ पञ्चसप्ततेः चतुर्थोभागो न भवतीति। पुनश्च भगिनीबाहुल्ये भ्रातृबाहुल्ये च भागकल्पिरनेन नोक्ता।

मिताक्षराकृता विज्ञानेश्वरेण च यदि कस्यचित् ब्राह्मणस्य पुत्रश्चैकः कन्या चैका, तत्र पित्र्यं सर्वमेव द्रव्यं द्विधा विभज्य तत्रैकभागं चतुर्द्धा विभज्य तुरीयांशं कन्यायै दत्त्वा शेषं पुत्रो गृह्णीयादिति समाहितम्। एतन्मतेनात्र कन्या भ्रातृभागस्य सप्तममंशं लभते न तु चतुर्थमंशम्। पुनश्चास्य मते यस्य ब्राह्मणस्य एकः पुत्रः पञ्च कन्या तत्र पितृधनं षोढा विभज्य ततः एकं भागं चतुर्द्धा विभज्य चतसृभ्यो भगिनीभ्यो दद्यात्। पुनश्चैकं भागं चतुर्द्धा विभज्य तुरीयमंशं पञ्चम्यै दद्यात्। एतेन एका भगिनी भ्रातृभागस्य चतुर्विंशमंशं (२४) लभते यन्मुनेप्सितम्।

जीमूतवाहनोऽपि एतच्चाकन्यापुत्रयोः समसंख्यत्वे ज्ञातव्यं विषमसंख्यत्वे च कन्याया एव बहुतरधनं वा स्यात् पुत्रस्य वा निर्द्धनता स्यादिति शंकमानः मुनीनामाशयं नैवाध्यगच्छत्। मित्रमिश्रस्तु विज्ञानेश्वरमेवानुगच्छतीति सर्वेषामेवैतेषां कन्यादायनिरूपणं प्रामादिकमेव । यत एषां व्याख्यानं मुनिमत विरुद्धम् ।

वस्तुतस्तत्र यस्य ब्राह्मणस्य एकः पुत्रः एका च कन्या तत्र पितृधनं पञ्चधा विभज्य पुत्राय भागचतुष्टयं कन्यायै चैकं भागं दद्यात् इति शास्त्रार्थः। तथा यस्य पञ्च कन्या एकश्च पुत्रः तत्र पितृधनं ९ नवधा विभज्य कन्याभ्यः एकम् एकं भागं पुत्राय चतुरो भागान् दद्यात् । इत्थं विभागे कृते मुनीनामभिप्रायः सुरक्षितो भवति। बहुभ्रातृकाया धनवत्त्वं बहुभगिनीकस्य दरिद्रत्वं च न सम्भवतीति सूरिभिश्चावगन्तव्यम् ।

(ख) मलमासजातमृतानां भाविनिवर्षे स्वनक्षत्रश्राद्धादिनिर्णयः। मलमासजातमृतानां स्वनक्षत्रश्राद्धादिनिर्णयाय कालसारकृता गदाधरराजगुरुणा लिख्यते यत् ननु अधिमासे जातस्य उत्तरवर्षेषु कस्मिन्मासे स्वनक्षत्रपूजादि, मृतस्य नु कुत्र श्राद्धादि अनुष्ठेयमितिचेत् उच्यते—तस्य उत्तरमासे तदनुष्ठेयम् । तथाच ज्योतिःपितामहः—

षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।
पूर्वार्द्धं तु परित्यज्य उत्तरार्द्धं प्रशस्यते । इति ज्योतिःशास्त्रे ।

तथाचं एतद्वाक्यमुपजीव्य माधवाचार्याः ।

चान्द्रोऽधिमासोऽसंक्रान्त सोन्तर्भवति चोत्तरे इति अत्र कश्चिद् विशेषः सुधीभिरवधेयः । तत्र कंचिन्मासं धृत्वा विचारणीयम् ।

तथाच भाद्रमासि अधिमासपाते आदौ मलपौर्णमासीपक्षः तदुत्तरं मलदर्शपक्षः। तदुत्तरं शुद्धपौर्णमासीपक्षः । तत्र कस्यचित् जन्म मलदर्शपक्षे । कस्यचित् जन्म शुद्धपौर्णमासीपक्षे । तत्राधिमासस्य शुद्धदर्शान्तमासे अन्तर्भावे सिद्धे सति मलपौर्णमासीपक्षस्य शुद्धपौर्णमासीपक्षेऽन्तर्भावः मलदर्शपक्षस्य भाद्रशुद्धदर्शरूपे पौर्णमास्यन्तपक्षमाश्रित्य आश्विनदर्शपक्षतया व्यवह्रियमाणेऽन्तर्भावः। तथा च मलमासवर्षे शुद्धपौर्णमासीपक्षे यस्य जन्म पश्चाज्जातस्यापि (तस्य) तदुत्तरशुद्धवर्षे त्वादौ स्वनक्षत्रपूजा, यस्य मलदर्शपक्षे जन्म तस्यादौ जातस्यापि आश्विन कृष्णपक्षतया व्यवह्रियमाणे कृष्णपक्षे पश्चात् स्वनक्षत्रपूजा। एवं श्राद्धादौ बोद्धव्यम् इति ।

अत्रेदं विचार्यम् । माधवाचार्यैर्यन्निर्णीतं तत् दर्शान्तमासव्यवहारिणां कृते। तन्मतमनुसृत्य राजगुरुभिर्यत् निर्णीतं तत् पूर्णिमान्तमासव्यवहारिणां कृते न युज्यते ।

तथाहि चान्द्रमासस्य दर्शान्तत्वं पूर्णिमान्तत्वमित्युभयमपि शास्त्रसिद्धमिति माधवादिभिरङ्गीकृतम् ।। ततो दर्शान्तमासव्यवहारिणां कृते अधिमासः उत्तरे मासि अन्तर्भवति तेषां पक्षे षष्ठिदिनात्मकस्य मासस्य प्रारम्भे एव मलमासः तिष्ठति । पूर्णिमान्तमासव्यवहारिणां कृते तु षष्ठिदिनात्मकस्य मासस्य मध्यभागे एव अधिमासः तिष्ठति । अतस्तत्रैव पूर्वापरस्थयोः शुद्धमासपक्षयोरेव गर्भस्थस्य अधिकमासस्य अन्तर्भावः युज्यते। तत्रेयं युक्तिः तत्रादौ मासनियामकं वचनं यथा—

मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः ।
चैत्राद्यः स च विज्ञेयः पूर्तिद्वित्वेऽधिमासोऽन्त्यः इति ।

एतेन ज्योतिःशास्त्रीयवचनेन मेषस्थे रवौ यस्य मासस्य दर्शपूर्त्तिः स अमान्तश्चैत्रो मासः तथा सिंहस्थे रवौ यस्य मासस्य दर्शपूर्त्तिः स मासो दर्शान्तः श्रावणः । यस्मिन् वर्षे सिंहस्थे रवौ दर्शद्वयपूर्त्तिर्भवति तत्र द्वितीयो दर्शान्तमासोऽधिमासो भवति । सोऽधिमासो दर्शान्तमासव्यवहारिणां कृते उत्तरमासस्य अङ्गं भवति । पूर्णिमान्तमासव्यवहारिणां त्वस्माकं कृते शुद्धभाद्रमासस्य गर्भस्थो भवति । तादृशमासस्य स्थितिः राजगुरुणा दर्शितैव । अस्माकं पक्षे गर्भस्थोऽधिमासः उत्तरमासि नान्तर्भवति पूर्वस्मिन् मासे नान्तर्भवति, किन्तु पूर्वापरस्तयोः शुद्धमासपक्षयोरेव अन्तर्भवति । यथा मलशुक्लस्य परवर्त्तिनि शुद्धशुक्ले । मलकृष्णस्य पूर्वभाविनि शुद्धकृष्णे ।

यदा मलशुक्लः शुद्धशुक्ले अन्तर्भवति तदा कर्त्तव्या चोत्तरे क्रिया, इति ज्योतिःपितामहवचनमनुगृहीतो भवति । यदा तु मलकृष्णस्य प्रागभाविनि शुद्धकृष्णपक्षे अन्तर्भावस्तत्र—

अधिमासे विपत्तिश्चेत सौरं मानं समाश्रयेत ।
साब्दिवसरतस्य श्राद्धपिण्डोदकादिषु ॥ इति

तथा— यस्मिन् राशौ गते सूर्ये विपत्तिर्याति मानवः ।
तद्राशावेव कर्त्तव्यं पितृकार्यं मृताहनि ॥

इति वचने अनुगृहीते भवतः ।

अत्रेदं तत्त्वम् । अत्र सिंहस्थे रवौ द्वयोर्मासयोर्दर्शपूर्त्तिर्जाता । ततो यथा प्रथमदर्शस्य श्रावणदर्शत्वं तथा द्वितीयदर्शस्यापि सिंहस्थे रवौ पूर्णत्वात् श्रावणदर्शत्वं युक्तिसिद्धम् । किन्तु उत्तरार्द्धं प्रशस्यते । इत्यादिवचनबलादेव अधिमासरूपस्य द्वितीयदर्शान्तमासस्य तदुत्तरमासाङ्गत्वम् तच्च दर्शान्तमासपक्षे एव योजनीयम् । अन्यथा अधिमासे विपत्तिश्चेदित्यादिवचनानामनवकाशः स्यात् । मलदर्शस्य हि तत्र सौरमानानुसारं श्रावणदर्शत्वं सिद्धयति ।

दर्शान्तमासव्यवहारिणां यः श्रावणदर्शःपूर्णिमान्तमासव्यवहारिणां कृते स तु भाद्रदर्शः । अतःमलभाद्रदर्शपक्षे मृतस्य वर्षान्तरे शुद्धभाद्रदर्शपक्षे श्राद्धविधानं युक्तितः प्रमाणसिद्धम् ।

पुनश्च राजगुरुक्तन्यायेन मलभाद्रकृष्णे मृतस्य शुद्धाश्विनकृष्णो श्राद्धकरणे—

मासःपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि ।
प्रत्यब्दं तु यथा भूतं क्षयाहं तस्य तद्विदुः ॥

इति व्यासवचनं बाध्यते । तत्र हि तदुक्तन्यायेन भाद्रमृतस्य आश्विने श्राद्धकरणे तत्र संकल्पवाक्ये आश्विने मासि कृष्णे पक्षे इत्येवं वक्तव्यं स्यात्, यत व्यासवाक्यस्य विरुद्धम् । यतः मासपक्षवचनं भाद्रमृतस्य भाद्रे एव श्राद्धं विधेयमिति निर्दिशति ।

अतएव पूर्णिमान्तमासव्यवहारिणां कृते भाद्रमलशुक्ले मृतस्य भाद्रशुद्धशुक्ले, भाद्रमलकृष्णे मृतस्य भाद्रशुद्धकृष्णे वर्षान्तरे श्राद्धं विधेयमिति निष्कर्षः ॥ अयं च न्यायः मासान्तरेपु योजनीयः । श्राद्धन्यायेन स्व क्षत्रपि विधेयम् । इदं मतं कालदीपव्याख्यायां तेजन्यां मया स्पष्टीकृतम् ।

यदत्र निर्णयसिन्धुकृता सौरं मानं समाश्रयेदितिव्यासोक्तवचने सौरमानशब्दस्य सौरमासरूपमर्थं कल्पयित्वा तस्य वचनस्य मासपक्षवचनेन सह विरोध उट्टङ्कितः, तदसुन्दरम् । अत्र सौरमानपदेन सौरमानवतश्चान्द्रमासस्य उद्दिष्टत्वात् सौरमासस्य कीर्त्तनीयत्वे सौरं मासं समाश्रयेत् इत्येवं वक्तुमुचितत्वात् । सौरदिवसानुसारं क्षयाहश्राद्धकरणस्य सर्वत्र समाचाराभावात्, सौरं मानं समाश्रयेत्, मासपक्षतिथिस्स्पृष्टे इति व्यासवचनयोः समानकर्त्तृकयोः विरोधशङ्कासम्भवाच्चेति ॥

(ग) तथा तिथेः वृद्धिक्षयनिर्णयेऽपि ।

यदा चतुर्दशीयामं तुरीयमनुपूरयेत् ।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ॥
वर्द्धमानाममावास्यां लक्षयेदपरेऽहनि ।
यामांस्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत् ॥

इतिकात्यायनवचनाभ्यां क्षयवृद्धिद्वारेण अमावास्याश्राद्धनिर्णयो विधीयते ।

अत्र श्राद्धदीप्रकाशे दिव्यसिंहः पूर्वदिवसीयचतुर्दश्यपेक्षया परदिने न्यूनकालव्यापिनी अमावास्या क्षीयमाणा पूर्वदिवसीयचतुर्दश्यपेक्षया परदिने अधिककालव्यापिनी अमावास्या वर्द्धमाना अमावास्या इति निर्दिशति ।

कालसारकारो गदाधरस्तु पूर्वापरदिवसीययावच्चतुर्दश्यपेक्षया क्षयवती अमावास्या क्षीयमाणा, पूर्वापरदिवसीययावच्चतुर्दश्यपेक्षया वृद्धिमती अमावास्या वर्द्धमाना अमावास्या इत्याह । एतन्मते पञ्चषष्टि ६५ दण्डात्मकचतुर्दश्यपेक्षया ६४ चतुःषष्टिदण्डात्मिका अमावास्या क्षीयमाणा भवति तथा ५४ चतुःपञ्चाशद्दण्डात्मकचतुर्दश्यपेक्षया ५५ पञ्चपञ्चाशद्दण्डात्मिका अमावास्यापि वर्द्धमाना भवति ।

अनयोः मतयोः विरोधेन दर्शश्राद्धनिर्णये व्याकुलीभूते सामन्तचन्द्रशेखरसिंहस्य दर्शदीपिकावचनं सहायकं भवति । तद् यथा—

दिनद्वयव्याप्तियुतेर्यदीयो भोगः खषड्दण्ड ६० मितस्तिथिः सा ॥
समा, स भूयान् यदि वर्द्धमाना, क्षीणोच्यते भोगतनुत्वहेतोः ॥

इत्यत्र षष्टिदण्डतः न्यूना क्षीयमाणा, षष्टिदण्डतः अधिका वर्द्धमाना इति सामन्तसिद्धान्त आदरणीयः ।

(घ) तथा च भ्रातृपितृभागमधिकृत्य—

भ्रातृणां यस्तु नेहेत धनं शक्तः स्वकर्मणा ।
स निर्भाज्यः स्वकादंशात् किञ्चिद्दत्त्वोपजीवनम् ।। (मनुः ९-२०७)

इत्यत्र भ्रातरः सह वसन्ति, विद्यमानपितृधनाश्च कृष्यादिना व्यवहरन्ति, तेषां यदि एको न व्यवहरेत् तस्येयं निर्भाज्यता पठ्यते इति मेधातिथिः । अत्र व्यवहरेत् इति मेधातिथिवचनस्य आलस्यादिना भ्रातृभिः सह कृष्यादिकर्मणि सहयोगितया न प्रवर्त्तते एवंरूपोऽर्थो वा, एको भ्राता कर्मान्तरेण धनं लब्ध्वा कृष्यादिकर्म नेच्छति अर्थात् स्वयं पितृधनं नेच्छति । इत्येवंरूपाऽर्थो वेति स्पष्टं न प्रतीयते ।

तत्पश्चाद्वर्त्तिना कुल्लूकेनात्र यो धनमर्जितुं शक्तो भ्रातृणां साधारणं धनं नेच्छति स स्वीयादंशात् किंचिदुपजीवनं दत्त्वा भ्रातृभिः पृथक्कार्यः । इति व्याख्योपस्थापिता ।।

एतत्समानार्थके शक्त स्यानीहमानस्य किञ्चिद्दत्त्वा पृथक्क्रिया इति योगीश्वर (२-११६) वचने स्वयमेव द्रव्यार्जनसमर्थस्य पितृद्रव्यमनीहमानस्यानिच्छतोऽपि यत् किंचिदसारमपि दत्त्वा पृथक्क्रिया विभागः कर्त्तव्यः पित्रा । तत्पुत्राणां दायजिघृक्षा माभूदिति, विज्ञानेश्वरस्य व्याख्यानम् ।

जीमूतवाहनश्च दायभागे यत्किंचित् तण्डुलप्रस्थमपि दत्त्वा पृथक् कार्य इति लिखति । मित्रमिश्रस्तु व्यवहारप्रकाशे विज्ञानेश्वरमेवानुसरति ।।

परन्त्वयमर्थः न समीचीनः । यस्तु भ्राता स्वयं भागं नेच्छति स असारवस्तु वा तण्डुलप्रस्थं वा कथमिच्छेत । यदि तस्य अनिच्छा भागहानौ कारणं न भवेत, तर्हि असारद्रव्यग्रहणं वा तण्डुलप्रस्थग्रहणं वा कथं कारणं स्यात ।

वस्तुतस्तत्र व्याख्याकारैर्निबन्धकारैश्च मनुयोगीश्वरवचनयोरर्थो व्याकुलीकृतः इति चेष्टाभाम् इति-चेष्टार्थकेहधातोरिच्छारूपमर्थं कुर्वाणा व्याख्यातारो निबन्धकाराश्च विभ्रान्ता एव ।

यथार्थतस्तु एकत्र निवसतां भ्रातृणां मध्ये यदि कश्चित् भ्राता शक्तः—नीरोगः कर्मक्षमः सन्नपि आलस्यादिना नेहेत धनार्जनाय उपायं न कुर्यात, कृष्यादिकर्मणि भ्रातृणां साहाय्यं न कुर्यात, स तात्कालिकजीवनार्थं किंचिदुपजीवनं स्वोपार्जितधनादपि कृपया दत्त्वा निर्भाज्यः निर्गतभागः अर्थात भागहीनः कार्यः । इदमेव मामकीन व्याख्यानमत्र समीचीनतमम् । दृश्यते हि निरुद्यमं कर्मसमर्थं भ्रातरमन्ये भ्रातरः पृथक् कुर्वन्तीति । तदेव युज्यते । भागमनिच्छतः असारदानं, तण्डुलप्रस्थदानं वा हास्यकरमेव । मनुनापि ततः पूर्वम् अविद्यानां तु सर्वेषामीहातश्चेद्धनं भवेदिति (९-२०५) श्लोके ईहाशब्दः चेष्टार्थे प्रयुक्तः । क्वचिच्च व्याख्यातॄणां मतभेदात प्रकृतार्थो न सुगमो भवति ।।

यथा— वेदोपकरणे चैव स्वाध्याये चैव नैत्यके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥

इत्यत्र मनु (२-१०५) वचने उपकरणशब्दस्य अर्थं दर्शयन् मेधातिथिः उपकरणमुपकारकं वेदाङ्गं कल्पसूत्र निरुक्तादि उच्यते, इत्याह। सर्वज्ञनारायणः वेदोपकरणे—व्याकरणाद्यङ्गे, इति, कुल्लूकश्च वेदोपकरणे—वेदाङ्गे इति, राघवानन्दश्च वेदोपकरणे—शिक्षादिवेदाङ्गे इति, नन्दनश्च वेदोपकरणे—वेदाङ्गे इति, मणिरामश्च वेदोपकरणे वेदाङ्गे इति, गोविन्दराजश्च वेदोपकारके निरुक्तादावङ्गे इति उक्तवन्तराम-चन्द्रस्तु वेदोपाकरणे—उपाकर्मकरणे इति व्याजहार।

अत्र वेदोपकरणशब्दस्य वेदाङ्गरूपार्थः यद्यपि बहुटीकाकारसम्मतः तथापि रामचन्द्रस्य उपाकर्मरूपार्थः युक्तिहीनो न भवति। यतः पूर्णिमोपाकरणपक्षे अनध्यायतिथौ पूर्णिमायां वेदपाठे विहितोऽस्ति, ततस्तदर्थं प्रतिप्रसवो विधेयः।

इत्थं धर्मशास्त्राणां तत्त्वानि अतिगहनानि भवन्ति। विशेषेण तु मनुस्मृतिवचनानाम्। मनुस्मृतौ हि बहूनि तथ्यानि तत्त्वानि च विलसन्ति। मनुस्मृतेः भाषा चेतरप्राचीनग्रन्थानां महाभारतादीनां भाषापेक्षया व्याकरणनियमार्जिता अस्ति। साक्षिणः सन्ति मेत्युक्त्वा (३-५-७) इति श्लोके मे इत्युक्त्वा इति स्थाने यत् स्वरसन्धिविधानं तदेव व्याकरणविरुद्धमस्ति तद्विहाय कुल्लुकव्याख्यायाम् २५१९ एकोनविंशत्यधिकसार्द्धद्विसहस्रश्लोकविशिष्टायां मनुस्मृतौ क्वापि व्याकरणविरुद्धः प्रयोगो नास्ति। एतेनैतज्ज्ञायते यत् पाणिनिप्रमुखाः वैयाकरणा अस्य ग्रन्थस्य भाषामादर्शरूपेणाश्रित्य व्याकरणशास्त्रं निर्ममिरे॥ यत इयं मनुस्मृतिः रामायणमहाभारतादि—सुप्रसिद्धलौकिकभाषानिबद्धेभ्यो ग्रन्थेभ्यः प्राचीन-तमा भवति। अस्यां प्राचीनत्वं च प्रतिपादितं पूर्वभागीयमुखबन्धे

अपि चास्यां मनुस्मृतौ बहूनि वैज्ञानिकानि तथ्यानि सन्ति। यथा—तमसा बहुरूपेण वेष्टिताः कर्महेतुना।

अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः। (मनुः १-४९) इत्यत्र वृक्षलतादीनां चेतनत्वमुक्तं यदा-धुनिकवैज्ञानिकैः साधितम्।

२। पुनश्च नाप्सु मूत्रं पुरीषं वा ष्ठीवनं वा समुत्सृजेत्।
अमेध्यलिप्तमन्यद् वा लोहितं वा विषाणि वा॥ (४-५-६)

इत्यत्र मूत्रपुरीषादीनाममेध्यानां जले प्रक्षेपो वारितः यश्च लोकोपकारकः आधुनिकवैज्ञानिकानुमतः॥

३। रात्रौ च वृक्षमूलानि दूरतः परिवर्जयेत्॥ (४-७३)

इत्यत्राभिहितं रात्रौ वृक्षमूलवर्जनमाधुनिकवैज्ञानिकाभिमतम्॥

४। अश्मनो लोहमुत्थितम् (९-३२१) पाषाणात् लोहोत्पत्तिरनुभूयते । अग्नौ क्षयाभागः, राजतादीनां प्रतिशतं द्विपलादिक्षयश्च ।

५। पुनश्चानेन मनुना अद्भ्योऽग्नि (९-३२१) रिति जलात् अग्नेः सृष्टिरुक्ता । या विद्युदाद्युत्पत्तौ साक्षादनुभूयते । पुनश्चेयं स्मृतिः ऋतं च सत्यं मत्यादिबाहुच (१९०) सूक्तमनुसृत्य अतएवससर्जादौ (१-८) इति जलसृष्टिं प्रथमामाह, कविशिरोमणिः कालिदासश्च यासृष्टिःस्रष्टुराद्येतिशाकुन्तलश्लोके तन्मतमग्रहीत् इति मनोः वैज्ञानिकता सर्वमान्यता च वरीवर्त्ति ।

६। पुनरनेन मनोविज्ञानस्य भित्तिरपि स्थापिता—

आकारैरिङ्गतैर्गत्या चेष्टया भषितेन च ।
नेत्रवक्त्राविकारैश्च गृह्यतेऽन्तर्गतं मनः (८-२६)

इत्यनेन आकशदिभिर्मनोज्ञानं दर्शयता तादृशं ज्ञानं प्रमाणत्वेन अङ्गीकुर्वता च ।

७। अपामग्नेश्च संयोगाद्धेमं रौप्यंच निर्बभौ (५-११३) इत्यत्र अग्निजलयोः संयोगात् स्वर्णरूप्ययोरुत्पत्तिरुक्ता । अत्र यथार्थतानिरुपणे वैज्ञानिकाः प्रमाणम् ।

८। सन्तानोत्पादनमभिलक्ष्य तृतीयाध्याये (४५-५०) षड्भिः श्लोकैः स्त्रीणाम् ऋतुकाले गर्भाधानं भवति । तत्र युग्मासु पुत्रः अयुग्मासु रात्रिषु कन्या जायते । इत्यादि यदुक्तं तत् वैज्ञानिकमेव ।

९। गुरुजनसाक्षात्कारसमये लघुभूतजनानामवस्थां दर्शयति—

अर्द्धं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥ (२-१२०)

इति । अत्र वर्णितं मान्यजनदर्शनक्षणे यूनां प्राणोर्ध्वक्रमणम् अनुभूतिसिद्धं वैज्ञानिकं च ।

एवंभूतानि बहूनि तत्त्वानि मनुस्मृतौ निहितानि सन्ति ।

पुनश्चात्र मनुस्मृतौ महायन्त्रप्रवर्त्तनं गोवधसदृशोपपातकायेति प्रदर्शितम्, यत् सम्प्रति लोकहिताय-प्रसायते । तथैव भर्तरि पत्न्याः सहगमनं वा अनुगमनं वा मनुना किमपि नोक्तम् । परवर्तिन्या विष्णु-स्मृत्या (२५-१४) मृते भर्तरि ब्रह्मचर्यं तदन्वारोहणं वा इति कल्पिकतया तत् उपदिष्टम् ॥ तदपि सम्प्रति नाद्रियते; अपि तु निन्द्यते ।

तथैव पुत्रगणनायां मनुः पुत्रिकां कन्या सौरसरूपेण गणयामास । यतः षट्सु बन्धुदायादेषु षट्सु चाबन्धुदायादेषु संकलनया द्वादशसु पुत्रेषु पुत्रिकां पृथक्त्वेन नोक्तवान् ।

यथा— पुत्रान् द्वादश यानाह नृणां स्वायम्भुवो मनुः ।
तेषां षड् बन्धुदायादाः षड्दायादबान्धवाः ॥ १५८

औरसः क्षेत्र जश्चैव दत्तः कृत्रि मएव च ।
गूढोंत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥ १५०
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्त॑था ।
स्वयंदत्तश्च शौद्रश्च षड्दायादबान्धवाः ॥ ६-१६० इति

एतेन मनुना पुत्रिकायाः कृते महत् गौरवं दत्तम् । तन्मते पुत्रिका एव पुत्र इति कर्मधारयः। वसिष्ठस्तु पुत्रिकां दुहितरं पुत्रत्वेनाङ्गीकुवन्नपि औरसात् तां विभिद्य गणयति तृतीयः पुत्रिका (१७-१५) इति । विष्णुस्तु पुत्रिकायाः पुत्रं पुत्रत्वेन गणयति, तं च तृतीयस्थाने स्थापयति पुत्रिकापुत्रस्तृतीयः यस्तस्याः पुत्रः स मे पुत्रोभवेदिति या पित्रादत्ता सा पुत्रिका (१५-५) योगीश्वरश्च औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः। (२-१२८) इत्युक्ता पुत्रिकायाः पुत्रत्वेन स्वीकरोति, तं च द्वितीयस्थाने स्थापयति औरसतुल्यं य मन्यते। मनुः शूद्रापुत्रं संकल्प्य द्वादशपुत्रानाह, योगीश्वरस्तु शूद्रापुत्रं वर्जयित्वा पुत्रिकापुत्रं स्वातन्त्र्येण गृहीत्वा द्वादशसंख्यां दर्शयतीति बृहस्पतिस्तु शूद्रापुत्रं च पुत्रिकापुत्रं चोभयं गणयित्वा पुत्रास्त्रयोदश प्रोक्ता मनुना येरनुपूर्वशः इति त्रयोदश पुत्रानाह । देवलस्तु पुत्रिकां च पुत्रिकापुत्रंच भेदेनोपन्यस्य वीज यत्राक्वचनोत्पादितं च संयोज्य १५ अदश पुत्रानाह ।

मनुभि नैरेतैः सर्वैः दुहितुः गौरवं नाशितम् तेन औरसपुत्राभावे सतीष्वपि कन्यासु दत्तपुत्रग्रहणप्रथा लोके प्राबल्येन प्रवर्त्तिता । या प्रथा संप्रति क्रमशः म्लाना भवति। दुहित्रेय पुत्रमर्यादा दीयते जनैः शासनेन च। एतेन मनोः मतं नित्यनूतनमिति वक्तुं शक्यते ।

स्मृत्यन्तरेष्वपि अनेके वैज्ञानिका उपादेयाश्च विषयाः सन्ति । गौरवभयात् तेषामुल्लेखोत्र न सम्भवति। सूक्ष्ममतयो विद्वांसस्तत् स्वयमेव प्रतिपत्तुमर्हन्ति। एतादृशस्य चिरगौरवनिधानस्य धर्मशास्त्र-ग्रन्थजातस्य विशिष्टाः शब्दाः सार्थाः सप्रकरणनिर्देशा अत्र ग्रन्थे यथामति मया सन्निवेशिताः । अतःपरं क्षमाधारा विद्वांस एव शरणम् । अलमतिविस्तरेण । इति

विदुषां विधेयः
कुलमणि मिश्रः
११-७-८५

---

# धर्मशास्त्रशब्दकोषः

## द्वितीयो भागः

## (न)

**नक्तम्**— (१) रात्रिः।

(२) नक्ताख्यं व्रतम्। तत्स्वरूपं च

दिवाभोजनस्य रहितत्वे सति रात्रिभोजनमस्य

नक्तव्रतस्य स्वरूपम्।

नक्तप्रशंसा यथा देवीपुराणे

उपवासात् परं भैक्षं भैक्षात्परमयाचितम्।

अयाचितात् परं नक्तं तस्मान्नक्ते न वर्त्तयेत्॥

इति — ७८-३

गृहस्थानां नक्तकालः प्रदोषः॥

यतीनां तु दिवसान्तमुहूर्त्तद्वयम्॥

दिवानक्तं तु यद् प्रोक्तमन्तिमे घटिकाद्वये।

निशानक्तं तु तत्प्रोक्तं यामार्द्धं प्रथमे सदा॥ इति

**नक्तमालः**— करंजवृक्ष इति हेमाद्रिः।

**नक्षत्रांगविद्या**— ज्योतिःशास्त्रम्।

न चोत्पातनिमित्ताभ्यां न नक्षत्रांगविद्यया।

नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित्॥

मनुः—६-५०

वसिष्ठः—१०-२१

**नखम्**— (१) निष्पावाः।

शिरः कपालमंत्राणि नखचर्मतिलास्तथा।

एतानि क्रमशो नित्यमष्टम्यादिषु वर्जयेत्॥

इति समयमयूखोद्धृतस्कान्दे।

नखं बाला इत्याचारेंदौ वाइल इति उत्कलभाषायाम्।

(२) गंधद्रव्यविशेषश्च।

नख पुनर्गंधद्रव्ये नखः करजषण्डयोरिति हैमः।

**नखः**— करजः "विंशतिर्नखाः" याज्ञ०—३-८५

स्नुतं नखैश्चतुर्भिश्च यो दद्यात्पाणिना घृतम्।

दाता पुण्यं न चाप्नोति भोक्ता पापतरं व्रजेत्॥

इति कालसारे यमशातातपौ—४११

**नखविष्किरः**— नखै ये विकीर्य्य भक्षयन्ति

मयूरकुक्कुटादय इति मेधातिथिः।

प्रतुदाञ्जालपादांश्च कोयष्टिनखविष्किरान्।

निमज्जतश्च मत्स्यादान् शौनं वल्लूरमेव च॥

इति अभक्ष्यनिर्देशप्रकरणे मनुः—५-१३

**नखशुक्तिः**— दीर्घशुक्तिका (जलजीव) इति कल्पतरुः।

**नखाग्राम्बु**— नखच्युतजलम्।

शूर्पवातं नखाग्राम्बुस्नानवस्त्रपदोदकम्।

मार्जनीरेणुकेशाम्बु हन्ति पुण्यं दिवाकृतम्॥

अत्रि—३१६

**नगरम्**— (१) बहुजनसंकीर्णं पुरम्।

(२) यतिचतुष्टयस्य ततोऽधिकस्य वा समवायः।
एको भिक्षुर्यथोक्तस्तु द्वावेव मिथुनं स्मृतम्।
त्रयो ग्रामः समाख्यात ऊर्द्ध्वं तु नगरं स्मृतम्॥
इति दक्षः--७-३५

**नगरगणी**— नगरग्रामगणिनो नगरग्राममुख्याः
इति विवादरत्नाकरे चण्डेश्वरः—२०८
क्षेत्रसीमा विरोधे तु सामन्तेभ्यो विनिर्णयः।
नगरग्रामगणिनो ये च वृद्धतमा नराः॥
इति तत्र नारदः—११-२

**नगरी**— राजव्यतिरिक्तनगरस्वामीति हेमाद्रिः
नगरस्वामीति कल्पतरुः नियतकालकाण्डे—२६१

**नग्नः**— (१) वेदत्यागी।
नग्ना वेदपरित्यागिन इति हेमाद्रौ—५२०
सर्वेषामेव वर्णानां त्रयीसंवरणं नृपः।
तां समुज्झति यो मोहात् स नग्नः पातकृत्तमः॥
इति विष्णुपुराणे आह्निक प्रकाशे—२०७
तां समुज्झति इति प्रायश्चितविवेकपाठः - ४७
सर्वेषामेव भूतानां त्रयीसंवरणंस्मृतम्। ३४
तां ये त्यजन्ति संमोहात् ते वै नग्नादयो जनाः॥
ब्रह्माण्ड पु० २-३-१४-३६
(२) नग्नो मलिनवस्त्रः स्यान्नग्नश्चार्द्धपटः स्मृतः।
नग्नस्तु दग्धवस्त्रः स्यान्नग्नः स्यूतपटस्तथा॥ इति भृगुः।
स्मृत्यन्तरे तु—
एककच्छो द्विकच्छश्च मुक्तकच्छस्तथैव च।
एकवासा अवासाश्च नग्नः पंचविधः स्मृत॥ इति
वेन नाभौ पृष्ठे पार्श्वे चेति कक्षात्रयमावश्यकमिति
आह्निकप्रकाशे—२४६
नग्नः स्यान्मलवद्वासा नग्नः कौपीनवस्त्रधृक्।
द्विकच्छोऽनुत्तरीयश्च विकच्छोऽवस्त्र एव च॥
नग्नः कषायवस्त्रः स्यान्नग्नश्चार्द्धपटः स्मृतः॥
इति स्कान्दे. प्रभास— २०६-१०
(३) अवश्यं छायानामङ्गानामच्छादकः।
दरिद्रोऽपि न दग्धव्यो नग्नः कस्यांचिदापदि।
केनापि वस्त्रखण्डेन च्छादितव्यः प्रयत्नतः॥
इति हारलतायाम्—१४३

**नग्निका**— कन्या।
यावच्चैनं न गृह्णाति यावत्क्रीडति पांशुभिः।
यावद्दोषं न जानाति तावद् भवति नग्निका॥
इति हेमाद्रौ।
नग्निकाऽनागतार्त्तवेत्यमरः—२-६-८
कुचहीना तु नग्निका इत्यंगिराः
सप्तवर्षा भवेद् गौरी दशवर्षा तु नग्निका।
द्वादशे तु भवेत्कन्या अत ऊर्द्ध्वं रजस्वला॥
इति कालसारोद्धृतभविष्ये—१८
सप्तवर्षा भवेद्गौरी नववर्षा तु नग्निका।
दशवर्षा भवेत्कन्या अत ऊर्द्ध्वं रजस्वला॥
स्कन्द० प्रभा०—२०५ ८४
यावन्न लज्जां जानाति कन्या पुरुषसन्निधौ।
योन्यादीन्नावगूहेत तावद् भवति कन्यका॥
इति ब्रह्मपुराणे संस्कारप्रकाशे—७६७

**नटः**— (१) नर्त्तकः।

देवालये राजगृहे गृहीत्वा भृतिमादरात्।
मासि मासि च वर्षे वा जीवन्नृत्यति सर्वदा॥
सोऽयं नट इति ख्यातः सर्वधर्मबहिष्कृतः॥
तस्य सम्बन्धिनी नारी नटिनीति स्मृता बुधैः॥

इति गरुड़पुराणे हेमाद्रि प्रायश्चित्त—३२२

(२) व्रात्य क्षत्रियात् सवर्णायां जातश्च।

झल्लो मल्लश्च राजन्याद् व्रात्यान्निच्छिविरेव च।
नटश्च करणश्चैव खसो द्रविड़ एव च॥

मनुः—१०-२२

**नडः**— नडैः दीर्घैर्बाहुभिरिति देवपालः।

नडैः नडशाखाभिरिति आ० भाष्ये

नडैर्वेतसशाखया वा मृत्योः पदं लोभयन्त

काठक गृ०—४-५-८

सव्यसक्थिपूर्व नडकं सव्यस्य सक्थनः सव्यस्य बाहोः प्रथमनडकम् अंशादधो वर्त्तमानमिति संस्कारप्रकाशे मित्रमिश्रः—६८७

अंगान्यवद्यत्यभंजन् हृदयं जिह्वांक्रोडं सव्यसक्थि पूर्वनडकं पार्श्वे यक्त वृक्कौ गुदमध्यं दक्षिणा श्रोणिरिति जोहवानि इति कात्यायनः।

**नडन्तिका**— श्राद्धदेशत्वेन प्रसिद्धा नदी।

नडन्तिका नदी अभियुक्तेभ्यो ज्ञेया इति वैजयन्त्याम्

विष्णुः—८५-१६

**नतमंहः**— नतमंहो दुरितम् इत्यष्टौ इति कुल्लूकः।

ते च मन्त्राः ऋग्वेदस्य दशमण्डले १२६ सूक्ते द्रष्टव्याः हविष्पान्तीयमभ्यस्य नतमंह इतीति च।
जपित्वा पौरुषं सूक्तं मुच्यते गुरुतल्पगः॥

मनुः—११-२५१

**नदः**— पूर्ववाहिन्यो नद्यः, पश्चिमवाहिनो नदाः एतत्तु प्रायिकम्।

शोणसिन्धुहिरण्याख्यः कोकलोहितघर्घराः।
शतद्रुश्च नदाः सप्त पावनाः परिकीर्त्तिताः॥

इति निर्णयसिन्धौ देवलः

यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम्।
तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्॥

मनुः—६-९०

**नदी**— पूर्ववाहिन्यो नद्यः। नदीलक्षणं कालदीपे।

धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते।
न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः॥
चतुर्विंशांगुलैर्हस्तस्तच्चतुष्कं धनुः स्मृतम्।

अशोष्यसलिला स्रवन्ती नदीति हेमाद्रिः

**नदीतरः**—(१) नदीतरणार्थे देयमिति विवादरत्नाकरे पृ—६६१ (२) नदीसन्तरणम्।

विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम्।
केशभस्मतुषाङ्गारकपालेषु च संस्थितिम्॥

याज्ञ०—१-१३९

**नदीमुखम्**—नदीसागरसंगमस्थानम्। नदीपतनस्थानमित्यर्थः

नदीष्वथ समुद्रेषु त्वन्येषु च नदीमुखे।

पराशरः—९-५

**नदीसम्भेदः**— नद्योर्नदीनां वा मेलनस्थानम्।

नदी समुद्रसंगमे वा ॥

सम्भेदः सिन्धुसंगम इत्यमरः—१-१०-३५

गृहे गोष्ठे नदीतीरे सन्ध्या दशगुणा क्रमात् ।
सम्भेदे स्याच्छतगुणा ह्यनन्ता शिवसन्निधौ ॥

स्कन्दपु० काशी०—३५-२३६

**नना**— माता दुहिता वा । नमनक्रियायोग्यत्वात् ।

कारुरहं ततो भिषगुपलप्रक्षिणी नना

ऋक् ९-११२-३

माता खलु स्तन्यपानादिना अपत्यं प्रति नमनशीला भवति दुहिता वा शुश्रूषार्थम् । उत्कलेषु केचन ब्राह्मणाः पितरं नना इत्याचक्षते अन्ये वर्णा भ्रातरं ज्येष्ठम् । तत्र पुंसि बहुत्वं तर्क्यम् ॥

**नन्दः** कृष्णपक्षगतरात्रितृतीयमुहूर्त्तः शुक्लपक्षगतरात्रि तृतीयमुहूर्त्तश्च ॥ कालमाधवे–३

**नन्दा**- प्रतिपत् षष्ठी एकादशी चेति तिथयः नन्दासंज्ञकाः

नन्दा भद्रा जया रिक्ता पूर्णा च नामसदृशफलाः ।

इति शुद्धिदीपिकायाम्–४४

**नन्द्यावर्त्त**— विष्णुप्रियपुष्पविशेषः वृद्धहारीतेन पठित

७-५

नीलोत्पलं सप्तलां च नन्द्यावर्त्तं च केतकमिति

नन्द्यावर्त्तो गन्धतगर इति शारदातिलकव्याख्याने ॥

**नपुंसकः**— तृतीया प्रकृतिः । क्लीवविशेषश्च नष्टरेता नपुंसक इति क्लीवभेदाः क्लीवशब्दे द्रष्टव्याः ।

**नभस्य**— भाद्रपदो मासः नभश्चनभस्यश्चवार्षिकावृतू

शुक्लयजुः—१५-१५

**नभः**— श्रावणो मासः नभश्च नभस्यश्च वार्षिकावृतू

शुक्लयजुः—१४-१५

चैत्रो मधुरिति स्मृतः ।
वैशाखो माधवः प्रोक्तः शुचिर्ज्येष्ठ उदाहृतः ॥ ३ ॥
शुक्रः प्रोक्तस्तथाषाढो नभः श्रावण इष्यते ।
प्रोष्ठपादो नभस्यश्च ईषश्चाश्वयुजः स्मृतः ॥ ४ ॥
ऊर्जस्त्वयः कार्त्तिकः प्रोक्तो मार्गशीर्षः सहस्तथा ।
सहस्यः पौष इत्युक्तो माघः स्यात्तप एव च ॥ ५ ॥
फाल्गुनश्च तपस्याख्यो मासो यदुकुलोद्वह ॥

विष्णुधर्मोत्तरे—३-९-६

**नमस्कारः**— नमस्कारे तु न पादग्रहणं न पादस्पर्शः न वा अभिवादनवाक्यप्रयोगनियमः इति अभिवादनोपसंग्रहादिभ्योऽस्य भेदः ॥

ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः ।
निर्दया निर्नमस्कारास्तन्मनोरनुशासनम् ॥

मनुः—९-२३९

नमस्कारश्च बद्धाञ्जलेः प्रह्वीभावो नमः शब्दोच्चारणं च

इति नित्याचारप्रदीपे—१-४००

सभायां यज्ञशालायां देवतायतनेष्वपि ।
प्रत्येकं तु नमस्कारो हन्ति पुण्यं पुराकृतम् ॥ ४३
पुण्यक्षेत्रे पुण्यतीर्थे स्वाध्यायसमये तथा ।
प्रत्येकं तु नमस्कारो हन्ति पुण्यं पुराकृतम् ॥ ४४

बृहन्नारदीये २१ अध्याये ।

**नमेरुः**— सरलद्रुमं इति हेमाद्रिः ।

**नमोनमः**— विष्णुः ।
नम्यन्त इति नमसः ब्रह्मादयः ।
तैः नम्यन्त इति नमोनमः ।
कर्मण्यसुनि कृते साधुः
इति वैजयन्त्याम् विष्णुः—९९-१०१

**नयः**— (१) नीतिमार्गः ।
(२) नीतिः ।
(३) साम । उदाहरणं चास्य यथा—
तान्सर्वानभिसंदध्यात्सामादिभिरुपक्रमैः ।
व्यस्तैश्चैव समस्तैश्च पौरुषेण नयेन च ॥
मनुः—७-१५९

**नरः**— (१) ना ।
(२) परमात्मा
आपो नारा इति प्रोक्ता आपो वै नरसूनव इति
मनुः—१-१०
यतस्ता (आपः) नराख्यस्य परमात्मनः सूनवोऽपत्यानि
इति कुल्लूकः ।

**नरकः**— यातनानिलयः ॥ मनुः—४-(८८-९०
तामिस्रमंधतामिस्रं महारौरवरौरवौ ।
नरकं कालसूत्रं च महानरकमेव च ॥ ८८
संजीवनं महावीचिं तपनं संप्रतापनम् ।
संघातं च सकाकोलंकुड्मलं पूति मृत्तिकम् ॥ ८९
लोहशंकुमृजीषं च पन्थानं शाल्मलीं नदीम् ।
असिपत्रवनं चैव लोहदारकमेव च ॥ ९०
अत्र १) तामिस्रः अन्धकारः २) अन्धतामिस्रः निविडान्धकारः ३/४ महारौरवरौरवौ तप्तभूमिवर्त्मबहुलात्मकौ ५) कालसूत्रं कुलालचक्रसूत्रच्छेदन रूपम् ६) महानरकः यत्र महती सर्वप्रकारपीडा ७) संजीवन यत्र संजीव्य पुनर्व्यापाद्यते ८) महावीचिः यत्र महाकल्लोलेन लीयते ९) तपनः अग्न्यादिदाहात्मक १०) संप्रतापनं कुम्भीपाकः ११) संघातोऽत्यन्त सवृते देशे बहूनामवस्थानम् १२) काकोलः यत्रः काकैः भक्ष्यते । १३) कुट्मलं यत्र रज्जुभिः कंडनम् । १४) पूतिमृत्तिकं यत्र पुरोषगंधि मृत्तिका १५) लोहशंकुः सूचीभेदनम् । १६) ऋजीषं विष्टपचन प्रक्षेपो यत्र १८) पन्था यत्र अटाप्यते १९) शाल्मली यत्र शाल्मलीकण्टकैस्ताड्यते २०) नदी यत्र नद्या आह्रियते यथाह— जमदग्निः—
नदी वैतरणी नाम दुर्गन्धा रुधिरावहा ।
उष्णतोया महावेगा अस्थिकेशतरङ्गिणी ॥ २१
असिपत्रवनं नाम पत्रैर्यत्र विदार्यते ॥ २२)
लोहदारको यत्र निगड़बन्धः लोहदारक इति वा पाठः अन्यनरका; मार्कण्डेपुराणादिषु द्रष्टव्याः इति प्रायश्चित्तविवेके शूलपाणिः—१६
पूतिमृत्तिकस्थाने प्रतिमूर्त्तिकमिति पाठान्तरम् । परत्र चासिद्धि । तमेके नरकम् इति गौतम-३-२-५
नरकान्यान्ति दारुणान् ॥ याज्ञ०—३-२२१
तामिस्रं लोहशङ्कु च महानिरयशाल्मली ।
रौरवं कुड्मलं पूपिमृत्तिकं कालसूत्रकम् ॥ २२२
संघातं लोहितोदं च सविषं सम्प्रतापनम् ।
महानरककाकोलं सञ्जीवनमहापथम् ॥ २२३
अवीचिमन्धतामिस्रं कुम्भीपाकं तथैव च ।

असिपत्रवनं चैव तपनं चैकविंशकम् ॥ २२४ इति शङ्खेनापि कुम्भीपाक रौरव महारौरव कूटशाल्मली शिलासंघातवज्रकण्टकशयनान्यसिपत्रवनान्ययस्तुण्डाः पक्षिणः पूयशोणितकर्दमाः केशकश्मलशैवालाः क्षारतद्यो ज्वलिताङ्गारकुण्डास्तप्तकरम्भवालुका निस्त्रिंश-मुद्गरनिपाता सूचीप्रतोदवेध्यः अल्पोदकाः साग्नि-गर्त्ताः प्रदीप्तायःपिण्डलोहकण्टकशयनानि नरक पञ्जराणि कालसूत्राणि तीक्ष्णाग्राश्च शूला श्यामशवलौ वज्रदंष्ट्रिणौ तप्तोदका वैतरणी एतेषु पच्यन्ते पाप-कर्मिण इति शङ्खलिखितौ मदनपारिजाते—६९४

**नरकचतुर्द्दशी**—कार्त्तिककृष्णचतुर्द्दशी ।

**नरदेवः**—राजा ।

शिष्ट्वा वा भूमिदेवानां नरदेवसमागमे ।
स्वमेनोऽवभृते स्नातो हयमेधे विमुच्यते ॥

मनुः—११-८२

**नराशंसः**— मनुष्यस्तुतिशीलः । श्राद्धकल्पतरुः—८९

**नर्म**— क्रीडा, परिहासश्च ।

न नर्मयुक्तं वचनं हिनस्ति न स्वैरवाक्यं न च मैथुनार्थे ।
प्राणात्यये सर्वधनापहारे पंचानृतान्याहुरपातकानि ॥

इति प्रायश्चित्तविवेके यमः

न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन्न विवाहकाले ।
प्राणात्यये सर्वधनापहारे पंचानृतान्याहुरपातकानि ॥

महाभा० आदि—८-२-१७

**नर्य्यम्**— शस्यनर्य्यभार्य्येषु करीषचूर्णशाल्मलितूलपर्णादि-गर्भास्तिस्र उखा अधिश्रित्य इति साग्निकदाहे

गदाधरराजगुरुः ।

**नलः**— तृणविशेषः ।

वेत्रमिति बौधायनभाष्ये । नलवेणुकुशव्यूतानाम्

बौधा०—१-६-१४-११

वस्तुतस्तु इक्षुवृक्षाकारे तृणविशेषेऽपि नलशब्दव्यवहारो दृश्यते ॥

(२) नलः— किष्कुचतुःशतमिति प्राचीना इति नीलकण्ठः ।

हैरण्यांस्त्रिनलोत्सेधान् पर्वतानेकविंशतिम् ।
ब्राह्मणेभ्यो ददौ राजा योऽश्वमेधे महामखे ॥

महा० भा०—१६-१४३

**नल्वणः**—परिमाणविशेष द्रोणपर्य्यायः खारीशद्वे द्रष्टव्यः ।

**नवनवकाः**— सुधादयः नवधा नवकाः । यथा—

सुधानव गृहस्थस्य ईषद्दानानि वै नव ॥ १
नवकर्माणि तस्यैव विकर्माणि तथा नव ॥ २
प्रच्छन्नानि नवाऽन्यानि प्रकाशानि तथा नव ।
सफलानि नवान्यानि निष्फलानि नवैव तु ॥ ३
अदेयानि नवान्यानि वस्तुजातानि सर्वदा ।
नवका नव निर्द्दिष्टा गृहस्थोन्नतिकारकाः ॥ ४

इति दक्षस्मृतिः—३-४

सुधावस्तूनि वक्ष्यामि विशिष्टे गृहमागते ।
मनश्चक्षुर्मुखं वाचं सौम्य दद्याच्चतुष्टयम् ॥ ५
अभ्युत्थानमिहागच्छ-पृच्छालापः प्रियान्वितः ।
उपासनमनुव्रज्या कार्य्याण्येतानि यत्नतः ॥ ६
ईषद्दानानि चान्यानि भूमिरापस्तृणानि च ।

पादशौचं तथाभ्यङ्गमाश्रयाशयनं तथा ॥ ७
किंचिच्चान्नं यथाशक्ति नास्यानश्नन् गृहे वसेत् ।
मृज्जलं चार्थिने देयमेतान्यपि सतां गृहे ॥
सन्ध्यास्नानं जपो होमः स्वाध्यायो देवतार्च्चनम् ।
वैश्वदेवं तथातिथ्यमुद्धृतं चापि शक्तितः ॥
पितृदेवमनुष्याणां दीनानाथतपस्विनाम् ।
माता पितृ गुरुणां च संविभागो यथार्हतः ॥ १०
एतानि नवकर्माणि विकर्माणि तथा पुनः ।
अनृतं पारदार्य्यं च तथाभक्ष्यस्य भक्षणम् ॥
अगम्यागमनापेयपानं स्तेयं च हिंसनम् ।
अश्रौतकर्माचरणं मित्रधर्मं बहिष्कृतम् ॥ १२
नवैतानि विकर्माणि तानि सर्वाणि वर्जयेत् ।
आयुर्वित्तं गृहच्छिद्रं मन्त्रमैथुनभेषजम् ॥
तपो दानापमानौ च नव गोप्यानि यत्नतः ।
प्रायोग्यमृणशुद्धिश्च दानाध्ययनविक्रयाः ॥ १४
कन्यादानं वृषोत्सर्गो रहः पापमकुत्सनम् ।
प्रकाश्यानि नवैतानि गृहस्थाश्रमिणस्तथा ॥ १५
माता पित्रोर्गुरौ मित्रे विनीते चोपकारिणि ।
दीनानाथविशिष्टेभ्यो दत्तं तु सफलं भवेत् ॥ १६
धूर्ते वादिनि मन्दे च कुवैद्ये कितवे शठे ।
चाटचारणचौरेभ्य दत्तं भवति निष्फलम् ॥
सामान्यं याचितं न्यासः आधिदाराश्च तद्धनम् ।
क्रमायातं च निक्षेपः सर्वस्वं चान्वये सति ॥ १८
आपत्स्वपि न देयानि नववस्तूनि सर्वदा ।
यो ददाति स गूढात्मा प्रायश्चित्तीयते नरः ॥
नवनवकवेत्तारमनुष्ठानपरं नरम् ।
इहलोके परे च श्रीः स्वर्गस्थं च न मुञ्चति ॥ २०

**नवनी**— नवनीतम् ।
अहोहयंगवीनानां नवनीनां परं मुदा ।
लड्डुकानां शर्कराणां स्वस्तिकानां च यत्नतः ॥
ब्रह्म० वै० श्रीकृ०—४५

**नवमिश्रम्**– नवश्राद्धानामुपरिकर्त्तव्यं मासिकम् एकोद्दिष्ट-श्राद्धम् ।
एकोद्दिष्टश्राद्धम् त्रिविधं नवं नवमिश्रं पुराणं च ॥
तत्र नवश्राद्धानि नवश्राद्धशब्दे द्रष्टव्यानि ।
नवश्राद्धानामुपरि कर्त्तव्यं मासिकं श्राद्धं नवमिश्रम् ॥
नवमिश्रं षडुत्तरम् इत्याश्वलायनः ।
मासिकानामुपरि कर्त्तव्यं वार्षिकादि पुराणमिति
एकोद्दिष्टशब्दे द्रष्टव्यम् ।

**नवयज्ञः**— आग्रहायणेष्टिः नवान्नश्राद्धमिति यावत् ।
नवेन शस्येन यज्ञो नवयज्ञ इति विग्रहः ।
आधानहोमयोश्चैव वैश्वदेवे तथैव च ॥
बलिकर्मणि दर्शे च पौर्णमासे तथैव च ॥
नवयज्ञेषु यज्ञज्ञावदन्त्येवं मनीषिणः ।
एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक् ॥
इति छंदोगपरिशिष्टे आह्निकप्रकाश पृ—४०२
शरद्वसन्तयोः केचित् नवयज्ञं प्रचक्षते ।
धान्यपाकवसादन्ये श्यामाको वनिनः स्मृतः ॥
गोभिलः स्मृतिः—३-१०३ कात्यायनः—२६-६
अनिष्ट्वा नवयज्ञेन नवान्नं योऽत्यकामतः ।
वैश्वानरश्चरुस्तस्य प्रायश्चित्तं विधीयते ॥
कात्यायनः—२५-१८

**नवरत्नानि**— मुक्ताफलं हिरण्यं च वैडुर्य्यं पद्मरागकम्
पुष्परागं च गोमेदं नीलं गारुत्मतं तथा ॥

प्रवालयुक्तान्युक्तानि महारत्नानि वै नव।
इति विष्णुधर्मोत्तरे परिभाषाप्रकाशे—११५

**नवश्राद्धम्**— चतुर्थे पंचमे चैव नवमैकादशे तथा।
यदत्र दीयते जन्तोस्तन्नवश्राद्धमिष्यते ॥ इति यमः
प्रथमेऽह्नि तृतीयेऽह्न पंचमे सप्तमे तथा।
नवमैकादशे चैव तन्नवश्राद्धमुच्यते ॥
इति मिताक्षरायाम्—१-२५२
षड् नव श्राद्धमुच्यते इति स्मृतिचन्द्रिकायां
चतुर्थपादपाठः स्मृतिच-अशौचका—१७५

**नवान्नम्**— मेषु ग्राहि शिवान्येषु विभौमशनिवासरे।
अन्नप्राशनवत् कुर्यात् नवान्नफलभक्षणम् ॥
नवान्नं नैव नन्दायां न च सुप्ते जनार्दने।
न कृष्णपक्षे धनुषि न सलायां कदाचन ॥
वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः।
यत्कृतं धनुषि श्राद्धं मृगनेत्रासु रात्रिषु ॥
पितरस्तन्नगृह्णन्ति नवान्नामिषकाङ्क्षिणः।
इति कालसारोद्धृतज्योतिःशास्त्रे ॥

**नवान्नश्राद्धम्**— नवोदके नवान्ने च गृहाच्छादन एव च।
पितरस्पृहयन्त्यन्नमष्टकासु मघासु च ॥
इति शातातपः
अस्य श्राद्धस्य पार्वणत्वात् अपराह्णः कर्मकाल।
एतच्च पिण्डादिरहितं संकल्पश्राद्धम्।
संकल्पश्राद्धविधिस्तच्छब्दे द्रष्टव्यः ॥

**नवेज्या**— आग्रयणेष्टिरिति समयमयूखे।

**नवोदकम्**— नवखातजलमिति आचारसारे।
अजा गावो महिष्यश्च ब्राह्मण्यश्च प्रसूतिकाः।
दशरात्रेण शुद्ध्यन्ति भूमिष्टं च नवोदकम्॥इति देवल
वर्षादावुदकमिति लक्ष्मीधरः।
नवोदके वर्षोपक्रमे। आर्द्रागते रवावितियावत्।
आर्द्रादितो विशाखान्तं रविचारेण वर्षति। इति
नव्यवर्द्धमानधृतम्। इति शब्दकल्पद्रुमे।

**नागः**— पंचमी नागो द्वादशनाडिभिर्दिक् पंचदशभिस्त
भूतोष्टादशनाड़ भिर्द् शयत्युत्तरातिथिम् ॥
इति कालमाधवोद्धृतस्कान्दे।

**नागचतुर्थी**— कार्त्तिकशुक्लचतुर्थी।

**नागदैवतम्**—अश्लेषानक्षत्रम्।
श्रवणाश्विधनिष्ठार्द्रा नागदैवतमस्तके।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥
इति कालदीपे।

**नागपंचमी**— श्रावणशुक्लपंचमी। श्रावणकृष्णपंचमी च
श्रावणे मासि पञ्चम्यां कृष्णपक्षे नराधिप।
द्वारस्योभयतोलेख्या। गोमयेन विषोल्वणाः ॥
ते च नागाः—
वासुकितक्षकश्चैव कालिय मणिभद्रकः।
ऐरावतो धृतराष्ट्रः कर्कोटक धनञ्जयौ ॥
भविष्य० पु०—१-३२-२

**नागरम्**— शुण्ठी।
नागरं चात्र वै देयं दीर्घमूलकमेव च ॥
अत्र-श्राद्धे इति श्राद्धदीपे।

**नागवीथी**—अश्विनी कृत्तिका याम्यानागवीथीतिशब्दिता देवीभागवते—८-१५

याम्या—भरणीनक्षत्रम्।

सप्तोर्षिनागवीथ्यन्तर्देवलोकं समाश्रिताः।

तावन्त एव मुनयः सर्वारम्भविवर्जिताः॥

इति याज्ञ०—३-१८।

**नागह्रद**—अक्षोभ्यद्रव इति स्मृतिचन्द्रिका आह्निके-४६२

शुद्रयाजको गर्हितं द्रव्यं नागह्रदे प्रक्षिप्य ब्राह्मणानुपेत्य ब्रूयात् त्रायन्तु मां भवन्तो वर्णसाम्यम्॥

इति तत्र हारीतः।

**नागोदरिका**—कराङ्गुलित्राणम् इति श्रीमूला।

शिरस्त्राण कण्टत्राण कूर्पासकञ्चुक वारबाण पट्टनागोदरीकः इत्यादि—२-१८-१७

**नाडिका**—दण्डः अर्धमुहूर्त परिमितः काल इति यावत्

उदयात् प्राक् चतस्रस्तु नाडिका अरूणोदयः। इत्यादि

मुहूर्त प्रहरौ दिवसह्रासवृद्धयोः क्षीयेते वर्द्धते च।

नाड्यो पुनः न क्षीयते न वर्द्धते॥

द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणो दशत्रुटिः स्मृतः॥ २

विनाड़िका तु षट् प्राणास्ताः षष्टिर्नाडिका मता।

अहोरात्रं च ता षष्ठ्या नित्यमेतैः प्रकीर्त्तितम॥

विष्णु धर्म०-१-७३-३

**नाडी**—दण्डः।

नागो द्वादशनाभीडोर्दिक् पञ्चदशाभिस्तथा।

भूतोष्टा दशनाडीभिर्दषयत्युत्तरां तिथिम्॥

इति कायनाधवे।

**नाडीसप्तमी**—आरण्यषष्ठीं पश्यन्तु।

**नाणकम्**—नाणकं मुद्रादिचिह्नितं द्रम्मनिष्कादीति विज्ञानेश्वरः—२-२४०

राजमुद्रा चिह्नितमशीतिगुंजा परिमितं रूपकादि इति।

दत्तकमीमांसाव्याख्यायां मञ्जर्य्याम्।

शतत्रयं नाणकानां सौवर्णमथराजतम्।

प्रदद्यात्ताम्रमथवा उत्तमादिव्यवस्थया॥ इति

दत्तकमीमांसायां वृद्धगौतमः दत्तक—१३०

**नाणकपरीक्षी**—नाणकः रीक्षार्थे नियुक्तो राजकर्मचारी

**नान्दी**—समृद्धिः।

पिता पितामहश्चैव तथैव प्रपितामहः।

त्रयोऽप्यश्रुमुखाश्चैते पितरः परिकीर्त्तिताः॥

तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखोषिताः।

तेषु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते॥

इति श्राद्धदीपे।

**नान्दीमुखाः**—पितृपितामहप्रपितामहः मातृपितामही प्रपितामह्यः। मातामह प्रमातामह बृद्धप्रमातामहः

एतेषु विद्यमानेषु तत्पूर्ववर्त्तिनोऽपि प्रमाणं नान्दीशब्दे मृग्यम्।

**नान्दीश्राद्धम्**—विवाहाद्यभ्युदयेषुविहितमाभ्युदयिकं श्राद्धम्

एवं प्रदक्षिणावृत्कः वृद्धो नान्दीमुखान् पितृन्।

यजेत दधिकर्कन्धूमिश्रान् पिण्डान् यवैः क्रिया॥

याज्ञ०—१-२५०

आभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाः प्राङ्मुखो यज्ञोपवीती स्यात् । प्रदक्षिणमुपाचारो यवैस्तिलार्थे गन्धादिदानं द्विर्द्विः ऋजुदर्भान् आसने दद्यात् यवोसि सोमदेवत्यो गोसवो देवनिर्मितः प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान् पितृनिमाँ लोकान् प्रीणयाहि नः स्वाहा इति यवावपनम् । विश्वदेवा इदं वोऽर्घ्यं नान्दीमुखा पितर इदंवोऽर्घ्यमिति यथालिङ्गमार्घ्यदा· म् याणो होमः इत्यादि ।

**नापितः**—जातिविशेषः । क्षुरकर्मोपजीवी ।

शूद्रकन्या समुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
संस्कारात्त भवेद दासः ह्यसंस्कारात्तु नापितः ॥

इति पराशरः—११-२२

कुम्भकारशब्दो द्रष्टव्यः । दासशब्दोऽपि द्रष्टव्यः
सूतके प्रेतके व्यापि दीक्षाकाले च वापनम् ।
नाभेरूर्द्ध तु वपनं तस्यान्नापित उच्यते ॥

औशनसस्मृतिः—३४

**नामकरणम्**—संस्कारविशेषः ।

दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा पिता नाम कुर्यात्

पारस्करः—१-१६-१

नामधेयं दशम्यां तु द्वादस्यां वास्य कारयेत् ॥
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते ॥

मनुः —२-३०

दशरात्रे व्युष्टे नामकरणमिति गृह्यान्तरे
अहन्येकादशे नाम इति याज्ञवल्क्यः—१-१२

**नायकः**—(१) दशग्रामपतिः ।

अधिकृतो दशग्रामे नायकः स च कीर्त्तितः ।

शुक्रनीतिसारे—१-११

(२) अधिपतिः ।

अनायके न वस्तव्यं तथा च बहुनायके ।
स्त्री नायके न वस्तव्यं तथा च शिशुनायके ॥ इति

राजनीतिप्रकाशे ।

**नारंगम्**—नारंगं पानीयामलकमिति हेमाद्रौ व्रतखण्डे ।
ऐरावतं नारिकेलं नारंगं कदलीफलम् इत्यादि ।
जंभीराकारफलविशेषे नारंगशब्दव्यवहारः संप्रति लोके क्रियते मर्दनाद्यमाधुर्य्यें वन्यफलविशेषे तु पानीयामलकं (गणिअंला) इति संज्ञा व्यवह्रियते उत्कलेषु । कादंवर्य्यां शुकभुक्तफलत्वेन नलिनीदल हरितिद्राक्षाफलस्वादूनि च दलितानि स्वेच्छया प्राचीनामलकी फलानीति यदुक्तं तदेव पानियामलक मिति मन्मतम् ।

**नारा**—जलम् ।

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥

मनुः—१-१०

**नारायणः**—हिरण्यगर्भः ।

आपो नारा इति प्रोक्ता आपो वै नरसुनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृत ॥

मनु—१-१०

नरः आत्मा ।

नयनेति नरः प्रोक्तः परमात्मा सनातन इति
व्यासस्मरणात् ।
तस्माज्जातान्याकाशादीनि कार्याणि नाराणि ।
तानि अयनं स्थानं यस्य ।
यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रुयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः॥ इति श्रु
मराज्जतानि तत्त्वानि नाराणीति ततो विदुः ।
तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥
इति स्मृतेः इति वैजयन्त्याम् विष्णुः—९९-९८

**नारायणबलिः**—आत्महत्यादि दुर्मरणे नारायणबलिः । कस्यांचित् शुक्लैकादश्यां विष्णुं वैवस्वतं यमं च यथवद्भ्यर्च्य तत्समीपे मधुघृतप्लुतांस्तिलमिश्रां दशपिण्डान् विष्णुरूपिणं प्रेतमनुस्मरन् प्रेतनाम गोत्रे उच्चार्य दक्षिणाग्रेषु दर्भेषु दक्षिणाभिमुखो दत्वागंधादिभिरभ्यर्च्य पिण्डप्रवाहणान्तं कृत्वा नद्यां क्षिपेत् न पत्न्यादिभ्यो दद्यात् । ततस्तस्यामेव रात्र्यामयुग्मात् ब्राह्मणानामन्त्रयोपोषितः । श्वोभूते मध्याह्ने विष्णवाराधनं कृत्वा एकोद्दिष्टविधिना ब्राह्मणपादप्रक्षलनादि तृप्तिप्रश्नान्त कृत्वा पिंडपितृयज्ञ वृत्तोल्लेखनाद्यवनेजनान्तं तूष्णीं कृत्वा विष्णवे ब्रह्मणे शिवाय यमाय च परिवारसहिताय चतुरः पिंडान् दत्त्वा नामगोत्र सहित प्रेतं संस्मृत्य विष्णोनम संकीर्त्य पंचमं पिण्डं दद्यात् । ततो विप्रानाचान्तान् दक्षिणाभिस्तोषयित्वा तन्मध्ये चैकं गुणवत्तमं प्रेतबुद्धया संस्मरन् गो-भूहिरण्यादिभिः अतिशयेन सन्तोष्य ततः पवित्र पाणिभिः विप्रैः प्रेताय तिलादिसहितमुदकं दापयित्वा स्वजनैः सार्द्धं भुंजीत ॥ सर्पहतेत्वयं विशेषः संवत्सरं यावत् पुराणोक्तविधिना पंचम्यां नागपूजां विधाय पुर्णे संवत्सरे नारायणबलिं कृत्वा सौवर्णनागं दद्यात् । गां च प्रत्यक्षाम् । ततः सर्वमौर्ध्वदेहिकं कुर्यादिति मिताक्षराशयः याज्ञ०—३-६

आग्निवेश्य गृह्यसूत्रे तृतीयप्रश्ने एकादशाध्याये अथातो नारायणबलिं व्याख्यास्यामः । दक्षिणोत्तरायणेऽपरपक्षस्य द्वादश्यां क्रियते । श्रुतवृत्तसम्पन्नान् द्वादश षड्वा ब्राह्मणानामन्त्रयते देवगृहे नदीतीरे वाथ देवयजनोल्लेखनप्रभृत्या प्रणिताभ्यः कृत्वा उपोत्था. याग्रेण ग्नि देवमावाहयामि, ओं स्वः पुरुषमावाहयामि ओं भुर्भुवः स्वः पुरुषमावाहयामि ओम् इत्यावाह्य परिधानप्रभृत्याग्निमुखात् कृत्वा । दैवतमर्चयित्वा आपोहिष्ठा मयोभुव इति तिसृभिः हिरवर्णाः शुचय पावका इति चतसृभिः "पवमानः सुवर्जन" इत्येतेतानुवाकेन मार्जयित्वा सहस्रशीर्षापुरुष इत्येतेनानुवाकेन अक्षतगन्धपुष्पधूपदीपैरष्टक्षरेण वा दद्यात् ॥ प्रश्चिमां दिशमुपवेश्य प्रधानाहूतीर्जुहोति विष्णोर्नुकं कार्याणि प्रवोचम् इति पुरोनुवाक्यामनुच्य परोमात्रया इति यज्यया जुहोति अथाज्याहुती रुपजुहोति केशवाय स्वाहा इति द्वादश स्रुवाहुतीः । गुलपायसं घृतमिश्रं देवस्य त्वा इति द्वादशभिर्नमस्कारैर्हविर्निवेदयति । केशवाय इति द्वादशभिर्नमस्कारैर्ब्राह्मणा हूय वोपवलुप्तेवासनेषु उदङ्मुखानुपवेश्य वासांङ्गुरीयं च दक्षिणां दद्यात् । त्रिवृतान्नेन ब्राह्मणान्

परितोषयति । स्वस्तिवाचयत्वानुज्ञाप्य वाचं यजेत ।

आज्यंतिलं हविः समुदायुत्येडापात्रमानीय हस्तेन-जुहुयात पितृभ्यः स्वधानमो विष्णवे स्वाहा। पितामहेभ्यः स्वधानमो विष्णवे स्वाहा प्रपितामहेभ्यः स्वधानमो विष्णवे स्वाहा। मातृभ्यः स्वधानमो विष्णवे स्वाहा । पितामहीभ्यः स्वधानमो विष्णवे स्वाहा प्रपितामहीभ्यः स्वधानमो विष्णवे स्वाहा । मातामहेभ्यः स्वधानमो विष्णवे स्वाहा मातुः पितामहेभ्यः स्वधानमो विष्णवे स्वाहा । मातुः प्रपितामहेभ्य स्वधानमो विष्णवे स्वाहा मातामहेभ्यः स्वधानमो विष्णवे स्वाहा । मातुः पितामहीभ्यः स्वधानामो विष्णवे स्वाहा । मातुः प्रपितामहीभ्यः स्वधानमो विष्णवे स्वाहा । आचार्येभ्यः स्वधानमो विष्णवे स्वाहा । आचार्यपत्नीभ्यः स्वधानमो विष्णवे स्वाहा गुरुभ्यः स्वधानमो विष्णवे स्वाहा । गुरुपत्नीभ्योः स्वधानमो विष्णवे स्वाहा । सखीभ्यः स्वधानमो विष्णवे स्वहा । सखीपत्नीभ्यः स्वधानमो विष्णवे स्वाहा । ज्ञातिभ्यः स्वधानमो विष्णवे स्वाहा । ज्ञातिपत्नीभ्यः स्वधानमो विष्णवे स्वाहा । अमात्येभ्यः स्वधानमो विष्णवे स्वाहा । अमात्यपत्नीभ्यः स्वधानमो विष्णवे स्वाहा । सर्वेभ्यः स्वधानमो विष्णवे स्वाहा । सर्वाभ्यः स्वधानमो विष्णवे स्वाहा । अग्नये कव्यवाहनाय स्विष्टकृते स्वधानमो विष्णवे स्वाहा इति स्विष्टकृत प्रभृतिसिद्धमाधेनुघर प्रदानात ॥

दक्षिणेनाग्निं दक्षिणाग्रान् दर्भान् संस्तीर्य तेषु बलिं ददाति, विश्वेभ्योदेवेभ्ये नमः साध्येभ्यो देवेभ्यो नमः सर्वेभ्यो देवेभ्यो नमः सर्वाभ्यो देवताभ्यो नमः अस्मद्विदते नमो ब्राह्मणेभ्यो नमः । मोब्रह्मविप्राय नमः यस्तु सर्वान् समधिगच्छति पितृभ्य नारायणाय बलि ददाति उपर्युक्तं प्रेतविधानम् । एवमेवशस्त्र-विषरज्जु-जलदर्वीकर मारुततरु पाषाणोच्छ्वासनादिष्वात्मनिहतस्य वा गोब्राह्मणविधवापतितेष्वापतितस्य वा शरीरसंस्कारान् वर्जयेत । देशान्तरमृते संग्रामहते व्याघ्रहते शरीरमपनीय विधिना दाहयेत । यद्येकांगं दर्शयेत द्विरङ्गं वा पृथिवीं शरीरं स्कृत्वाधायतः कुर्यात मधुसर्पिषाभ्यज्य विधिना दाहयेत अथ यदि जीवेत पुनरगच्छेदिति ॥ ४
अथातो मृतबलिम् एकादश्यामेकोद्दिष्टं कुर्वन्ति सम्वत्सरे सापिण्डीकरणं कुर्यात ।

**नाराशंसी**— रुद्रदैवत्यामान्त्र इति विज्ञानेश्वर याज्ञ०-१
नाराशंस्यश्च ऋच एव इदं जना उपश्रुते इत्यादयः इति आह्निकप्रकाशे- ३३२
अथ स्वाध्यायमधीयीत ऋचो यजूंषि सामान्यथर्वागिरसौ ब्रह्मणानि कल्पान् गाथा नाराशंसीतिहास-पुराणानि इति आश्वलायनगृह्ये ॥

कर्माणि याभिः कथितानि राज्ञां दानानि चोक्षा वचमद्यमामनि।
नाराशंसीरित्यृचस्ताः प्रतीयाद् याभिः स्तुतिर्दाशतयीषु राज्ञाम् ॥ बृहद्देवता— ३-१४५
दाशतयी ऋग्वेदः ।

**नारिकेली**—नालिका नारिकेली च शाकविशेषौ इति

विज्ञानेश्वर याज्ञ०—३-२८६

नारीकेली तु उत्कलप्रसिद्धः नडिआशाग भवितुमर्हति

तण्डुलीयककुम्मोकवश्चन प्रभवास्तथा ।

नालिकां नारिकेलीं च श्लेष्मातकफलानि च ॥

इत्याद्यु कृत्वा प्राजापत्यमाह यमस्तत्र ।

**नालम्**— (१) नाभिनाडी ।

यावन्नच्छिद्यते नालं तावन्नाप्नोति सूतकम् ।

इति मिताक्षरायां जैमिनि—३-२०

(२) नालं कलम्बिका इति लक्ष्मीधरः

नियतकाल काण्डे—२७६

**नालिका**— कलम्बशाकविशेषः ।

श्वेतकलंबी इति प्रायश्चित्तविवेके शूलपाणिः—२४६

दीर्घनालाशिरोभागावस्थितस्वल्पपल्लवा जलाशयोद्भवा

शाकत्वेन प्रसिद्धा नालदलावल्लिः इति हेमाद्रौ

कलंविका इति गदाधरराजगुरुः

नालिकानारिकेली च शाकविशेषौ इति

विज्ञानेश्वर३-२८६

नालिकाहुलुषीति मगधादौ प्रसिद्धा इति कालदीपे

**नाष्ठिकः**—नष्टधनस्वामी ।

अथ मूलमनाहार्य्यं प्रकाशक्रयशोधितः ।

आदण्ड्यो मुच्यते राज्ञा नाष्ठिको लभते धनम् ॥

मनुः—८-२०२

**नास्तिकः**—नास्ति परलोक इति यस्य मतिः ।

नास्तिकः प्रेत्यभावापवादीति हरदत्तः

गौ० ध०—२-६-१५

अस्तीत्यस्य मतिः आस्तिकः नास्तीत्यस्य मतिः

नास्तिकः इति पातञ्जलमहाभाष्ये—४-४-१

यो देवार्थं गर्हयति धर्माधर्मौ न विन्दति ।

न बध्ये परलोकं यः स नास्तिक उदाहृतः ।

वृद्धहारीतस्मृतिः—८-२१

योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः । -

स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥

मनुः२-११

**नास्यम्**— नाशारज्जुः ।

नासायां भवं नास्यं शरीरावयवत्वात् सा चेह वलीवर्द

नासासम्बन्धिनी रज्जुः । इति कुल्लूकः

छिन्ननास्ये भग्नयुगे इत्यादि मनुः—८-२६१

**नाहः**—स्थूलता ।

वीरमित्रोदय लक्षणप्रकाशे विष्णुधर्मोत्तरे—

अनाहायामसंपूर्णो योऽति ह्रस्वो भवेद्गजः

वामनस्तु समाख्यातो मत्कुणो दन्तवर्जितः

इति तत्रैव वार्हस्पत्य संहितायां—

पेचकात् प्रतिमानं तु आयामो रत्नयो नव ।

मध्यदेशे तथानाहो दशरत्निः प्रकीर्त्तित ॥इति

नाहः पुष्टता इति आचारमयूखे—१००

**निःशंकपातनम्** —निःशंकप्रहारः ।

निःसंगपातनं निः षंगपातनमिति च

अस्यैव पाठान्तरम् मिता—२-२१२

**निःशलाकः**— निर्जनस्थानम् ।

विविक्त विजनच्छन्ननिःशलाकास्तथारह

इत्यमरः २-८-२८

गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः ।

अरण्ये निःशलाके वा मन्त्रयेदविभावितः ॥

मनु—७-१४७

**निःशृखणम्** —नासामलोत्सर्जनमिति लक्ष्मीधरः

नियतकाल काण्डे—२०५

नासिकामलनिः सारणमिति आपस्तम्बभाष्ये

आप०—२-२-५-९

**निः श्रेणिः**
**निः श्रेणीः** —अधिरोहणी ।
निशुणी, सिडि. इत्यादिउत्कल भाषासु ।

चतुष्पदी हि निःश्रेणी ब्राह्मण्येव प्रतिष्ठिता ।

तां क्रमेण महाबाहो यथावज्जय पार्थिव ॥

महाभा० राजधर्म—२०-४

वैकुण्ठदुर्गनिःश्रेणिस्त्वं पीयूषतराङ्गणी ।

अधोगतानां तप्तानां शरणं भव गौतमी ।

ब्रह्म० पु०—१०७-७७

**निःस्रवः** —क्रयविक्रयजन्य लाभः ।

निर्गतः स्रवः निःस्रवः क्रयविक्रयार्घतो यो लाभः ।

राजनिस्थाप्यते योऽर्धः प्रत्यहं तेन विक्रयः ।

क्रयो वा निःस्रवस्तस्माद् वणिजां लाभकृत स्मृतः ॥

या०श०—२-२५१

**निकर्ष**:—सामीप्यम् ।

**निकषः**— कृषीवलानामुपकरणं येन कृष्टंक्षेत्रं समीक्रियते

इत्युज्वलावृत्तौ हरदत्तः आपः—१-२-८-१३

स च "मइ" इति प्रसिद्धः उत्कलेषु ।

**निकायः**— निकायस्तु पुमान् लक्ष्ये स धर्मिप्राणिसंहतौ ।

समुच्चये संघतानां निलये परमात्मनीति मेदिनी

२६-८७

एतेमनूंस्तु सप्तान्यानसृजनभूरितेजसः ।

मनुः—१-३६

**निकुञ्जः**— लतादिवेष्टितप्रदेश इति लक्ष्मीधरः स च

श्राद्धदेशत्वेन विष्णुना प्रदर्शितः—८५-५९

**निकुटः**— कोटरः इति लक्ष्मीधरः कल्पतरौ गार्हे-४१०

पुरनदीवृक्षनिकुटचतुष्पथपरस्त्रीणां प्रतारण-

वगाहनातिरोहणप्रश्लेषणसम्भाषणानि वर्जयेत् ।

इति तत्र उशनाः ।

**निक्षेपः**— विश्वासादन्यस्मिन् गणनापूर्वकं धनस्य

समक्षसमर्पणमिति विज्ञानेश्वराभिप्राय ।

असंख्यातमविज्ञातं समुद्रं यन्निधीयते ।

तंजानीयादुपनिधिं निक्षेपं गणितं विदुः । इति नारदः

मिताक्षरायाम्—२-८५

नक्षेपोपनिध्योर्गणितागणितत्वनिबन्धनो भेद इति

स्मृतिचन्द्रिका ।

स्वद्रव्यं यत्र विस्रंभान्निक्षिपत्य विशंङ्कितः ।

निक्षेपोनामतत्प्रोक्तं व्यवहारपदं बुधैः ॥

इति नारदः—४-१

**निगदः**-(१) उच्चैरृचाक्रियते उपांशुयजुषा उच्चैः साम्ना उच्चैर्निगदेनेति अत ऋग्वेदेन सामवेदेन वा विहिते कर्मणि मन्त्राः उच्चै कार्य्याः ।
यजुर्वेदेनविहिते उपांशु । परप्रत्यायनार्थास्तु मन्त्रा निगदा इति परिभाषाप्रकाशे—८०
(२) गायत्र्यादि च्छन्दोरहितः ऋग्वेदे विहितः यजुर्मन्त्रः निगद इत्युच्यते ।
(३) निगदः साक्षिवचनमिति स्मृतिचन्द्रिका – ५७
निगदशब्दो जयपत्रे द्रष्टव्यः ।
(४) निगदः कथनमात्रं न मन्त्रः यथा पारस्करगृह्य-सूत्रान्ते प्रतीकं मे इत्यादि ।
(५) उक्तिः ।
आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते ॥ इति याज्ञवल्क्यवचनव्याख्याने आधिः द्विगुणे धने यदि मया न मोक्ष्यते तदा तवैवायमिति परिभाषितः सः प्रणश्येत् द्विगुणे धने यदि न मोक्ष्यते, अत्र हेतुमन्निगदः । इति चण्डेश्वरः विवादरत्नाकरे पृ—३०
(६) निगदः पाठमात्रम् इति दुर्गः ।
निगदे नैव शब्द्यते इति निरुक्ते—१-६
(७) यजुर्वेदः ।

वेलायसंहितामाद्यां बह्वृचाख्यामुवाचह ।
वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम् ॥
साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम् ।
अथर्वाङ्गिरसं नाम स्वशिष्याय सुमन्तके ॥
अत्र नितरां प्रश्लेषेण गद्यमानत्वात् निगदाख्यमिति आचारभूषणे—४१०

**निगमः** – (१) निगमयति बोधयतीति निगमो वेदः ।
तथाऽत्रनिगमो भवतीति निरुक्ते ॥
(२) निगमो हट्ट इति नित्याचारे नरसिंहवाजपेयी ।
निगमेष्वध्ययनं वर्जयेदित्यापस्तम्बः—१-३-९-४
(३) अत्र निगमः चत्वर इति कल्पतरुः
निगमाश्चत्वरा ग्रामनिर्गमनागममार्गा वा नियमेन गम्यते एषु इति हरदत्तः ।
रोगादिभिरनुपसृष्टं पूर्वनगरनिगमजनपदानामिति शकक्षत्रपस्य रुद्रदाम्नः शिलालेखे प्रयोगः
अत्र नगरसन्निध्यात् निगमशब्दः बणिक्पथमभिधातुं शक्नुयात् ॥
(४) निगमो नगरम् ।
पूः स्त्री पुरीनगर्य्यौ वा पत्तनं पुटभेदनम् ।
स्थानीयं निगमः इत्यमरः—२-२-१
निगमाः पूर्वणि-ग्वेदनिश्चयाध्नवणिक्पथा इति हैमः
(५) निगमाः पदार्थनिर्णयहेतवो निघण्टु प्रभृतयः इत्याह्निके मित्रमिश्रः ।
बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च ।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥

मनुः—४-१९

(६) अरण्यम् ।
अतऊर्द्ध्वं ग्रामचतुष्पथे नगरचतुष्पथे निगमचतुष्पथे वा सर्वतोमुखान् दर्भानास्तीर्य्य । इत्यादि मानव गृ० सू० पृ—२-१४-२८
अत्र निगमः अरण्यं ग्रामनगराभ्यामन्यत्वात् नीचैर्गच्छन्त्यस्मिन् इति निगमः इति अष्टावक्रभाष्ये (मानवगृह्यसूत्रम्)

**निग्रहः**— (१) निरोधः निग्रहस्तु निरोधः स्यात

अमरः—३-२-१३

यदाश्रौषं कर्णदुर्योधनाभ्यां बुद्धिं कृतां निग्रहे केशवस्य ॥ महाभा०—१-१-१७६

(२) अनुग्रहाभावः मनुः—७-१७५

निग्रहं प्रकृतीनां च कुर्याद् योरिबलस्य च ।
उपसेवेत तं नित्यं सर्वयत्नैर्गुरुं यथा ॥ इति

**निचयः**— (१) संचयः ।

तदर्थोऽस्यनिचयः स्यात् गौ० ध०—१०-६२

चक्रवत्तातकार्य्याणां पर्य्यायो दृश्यते सदा ।
कोशस्य निचये यत्नं कुर्वीथा न्यायतः सदा ॥

इति युधिष्ठिरं प्रति धृतराष्ट्रः आश्रम० प—५-३६

सद्यःप्रक्षालको वास्यान्माससञ्चयिकाऽपि वा ।
षड्मासनिचयो वा स्यात्समानिचय एव वा ॥

मनुः—६-१८

(२) प्रतिग्रह इति कमलाकरभट्टः ।

अकृत श्राद्धनिचयाजलपिण्डं विना कृताः

इति लघुनारदीये ॥

**निचुदारुः** —दार्वाघाट इति मस्करी

निचुदारुबकबलाकाशुकेत्यादि गौतमः—२-८-१४

**निच्छिविः**—व्रात्यक्षत्रियात् सवर्णायां जातो जातिविशेषः

मनुः—१०-२२

**नित्यकर्म**— यस्मिन् कर्मणि कृते नाभ्युदयः अकृतेतु प्रत्यवायस्तत् कर्म नित्यकर्म यथा संध्यादि ।

नित्यानि निवर्त्तेरन् वैतानवर्जमिति पारस्करे

३-१०-३२

नित्यं नियतनिमित्तोपाधौ चोदितमिति विज्ञानेश्वर

१-२१७

**नित्यप्रश्नः** - ब्रह्मयज्ञः ।

नित्य प्रश्नस्य चाविधिना आप—१-३-११-२१

अत्र नित्यंप्रश्नाध्ययनं अत्र स नित्यप्रश्नः ।

ब्रह्मयज्ञ इति उज्वलावृत्तिः ।

**नित्यश्राद्धम्** —गदाधरकृतपारस्करभाष्ये—

नित्यश्राद्धं निरग्नेः स्यात्साग्नेः पित्र्योबलिः स्मृतः ।
कात्यायनीयवाक्येन विकल्पः प्रतिभाति हि ॥
श्राद्धं वा पितृयज्ञः स्यात्पित्र्या बलिरथापि वा ।
साग्निकः पितृयज्ञान्तं बलिकर्म समाचरेत् ॥
अनग्निर्हुतशेषं तु काके दद्यादिति स्मृतिः ॥

इति तत्रैव प्रचेताः

नामन्त्रणं न होमं च नाह्वानं न विसर्जनम् ।
न पिण्डदानं विकिरं न दद्यादत्र दक्षिणाम् ॥

तत्रापि काशीखण्डे

नित्यश्राद्धं देवहीनं नियमादि विवर्जितम् ।
दक्षिणारहितं चैव दातृभोक्तृव्रतोज्झितम् ॥ इति

**नित्योदकी**— सततसोदककमण्डलुहस्तः ।

नित्योदकी नित्ययज्ञोपवीती नित्यस्वाध्यायोपतितान्नवर्जी ऋतौ च गच्छन् विधिवच्च जुह्वन् न ब्राह्मणश्च्यवते ब्रह्मलोकात् ॥ वसिष्ठः—८-१७

यथाकालं स्नानाचमनपर इति नीलकण्ठः

महाभा० उद् प्रजा—४०-२५

'नित्योदकी नित्ययसेपवीती नित्यस्वाध्यायी

पतितान्नवर्जोऽसत्यं ब्रुवन् गुरवे कर्म कुर्वन् न ब्राह्मण-

श्च्यवते ब्रह्मलोकात् ॥ इति

**निदानम्**— छंदोगसूत्रम् ।

भाल्लविनो निदने गाथामुदाहरन्ति इति वसिष्ठः-१-१४

आदिकारणमित्यमरः—१-४-२८

**निदिध्यासनम्**— पुनः पुनः स्मरणम् ।

श्रोतव्यो मन्तव्यो निदिध्यासितव्यः बृहदारण्यक०

उप—२-४-५

**निदेशः**— (१) समीपम् ।

पराङ्मुखस्याभिमुखो दूरस्थस्यैत्य चान्तिकम् ।

प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः ।

मनुः—२-१९७

(२) निर्देशः ।

अववादस्तु निर्देशो निदेशः शासनं च सः ।

शिष्टिश्चाज्ञायेत्यमरः—२-८-२५

**निधनम्**— सप्तधाविभक्तदिवसस्य सप्तमो भागः ।

अथ यत् प्रथमास्तमितो तन्निधनम् ॥

छान्दोग्य० उप०—२-९-८

इति कालमाधवे श्रुतः—८८

**निधानम्**- (१) यज्ञपात्रादीनां यथाकथंचित्स्थापनमात्रम्

इति श्रौ० प० निर्वचनम् ।

(२) निधिः ।

धनसमूह इति यावत् ।

अनृतं तु वदन् दण्ड्यः स्ववित्तस्यांशमष्टमम् ।

तस्यैव वा निधानस्य संख्यायाल्पीयसीं कलाम् ।

मनुः—८-३६

**निधिः**—(१) भूमौ चिरनिखातः सुवर्णादिः निधिशब्दवाच्य

इति विज्ञानेश्वरः याज्ञ—२-३४

निधिःनिक्षेप इति हरदत्तः । गौतमधर्मसूत्रे-२-३-३६

भूमौ चिरनिखातं द्रव्यं निधिरिति मित्रमिश्रः

राजनीतिप्रकाशे—२६६

(२) निधिर्धनौघ इति कुल्लूकः ।

तस्माद्राज्ञा निधातव्यो ब्राह्मणेष्वक्षयो निधिः

मनुः—७-८३

संपत्तिः ममार्थमिति यो ब्रूयान्निधिं सत्येनमानवः ।

मनुः—८-३५

(३) निधिशास्त्रम् ।

निधिं महाकालादि निधिशास्त्रम् इति श्रीशङ्कराचार्याः

छन्दो० उप०—७-१-२

**निधेयः**— धटः ।

तुला इति यावत् मिताक्षरा—२९६

**निनयनम्**— प्रक्षेप असंचरे निनयेत् पारस्करः—१-३-२५

निनयेत् प्रक्षिपेत् इति गदाधरः

प्रवाहनम् निनयन् भूमौ प्रवाहनम् इति हरिहरः

पारस्करः—१-३-१५

सेचनमिति गोभिलभाष्ये—३-७-१३

मूर्द्ध्न्यपो निनयेत् वसिष्ठः—३-२९

**निन्दा**— अविद्यमानस्य दोषस्याभिधानम् ।

गुरोर्यत्र परिवादो निन्दा वापि प्रवर्त्तते ।

कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥

मनुः—२-२००

अनिद्वया ब्राह्मणा गावः काञ्चनं सलिलं स्त्रियः ।

पृथिवी च षडेतानि यो निन्दति स निन्दितः ॥

इति पैठीनसीः संस्कारप्रकाशे—५८१

**निपरणम्**— निर्वपणमित्यर्थेकाठकगृह्ये निपरणशब्दः पठ्यते पूर्वेण निपरणं व्याख्यातमिति—५-१३-४ भ्रान्तपाठो वायम् ।

**निपानम्**— (१) निपानं गवादिजलपानार्थं कूपसमीपकृत जलाधार इति विवादरत्नाकरे पृ०—३६४

(२) जलाशयः परकीयनिपानेषु यदि स्नायात्कदाचन ।

सप्त पिंडांस्तदोद्धृत्य ततः स्नानं समाचरेत् ॥

इति याज्ञवल्क्यः

परकीय निपानेषु न स्नायाच्च कदाचन ।

निपानकर्त्तुः स्नात्वा तु दुष्कृतांशेन लिप्यते ॥

मनुः— ४-२०१

निपानं जलाधार इति कुल्लूकः ।

**निबद्धः**— निर्दिष्टः ।

अनिबद्धैरपि वक्तव्यम् । गौतमः—२-४-८

निबद्धा निर्दिष्टा यूयमत्र साक्षिण इति हरदत्तः ।

**निबन्धः**— (१) अक्षयनिधिः ।

दत्त्वा भूमिं निबन्धं वा याज्ञ०—१-३१८ इत्यस्य व्याख्याने निबन्धोऽक्षयनिधिरिति विश्वरूपः ।

एकस्य भाण्डभरकस्य इयन्तो रूपकाः एकस्य पर्णभरकस्येयन्ति पर्णानि इति वा निबन्धं कृत्वा इति विज्ञानेश्वरः ।

एतावदस्मै देयमित्यादिरूपेण राजादिभिर्व्यवस्थापितं द्रव्यमिति मदनरत्ने ।

निबन्धः कार्त्तिक्यां कार्त्तिक्यामिदं यन्निबद्धम् इति जीमूतवाहनः दायभागे—२

अस्मिन् ग्रामे प्रतिक्षेत्रं क्षेत्रस्वामिने एतद्धनमस्मै प्रत्यब्दं प्रतिमासं वा देयमित्येवमादिर्नियमो निबन्धः इत्यपरार्कः ।

वाणिज्यादिकारिभिः प्रतिवर्षं प्रतिमासं वा किंचिद्धनमस्मै ब्राह्मणाय अस्यै देवतायै वा देयमित्यादि प्रभुसमयलभ्योऽर्थः इति स्मृतिचन्द्रिका ॥ व्यव—३४६

निबन्धो वाणिज्याधिकारिभिः प्रतिवर्षं प्रतिमासं वा स्ववाणिज्याद् द्रव्यात् यत्किंचिद्धनमस्मै ब्राह्मणाय अस्यै देवतायै वा देयमिति प्रभुसमये लभ्योऽर्थः ।

यद्यप्यत्र धनदातृत्वं वाणिज्याधिकारिणामेव तथापि निबन्धकर्त्तुरेव पुण्यं तदुद्देशेनैवेतरस्य प्रवृत्तेः

इति सरस्वतीविलासे ।

निबन्धः आयस्थाने शुल्कशालादौ प्रत्यहं नियतवस्तुदानं यथा पर्णभारकं प्रतिपर्णगतं ग्राह्यमिति

व्यवहारकल्पतरौ—१५६

(२) निबन्धो वृत्तिरिति नीतिव्यवहारमयूखयोः ।

धनं पत्रनिविष्टं धर्मार्थं यन्निरूपितम् ।

उदकं चैव दासश्च निवन्धो यः क्रमागत ॥ इति
अविभाज्यनिर्देशे कात्यायनः—८८२

(३) देयमिति स्वीकृतं द्रव्यम् ।
दर्शनप्रतिभूर्यस्तु देशे काले न दर्शयेत् ।
निवन्धमावहेत्तेत दैवराजकृतादृते
इत्यपरार्कव्याख्याने कात्यायनः—५३१
मिताक्षरायां त्वयं श्लोकः प्रकारभेदेन पठितः—२-५७

(४) निवेशः ।
आधानं विक्रेयो दानं साक्षिलेख्यकृतं तथा ।
एकक्रियानिवन्धेन लेख्यं तत्रापहारकम् ।
अत्र निवन्धेन निवेशेन् इति चण्डेश्वरः ॥
विवादरत्ना—३७

(५) प्रतिनिधिः ।
न चारके निरोद्धव्यः आर्यः प्रात्ययिकः शुचिः ।
सोऽनिवन्धः प्रमोक्तव्यो निबद्धः शपथेन वा ॥
इति व्यवहारमयूखे कात्यायनः—५८४

**निवन्धकः**— लेखक इति श्रीमूलाः ।
दायकदापकनिवन्धक प्रतिग्राहकोपदेष्टृ भिरुपश्रोतृभिर्वा प्रतिसमानयेदिति कौटलीये—४-४

**निबन्धनम्**— कारणम् । मनुः—६-२
उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥ इति

**निभृतः**— निभृतो मन्दभाषीत्यपरार्कः तत्र देवलः ।
अकुद्धो निभृतो स्वस्थः श्रद्धावानत्वरः शुचिः
समाहितमनाश्चात्र क्रिययाम सकृत् सदा ॥
नियतेन्द्रिय इति महाभारत व्याख्याने नीलकण्ठः
विरा०—१-२८-१५
दानशीलो वदान्यश्च निभृतो ह्रीनिषेवकः ।
जनो जनपदे भाव्यो यत्र राजा युधिष्ठिरः ॥

**निमज्यमत्स्यादाः**—मद्गुप्रभृतय इति लक्ष्मीधरः ।
जलवायस प्रभृतय इति वीरमित्रोदये ।

**निमयः**— परिवर्त्तनम् ।
पक्वेनामस्य निमयं न प्रशंसन्ति साधवः ।
निमयेत् पक्वमामेन भोजनार्थाय भारत ॥
महाभा० शा०—७८-८

**निमानम्**— विनिमयः ।
रसा रसैर्निमातव्या नत्वेव लवणं रसैः ।
कृतान्नं चाकृतान्नेन तिलाधान्येन तत्समाः ॥
मनुः—१०-९४

**निमित्तम्**— चक्षुःस्पन्दादिनिमित्तेन फलकथनम् ।
मनुः—६-५७
नचोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ।
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥

**निमेषः**— अक्षिपक्ष्मणोः स्वभाविकस्य उन्मेषस्य सहकारीनिमेषः इति कुल्लूकः मनुः—१-६४
लध्वक्षरसमामात्रा निमेषः परिकीर्त्तितः ।
अतः सूक्ष्मतरः कालनोपलभ्य भृगूत्तम ।
विष्णुधर्मोत्तर पु०—१-७३-१

**निम्ना**— सीमाविशेषः।

निम्नोन्नता च ध्वजिनी नैधानी राजकारिता।

स्थिता पञ्चविधा सीमा मत्सिनी तु चन्दा स्मृता ॥

ग्रामयोरुभयोर्यत्र गर्त्तः सीमाप्रवर्त्तकः ।

निम्नोपलक्षिता सा तु शास्त्रविद्भिरुदाहृता ॥ व्यासः

विवादरत्नाकरे—२१५

**निम्बः**—तिक्तवृक्षविशेषः पिचुमर्दापरनामा, स तु सर्पमदन इति गोभिलः—१-५-१५

**नियमः**— (१) स्नानादिः याज्ञ—३-३१३

स्नानं मौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः।

नियमो गुरुशुश्रूषा शौचाऽक्रोधाप्रमादता ॥ इति

शौचमिज्या तपोदानं स्वाध्यायोपस्थ निग्रहः।

व्रतमौनोपवासश्च स्नानं च नियमा दश ॥

अत्रिसंहिता—४६

नियमास्तु अप्राप्त्यंगपरिपूरका भैक्षवृत्त्यादिविषया इति देवपालः लोगाक्षि गृ०—१-१

नियमस्था यदा नारी प्रपश्येदन्तरा रजः।

उपोष्यैव तु ता रात्री शेषं स्नात्वा चरेद् व्रतम् ॥

अङ्गिरः स्मृतिः—५०

(२) नियम्यते अनेनेति नियमो वेद इति कुल्लूकः

वैशेष्यात् प्रकृतिश्रेष्ठ्यान् नियमस्य च धारणात्।

संस्कारस्य विशेषाच्च वर्णानां ब्राह्मणः प्रभुः ॥

मनुः—१०-३

(३) अवश्य कर्त्तव्यता इति हरदत्तः

पूर्वेषु नियमेषु आपस्त—२-१-१-३

**नियानम्**— गोष्ठम्।

यन्नियानं न्ययनं संज्ञानं यत्परायणम्।

ऋक् १०-१९-४

**नियामकः**— पोतवाहकः।

भृतिमादाय यः परान् नियच्छति वा इति कल्पतरु: श्राद्ध—८८

**नियुद्धम्**— बाहुयुद्धम्। नियुद्धं बाहुयुद्धे स्यात्

इत्यमरः—२-८-१०६

तुरग गजरथचर्याऽसि च- नियुद्धादय। इति

रुद्रदामशिलालेखे

नियुद्धकुशलान् मल्लान देवो मल्लप्रियस्तदा।

योजयित्वा ददौ भूरि वित्तं वस्त्राणि चात्मवान् ॥

हरिवंशः १४९-७।

बलेन तुल्यश्च न विद्यते मय।

नियुद्धशीलश्च सदैव पार्थिव। महाभा० विरा०-८-१०

**नियोगः**— (१) मृते जीवति वा भर्त्तरि अनपत्या स्त्री पिंडगोत्रसंबन्धात् अपत्यलाभाय त्य दिभिर्यत् नियुज्यते स विधिर्नियोगः ।

देवराद् वा सपिण्डाद् वा स्त्रिया सम्यङ् नियुक्तया।

प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये।

मनुः ९-५९

(२) आदेशः।

यो न भ्राता न च पिता न पुत्रो न नियोगकृत् ॥

नारदः—२-२

पराथवादी दण्ड्यः स्याद् व्यवहारेषु विब्रुवन् ।

नियोग पराज्ञानुष्ठानमिति कल्पतरुः मोक्षकाण्डे ।

**नियोगकृत्**— आज्ञाकारी ।

यो न भ्राता न च पिता न पुत्रो नि नियोगकृत ।

पराथवादीदंड्यः स्याद् व्यवहारेषु विब्रुवन् ॥

नारदः—२-२३

**नियोजनम्** बंधनम् ।

परिव्ययणोपाकरणनियोजनप्रोक्षणान्यावृता कुर्याद्

यच्चान्यत् ॥ पारस्कर गृ०—३-११-१

नियोजनं द्विगुणरशनया अन्तरा शृङ्गवद्धस्य पशोः

पलाशशाखायां बन्धनम् इति हरिहरः

**नियोधकः** —मल्लयुद्धकृत् इति नीलकण्ठः ।

अरालिको गोविकर्त्ता सूपकर्त्ता नियोधकः ।

आसं युधिष्ठिरस्याहमिति वक्ष्यामि पृच्छतः ॥ इति

भीमवाक्यम् महाभा० विरा० २-६

**निरयः**— नरकः तद्भेदा नरकशब्दे द्रष्टव्याः ।

अवेक्षेत गतीर्नृणां कर्मदोषसमुद्भवाः ।

निरये चैव पतनं यातनाश्च यमक्षये ॥

मनुःस्मृ६-६१

**निराकृतिः**— अधीतवेदोऽपि अध्यापनब्रह्मयज्ञादि रहित

इति लक्ष्मीधरः ।

निराकृतिर्निः स्वाध्याय इति उज्वलावृत्तौ

आप —१-६-१८-६६

सत्याधिकारे पंचमहायज्ञरहितः इति मेधातिथिः

मनुः—३-१५४

अपरुंधन्ति दातारं गौरश्वः कनकं क्षितिः

अश्रोत्रियस्य विप्रस्य हस्तं दृष्ट्वा निराकृतेः ॥

वसिष्ठः—२८-१७

अस्वाध्यायो निराकृतिरित्यमर—२-८-५३

यः स्वाध्यायाग्निमासाद्य देवादीन् नेभिरिष्टवान् ।

निराकर्त्तामरादीनां स विज्ञेयो निराकृतः ॥

गोभिलस्मृतिः— ३-१११

अधीत्य विस्मृते वेदे भवेद् विप्रो निराकृतः ।

इति देवलः स्मृतिचन्द्रिकायां श्राद्धकाण्डे—१७८

**निरुक्षणम्**— बहिः प्रक्षेपः । निरुक्षयति पत्राद्बहि-

र्निर्गमयति इति हरिहरः ।

बहिः प्रक्षिपति इति गदाधरः

अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति इति

पारस्करः—१-३-२०

**निरूढपशुबन्धः**— पशुयागः स च संस्कारकर्मविशेषः

चत्वारिंशत् संस्कारेषु गौतमेन पठितः ।

**निर्ऋतिः**— अलक्ष्मीः मृत्युर्वा इति महाभारतव्याख्याने

नीलकण्ठः उद्—३६—८

अरुन्तुदं पुरुषं रूक्षवाचं वाक्कण्टकैर्वितुदन्तं मनुष्यात् ।

विद्यादलक्ष्मीकतमं जनानां मुखे निबद्धां निर्ऋतिं

वै वहन्तम् ॥ इति ।

**निर्गमः**— (१) कन्योद्वाहः।
पुत्रोद्वाहः प्रवेशाख्य कन्योद्वाहस्तु निर्गमः।
मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु मङ्गलम् ॥ इति
संस्कारमयूखे— ३८६

प्रवेशान्निर्गमो नेष्टः इति

**निर्गमनम्**— अशुद्धजलगमनालिकानिर्गमः निर्गमनं वा
यथा जलं निर्गमनेऽप्यपेयं नदीगतं तत्पुनरेव पेयम्।
तथान्नपानं विधिपूर्वमागतं द्विजातिहस्ता-
न्तरितविशुद्धम् ॥
इत्याचारसारे यमः।
पराशरयमविष्णुपुराणवचनमिति अह्निकप्रकाशे
पृ— ४६२
निर्गमनानि रथ्यादिपतितवारिप्रवाह प्रदेशा इति तत्रैव

**निर्गुंडी**— सिन्धुवारः वेगुनिआ इति प्रसिद्धो वृक्षः।
महाराष्ट्रेषु निर्गुडि इति प्रसिद्धः।
स च दन्तकाष्ठाय हारीतेन निषिद्ध आह्निकप्रकाशः-१२३
विष्णुनापि न च बन्धूक निर्गुण्डी शिग्रु तिल्वतिन्दुकजम्
विष्णुः—६१-३
मध्वाज्यैः पयसा वापि निर्गुण्डी रोगमृत्युजित्
अग्नि० पु०—२८६-६

**निर्ग्रन्थः**— (१) निर्ग्रन्था जैना इति हेमाद्रौ।
तत्र कूर्मपुराणे— २-२१ अ०
बुद्धश्रावकनिर्ग्रन्थाः पंचराजत्रविदोनाः।
कार्पाटिकाः पाशुपताः पापण्डा ये च तद्विधाः ॥ इति
निर्ग्रन्थः क्षपणक इति व्यवहारकल्पतरौ- ११४
(२) निर्ग्रन्था मुक्ता इति श्रीधरस्वामी।
आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्य हैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥
श्रीः भाः— १-७-१०

**निर्घातः**— (१) अन्तरिक्षभवोत्प तद्ध्वनिरिति कुल्लूकः
निर्घाते भूमिचन्दने ज्योतिषां चोपसर्जने।
एतानाकालिकान् विद्यादनध्यायानृतावपि ॥
मनुः—४-१०५
निर्घाते वसिष्ठः— १३-३२
यदन्तरिक्षे बलवान् मारुतो मरुताहतः।
पतत्यधः स निर्घातो जायते वायुसम्भवः।
इति गोभिलभाष्ये— ३-१६
(२) निर्मूलनम्।
क्रोधो हर्षो रोषो लोभो मोहो दम्भो द्रोहो मृषोद्यमत्या-
शपरीवादावसूया काममन्यू अनात्म्यमयोगस्तेषां योग-
मूलो निर्घातः आपस्त०—१-८-२३-१३

**निर्जिता**— (वृद्धिः) निर्जितां तदानीं देयत्वेन प्राप्तमिति
वरदराजः।
निर्जिता वृद्धिः लब्धत्वेन आत्माधीना सम्पन्ना इति
लक्ष्मीधरः व्यवहारकाण्डे— ३८८
ऋणं दातुमशक्तो यः कर्तुमिच्छेत् पुनः क्रियाम्।
स दत्वा निर्जितां वृद्धिं करणं परिवर्त्तयेत् ॥
मनुः— ८-१५४

**निर्णयः**— अपनोदनम् इति हरदत्तः
बहूनामपि दोषाणां कृतानां दोषनिर्णये।
पवित्रेष्टिं प्रशंसन्ति साहि पावनमुत्त मम् ॥
इति बौधायनधर्मसूत्रम्—१-१-२-१७

**निर्णिक्ता—** निःशेषेण दुग्धा गौः ।

**निर्णेकः—** शोधनम् ।

निर्णेकः शोधनमिति मेधातिथिः मनुः—५-११२

दानेन वधनिर्णेकं सर्पादीनामशक्नुवन् ।

एकैकशश्चरेत्कृच्छ्रं द्विजः पापापनुत्तये ॥

मनुः—५-११२

**निर्णेजकः—** वस्त्रशोधकः रजक इति यावत् ।

कारुकान्नं प्रजा हन्ति बलं निर्णेजकस्य च ।

गणान्नं गणिकान्नं च लोकेभ्य परिकृन्तति ॥

मनुः—४-२१६

प्रायश्चित्तविवेकोद्धृत शातातपवचने रजकनिर्णेजकयो-रेकत्र पाठदर्शनात् निर्णेजको रजकादपरः तद् विशेषो वा वचनं यथा

रजकश्चर्मकृच्चैव व्याधजालोपजीविनश्च

निर्णेजकः सैनिकश्च ढकः शैलुषकस्तथा ॥

इत्यादिठकशब्दे द्रष्टव्यः प्रायश्चित्तविवेकः—४७३

**निर्दाता—** धान्यादिच्छेत्ता

यथोद्धरति निर्दाता कक्षं धान्यं च रक्षति ।

तथा रक्षेन्नृपो राष्ट्रं हन्याच्च परिपन्थिनः ॥

मनुः—६-४५

**निर्देशः—** (१) प्रभोरादेशः ।

नाभिनन्देत मरणं नाभिनन्देत जीवनम् ।

कालमेव प्रतिक्षेत निर्देशं भृतको यथा ॥

मनुः—६-४५

(२) भृति निर्देश भृतिरिति कुल्लूकः ।

**निर्धमनम्—** वहिष्करणमिति धर्मकोशे ।

तप्तोनायसाललाटेऽङ्कयित्वा विषयान्निर्धमनम् ।

इति बौधायनः

**निर्धूतः—**ग्रामराजकुल श्रेण्यादिभिः सारित इति कल्पतरौ व्यव—१११

ग्रामराजकुलश्रेण्यादिभिर्बहिष्कृत इति नारदीयमनुभाष्ये—२ वृ६१

बांधवैस्त्यक्त इति मदनरत्ने ।

बहिष्कृत इत्यपरार्कः—२-७१

लोकभयशून्य इति भवदेवः

ग्रामराजकुलश्रेण्यादिभिः निःसारित इति रत्नाकरे ।

**निर्ममः—**ममतारहितः अनुरागशून्य इति यावत् ॥

**निर्माल्यम्—** (१) देवधृतपुष्पादि

निर्माल्यं मद्विपुलाग्नि प्रातरेव विवासयेत् ।

इति पूजाप्रकाशोद्धृतवाराहे ।

निर्माल्यं देवोच्छिष्टं द्रव्यमिति शब्दकल्पद्रुमे ।

(२) व्यवहृतवस्तुमात्रम् ।

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाश्च विशेषतः ।

नैते निर्माल्यतां यान्ति नियोक्तव्याः पुनः पुनः ॥

इति लिखितः—४१

निर्माल्यं द्विविधं प्रोक्तमुत्सृष्टं घ्रातमेव च इति तत्वसारसंहितायाम् ।

**निर्या—** अपराधः ।

तस्य एकैव निर्या इति श्रुतिः ।

एकैव निर्या एकएव दोषः इति माधवाचार्याः ।

कालमाधवः—२

**निर्य्यूहः—** (१) द्वारनिर्गमः काष्ठविशेषः इति व्यवहार कल्पतरुः—४५३

गृहघोणीति यावत् इति अपरार्कः—२-१५४

नागदन्तक इति चण्डेश्वरः विवादरत्नाकरे—२१६

द्वारनिर्गत काष्ठविशेष इति कृत्यकल्पतरौ ।

तन्मते निर्व्यूह इति पाठः । निर्व्यूह गृहकोण इति स्मृतिचन्द्रिकायाम् ।

(निर्व्यूहः भित्तिनिर्गतकाष्ठम् इति वैजयन्ति विष्णुः—५-१७३)

द्वार्य्यापीडे क्वाथरसे निर्यूहो नागदन्तके इत्यमरः। ३-३-२३६

वातायनं प्रणालीश्च तथा निर्यूहवेदिकाः।
चतुःशालस्स्यंदनिकाः प्राङ्निविष्टान् चालयेत्।
इत्यपरार्के बृहस्पतिः—२-१६४

**निर्लेखनम्**— (१) काष्ठादिना जिह्वापरिष्करणम्।
दन्तकाष्ठ प्रदानेन सौभाग्यं महदाप्नुयात्।
जिह्वा निर्लेखनं दत्त्वाऽवियोगस्त्वभिजायते॥
इति विष्णुधर्मोत्तरे। कृत्यरत्नाकरः – ५६३

(२) क्षेपणम् कृष्णशकुनिमुखावसृष्टं निर्लिखेच्छ्वापद-मुखावसृष्टं पात्रं न प्रयुञ्जीत इति शङ्खः
अत्र निर्लेखनं शस्त्रैरुपरिनो वयवापकर्षणं त्वक्षण मिति यावत् इति मदनपारिजाते—४४६

**निर्वपणम्**— (१) प्रदानम्।
त्रींस्तु तस्माद्धविःशेषात् पिण्डान् कृत्वा समाहितः।
औदकेनैव विधिना निर्वपेद्दक्षिणामुखः॥
मनुः—३-२१५

(२) ग्रहणम्।
आग्नेयांश्चतुरो मुष्टीन् निर्वपति।

**निर्विषयदण्डः**— राष्ट्रान्निर्वासनम्।
राजदुष्टानियो भापेद्दंडो निर्विषयः स्मृतः।
अवध्या ब्राह्मणा गावो लोकेऽस्मिन् वैदिकी श्रुतिः॥
इति यमः।

**निर्विष्टम्**— कर्मणोपात्तं धनम्।
निर्विष्टं वैश्यशूद्रयोरिति गौतमः २-१-४३

**निर्वेशः**—वेतनम्।
हैमकारादयो ये तु शिल्पं सम्भूय कुर्वते।
कर्मानुरूपं निर्वेशं लभेरंस्ते यथांशतः॥
इति विवादरत्नाकरे बृहस्पतिः।
निर्वेशो भृतिभोगयोरित्यमरः—३-३-२१५

**निर्वेषः**— प्रायश्चित्तमिति हरदत्तः।
निर्वेषमुपदिशेत् यथाक्रमययोक्तम् आपस्त-२-५-१०-१३
तस्य निर्वेषः आपस्त—१-९-२४-१०
तालव्यपाठोऽपि तेषां तु निर्वेशो द्वादशमासान् इत्यादि बौधा—२-१-२-६

**निर्हारः**— (१) मलमूत्रोत्सर्गः इति नरसिंहवाजपेयी।
आहारनिर्हारविहारयोगाः सुसंवृताधर्मविदांतु कार्याः
वाग्बुद्धिकार्य्याणि तपस्तथैव धनायुषी गुप्ततमे तु कार्ये॥
इति वसिष्ठः—६-६

(२) शवनिष्कासनं च।
दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्।
पश्चिमोत्तरपूर्वैस्तु यथायोगं द्विजन्मनः॥
मनुः—५-९-२

(३) आकर्षणम्।
इन्द्रानिलयमार्काणा मग्नेश्च वरुणस्यच चन्द्रवित्तेशयो श्चैव मात्रा निर्हृत्य शाश्वतीः मनुः—७-४

(४) अन्यायेन अर्थसंचयश्च।
न निर्हारं स्त्रियः कुर्युः कुटुंबाद् बहुमध्यगात्।
मनुः—९-१९९
अत्र निर्हारो व्यय इति व्यवहारप्रकाशे—५४४
सञ्चय इति कुल्लूकः।

(५) अन्यायेन धनस्य क्रयादिना।
राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च।
तानि निर्हरतो लोभात् सर्वहारं हरेन्नृपः॥
मनुः - ८-३९९

(६) निर्हारो विक्रय इति विवादरत्नाकरे पृ—३०१
(७) शल्यादेरुत्पाटनमिति शब्दकल्पद्रुमे भरतः।

**निवपनम्**— पितृभ्यः पिण्डादिदानम् ।

**निवर्त्तनम्**— दशहस्तेन दण्डेन त्रिंशद्दण्डा निवर्त्तनम् ।

दशतान्येव विस्तारो गोचर्मैतन्महाफलम् ॥

बृहस्पतिस्मृतिः ॥ ८ ॥

एतन्मतेन ए:-४-५५६ डे: परिमिताभूमिः ।

दशहस्तेन दण्डेन त्रिशदण्डा निवर्त्तनमिति लीलावती

दण्डेन सप्तहस्तेन त्रिशद्दण्डा निवर्त्तनम् ।

त्रिभागहीनं गोचर्ममानमाह प्रजापतिः ॥

इति मत्स्यपुराणे अ०—२८२-१४

शुक्रनीतौ तु—

तदङ्गुलं पञ्चयवै मानवं मानमेव तत् ।

वसुषण्मुनि ७६८ संख्याकैर्यवैर्दण्डः प्रजापतेः ।

यवोदरैः षट्शतैस्तु मानवो दण्ड उच्यते ॥ १९९ ॥

पञ्चविंशतिभिर्दण्डैरुभयोस्तु निवर्त्तनम् ।

त्रिंशच्छतैरङ्गुलैर्यवैस्त्रिपञ्चसहस्रकैः ॥ २०० ॥

सपादशतहस्तैश्च मानवं तु निवर्त्तनम् ।

ऊनविंशतिसाहस्रै द्विशतैश्च यवोदरैः ॥ २०१

चतुर्विंशशतैरेव ह्यंगुलैश्च निवर्त्तनम् ।

प्राजापत्यं तु कथितं शतैश्चैव करैः सदा ॥ २०२ ॥

सपादषट्शतं दण्डा उभयोश्च निवर्त्तने ।

निवर्त्तनान्यपि सदोभयोर्वै पञ्चविंशतिः ॥ २०३ ॥

इति प्रथमाध्याये ॥

**निवसनम्**—पुरग्रामादिकम् इति व्यवहारस्मृति-चन्द्रिकायाम् ।

**निवापः**—पितृयाग इति हेमाद्रिः ।

पितृदानं निवापः स्यादित्यमरः ।

सपिण्डनादूर्द्ध्वं पित्रुद्देशेन दानमिति तद्

व्याख्यायाम् । २-७-३१

पितुरुद्देशेन ब्राह्मणाय शुष्कान्नफलमूलानामुदकान्तानां

दानं निवाप इति कल्पतरुः । नियतकालकाण्डे १४७

रजस्वला च या नारी व्यञ्जिता कन्यका तथा ।

निवापेनोपतिष्ठेत संग्राह्या नान्यवंशजा ॥

इति महाभारते ।

अत्र "निवापेश्राद्धपाके" इति गदाधरः ॥

कालसारे-३६३

**निवीती**—कंठावलम्बितयज्ञसूत्रः कण्ठावलम्बितवस्त्रो वा ।

"उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः ।

सव्ये प्रचीन आवीती निवीतम् कण्ठसज्जने ॥ मनुः २६३

"वामस्कन्धे यज्ञोपवीतं देवे ।

प्राचीनावीतमितरथा पितृयज्ञे ॥

नाभ्यां द्विकण्ठावसक्तमभिचारे ।

निवीतम् आपृष्ठदेशावलम्बि ग्राम्यधर्मेषु ।

इति निगमपरिशिष्टवचनं परिभाषाप्रकाशे-६०

**निवृत्तिः**—निवृत्तयः चमशः मक्षिकाविशेषाः इति

कल्पतरौ गार्हस्थ्य-१६५ ॥

**निवेत्ता**—निवेदकः खनिरत्ननिधिनिवेदनेषु षष्ठमंशं निवेत्ता लभेत इति कौटलीये ४-१-५१

**निवेशः**— (१) विवाहः।

निवेशे संवृत्ते संवत्सरे संवत्सरे द्वौ द्वौमासौ समाहित आचार्यकुले वसेद्भूयः॥

श्रुतिमिच्छन्निति श्वेतकेतुः। आपस्त १-४-१३-१६

(२) शिविरम्।

तस्य सेनानिवेशोऽभूदध्यर्द्धमिव योजनम्।

तथा हि विपुलां सेनां बिभर्त्ति स नरर्षभः॥

महाभाः ५-८-२

**निवेशनम्**—गृहम्।

निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा दूरे बान्धवं बन्धुसंनिकृष्टमेव प्रतिगृह्णीयात्। वसिष्ठः १५-६

"निवेशनाद्वा पिचुमन्दपत्राणि विदश्याचम्य' इत्यादि। अत्र निवेशनं गृहमिति गदाधरः॥

पारस्करः ३-१०-२४

रामायणे तु पुंसि पाठो यथा संपरिक्रम्य हनुमान् रावणस्य निवेशनान् इति सुन्दरः १३-२

अदृष्ट्वा जानकीं सीतामब्रवीद् वचनं कपिः॥

**निवेशयन्** शुक्लपक्षरात्रेः सप्तमो मुहूर्त्तः।

दाता प्रदाता आनन्दः मोदः प्रमोदः आवेशयन् निवेशयन् सम्वेशयन् संशान्तः शान्तः आभवन् प्रभवन् सम्भवन् सम्भूतः भूतः इति तैत्तिरीयश्रुतिः

कालमाधवे-२

**निशान्तम्**—गृहम्।

"निशान्तप्रणिधिः" कौट १-१-१८

**निश्शृङ्खणम्**—नासामलोत्सर्जनम्॥ कल्पतरुः नियतकाल २०५

**निश्छंद** निश्छंदो वेदाध्ययनरहितं कुलमिति कुल्लूकः

हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम्।

क्षय्यामयाव्यपस्मारि श्वित्रिकुष्ठिकुलानि च॥ मनुः ३-७

**निश्रेणि**—अधिरोहणी, सीडी इति भाषायाम्।

खात सोपान प्रणाली निश्रेण्यवस्करमार्गैर्बहिर्बाधायां भोगनिग्रहे च॥ कौट-३-८ २१

**निषंगः** - खड्गः।

**निषंगिणः**—नमः कृत्स्नायतया धावते इति, नमो वचते परिबंधते इति, नमो घृष्णवेचाजिशय च। ये तीर्थानि प्रचरन्ति, स इष्टहस्तैः स निषंगिभिर्वंशी- इति पंचमन्त्रा निषंगिण इति हेमाद्रिः।

**निषत्**— (१) ब्राह्मणभागः।

कर्माङ्गाद्यनवन्ध देवता विज्ञ नवाक्यमिति नीलकण्ठः

यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च।

गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु॥

शान्तिपर्व ४७-२६

(२) ब्रह्मवादिनीविशेषः "तदुक्तं बृहद्देवतायाम् द्वितीयाध्याये

घोषागोधाविश्ववारा अपालोपनिषन्निषत् ।
ब्रह्मजायाजहूनमि अगस्त्यस्य स्वसादितिः ॥ ८२
इन्द्राणी चेन्द्रमाता च सरमाशेमशोर्वशी ।
लोपामुद्रा च नन्दाच यमी नारी च शश्वती ॥ ८३ ॥
श्रीर्लाक्षा सार्पराज्ञी वाक् श्रद्धा मेधा च दक्षिणा ।
रात्री सूर्या च सावित्री ब्रह्मवादिन्य ईरिताः ॥ ८४ ।

**निषादः**—ब्राह्मणात् शूद्रकन्यायां जातो जातिविशेषः ।
ब्राह्मणाद् वैश्यकन्यायामम्बष्ठो नाम जायते ।
निषादः शूद्रकन्यायां यः पारशव उच्यते ॥
इति मनुः १०-८
पारशवस्तु अचौर्यात् निषादस्तु चौर्य्यात् जात इति तयोर्विशेषः ।
तस्यां वै चौर्यसंवृत्तो निषदो जात उच्यते ॥ ३७
वने दुष्टमृगान् हत्वा जीवनं मांसविक्रयात् ॥
औशनसस्मृतिः-३८

**निषादयन्**—कृष्णपक्षरात्रिसप्तममुहूर्त्तः ।
अभिशास्ता अनुमन्ता आनन्दः मोदः प्रमोदः
आसादयन् निषादयन् संसादनः संसन्नः सन्नः आभूः
विभूः प्रभूः शम्भूः भुवः इति तैत्तिरीयश्रुतिः
कालमाधवे-३

**निषेकः**—गर्भाधानम् ।
निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥
मनुः २-१४२

**निष्कम्** } **निष्कः** } सुवर्णचतुष्टयपरिमितहैममुद्राविशेषः । निष्कं सुवर्णश्चत्वारः इति याज्ञ-१-३६५
चतुः सौवर्णिको निष्क इति मनुः ८-१३७
साष्टं शतं सुवर्णानां निष्कमाहुर्मनीषिणः । इति
पञ्चसौवर्णिको निष्क इति च विवादरत्नाकरे ॥
मांसभेत्ता तु षणनिष्कान् प्रावास्यस्त्वस्थिभेदकः
मनुः ८-२८४
अत्र निष्कशब्दः सुवर्णपरिमाणवाचीत्युक्तमिति मेधातिथिः ।
षण्निष्कान् दीनारान् इति मन्वर्थविवृतिः ।
एतेन निष्के सुवर्णसंख्यानियमो नास्तीति ज्ञायते ॥
साष्टे शते सुवर्णानां हेम्न्युरुभूषणे पले ।
दीनारेऽपि च निष्कोऽस्त्री" अमरः ३-३-१३

**निष्कालः**—चारणाय गृहाद् गवां प्रेरणम् ।
निष्कालः निष्कालनं वा ।

**निष्कालकः**—कृत्तसर्वाङ्गलोमा ।
कृतसर्वांगनखलोमकेशवाप इति प्रायश्चित्तविवेक-व्याख्यायाम् गोविन्दानन्दः-८३
निष्कालको वा घृताभ्यक्तः ।।
तप्तां सूर्मीं परिष्वजेत् ।। वसिष्ठः २०-१४

**निष्कालनम्**—गोशालातः गवां बहिश्चरणार्थं नयनम् ।
निष्कालनप्रवेशने तन्त्री विहरणमिति गोभिलः
३ ६ ६

**निष्कासः**—हर्म्यादिविनिर्गं काष्ठादिनिर्मितमरपृष्ठ-
भूमिकमुपवेशनस्थानमिति मदनपारिजातनील-
कंठापरार्काः

मेखलाभ्रमनिष्कास गवाक्षान्नोपरोधयेद् ।
प्रणालीं गृहवास्तुं च पीडयन् दण्डभाग् भवेत् ॥
कात्यायनः ७५२

निष्कासः निर्गमोचितदेश इति विवादरत्नाकरे-२१६

**निष्कासिनी**—स्वामिना अनवरुद्धा दासीति विज्ञानेश्वरः
११२-२६०

स्वैरिण्य ब्राह्मणी वेश्या दासी निष्कासिनी च या।
गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः
निष्कासिनी कुटुम्बात् निर्गता इति मदनरत्ने ।

**निष्किनी**—अलंकृता स्त्री ।

**निष्कुटः**—गृहोपवनम् "गृहारामास्तु निष्कुटा इति
अमरः

निष्कुटस्तु गृहोद्याने स्यात्केदारकवाटयोः इति
कोशान्तरे ।

एकान्तारण्यनिष्कु विकालचारिणामिति शंका-
भिग्रहे कौटल्यः ४-६-२

कुन्तीपुत्रस्य पूजार्थमपि निष्कुटकेष्वपि ।
दिदृक्षन्तश्च कौन्तेयं द्वारकावासिनो जनाः ॥
इति महाभा आदि २१७-१६

निष्कुटमिति च
परिखाश्चैव कौरव्य प्रतोली निष्कुटानि च ।
न जात्वन्यः प्रपश्येत गृह्यमेतद्युधिष्ठिर ॥
महाभा. शा. ६९-५५

**निष्कुला**—सपिण्डरहिता (स्त्री) इति कुल्लूकः ।।
वशाऽपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च ।
पतिव्रतासु च स्त्रीषु विधवा स्वातुरासु च ॥
मनुः ८-२८

**निष्कृतिः** (१) शुद्धिः ।
एषा पापकृतामुक्ता चतुर्णामपि निष्कृतिः ।
पतितैः संप्रयुक्तानामिमाः शृणुत निष्कृतीः ।।
मनुः ११-१६९

(२) ऋणमुक्तिः ।
यं मातापितरौ क्लेशं सहेते संभवेनृणाम् ।
न तस्य निष्कृतिः शक्या कर्त्तुं वर्षशतैरपि ।।
मनुः .-२२७

(३) निष्ठुरता ।
अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः ॥
शठो मिथ्याविनीतश्च बकव्रतचरो द्विजः ।।
मनुः ४-१९६

**निष्कषणम्**—नखैर्वितुषीकरणम् इति कल्पतरुः ।।
गार्हस्थ्य ४०१

व्रीहिनिष्कषण लोष्टमर्दन लेखालिखन करजदशन
वीणावादनानि वर्जयेत् ।
इति तत्र हारीतः ।

**निष्क्रमः** } बहिर्निष्क्रामणाख्यं संस्कारकर्म । तत्र
**निष्क्रमणम्** } चतुर्थे मासि शिशोः सूर्यावलोकनम् ॥

"चतुर्थेमासि निष्क्रमः" याज्ञ-१-१२

चतुर्थे मासि कर्त्तव्यं शिशोनिष्क्रमणं गृहात् ।
षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥

मनुः २-३४

**निष्क्रयः**—(१) विक्रय ।

न निष्क्रयविसर्गाभ्यांभर्त्तुर्भार्याविमुच्यते ।
एवं धर्मं विजानीमः प्राक्प्रजापतिनिर्मितम् ॥

मनुः ९-४६

(२) विनिमयः ।

"गोनिष्क्रय रजतादिदानपक्षे पञ्चगव्यप्राशनान्ते"
इत्यादि प्रायश्चित्तेन्दुशेखरे-९४

**निष्क्रयणम्**—प्रायश्चित्तम् ।

देशं कालं वयः शक्तिं ज्ञानं बुद्धिकृतं तथा ।
अबुद्धिकृतमभ्यासं ज्ञात्वा निष्क्रयणं वदेत् ॥

इति पराशरमाधवे व्यघ्नः प्राय-२०

**निष्क्रयः**—अनाश्रमी ॥

ब्राह्मणस्वं न हर्त्तव्यं क्षत्रियेण कदाचन ।
दस्युनिष्क्रिययोस्तु स्वमजीवन् हर्त्तुमर्हति ॥

मनुः ११-१८

**निष्टक्यम्**—"निष्टक्यं कृत्वा यथासुखविमं चनं भवति तथेति देवपालः"

**निष्ट्या**—स्वातीनक्षत्रम् । बौधा गृ-प ३-२

**निष्ठा**—नितरां स्थितः दृढविश्वासः, निर्णयः, सिद्धान्तः समाप्तिश्च ।

(१) समाप्तिरिति मेधातिथिः ॥ निष्पत्तिरिति कुल्लूकः ॥

"तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे"

मनुः ८-२२७

(२) मृत्युः ।

अग्निः पशुरभूत्पूर्वं पशुरासीज्जलाधिपः ।
भास्वानथोच्छ्रितीः प्राप्तो यज्ञे निष्ठामुपागता ॥

इति मार्कण्डेय पु-१२०-२६

नैष्ठिकशब्दोऽपि द्रष्टव्यः ।

(३) दृढता ।

(४) निर्णयः ।

गणसमयश्रेणी पूगचरणव्यवहारनिष्ठा ।
इति शङ्खलिखित स्मृतिव्याख्याने ।
व्यवहारो विवादः तत्र निष्ठा निर्णय इति चण्डेश्वरः ।

विवादरत्नाकरः-६६२

त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा ।

आप—२-६-२३-६

अत्र निष्ठा निर्णय इति हरदत्तः ।

(५) नितरां स्थितिः ।

**निष्ठिता**—निर्मिता ।

संपूर्णा इति यावत् इति हरिहरः

"निष्ठितां प्रपद्यते" पारस्करः ३-४-१८

**निष्ठीवनम्**
**निष्ठीवितम्** } कंठात्श्लेष्मणः सशब्दं बहिर्निरसनमिति हरदत्तः
निष्ठीवितहसितविजृम्भितावस्फोटनानि ॥

गौतमः—१-२-२०

निष्ठीवणं मुखेन श्लेष्मत्याग इति मित्रमिश्र

शुद्धिप्रकाशे—१३६

उत्कलभाषायां खङ्कारं इति प्रसिद्धम् ॥

**निष्ठुरम्**—साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यंगसंयुतम् ।

पतनीयैरुपक्रोशैस्तीव्रमाहुर्मनीषिणः ॥

नारदस्मृतिः—१८-३

**निष्ठुरा वाक्**—यस्त्वसत्संज्ञितै रंगैः परमाक्षिपति क्वचित् ।

अभूतैरथभूतैर्वा निष्ठुरा वाक् स्मृता तु सा ॥

इति कात्यायनः ।

**निष्ठ्यम्**—विट्श्लेषः इति कल्पतरुः ।

निष्ठ्यमंगुलि स्फोटनमिति हरदत्तः ।

"निःशृंखण भ्रूक्षेपण तालननिष्ठ्यानि"

आप—२-२-५-६

**निष्ठ्यूतम्**—मुखनिःसारितंजलम् इति विज्ञानेश्वरः

याज्ञ—२-२१४

छेप इति उत्कलभाषायाम् ।

चर्वितपरित्यक्तताम्बूलादि इति कुल्लूकः ॥

मनुः—४-१३२

निष्ठ्यूतमुद्गीर्णताम्बूलादि इति मदनपारिजाते—

१२०

उद्वर्त्तनम स्नानं विड्मूत्रे रक्तमेव च ।

श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत्तु कामतः ॥

४-१३२

**निष्पचः**—यस्य पाको नास्ति सः यतिर्ब्रह्मचारी च ॥

**निष्पतनम्**—अन्यत्र गमनम्, नष्टं पलायनं च ॥

असम्भाष्ये साक्षिभिश्च देशे सम्भाषते मिथः ।

निरुच्यमानं प्रश्नं च नेच्छेद् यश्चापि निष्पतेत् ॥

मनुः—८-५५

**निष्पवनम्**—शूर्पादिद्वारा तण्डुलादिभ्यः तुषादिबहिष्करणम् ।

**निष्पावः**
**निष्पावा** } निष्पावा शस्यविशेषः इति ज्ञायते
निष्पावा आढ़कीमुद्गा इत्य दि

पाठसाहचर्यात् । वल्ला इति हेमाद्रिः । निष्पावा वल्ल शिम्बि सदृशा दक्षिणापथे प्रसिद्धा इति श्राद्धकाण्डे

कल्पतरुः ॥ ४८

निष्पावः सिताशिम्बिरिति नरसिंहवाजपेयी ॥

नित्याचारप्र-१३७

वल्ल शब्दस्य संप्रति वाइल इत्यपभ्रंश उत्कलेषु ॥

निष्पावापावटे इति महाराष्ट्रा इति निर्णयसिंधु-व्याख्याने कृष्णभट्टः।

निष्पावो राजशिम्बिः स्यात् वल्लकः श्वेतशिम्बिकः॥ इति शब्दकल्पद्रुमस्थ भावप्रकाशे।

यवाः प्रियङ्गवो मुद्गा गोधूमाव्रीहयस्तिलाः।
निष्पावाः कोविदाराश्य सर्षपश्चात्र शोभनाः॥

विष्णु. पु. ३-१६-६

**निसर्गः**—(१) दानम्।

नत्वेवाधौ सोपकारे कौसिदीं वृद्धिमाप्नुयात्।
न चाधेः कालसंरोधान् न सर्गोऽस्ति न विक्रयः॥

मनुः ८-१४३

अन्यत्र च विधिना अर्पणं निसर्ग इति मेधातिथिः।
"आधीकरण" मिति विज्ञानेश्वरः याज्ञ २-५८

(२) सृष्टिः।

एवंस्वभावं ज्ञात्वासां प्रजापति निसर्गजम्।
परमं यत्नमातिष्ठेत् पुरुषो रक्षणं प्रति॥ मनुः ९-१६

(३) स्वभावः।

न स्वामिना निसृष्टोऽपि शूद्रो दास्याद् विमुच्यते।
निसर्गजं हि तत्तस्य कस्तस्मात्तदपोहति॥

मनुः ८-४१४

**निसर्गषंढः**—लिंगवृषणहीन एव उत्पन्न इति लक्ष्मीधरः।

**निस्त्रिंशः**—खड्गः।

गदाभिर्मुसलैश्चैव भिन्दिपालैः सतोमरैः।
आयसैः परिघैश्चैव निस्त्रिंशैर्विमलैः शितैः॥

इति महाभा. भीष्म-४६-१४

**निस्रावः**—रुधिरम्।

नास्तिक्यभावाद् यश्चापि न तर्पयति वै सुतः।
पिबन्ति देहनिस्रावं पितरोऽस्य जलार्थिनः॥ इति आह्निक प्रकाशे योगीयाज्ञवल्क्यः।
अतर्पिता देहाद्रुधिरं पिबन्ति इति कात्यायनवचन-बलाद्निस्रावशब्दस्य रुधिररूपार्थः विधेयः इति"

(२) भक्तमण्डम् हरिवंश ६६-९ धातुनिस्रावदिग्धांगं सानुप्रस्रवभूषितम् इति।

**निह्नवः**—(१) अपलापः।

सामान्यद्रव्यप्रसभहरणात् साहसंस्कृतम्।
तन्मूल्याद्द्विगुणो दण्डो निह्नवे तु चतुर्गुणः॥

याज्ञ २-२३०

(२) शोधनम्। अपसारणम्।

आयन्त्यनिष्टं यत्किंचित् पाणिग्राहस्य चेतसः।
तस्यैव व्यभिचारस्य निह्नवः सम्यगुच्यते॥

मनुः ९-२१

**नीपः**—कदम्बपुष्पवृक्षविशेषः।

**नीवः**—समिदनर्हं वृक्षविशेषः गोभिलः—१-५-१५
स च नीपस्य पाठान्तरं भवितुमर्हति।

**नीलकण्ठः**—नीलवृषः ।

दर्भस्तिला गजछाया दोहित्रं मधुसर्पिषी ।

कुतपो नीलकण्ठश्च पवित्राणीह पैतृके ।

इति देवलः इति कालसारे—३८६ ॥

**नीलखण्डः**—नीलवृष इति हेमाद्रिः । तत्र षकारस्थाने

उच्चारणभेदेन खकारः पठित इति संभाव्यते ।

उत्तरभारते हि षकारस्य खकारोच्चारणमुपलभ्यते ॥

उत्कलभाषायां च षण्डशब्दः वृषभार्थे प्रयुज्यते ॥

अस्य लक्षणं नीलवृषशब्दे द्रष्टव्यम् ।

**नीध्रम्**—} गृहाच्छादनम् ।
**नीप्रम्**—} उत्तमागारस्य जालवातायननीध्रवेधम् ॥

इति कौटलीये—४-५-१६

नीप्रमिति पाठान्तरमपि ।

**नीलपर्वतः**—श्राद्धदेशविशेषः श्रीजगन्नाथमन्दिरायतन

मितियावत् ।

विष्णुस्मृतौ ८५-१३

नीलपर्वतः उत्कलदेशस्थः पुरुषोत्तमस्थाने इति

तत्र वैजयन्ती ॥

**नीलवृषः**—वृषभविशेषः । तस्य लक्षणं यथा

चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः ।

लाक्षारससवर्णश्च तं नीलमिति निर्दिशेत् ॥

इति मात्स्ये ॥

लोहितो यस्तु वर्णेन मुखे पृच्छे तु पांडुरः ।

श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥

इति कल्पतरौ शंखः

भूमौ कर्षति लांगूलं पुनश्च स्थूलवालधिः ।

पुरस्तादुन्नतो नीलः स श्रेयान् वृषभः स्मृतः ॥

इति पारस्कर व्याख्याने हरिहरः— ३-६

लोहितो यस्तु वर्णेन शंखवर्णखुरः स्मृतः ।

लांगूलशिरसोश्चैव स वै नीलवृषः स्मृतः ॥

इति लिखितः-१४

चरणाश्च मुखं पुछं श्वेतानि यस्य गोपतेः ।

लाक्षारससवर्णस्तु स नीलवृष उच्यते ॥

इति कालसारे मात्स्यविष्णुधर्मोत्तरयोः

लोहित यस्तु वर्णेन शिरः पुच्छेतु पाण्डरः ।

ताम्र खुरः विषाणाभ्यां स नील वृष उच्यते ॥

इति तत्र यमः

लोहितो यस्तु वर्णेन पुच्छाग्रे यस्तु पाण्डुरः ।

श्वेतः खुरः विषणाभ्यां स नीलोवृष उच्यते ॥

वृहस्पतिः-२२

**नीवार**—आरण्यव्रीहिः ॥ देवधान्यमित्याचारेन्दोः ।

बालुंगा इत्युत्कलेषु प्रसिद्धः ॥

**नीवी**— (१) कटिप्रान्तवस्त्रग्रन्थिः ।

रशनापरिवर्तिकादेशः इति विश्वरूपः याज्ञ २-२८६

अधोवस्त्रग्रथनमिति स्मृतिचन्द्रिका— २६१

(२) संचितधनं च ।

"कुलनीवीग्राहकस्यापव्ययने" इत्यत्र कुलसाधारण-

धनं गृहीत्वा अपलपने इति श्रीमूला कौट-३-२०-१६

**नीहारः**— कुज्झटिका ॥ "नीहारे धूमिकायामिति

विज्ञानेश्वरः"

मित्रमिश्रोऽपि । संस्कारप्रकाशे- ५३३

पांशुप्रवर्षे दिग्दाहे संध्यानीहारभीतिषु ।

धावत पूतिगन्धे च शिष्टे च गृहमागते ॥ याज्ञ १-१५०

नीहारः हिमप्र वरणमिति बौधायनीयव्याख्यायां

गोविन्दस्वामी

नीहारेधूनरिकायामिति पारस्करगृह्यसूत्रभाष्ये

हरिहरगदाधरौ—२-११-६

**नृदुर्गम्**—चतुर्दिगवस्थायिहस्त्यश्वरथयुक्त बहुपादातिक-

रक्षितमिति कुल्लूकः ॥ मनुः—७-७०

**नृपः**— अनुलोम जातिविशेषः ।

"नृगायां विधिना विप्राज्जातो नृप इति स्मृतः"

औशनसस्मृतिः-८

**नृशंसः**— निर्दय इति विज्ञानेश्वरः याज्ञ-१-१६४

क्रूरकर्मा इति कुल्लूकः ॥

इतरेषु तु शिष्टेषु नृशंसानृतवादिनः ।

जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥ मनुः३-४१

**नृसिंहचतुर्दशी**— वैशाखशुक्लचतुर्दशी ।

शुक्लपक्षे चतुर्दश्यां मासि माधवसंज्ञके ।

प्रादुर्भूतो नृपस्यास्यस्तस्मात्तां समुपोषयेत् ॥

इति बालसारे— १ ५

**नेजकः**— रजकः ।

नेजकः वस्त्रस्य धावक इति विज्ञानेश्वरः

वसानस्त्रीन् पणान् दण्ड्यो नेजकस्तु परांशुकम् ।

विक्रयावक्रयाधानयाचितेषु पणान् दश ॥ याज्ञ-२-२३८

**नेत्रम्** — रज्जुः ॥

व्यामप्रमाणं नेत्रं स्यात् तेन मथ्यो हुताशनः

इति अरणिलक्षणो

**नेपालिका**—नवमालिका इति हेमाद्रौ ॥ परि-६८३

**नेष्टा**—ऋत्विग्विशेषः ।

**नैकृतिकः**—परापकारशीलः इति मित्रमिश्रः ।

"दासनैकृतिकाश्रद्धवृद्धस्त्रीबालचार्क्रिकाः"

इति व्यवहार प्रकाशे ११७ पराशरः

**नैगमः**— (१) नानापौराणां समूह इति हलायुध

इति दंडविवेके— २६२

विवादरत्नाकरेऽपि —६६८

नाना पौरसमूहस्तु नैगमः परिकीर्तितः ।

नानायुधधरा व्राताः समवेताः प्रकीर्तिताः ॥

(२) नैगमा वणिज इति विवादरत्नाकरे—६२२

नैगमारत्नादीनां वाणिज्यकर्तार इति राजनीतिप्रकाशे-४५

पौरजानपदाः श्रेणीर्नैगमानां गणैः सह ।
एते चान्येऽपि बहवः प्रीयमाणः प्रियंवदाः ॥
इति तत्र रामायणे ।

उपलब्ध रामायणे तु अयो—१४-४०
"पौरजानपदश्रेष्ठा नैगमाश्च गणैः सह इति पाठो दृश्यते"

(३) पौरुषेयतया वेदप्रामाण्यं प्रवदन्ति ये ।
तेषां वैशेषिकादीनां नैगमाख्या प्रकीर्तिता ॥ इति

**नैधानी—(सीमा)** तुषांगारनिधानमयी सीमा ।
ध्वजिनी मत्सिनी चैव नैधानी भयवर्जिता ।
राजशासननीता च सीमापं च विधास्मृता ॥ इति नारदः
इष्टकाङ्गरसिकताः शर्करास्थिकपालिकाः ।
निखाता यत्र दृश्यन्ते नैधानी सा प्रकीर्तिता ॥
इति व्यासः विवादरत्नाकरे—२१५

**नैमित्तिकम्—**निमित्तात् प्राप्तं कर्म ।
अनियतनिमित्तोपाधौ चोदितं कर्म इति विज्ञानेश्वरः
१—२१७

**नैर्हारिकम्—**निष्कृष्य हरणम् इति विवादरत्नाकरे—३ ८

**नैवेशिकम्—**निवेशाय गार्हस्थ्यार्थं यत् कन्या दीयते तत्
नैवेशिकमिति विज्ञानेश्वरः ।
भूदीपांश्चान्नवस्त्राम्भस्तिलसर्पिः प्रतिश्रयान् ।
नैवेशिकं स्वर्णधूर्यं दत्वा स्वर्गे महीयते ॥
इति याज्ञ—१-२१०

**नैष्ठिकः—**यावज्जीवब्रह्मचारी ।
निष्ठामुत्क्रान्तिकालं नयति इति नैष्ठिक इति
विज्ञानेश्वरः याज्ञ-१-४९ वीरमित्रोदयसंस्कार-
प्रकाशे च—५४८
वेदस्वीकरणे दृष्टो गुर्वधीनो गुरोर्हितः ।
निष्ठां तत्रैव यो गच्छेन् नैष्ठिकः स उदाहृतः ॥
लघुविष्णुः—१-२४
नैष्ठिकत्वं तु ब्राह्मणस्यैव न तु क्षत्रियादेः ।
एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुत ।
स गच्छत्युत्तमं स्थानं न चेह जायते पुनः ॥
मनु-२-२४९
इति मनुवाक्य विप्रपदेन क्षत्रियादिव्युदासादिति
नारायणः ।
इति भट्टोजीदीक्षितः चतुर्विंशतिमतसंग्रहे श्र द्ध-४८

**न्यग्रोधः—**वटवृक्षः ।
"न्यीग्रोधो बहुपाद्वटः"
अश्वत्थमेकं पिचुमन्दमेकं न्यग्रोधमेकं दशपुष्पजाती ।
द्वे द्वे तथा दाडिममातुलुङ्गे [illegible] नरकं न याति

**न्यंकुः—**शम्बरसदृशः शृंगरहितो मृग इति कल्पतरुः
नियत— ३०८

गम् अश्लीलम् (वाक्यम्)
देशजाति कुलादीनामाक्रोशं न्यङ्गसंयुतम् ।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते ॥
नारदः-१५-१

**न्यंगावगूरणम्**—निकृष्टागप्रदर्शनेन तिरस्करणमित्यपरार्कः

॥ २-२०४

न्यग्भावकरणमिति माधवः ।

न्यंगावगूरणं वाचा क्रोधानुकुरुते यदा ।

वृत्तदेशकुलानां तु अश्लीला सा बुधैः स्मृता ॥

इति कात्यायनः ।

**न्यायः**–(१) उपाय ।

अधार्मिकं त्रिभिर्न्यायैर्निगृह्णीयात्प्रयत्नतः ।

निरोधनेन बन्धेन विविधेन वधेन च ॥

मनुः ८-३१०

(२) तर्कविद्या—

"पुराणन्यायमीमांसेत्यादि चतुर्दशविद्यासु पठिता"

तर्कविद्या—याज्ञ-१-३

(३) सादृश्यम् । यथा उपसन्न्यायः

(४) विचारः ।

"यथा होलाकाधिकरणन्यायादिः" ।

न्यायस्थाने ये ऽधिकृता गृहीत्वार्थं विनिर्णयम् ।

कुर्वन्त्युत कोचकास्ते तु राजद्रव्यविनाशकाः ॥

इति व्यासः स्मृतिचन्द्रिकायां व्यव-७७२

(५) प्रमाणम् ।

"नीयते अर्थः अनेन इति न्यायः प्रमाणम्"

इति व्यवहारप्रकाशे मित्रमिश्राः ॥

**न्यासः**—गृहस्वामिने अदर्शयित्वा तत् परोक्षमेव गृहजनहस्ते गृहस्वामिने देयमिति समर्पणं न्यासः ।

समक्षसमर्पणं तु निक्षेप इति विज्ञानेश्वराभिप्रायः

याज्ञ—२-६७

राज चौरारातिभय द् दायादानां तु वंचनात् ।

स्थाप्यतेऽन्यगृहे द्रव्यं न्यासः स परिकीर्त्तितः ॥

इतिबृहस्पतिः विवादरत्नाकरे—८३

निक्षेपउपनिधिश्च द्वयमपि न्यासपदेनोच्यते

निक्षिप्तस्यस्यैवंधन प्रेत्योपनिहितस्य च ।

राजाविनिर्णयं कुर्यादक्षिन्वन् न्यासधारिणम् ॥

इति मनुः—८-१९६

**न्युब्जम्**—अधोमुखम् "न्युब्जं पात्रं करोत्यधः"

याज्ञ - २३५

"न्युब्जो भुग्ने रुजा" इत्यमरः—१२-६-६१

न्युब्जः कुब्जे कुशस्रुचि । अधोमुखेपि च न्युब्जं

कर्मरंगतरोः फले इति हैमः ।

न्युब्जमधोमुखमिति लक्ष्मीधरः ॥ श्राद्ध-१४६

## प

**पक्षः**—चांद्रमासार्द्धकालः ॥ चंद्रस्य पंचदशकलानां पूरणं क्षयो वा यत्र पक्ष्यते परिगृह्यते स पक्षः ॥

अथवा देवपितृकार्यार्थं पक्ष्यते यः कालविशेष सः पक्षः इति कालसारे गदाधरः ॥ शुक्लपक्षे तिथि र्ग्राह्या यस्यामभ्युदितो रविरित्यादि ॥

पक्ष्येते परिगृह्येते देवता पितृकार्य्ययोः ।

यौ तौ पक्षौ शुक्लकृष्णौ चन्द्रवृद्धिक्षयोद्भवौ ॥

सिद्धान्तदर्पणे = २२-२२

(२) अर्थिनः राज्ञि निवेदनपत्रम् ।

तल्लक्षणं यथा मिताक्षरायाम् २-६

अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम् ।

साध्यवद्वाचकपदं प्रकृतार्थानुबंधि च ॥

प्रसिद्धमविरुद्धं च निश्चितं साधनक्षमम् ।

संक्षिप्तं निखिलार्थं च देशकालाविरोधि च ॥

वर्षर्तुमासपक्षाहो वेलादेश प्रदेशवत् ।

स्थानावसथसाध्याख्या जात्याकारवयोयुतम् ॥

साध्यप्रमाण संख्यावदात्मप्रत्यर्थिनामवत् ।

परात्मपूर्वजानेक राजनामभिरंकितम् ॥

क्षमालिंगात्मपीडावत् कथिताहर्तृदायकम् ।

यदावेदयते राज्ञे तद्भाषेत्यभिधीयते ॥

पक्षः प्रतिज्ञा भाषा इति पर्यायशब्दाः

(३) पक्षः रथचक्रम् ॥ गोयुक्तं रथमुपसंक्रम्य

पक्षसीकूबरबाहुवाभिमृशेत् । गोभिलः = ३-४-३१

**पक्षच्छिद्रा** — षष्ठ्यष्टमीद्वादशीतिथयः ॥

षष्ठ्यष्टमी द्वादश्यः पक्षच्छिद्राः इति मित्रमिश्रः

पक्षच्छिद्रां च रिक्तां च विनापंचदशीं शुभाः ।'

चतुर्दशी चतुर्थी च कदाचित् स्युः शुभप्रदाः ॥ इति

बृहस्पतिः सीमन्तोन्नयनकालनिर्णये संस्कारप्रकाशे

— १५७

निर्णयसिन्धौ वसिष्ठः-

चतुर्दशी चतुर्थी च अष्टमी नवमी तथा ।

षष्ठी च द्वादशी चैव पक्षच्छिद्राह्वयास्तथा ।

क्रमादेतासु तिथिषु वर्जनीयाश्च नाडिकाः ॥

भूता ५ ष्टद मनु १४ तत्त्वा २५ङ्क ६ दश १०

शेषास्तु शोभनाः '।

**पक्षतिः**—प्रतिपत्तिथिः । वयसांबाहुमूलं च ।

**पक्षवर्द्धिनी**—वैष्णवैकादशीविशेषः ।

पूर्णिमामावास्ये यदि बुद्धिं गच्छतः तत्र पक्षे एकादश्यु

पवासे द्वादश्यां कार्यः ।

कुहुराके यदाबुद्धिं प्रयाते पक्षवर्द्धिनी ॥ इति ॥

**पक्षषण्डः**—पंचदशदिनान्तरं स्वुद् भोगक्षमः नपुंसक-

विशेषः ।

संस्कारप्रकाशे-७५८

**पक्षहतः** —पक्षघातरोगेण कर्माक्षमवेहार्द्धः इति हेमाद्रिः ।

श्वित्री कुष्ठी च क्लीवश्च तथा पक्षहतश्च यः ।

अपस्मारी च यश्चांधोराचन्नार्हति केतनम् ॥

इति महाभारते ॥

**पक्षादिः**—प्रतिपत् ।

पक्षादिषु स्थालीपाकंश्रपयित्वा दर्शपूर्णमासदेवताभ्यो

हुत्वा जुहोति ॥ पारस्करगृ-१-१२ १

**पक्षादीष्टिः**—पक्षादौ साग्निकैः या इष्टिः सम्पाद्यते ।

पक्षादिकालो यथा

पर्वणो यश्चतुर्थांश आद्या प्रतिपदस्त्रयः ।
यागकालः स विज्ञेयः प्रातर्युक्तो मनीषिभिः ॥ इति
तद् विशेषः कालमाधवादौ । तद्विधिश्च
पारस्करगृह्यसूत्रादौ द्रष्टव्यः ॥

**पक्षामासः**—पक्षलक्षणहीनः पक्षः तद्यथा

अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षामासं विवर्जयेत् ॥ इति
मिताक्षरायाम् २-६
कात्यायनस्मृतिसारोद्धारे-१४०

**पक्षिणी** —दिवसद्वयमध्यगता रात्रिः ।
यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः ।
विरमेत् पक्षिणीं रात्रिं तदेवैकमहर्निशम् ॥ मनुः-४६७
आगामिवर्त्तमानाहर्युक्ता रात्रिः पक्षिणीति
कल्पतरौ शुद्धिकाण्डे ३३

**पंक्तिः**—आनुपूर्व्या निविष्टजनसमूहः इति कुल्लूकः
मनुः-१-१०५

भोजनाद्यर्थसमवेतजनघटिका इति सारः
अग्निना भस्मना चैव सलिलेन विशेषतः ।
द्वारेण स्तम्भमार्गेण षड्भिः पंक्तिर्विभिद्यते ॥
कूर्मपु-२-१६

**पंक्तिपावनः**—येन अपांक्त्योपहतापंक्तिः पवित्रीक्रियते ।
अपाङ्क्त्योपहता पंक्तिः पाव्यते यैर्द्विजोत्तमैः ॥
तान्निबोधत कार्त्स्न्येन द्विजाग्र्यान् पङ्क्तिपावनान् ॥
मनुः-३-१-३-१८३

पवनः पावनस्त्रेता यस्य पंचाग्नयो गृहे ।
सायं प्रातः प्रदीप्यन्ते स विप्र पंक्तिपावनः ॥
इति मन्वर्थमुक्तावल्यां हारीतः ।
अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पंक्तिपावनाः ॥
मनुः-३-१८४

त्रिणाचिकेतः पंचाग्निस्त्रिसुपर्णः षडंगवित् ।
ब्रह्मदेयात्मसंतानो ज्येष्ठ सामग एव च ॥ ३-१८५
वेदार्थवित् प्रवक्ता च ब्रह्मचारी सहस्रदः ।
शतायुश्चैव विज्ञेया ब्राह्मणाः पंक्तिपावनाः ॥ ३-१८६

षडंगविज्ज्येष्ठसामिकस्त्रिणाचिकेतस्त्रिमधुस्त्रिसु-
पर्णः पंचाग्निः स्नातको मन्त्रब्राह्मणविद्धर्मज्ञो ब्रह्मदेया-
त्मसंतान इति गौतमः—२-६-२८

अथपंक्तिपावनाः (१) त्रिणाचिकेतः (२) पञ्चाग्निः
(३) ज्येष्ठसामगः (४) वेदपारगः (५) वेदाङ्गस्यापे-
कस्य पारगः (६) पुराणेतिहासव्याकरण पारगः
(७) धर्मशास्त्रस्यापेकस्य पारगः (८) तीर्थपूतः
(९) यज्ञपूतः (१०) तपः पूतः (११) सत्यपूतः (१२)
मन्त्रपूतः (१३) गायत्रीजपनिरतः (१४) ब्रह्मदेयानु-
सन्तानः (१५) त्रिसुपर्णः (१६) जामाता (१७) दौहि-
त्रश्चेति पात्रम् । विष्णुः-८३-१८

षड्ङ्गविद् ध्यानयोगी सर्वन्तेस्तशौव च ।
यायावरश्च पंचैते विज्ञेयाः पंक्तिपावनाः ॥
ये भाष्ये वैदिके केचिद् ये च व्याकरणे रताः ।
चतुर्दशानां विद्यानामेकस्यापि च पारगः ।
श्राद्धकल्पं पठेद्यस्तु सर्वैते पंक्तिपावनाः ॥

इति श्राद्धप्रकाशे-७१

प्रकाशितब्रह्माण्डपुराणे तु ये भाष्ये इत्यादि-श्लोको नास्ति ॥

**पंगुः**—पद्भ्यां न गच्छतीति पंगुरिति जीमूतवाहनः ।

दाय ५

**पंचगव्यम्**—गोसंबन्धिपंचप्रकारद्रव्यम् ।

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
पंचगव्यमिति प्रोक्तं सर्वस्मिन्शुद्धिकर्मणि ॥
ताम्रारुणश्वेतकृष्णनीलनामाहरेद् गवाम् ।
गोमूत्र-गोमय-क्षीर-दधि-सर्पींषि च क्रमात् ॥

इति स्कान्दे परिभाषाप्रकाशे-१८

यथाह पराशरः

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
निर्दिष्टं पचगव्यं तु पवित्रं पापनाशनम् ॥ ११-२७
गोमूत्रं कृष्णवर्णायाः श्वेताया गोमयं हरेत् ।
पयश्च ताम्रवर्णाया रक्ताया दधि चोच्यते ॥ ११-२८
कपिलाया घृतं ग्राह्यं सर्वं कापिलमेव च ।
गोमूत्रस्य पलं दद्याद् दध्नस्त्रिपलमुच्यते ॥ ११-२९
आज्यस्यैकपलं दद्याद्दङ्गुष्ठार्धं तु गोमयम् ।
क्षीरं सप्तपलं दद्यात् पलमेकं कुशोदकम् ॥ ११-३०
गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यास्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥ ११-३१
तेजोसिशुक्रमित्याज्यं देवस्यत्वा कुशोदकम् ।
पञ्चगव्यमृचापूतं होमयेदग्निसन्निधौ ॥ ११-३२
सप्तपत्रास्तु ये दर्भा अच्छिन्नाग्रोः शुचित्विषः ।
एतरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि ।
इरावते इदं विष्णुर्मानस्तोके च शंवतीः ॥
एताभिश्चैव होतव्यं हुतशेषं स्वयं पिवेत् ।
प्रणवेन समालोड्य प्रणवेनाभिमन्त्रय च ।
प्रणवेन समुद्धृत्य पिवेत्तत्प्रणवेन तु ॥
मध्यमेन पलाशस्य पद्मपत्रेण वा पिवेत् ।
स्वर्णपात्रेण रौप्येण ब्रह्मतीर्थेन वा पुनः ॥
यत्त्वगस्थिगतं पापं देहे तिष्ठति मानवे ।
ब्रह्मकूर्चोपवासस्तु दहत्यग्निरिवेन्धनम् ॥

पराशरस्मृतिः-२६६-३०७

वरुणो देवता मूत्रे गोमये हव्यवाहनः ।
सोमःक्षीरे दध्नि वायुर्घृते रविरुदाहृतः ॥ देवलः-६२
गोमूत्रं ताम्रवर्णायाः श्वेतायाश्चैव गोमयम् ।
पयः काञ्चनवर्णाया नीलायाश्चापि गोर्दधि ॥
घृत वै कृष्णवर्णाया विभक्तिर्वर्णगोचरा
शुक्लायामूत्रं गृह्णीयात् कृष्णाया गोःशकृत्तथा ।

देवलः-६४

ताम्रायाश्च पयोग्राह्य श्वेताया दधि चोच्यते ।

कपिलाया घृतं ग्राह्यं महापातकनाशनम् ॥

यमस्मृतिः-९१

**पंचगौड़बलिः**—मोदकैश्च तथाऽपूपैः पायसेन तथैव च ।

गुडोदनेन च तथा पायसेन गुड़ेन च ॥

पञ्चगौड़बलिःप्रोक्तः परः सौभाग्यवर्द्धन ॥

इति पूजाप्रकाशोद्धृते वाराहे पूजा-१५६

धूपं दद्यात्रिवारं च पञ्चगव्यं तथा बलिम् ।

पञ्चगौडं तथा राम बद्धो मुच्येत बन्धनात् ॥

विष्णुधर्मपु॰ २-११०-१५

**पंचतपाः**—(१) चतुर्दिगवस्थितैरग्निभिरूर्ध्वं चादित्य-

तेजसा य आत्मानं तापयति ।

"ग्रीष्मे पंचतपास्तु स्यात् ॥ मनुः ६-२३

(२) औदरो रेतसश्चापि कामजः क्रोधजोऽब्जजः ।

एते वै निर्जिता येन स वै पंचतपाः स्मृतः ॥

इति कल्पतरौ गार्हस्थ्य-३८४

**पंचतारम्**—(नक्षत्रम्) रोहिण्यश्लेषामघाहस्ताख्यानि

चत्वारि वै नक्षत्राणि पञ्चताराणि इति हेमाद्रिः

कल्पतरौ व्रतकाण्डे १५

पञ्चतारं रोहिणो हस्तं च इति ।

**पञ्चनिधनम्**—पञ्चनिधनं रहस्यं गीतम् इति उत्सर्गमयूखे

१५

वैराजं पौरुषं सूक्तं सौपर्णं रुद्रसंहिताम् ।

शैशवं पञ्चनिधनं गायत्रं ज्येष्ठसाम च ॥ इति

**पञ्चनिर्यासधूपः**—शल्लकीगुग्गुलुकर्पूर वकुलकस्तूरीभिः

पञ्चनिर्यासधूपः ।

पूजाप्रकाशोद्धृत विष्णुधर्मोत्तरे तु

शल्लकीगुग्गुलु चैव कर्पूरं वकुलं तथा ।

कथित पञ्चनिर्यासमेतत् श्रीवासवान्वीदम् ॥ १५८

धूपं च पञ्चनिर्यासं दत्त्वा चैवाप्यनुत्तमम् ।

ततश्च पञ्चमधुरं बलिः सम्यङ् निवेदयेत् ॥

विष्णुधर्मपु-२-११०-११

**पञ्चप्रासादः**—पञ्चचूड़ान्वितः प्रासादः ।

पक्वेष्टकचितं रम्यं पंचप्रासादसंयुतम् ।

कारयित्वा हरेर्धाम धूतपापो व्रजेद्दिवम् ॥

इत्यग्निपुराणे

**पञ्चबंधः**- पञ्चमांशः ।

परोक्तदण्डः पञ्चबंधः कौट ३-१-२०

आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा ।

पञ्चबधो दमस्तस्य राज्ञे तेनाविभाविते ॥

इति याज्ञ-२-१७१

**पञ्चभंगाः**—पञ्चपल्लवाः ।

अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोध पल्लवाः ।

पञ्चभंगा इति प्रोक्ताः सर्वकर्मसुशोभनाः ॥

इति नित्याचारप्रदीपोद्धृत ब्रह्माण्डे ।। नित्या-१-१३८

परिभाषाप्रकाशे-११५

**पंचमधुरबलिः**—क्षीरं क्षौद्रं घृतं द्राक्षा शर्करा च पञ्चमधुरं बलिं दद्यात् इति नरसिंहवाजपेयी नित्याचार-प्रदेपे ।

पूजाप्रकाशे मित्रमिश्रश्च—१५८

धूपं च पञ्चनिर्यासं दत्त्वा चैवाप्युनुत्तमम् ।
ततश्च पञ्चमधुरं वलिं सम्यङ् निवेदयेत् ।।

विष्णुधर्मपु—२-११०-११

**पंचमहायज्ञाः**— (१) ब्रह्मदेवपितृमनुष्यभूतयज्ञाः

मनुः—३-७०

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो वलिर्भौतो नृयज्ञोऽतिथिपूजनम् ।। इति

(२) दुष्टस्य दण्डः सुजनस्यपूजा न्यायेन कोशस्य च संप्रवृद्धिः ।
अपक्षपातोऽर्थिषु राष्ट्ररक्षा पंचैव यज्ञा कथिता नृपाणाम् ।। अत्रिसंहिता-२८

पद्यमिदं मिहिरेण उक्तमित्युक्तं नीतिमयूखे-५३

**पंचमाषबलिः**--कालमाषेण्डरिकाञ्च चटके गाडवान्वितैः ।
पञ्चमाषो बलिः प्रोक्तः सदा मांसयुतैर्द्विजाः ।। इति
स्नापयित्वा तु तैलेन त्रिभिश्चूर्णैर्विलेपयेत् ।
पञ्चमाषवलिं दत्त्वा वातव्याधि विमुञ्चति ।।

विष्णुधर्मपु, २-११०-८

**पंचमुद्गबलिः**—बटकानि च भक्ष्याणि कल्माषं गाडं तथा ।
मुद्गं पुष्पोदनं चैव पञ्चमुद्गो वलिः स्मृतः ।।

इति नित्याचारप्रदीपे-२-१७१

मुद्गसूपौदनं चेवेति पूजाप्रकाशे पाठः १५६

तैलक्षौद्रघृतैर्देवं स्नापयित्वा जनार्दनम् ।
भस्मत्रयेणानुलिप्य संपूज्य कुसुमैः सितैः ।
पञ्चमुद्गवलिं दद्यादतीसारात् प्रमुच्यते

विष्णुधर्मपु-२-११०-१

**पंचमृत्तिका**— अन्तर्जले देवगृहे वल्मीके मूषकस्थले ।
कृतशौचावशिष्टा वा न ग्राह्यः पञ्चमृत्तिकाः ।।

वसिष्ठः–६-१७

**पंचरत्नम्**— कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम्
इति कालिकापुराणे ।। नित्याचारप्रदीपे-१-१३७

कनकं रजतं मुक्ताराजावर्त्तं प्रवालकम् ।
इत्यादित्यपुराणे इति नित्यचारप्रदीपे ।। १-१३७

सुवर्णं रजतं मुक्ता राजवर्त्तं प्रवालकम् ।
रत्नपञ्चकमाख्यातं शेषं वस्तु ब्रवीम्यहम् ।।

इत्यादित्यपुराणे इति परिभाषाप्रकाशे-१५७

**पंचरसस्नानम्**—घृतं तैलं तथा क्षौद्रं दधिक्षीरं च पञ्चमम् इति पञ्चरसस्नानम् । पूजाप्रकाशे-११५

द्विस्नेहस्नापितं देवं शीतोष्णेनानुलेपितम् ।
पञ्चभिः स्नापयित्वा च रसैर्देवं जनार्दनम् ।

विष्णुधर्मपु—२-११०-६

**पंचलांगलकम्**—महादानभेदः मात्स्ये २५७ अध्याये द्रष्टव्यः ।

**पंचवर्गः**—( ) श्रोत्रादिगणः इति नीलकंठः ।

योजितः पञ्चवर्गेण सहजेनात्मवर्षिणा ।
आपदस्तस्य वर्द्धन्ते शुक्लपक्ष इवोडुराट् ॥
महाभा-उद् ३४-५५

(२) पञ्चविधगुप्तचरवर्गः ।

ते च चाराः कापटिकोदास्थित गृहपति वैदेहकतापस-व्यञ्जनाः ॥ कौट १-११

कृत्स्नं चाष्टविधं कर्म पञ्चवर्गं च तत्त्वतः ।
अनुरागापरागौ च प्रचारं मण्डलस्य च ॥ मनुः ७-१५४

**पंचवटी**—अश्वत्थं स्थापयेत् प्राचिबिल्वमुत्तरभागतः ।
वटं पश्चिमभागेतु धात्रीं दक्षिणत स्तथा ॥
अशोकं वह्निदिक् स्थाप्यं तपस्यर्थं सुरेश्वरि ।
मध्येवेदीं चतुर्हस्तां सुन्दरीं सुमनोहराम्
प्रतिष्ठां कारयेत्तस्याः पञ्चवर्षोत्तरं शिवे ।
अनन्तफलदात्री सा तपस्या फलदायिनी ॥
इयं पञ्चवटी प्रोक्ता बृहत्पंचवटीं शृणु ।
विल्ववृक्षं मध्यभागे चतुर्दिक्षु चतुष्टयम् ॥
वटवृक्षं चतुष्कोणे वेदसंख्यां प्ररोपयेत् ।
अशोकं वर्त्तुलाकारं पञ्चविंशतिसंमितम् ॥
दिग्विदिक्ष्वामलकीं चैव एकैकं परमेश्वरि ।
अश्वत्थं च चतुर्दिक्षु बृहत्पंचवटी भवेत् ॥
इति हेमाद्रौ स्कन्दपुराणम् ।

**पंचवर्णपुष्पाणि** पीतशुक्ल कृष्णरक्त श्यामवर्णानि पुष्पाणि आश्वलायनस्मृतिः ११-४
पूजाप्रकाशे—१५८

अनुलिप्य च धर्मज्ञ तथा पञ्चसुगन्धिना ।
पञ्चवर्णानि पुष्पाणि तथा दत्त्वा यथाविधि ॥
विष्णुधर्मा—२-११०-१०

**पंचविंशति संस्काराः**— पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः ।
ते पवित्राश्च योग्याश्च श्राद्धादिषु सुयंत्रिताः ॥ ३
गर्भाधानं पुंसवन सोमन्तोबलिरेव च ।
जातकृत्यं नामकर्मनिष्क्रमोऽन्नाशनं परम् ॥ ४
चौलकर्मोपनयनं तद्‌गतानां चतुष्टयम् ।
स्नानोद्वाहौ चाग्रयणमष्टकाश्च यथायथम् ॥ ५
श्रावण्यामाश्वयुज्यां च मार्गशीर्ष्यां च पार्वणम् ।
उत्सर्गश्चाप्युपाकर्ममहायज्ञश्च नित्यशः ॥ ६
संस्कारा नियता ह्येते ब्राह्मणस्य विशेषतः ॥ ७
आश्वलायनस्मृतिः—उत्त: ७

**पंचशस्यबलिः**—सपिष्टकमसूरैश्च सप्तशस्योदनैश्च वै ।
पंचशस्यो बलिरिति नित्याचारप्रदीपे ॥

**पंचशिम्बम्**—पञ्चशिम्बिधान्यानि ।

वल्लमसूरराजमाषमठकुलित्था इति निर्णयसिन्धौ ।

वृन्ताकं पञ्चशिम्बं च लोमशानि फलानि च ॥

इत्यादि श्राद्धवर्ज्ये ब्राह्मे ।

हेमाद्रौ—

सुगन्धं पञ्चशिम्बं च कलायाः सर्व एव च ।

वांशं करीरं सुरसमजकं भूतृणानि च ॥

भक्ष्यत्वेन निषिद्धं च नन्देयं श्राद्धकर्मणि ।

ब्रह्माण्डपुराणे ।

निष्पावमसूर, राजमाषमठकुलतथाख्यानि पञ्चशिम्बि-धान्यानि ॥

पञ्चशिम्बं यच्चधर्मशास्त्रेषु भक्षणीयत्वेन प्रतिषिद्धम् ।

हेमा—५६६

**पंचसतम्**—शिरसः मुंडनमिति नारदोयमनुसंहिताभाष्ये

१५-८-६

**पंचसूनाः**—पञ्चसूना गृहस्थस्य चुल्लीपेषण्युपस्करः ।

कण्डनी चोदकुम्भश्च वध्यतेयास्तु वाहयन् ॥ इति

मनुः— ३-६८

**पंचहोता**—अग्निर्होतेत्यादिनि पञ्चवाक्यानि पञ्चहोतृपदवाच्यानि अग्निर्होता अश्विनावध्वर्यू ।

त्वष्टाग्नीव मित्रउपवक्ता इत्याद्यनुवाकः ॥

**पंचाग्निः**—अग्निहोत्री ।

पवनः पावनस्त्रेता यस्य पञ्चाग्नयो गृहे

सायं प्रातः प्रदीप्यन्ते स विप्रः पंक्तिपावनः ॥ इति हारीतः ।

पवनः आवसथ्याग्निः पावनः सभ्योग्निः इति कुल्लूकः । मनुः—३-१३५

पवनः पावन इति स्थाने हेमाद्रौ तु

पचनः पाचनस्त्रेता यस्य पंचाग्नयो गृहे ।

सायंप्रातः प्रदीप्यन्ते स विप्रः पंक्तिपावनः ॥ इति

पञ्चयज्ञार्थमन्नं पचतीति पचनः आवसथ्यः

पाचयतीति पाचनः सभ्यः ॥ हेमा, परि, ४०१

सभ्यावसथ्यौ त्रेताग्नयश्च यस्य सन्ति स पञ्चाग्निः ।

पञ्चाग्निविद्याध्यायी चेति विज्ञानेश्वरः ॥ याज्ञ-१-२२१

**पंचांगप्रणामः**—पद्भ्यां कराभ्यां शिरसा पञ्चांगा प्रणतिः स्मृता ।

अष्टाङ्ग उत्तमः प्रोक्तः पञ्चाङ्गे मध्यमः स्मृतः ॥

इति वाराहे पूजाप्रकाशे—८८

**पंचामृतम्**— पयोदधिघृतं मधुशर्करा च ।

**पंचाम्रम्**— अश्वत्थमेकं पिचुमर्दमेकं न्यग्रोधमेकं दशपुष्पजातिः ।

द्वे द्वे तथादाड़िममातुलुंगे पंचाम्ररोपी नरकं न याति

इति वराहे ॥

अश्वत्थ एकः पिचुमर्द एको द्वौ चंपकौ त्रीणि च केशराणि ।

सप्ताथ ताला नवनारिकेला पञ्चाम्ररोपी नरकं न
याति ॥ इति तिथितत्त्वे

पंचारूढपत्रम्--जातिसंज्ञागमाधिवा सलेखकयुक्तं पत्रं
पञ्चारूढपत्रम् ।

पंचार्द्रः—प्रक्षालितकरचरणमुखः ।
करचरणवदनार्द्र इति लक्ष्मीधरः नियत—२२३
प्राङ्मुखोन्नानि भुञ्जीत पञ्चार्द्रोवाग्यतः शुचिः इति
कल्पतरौयमः ॥
पञ्चार्द्रो भोजनं कुर्य्याद् भूमौ पात्रं निधाय च ।
उपवासे न तत्तुल्यं मनुराह प्रजापतिः ॥ ३
उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वै करौ ।
आचम्यार्द्राननोऽक्रोधः पञ्चार्द्रो भोजनं चरेत् ॥
इति कूर्मपुराणे—२-१९-४
पंचार्द्रो भोजनं कुर्यात् प्राङ्मुखो मौनमास्थितः ।
न निन्देद्दत्तभक्ष्यांश्च स्वादुस्वादु न कुत्सयेत् ॥
इति व्यास इति गोविन्दराजः मनुः-४-७६
हस्तौ पादौ तथैवास्यमेषु पंचार्द्रता मता इति द्वितीयार्द्धे स्मृतिचन्द्रिकायाम्—६०१

पंचालाः—कान्यकुब्जदेशः इति कुल्लूकः मनुः—२-१९

पंचावत्तम्—जामदग्न्या वत्सविदावार्ष्टिषेणास्तथैव च ।
भार्गवाश्चावना और्वाः पंचावत्तिन ईरिताः ॥
पंचावर्त्तं तु भृगूणाम् इति गोभिलः ॥ १-८-४

पंचमानकः— अग्नि ववाशी वानप्रस्थविशेषः ।
पचमानकाः पंचविधाः सर्वारण्यका वैतुषिकाः
कन्दमूलभक्षाः फलभक्षाः शाकभक्षाश्चेति ।

पटलम्— (१) सुवर्णादिनिर्मितः कोशः इति हेमाद्रिः
तत्रादित्यपुराणे वृषोत्सर्गे ।
घण्टालोहकृतांददयात् शृंगे च पटलं शुभम् ।
(२) वंशादिपात्रमिति समयमयूखे ।

पटकुटी—वस्त्रगृहम्, इति प्रायश्चित्तमनोहरे काहु मिश्रः
सहतानि च वस्त्राणि पटकुट्यादिकानि च ।
कामचण्डालसंस्पर्शे प्रोक्षणाच्छुद्धिमाप्नुयुः ॥ पृ ८७

पटहः—वाद्यविशेषः आनकः पटहो ज्ञेय इति हलायुधः ।
काण्ड-१

पटोलम्—फलशाकविशेषः ।
पिप्पलीमरिचे चैव पटोलं बृहतीफलम् इति
श्राद्धदेये वायुपुराणे ॥
वार्त्ताकीं मूलकं चैव पटोलं च विवर्जयेत् । इति
चातुर्मास्यव्रते

पट्टिशः—पु०, शस्त्रविशेष इति हलायुधः परशुः पट्टिशी-
नाम स एव च परश्वधः इति भरतः किन्तु भुशुण्डि-
भिश्चक्रगदार्ष्टिपट्टिसैः शक्त्युल्मुकैः प्रासप रूधैरपि
इति भागवते ६-१९-३६ द्वयोर्भेदेन पाठः ।
पट्टसः उभायान्तत्रिशूल इति श्रीमूला २-१८
पट्टिशं तीक्ष्णलोहोत्थं स्वहस्तत्रितयान्वितम् ।

इक्षुपत्रनिभं तीक्ष्णं द्विधारं दृढसारवत् ॥
हस्तवेष्टनकं मूले रम्भापुष्पफलोपमम् ।
वलयत्रितयैर्युक्तं हस्ते धर्तुं तदन्तरे ॥
कुर्यात्तिर्यग् देहदण्डं चतुरङ्गुलमानतः ।
चामुण्डा देवता चास्य कथिता भयनाशिनी ॥
वीरसर्वस्वम्—१७६

**पणः**—(१) कर्ष रिमितेन ताम्रेण निर्मितो मुद्राविशेषः काकिणी चतुष्टयम् ।
कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणति
ममुः-८-१३६
(२) मानं तण्डुलमात्रं स्याद्दशमानं पणः स्मृतः
इतिव्यवहारनिर्णये कात्यायनः ।
(३) ग्लहः-पणोक्षेपु ग्लहः स्मृतः इति हलायुधः
काण्ड-४
स च द्युते उत्कर्षापकर्षप्रदर्शनार्थं स्थापितंधनम् ।
(४) विष्णुः—महाभा १३-१४४-११५ ।
प्राणदः प्रणवः पणः इति पण्यते स्तूयते इति ।
तेनैव पूज्यव्यक्तौ आपण इति व्यवहारः ॥

**पणमानः**—एतावत् देयमिति परिभाषमाणः ।
न ननूचानमृत्विजं वृणीतेनपणमान मितिआप-
स्तम्बः-२-५-१०-८

**पणवः**—वाद्यविशेषः ढोल इति ख्यातः ।
डिण्डिमः पणवस्तथा इति हलायुधः काण्ड-१
स च आनक वाद्याद् भिन्नः "ततः शंखश्च भेर्यश्च पणवानकगोमुखा इति महाभरतोक्तेः" गीता-१-१३
पणवो मृदङ्ग इति विहारिलालव्याने ।
पणवाः पुष्कराश्चैव मृदङ्गाः पटहानकाः ॥
देवदुन्दुभयः शङ्खाः शतशोथ सहस्रशः ॥
ब्रह्मपु, १२-१०२

**पंडः**—नपुंसकविशेषः पण्डस्तुम्लानमेहनः ।
काणाः कुण्डश्च पण्डाश्च कृत्यकल्पतरौ यमः ॥

**पंड्कः**—नपुंसकविशेषः पण्डसंज्ञकः ।
पंण्ड इति हेमाद्रिः तत्राभोज्यान्नप्रकारणे
सुवर्णकारलेक पंडकबंधकीत्यादि ॥

**पण्यम्**—पणनयोग्यम् तच्च द्विविधम् स्थावरजंगमभेदेन ।
पुनः षड्विधम् ।
गणितं तुलितंमेयं क्रियया रूपतः श्रिया इति मिताक्षरायाम् २-२५४

**पतद्ग्रहः**—परिचा इति प्रसिद्ध इति नित्याचारप्रदेपे नरसिंहवाजपेयी ।
पापक्षयार्थं पतद्ग्रहदानमिति तत्रत्यविष्णुधर्मोत्तरे ।
स च पिकदानी इति संप्रति ख्यातः ।

**पतनम्**—पातित्यम् ।
द्विजातिकर्मभ्यो हानिः पतनम् । इति गौ ३-३-४

**पतनः**—पक्षी तयोश्चतुर्विधस्यमनुष्यजातस्यान्तः संज्ञानां

चलन-पतन-सर्पणानामायत्तं जीवनम्

अत्र पतनाः पक्षिणः । गौ १-८-२

**पताका**—तिर्यक् छिन्नवस्त्रयुक्तो दण्डः ध्वजस्तु चतुरस्र-वस्त्रयुक्तो दण्ड इत्यनयोर्भेदः इति केशववैजयन्तीतः अवगन्तव्यः । विष्णु ६३-२८

**पतितः**—द्विजातिकर्मसु अनधिकारो प्रायश्चित्ताधिकारी वा ।

विहितस्याननुष्ठनान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥

याज्ञ-३-२१९

**पतिव्रता**—पतिसेवापरायणा स्त्री ।

पतिव्रताधर्मा यथा—

नानुक्त्वा गृहान्निर्गच्छेत् नानुत्तरीया, न त्वरितं व्रजेत् न परपुरुषमभिभाषेतान्यत्र वणिक् प्रव्रजितवृद्धवैद्येभ्यो न नाभिदर्शयेदागुल्फाद्वासः परिदध्यात् न स्तनौ विवृतौ कुर्यान्न हसेत् प्रावृता भर्तारं तद्बन्धून्वा न द्विषान्न गणिकाधूर्ताभिसारिणी प्रव्राजिता प्रेक्षणिका मायामूल-कुहककारिकादुःशीलादिभिः सहैकत्र तिष्ठेत् संसर्गेण हि कुलस्त्रीणां चरित्रं दुष्यति । इति मिताक्षरायां शङ्खः १-८६

पतिव्रतालक्षणमाह तत्रैव हारीतः ।

आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥ इति

विवाद रत्नाकरे बृहस्पतिः ४३६

**पत्तनम्**—द्वीपान्तरगतद्रव्याणां क्रयविक्रयस्थानम् ।

द्वीपान्तरगतद्रव्यक्रयविक्रयकान्वितम् ॥
पत्तनं चेति विख्यातम् इति लक्षणप्रकाशेद्धृतसिद्धान्तशेखरे । ग्रामादिभेदा अग्रहारशब्दे द्रष्टव्याः ।

**पत्तिः**—रथः १+ गजः १+ पदातयः ५+ अश्वाः ३ = पत्तिः ।

एको रथो गजश्चैको नराः पंच पदातयः ।
त्रयस्तु तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥

महाभाः आदि-२-१९

**पत्तिकः**—हस्त्यश्वरथपदात्यात्मकस्यांगदशकस्य पत्तिरिति कुल्लूकः ।

उत्कलेषु प्रसिद्धः पाइकशब्दः अस्यैवापभ्रंश इति मन्ये

**पत्नी**— यजमानस्य स्त्री यजमानवद्यज्ञफलभोक्त्री गार्हपत्यस्य पश्चिमदक्षिणे देशे पूर्वमुदङ्मुखी ऊर्द्ध्वजानुरुपविशति । ततः पयस्त्वत्याचमहिसनादि गार्हपत्य समिदाधात्याकर्म करोति ततस्तृणभिरसनं कृत्वानान्तं तत्रैवोर्ध्वजानुः प्राङ्मुखी उपविशति पत्नीसंयाज-प्रचारानन्तरं अवभृथस्थानीये अग्निहोत्रहवणीजलमि-नयतेपस्त्यंजलौ योक्त्रमाधाय होत्राकृते स्वयं पूर्ववत् समिदाधानं पुनः परिषेकान्तं कृत्वा पूर्वं यथा वेदयुक्त-

रयोः मध्यमार्गेण प्रविष्टा तथा ।
तेनैव मार्गेण विहारान्निर्गच्छति सा पत्नी

इति श्रौतपदार्थनिर्वचने ।।

रामोऽपि कृत्वा सौवर्णीं सीतां पत्नीं यशस्विनीम् ।
ईजे बहुविधैर्यज्ञैः सह भ्रातृभिरच्युतः ।।

विष्णुधर्म १-२१-६०

**पत्रम्**— (१) वाहनम् अश्वशिविकादि ।

पत्रं वाहनम् श्वादीतिजीमूतवाहनः-६ ।
वस्त्रं पत्रमलंकारं कृतान्नमुदकं स्त्रियः ।
योगक्षेमं प्रचारं च न विभज्यं प्रचक्षते ।। मनु-९-२१९

(२) दानविक्रयादिसाधनमागमश्च पत्रम् ।
तच्च बहुविधम् । तत्रादौराजकीयं यथा

राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा ।
राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत् ।।
शासनं प्रथमं ज्ञेयं जयपत्रं तथापरम् ।
आज्ञाप्रज्ञापनापत्रे राजकीयं चतुर्विधम् ।।
चीरकं च स्वहस्तं च तथोपगतसंज्ञकम् ।
आधिपत्रं चतुर्थं तु पंचमं क्रयपत्रकम् ।।
षष्ठं तु स्मृतिपत्राख्यं सप्तमं पटिपत्रकम् ।
विशुद्धिपत्रकं चैवमष्टधा लौकिकं स्मृतम् ।।

इत्यादि व्यवहारप्रकाशे वसिष्ठः ।

व्यवहारमाधवे बृहस्पतिश्च ।

षाण्मासिकेऽपि विषये भ्रान्तिः संजायते यतः ।
धात्राक्षराणि सृष्टानि पत्र रूढान्यतः पुरा ।।
राजलेख्यं स्थानकृतं स्वहस्तलिखितं तथा ।
लेख्यं तु त्रिविधं प्रोक्तं भिन्नं तद्बहुधा पुनः ।।
भागदानक्रियाधानसंविद्दासऋणादिभिः ।
सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम् ।।

सरस्वतीविलासे राजकीयं जानपदं लिखितं द्विविधं स्मृतमिति संग्रहकारः ।।

तत्र राजकीयं शासनजयपत्राज्ञापत्रदानपत्र प्रज्ञापत्र प्रसादलक्ष्यभेदात्पंचविधम् ।

जानपदलेख्यमष्टविधं विभागपत्र दानपत्रसंवित् स्थितिपत्रसन्धिपत्रविशुद्धिपत्राधिपत्रक्रयपत्रभेदात् ॥

(३) पुष्पदलम् पाखुडा इति उत्कलभाषायाम् ।

केतकीपत्रमादाय मिथुनस्थे दिवाकरे ।
येरर्चितो हरिर्भक्त्या प्रीतो मन्वन्तरं हुने ।।

इति विष्णुधर्मोत्तरे

अत्र पत्रशब्दः पुष्पावयवपर इति पूजाप्रकाशे-१३

(४) वृक्षाणां पत्रं तु प्रसिद्धमेव ।

बिल्वपत्रं शमीपत्रं पत्रं भृङ्गरजस्य च ।
तमालपत्रं च हरेः सद्यस्तुष्टिकरं परम् ।।

इति अग्निपुराणे पूजाप्रकाशे-४८

**पत्रकृच्छ्रः**— बिल्वादिपत्राणि यदि क्वथितानि मासं पीयन्ते तदा पत्रकृच्छ्रः ।

पत्रैर्मतः पत्रकृच्छ्रः इति मिताक्षरायां यमः-३-३१६

**पत्रिका**—तेजपत्रमिति नरसिंहवाजपेयी ।

ग्रन्थिपर्णं त्वचावालं केशरं जातिपत्रिका

रोचनासहसंयुक्तं कुम्भे पुत्रीयराज्यदम् ॥

इति देवीपुराणे नित्या-२-६८३

**पत्रोर्णम्**—धौतकौशेयमिति हेमाद्रिः । श्राद्ध-७३५

पत्रोर्णं पट्टसूत्रं च कौशेयं च विवर्जयेत् ॥

इति ब्रह्माण्डपुराणे

**पत्रोर्णा**—वृक्षपत्रेषु कृमिलालाकृता उर्णाः पट्टसूत्रस्य योनयः

पत्रोर्णा इति श्रीमूला ॥ कौट २-११

**पदम्**—(१) संकेतः ।

अलिपिज्ञो ऋणी यः स्याच्छ्लेखयेत्स्वमतं तु सः ।

साक्षिणा साक्षिणोऽन्येन सर्वसाक्षिसमन्वितः ॥

विजातीयलिपिज्ञोऽपि स्वयमेव लिखेत् पदम् इति

खड्गमुद्रिकादिरूपसरस्वतीविलासे नारदः ॥ अत्र

पदमिति स्वसंकेतमित्यर्थः

(२) ऋणादानादि अष्टादशविधम्-मनुः ८-(४.७)

तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः ।

सम्भूय च समुत्थानं दत्तस्यानपकर्म च ॥ ४

वेतनस्यैव चादानं सम्विदश्च व्यतिक्रमः ।

क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥ ५

सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके ।

स्तेयं च साहसं चैव स्त्रीसंग्रहणमेवच ॥ ६

स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च ।

पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥ ७

(३) गमनकालिकप्रदप्रक्षेपः तेन लंघिता भूमिरपि

पदशब्देन उच्यते ॥

पदानि क्रतुतुल्यानि भग्नेष्वविनिवर्त्तिनाम् ॥

राजा सुकृतमादत्ते हतानां विपलायिनाम् ।

याज्ञ १-३२५

**पदस्तोभाः**—प्राजापत्याश्चत्वारः पदस्तोभाः पदस्तोमा

इति पाठभेदः अशुद्धपाठो वा ।

अनघ त्व पदस्तोभानतीषं गांश्च पुत्रक ।

ऋषभांश्चाज्यदोहांश्च कथं श्राद्धेषु भोक्ष्यसे ॥

**पदस्तोमाः**—इति गोभिलीयश्राद्धकल्पपरिशिष्ठे ।

अष्टेडादिसामचतुष्टयम् इति कल्पतरुः ॥

नियतकाल-६३

उत्सोदेवाहिरण्यया इत्यादय इनि याज्ञ—टिप्पण्याम् ।

कल्पतरुटिप्पण्यां तु धत्तादिवइत्यादयः ॥

साम १-६-२-२-५

धत्तादिवः पवते कृत्योरसो दक्षो देवानामनुमाद्योनृभिः

हरिः सृजानो अन्यो न सत्वभिर्वृथापाजांसिकृणुषे-

नदीष्वा ॥ ५

वृषामतीनां पवते विचक्षणः सोमो अहनां प्रतरी-

तोषसांदिवः ।

प्राणसिंधूनां कलशां अचिक्रददिन्द्रस्यहार्यावि

शनमनीषिभिः ।। ६

त्रिरस्मै सप्तधेनवो दुदुह्रिरे सत्यामाशिरं परमेव्योमनि

चत्वार्यन्या भुवनानि निर्णिजेचारुणि चक्रे यदृतैरवर्द्धत ७

इंद्रायसोमसुषुतः परिस्रावापामीवा भवतु रक्षसा सह ।

मातेरसस्य मत्सतद्वयविनो द्रविणस्वन्त इहसन्त्विन्दवः

॥ ८ ॥ इति

अत्र क्रमेण कविभार्गवः सिकतानिवावरीः

रेणुर्विश्वामित्रः ।

वेनो भार्गःव ऋषयः पवमानः सोमोदे जगती छ ॥

**पदोदकम्**—पादप्रक्षालनोदकम् ।

शूर्पवातनखाग्राम्बुस्नानवस्त्रपदोदकम् ।

मार्जनीरेणुकेशाम्बु हन्ति पुण्यं दिवाकृ म् ॥

अत्रिः ३१९

**पद्मम्**— (१) अष्टका ॥ अष्टका च भवेत्पद्मम् इति

हेमाद्रौ जातुकर्ण्यः ॥

शंखप्राहुरमावस्यां क्षीणसोमां द्विजोत्तमाः ।

अष्टकासु भवेत् पद्मं तत्र दत्तं यथाक्षरम् ॥

इति जातुकर्ण्यः स्मृतिचन्द्रिका-२२

ग्रहोपरागे च सुते च जाते पित्र्ये गयायामयनद्वये च ।

नित्यं च शंखे च तथैव पद्मे दत्तं भवेन्निष्कसहस्र-

तुल्यम् ॥ इति

(२) आसनविशेषः ।

उर्वोरुपरि विप्रेन्द्राः कृत्वा पदतले उभे ।

समासीनात्मनः पद्ममेतदासनमुत्तमम् ॥

कूर्मपु २-११-अध्याये

(३) संख्याविशेषः ।

देवस्त्रीणामधीवासे नृत्यगीतनिनादिते ।

प्राजापत्ये वसेत् पद्मं वर्षाणामग्निसंन्निभे ॥

अत्र पद्मं कोटिशतमिति कल्पतरौ व्रत-४५७

**पद्मकम्**—यदाविष्टिव्यतीपातो भानुवारस्तथैव च ।

पद्मकं नामतत्प्रोक्तमयनात्तु चतुर्गुणम् ॥

इति हेमाद्रौ शंखः

स्मृतिचन्द्रिकायां च श्राद्धकाण्डे-२३

विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः ।

स योग पद्मको नाम पुष्करे ह्यतिदुर्लभः ॥

इति कल्पतरौ नियत-३७३

**पद्मकः**—षष्ठी च सप्तमी चैव वारश्चेदंशुमालिनः ।

योगोयं पद्मको नाम सूर्यकोटिग्रहैः समः ॥

इति निर्णयसिंधौ निर्णयामृते

**पद्मफलम्**—गट्टा इति निर्णयसिन्धौ पद्मफल पितॄणां

म सिक्तृप्तिजनकमिति तत्र मार्कण्डेयः ॥

**पद्माक्षम्**– पद्मबीजमिति लक्ष्मीधरः ।

तत्तु जपसाधनम् इन्द्राक्षशब्दो द्रष्टव्यः ।

"पद्माक्षैर्मंगलोमिकानाम्" इति विष्णुः २३-२४

पद्माक्षं धारयेद्यस्तु विशेषेण जपादिषु ।
अश्वमेधफलं प्राप्य विष्णुलोके महीयते ॥

नित्यचारप्रदीपः १-५१

पद्मा—हस्तत्रयप्रकारो मार्गः ।
"करत्रयात्मिका पद्मा" इति मंत्रः इति शुक्रनीतौ १-२६२

पयपंच—पयः पृथिव्याम् इति मंत्रः इति नित्याचार-प्रदीपे शु. यजुः १८-३६
पयः पृथिव्याम् पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः ।
पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ इति

पयोष्णी—तीर्थविशेषः श्राद्धदेशत्वेन उक्तः ।
गङ्गायमुनयोस्तीरे पयोष्ण्यमरकण्टके ।
नर्मदायां गयातीरे सर्वमानन्त्यमुच्यते ॥

शंखस्मृतिः १४-२७

परः—शत्रुः ।

परचक्रम्—शत्रुसेना इति श्रीमूला कौट ३-१२
परचक्रभयं नास्ति तस्मिन् राष्ट्रेऽपि पांडव ।
पर्जन्यः कामवर्षी स्यादीतिभ्यो न भयं भवेत् ॥ दिति श्राद्धदीपोद्धृत भविष्योत्तरे जन्माष्टमीमधिकृत्य ॥

परतर्ककः—परतर्ककाः परोपजीविनः अस्वतन्त्रा इति यःदिति लक्षणप्रकाशे मित्रमिश्रः ।
निःस्वाश्च कुनखैस्तद्वद् विवर्णैः परतर्ककाः ॥

इति तत्र गरुडपुराणे

परपूर्वा—पुनर्भूस्वैरिण्यादिः स्त्री ।

परपाकनिवृत्तः—परान्नभोजनपरित्यागी ।
अथवा वैश्वदेवाद्यर्थं क्रियमाणः पाक उत्कृष्टत्वात् परपाकः इत्युच्यते तस्मात् परपाकान्निवृत्तः पञ्चमहायज्ञरहित इति माधवाचार्याः पराशरः-११-४८

परपाकरतः—पञ्चयज्ञान् स्वयं कृत्वा परान्नेनोपजीवति ।
सततं प्रातरुत्थाय परपाकरतस्तु सः ॥ पराशरः ११-४८

परमधर्मः—मोक्षधर्मः । आत्मज्ञानमिति यावत् ।
अयंतु परमो धर्मो यद्योगेनात्मदर्शनम् ।

इति याज्ञ-१-८

परमहंसः—सन्यासिविशेषः ।
कुटीचकं तु प्रदहेत् पूरयेत्तु बहूदकम् ।
हंसो जले तु निक्षेप्यः परहंसं प्रपूरयेत् ॥

इति निर्णयसिन्धुः-३-३

परमहं वृत्तिः स्कान्दे—
कौपीनाच्छादनं वस्त्रं कन्थां शीतनिवारिणीम् ।
अक्षमालां च गृह्णीयाद् वैणवं दंडमव्रणम् ॥
माधूकरमथैकान्नं परहंसः समाचरेत् ।
परहंसस्त्रिदण्डं च रज्जुं गोबालनिर्मिताम् ॥
शिखां यज्ञोपवीतं च नित्यंकर्म परित्यजेत् । इति

लघुविष्णुश्च ।

कौपीनाच्छादनार्थं च वासो यस्य परिग्रहम् ।

कुर्यात् परमहंसस्तु दण्डमेकं च धारयेत् ॥ ४-२५

**परमान्नम्**—पायसम् ।

तण्डुलत्रिगुणं दुग्धं दुग्धार्द्धं जीवनीयकम् ।

तदर्द्धं गुड़चूर्णं तु परमान्नमिति स्मृतम् ॥ इति

आचारेन्दूद्धृतपारिजाते

नैवेद्यं परमान्नंच दत्त्वा दीपसमन्वितम् ।

ततोदद्याद् द्विजातिभ्यो यथाशक्त्या तु दक्षिणाम् ॥

इति स्कन्दपु, प्रभा, ४२-७

**परमेष्ठी**— (१) परमे स्थाने तिष्ठतीति परमेष्ठी ।

त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।

तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥

(२) परमेष्ठी स्वामी पिता इति देवपालः ।

पितामाता चेत्यादित्यदर्शनिः ॥

काठकगृ-४-५-२

परमेष्ठीमरणे पुत्रस्य अग्निसमाधनम् इति ।

**परवान्**—भृत्यः ।

नाहं राजा भवान् राजा भवतः परवानहम् ॥

महाभा-आश्रमः ३-४६

**परशुः**—काष्ठच्छेदनोपकरणविशेषः ।

न नारिकेलेन न फालकेन न मौञ्जिना नापि च वल्कलेन ।

एतैस्तु गावो न निबन्धनीया बद्धा तु तिष्ठेत् परशुं गृहीत्वा ॥ इति अंगिराः १०-५

न नारिकेलो न च शाणबालैर्नचापि मौञ्जै र्न च बद्धशृंखलैः इति मिताक्षरोद्धृतव्यासस्मृतिपाठः

३-२६३

परशुलक्षणं यथा—

परशुस्तीक्ष्णधारः स्याच्छार्ङ्गाकारो नतोन्नतः ।

दारुदण्डेन संयुक्तः षोड़शाङ्गुल विस्मृतः ॥

पाणिपल्लवयोर्मध्ये कण्ठः पन्नगवेष्टितः ।

इति वीरसर्वस्वे—१८०

**परशुरामाष्टमी**—आषाढ़शुक्लाष्टमी ।

**परश्वधः**—कुठारः इति नीलकण्ठः, महाभा, भीष्मवध, ५-४६-१३

ऋष्टिभिश्च धनुर्भिश्च विमलैश्च परश्वधैरिति

**पराकः**—द्वादशाहाऽभोजनसाध्यं व्रतम् ।

यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् ।

पराको नाम कृच्छ्रोऽयं सर्वपापापनोदनः ॥ इति

मनुः ११-२१५

**पराकाष्ठा**—परिसमाप्तिः अत्यन्तं सीमा ।

यस्य द्रव्यस्य यावती वृद्धिः पराकाष्ठा उक्ता इति मिताक्षरायाम् । २-५७

**पराची**—(स्त्री) ग्रामाद्बहिर्गता स्त्री, इत्याचारे गदाधरः ।

यां पराचीं तस्यै ह्रीतमुख इति तैत्तिरीयश्रुतिः ॥

अत्र पराचीविपरीतमुखी भवेन्नवेति विचार्यमार्यैः ।।

**पराचीष्टिः**—(अन्त्येष्टिः)

प्रेतसंस्कार इति बालंभट्याम् । याज्ञ-१-१०

**परापवनम्**—यथा तण्डुलादीनां स्थितिः तुषादीनामधः

पतनं परापवनम् स्यात्तथा कौशलेनशूर्पचालनं

श्रौ-प-निर्वचनम् ।

**परारीकः**—पलांडुरिति लक्ष्मीधरः नियतकालकाण्डे २८०

**परारीका**—कृष्णडुंडुभा, या म्लेच्छानां प्रसिद्धा इति

हरदत्तः । आप १-५-१७-२६

परारीका इति पाठः सुश्रुते स तु शुद्रप्रायः ।।

**परार्थवादी**—अर्थिना प्रत्यर्थिना वा प्रतिनिधिरूपेण नियुक्तः पुरुषः ।

अर्थिना संनियुक्ता वा प्रत्यार्थि प्रेरितोऽपिवा ।

यो यस्याऽर्थे विवदते तयोर्जयपराजयौ ॥

इति नारदः २-२२

यो न भ्राता न च पिता न पुत्रो न नियोगकृत् ।

परार्थवादीदंड्यः स्याद् व्यवहारेषु विब्रुवन् ॥

नारदः-३-२३

**परार्घ्यः**—अतिमूल्यवान्, कौटल्य ४-१

परार्घ्यानां पणो वेतनम् । मध्यमानामर्द्धपणः, प्रत्यवराणां पादः, स्थूलकानां माषकद्विमाषकम्

द्विगुणं रक्तकानाम् इति कौटल्यः ४-१-२२

**परावतः**—दूरदेशः "इंद्रो वृत्रं हत्वा परं परावतमगच्छत् ।

इति शतपथब्राह्मणे । परंपरावतमत्यन्तदूरदेशमिति

कालमाधवे माधवाचार्याः ।

**परिकरः**—भवेत्परिकरो व्राते पर्यंकपरिवारयोः ।

प्रगाढगात्रिकाबंधे विवेकारंभयोरपि ।। इति विश्वः ।

यत्-ारंभौ परिकराविति त्रिकांड़शेषे ।

परिकरः पर्य्यंकपरिवारयोरिति अमरः ३-३-१६५

**परिकर्म**—(१) अंगसंस्कारः शरीरशोभाकरणम् ।

(२) शिल्पम् कौट ४-१

**परिक्रुष्टम्**—"भोक्तुकामा आगच्छत इत्येवं परिक्रुश्य सर्वत आहूय यत् दीयते" इति हरदत्तः । आपस्त

१-६-१८-१७

**परिक्रमः**
**परिक्रमणम्** } विहारः ।

**परिक्रिया**—सम्पादनम् ।

प्रारम्भो वरणं यागे संकल्पो व्रतसत्रयोः ।

नांदीमुखं विवाहादौ शाद्धे पाकपरिक्रिया ।।

परिजनादिनावेष्टनमितिव्याख्यासुधा ३-२-१२

**परिखा**—परिखा भूभागाः खाता इति मेधातिथिः ।

परिखाः परितः सजलखाता इति मन्वर्थचंद्रिका ।।

राजधानी चतुष्पार्श्वस्थजलप्रवाह इति यावत् ।

प्राकारस्य च भेत्तारं परिखाणां च पूरकम् ।

द्वाराणां चैव भेत्तारं क्षिप्रमेव प्रवासयेत् ।

मनुः ९-२८९

**परिख्याति**—गर्हा ।

धर्मिरपपात्रैश्च श्राद्धस्य दर्शनं परिचक्षते ।

आपस्तम्बः २-७-१७-२०

**परिग्रहः**—(१) स्वीकारः ।

अनन्य पूर्वस्यभूम्यादेः स्वीकारः ।

'स्वामीरिक्थक्रयसंविभागपरिग्राहाधिगमेषु' इति

गौतमः २-१ ३९

(२) संख्या ।

प्रकल्प्या तस्य तै वृत्तिः स्वकुटुम्बाद्यथार्हतः ।

शक्ति चावेक्ष्य दाक्ष्यं च भृत्यानां च परिग्रहम् ॥

मनुः १०-१२४

(३) सम्बन्धः ।

आहरेत्रीणि वा द्वे वा कामं शूद्रस्य वेश्मनः ।

नहि शूद्रस्य यज्ञेषु कश्चिदस्ति परिग्रहः ॥

मनुः ११-१३

**परिघः**—(१) अर्गलमिति नरसिंहवाजपेयी ।

"पुर द्वारेंद्रकीलपरिघावन्तरेणनातीयादिति" बौधायनः

२-६-१३

(२) लौहदण्डः आयसैः परिघैश्चैव निस्त्रिंशो विमलैः

शितैः" महाभा, भीष्म ४६-१४

परिघो लोहघटितस्त्रिहस्तः स्थूलकोटियुक् ।

वेणुदण्डनिभो मध्ये मुष्टियुक्तो दृढायतः ॥ इति

वीरसर्वस्वे १८२

(३) परिघाः परिवेषाः ।

त्रिवर्णाः परिघाः संधौभानुमन्तमवारयन् । महाभा,

भीष्म २-३१

**परिचरणम्**—सेवा । ब्रह्मचार्याचार्यं परिचरेदाशरीर

विमोक्षणात् इति वसिष्ठ ७-४

**परिच्छद**.—(१) उपकरणम् ।

अग्निहोत्रं समादाय गृह्यं चाग्निपरिच्छदम् ।

इति मनुः ६-४

ग्रामादरण्यं निःसृत्य निवसेन्नियतेन्द्रियः ॥

२) परिवारः व्यख्यासुधा ३-३-१३०

**परिणय**—स्वीकारः ।

गान्धर्वासुरपैशाचा विवाहा राक्षसाश्च ये ।

पूर्वं परिणयस्तेषां पश्चाद्धोमो विधीयते ॥

परिणयः स्वीकरणमिति मित्रमश्राः संस्कारप्रकाशः

५८३

**परिणयनम्**—परिक्रमम् वधूम् अग्निं परिणयति । परि

सर्वतोभावेन नयति इति संस्कार तत्त्वे ३६

**परिणाहः**—(१) विस्तारः परिणाहो विशालता इत्यमरः २-६-११४

धनुःशतं परीणाहो ग्रामे क्षेत्रान्तरं भवेत्
इति याज्ञ २-१६७

**परिदग्धम्**—अतिदग्धम् इति माधवाचार्याः।

द्विःस्विन्न परिदग्धं च तथैवाग्रावलोहितम् इति
श्राद्धवर्ज्यें ब्रह्माण्ड पु.।

**परिदानम्** - (१) परिरक्षणाय दानम्।

अथ एनं भूतेभ्यः परिददाति परिरक्षितु ददातीति
हरिहरः। पारस्करः २-२ २३

(२) परिवर्त्तनमिति अमरः २-९-८०

परिदान परीवर्त्तौनैमेयनिमयावपि इति।

**परिदानलेखः**—दुःखकाले समवेदना ज्ञापनरूपः। तथा
भृत्येषु दयाविष्करणरूपः, पूज्येषु क्षमायाचन-
रूपश्च।

यथार्हगुणसंयुक्ता पूजा यत्रोपलक्ष्यते।
कष्याधौ परिदाने वा भवतस्तावुपग्रहौ॥
कौट २-१०

**परिदायी**—यस्य अग्रजः अनूढः तस्मै यः कन्यां प्रयच्छति
सः परिदायी, दाता इति हारीतः।

**परिदेवनम्**—अनुशोचनम् विलाप इत्यर्थः मिता ३-२६

मृतस्य बान्धवः सार्द्धं कृत्वा तु परिदेवनम्।

वर्जयेत्तदहोरात्रं दानं श्राद्धादिकर्म च॥ इति
मिताक्षरायां पारस्करः ३-२६

**परिधानीया**—नमो ब्रह्मण इति बौधा, गृ, शे, १-१५-६

**परिधिः**—बाहुमात्राः परिधयः ऋजवः सत्वचोऽव्रणाः
इति गोभिलस्मृतिः २-७८

**परिपन्थी**—विरोधी।

यथोद्धरति निर्द्धाता कक्षं धान्यं च रक्षति।
तथा रक्षेन्नृपो राष्ट्रं हन्याच्च परिपन्थिनः
मनुः ७-११०

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।
तयोर्नवशमागच्छेत्तौ ह्यस्य परिपन्थिनौ।
भ. गीता, ३-३४

**परिपाटलाः**—स्थूला राजमाषा इति श्राद्धमयूखकारः।

अकृताग्रयणं धान्यजातं वै परिपाटलाः।
राजमाषानणूंश्चैव मसूरांश्च विवर्जयेत्॥
वायु, पु.

परिपाटलाः प्रादेशमात्राः शिम्बिसम्बन्धि नीलसान्द्रा-
परनामधेया राजमाषा इति हेमाद्रिः परिशिष्ट-५४४

**परिपूतं**—निष्पुलाकीकृतं धान्यादिपरिपूतेषु धान्येषु
शाकमूलफलेषु च। मनुः ८-३३१

निरन्वये शतं दण्डः सान्वयेऽर्द्धशतं क्षमः।
परिपूतेषु अपाकृतव्रतेषु इति व्यवहारकल्पतरौ-५३४

**परिबर्हः**—अलंकार इति श्रीधरस्वामी श्री-भा ४-३-६

तस्मिन् भगिन्यो मम भर्तृभिः स्वकैर्ध्रुवं गमिष्यन्ति सुहृद् दिदृक्षवः ।

अहं च तस्मिन् भवताभिकामये सहोपनीतं परिबर्हमर्हितुम् ॥ इति

**परिभाषणम्**—तिरस्कारः ।

भार्यापुत्राश्च शिष्याश्च संसृष्टाः पापकर्मभिः ।

परिभाष्यपरित्याज्या पतितो योऽन्यथात्यजेत् ॥

**परिभाषा**—समयः ।

परिभाष्य यदा क्षेत्रं प्रदद्याद्धनिके ऋणी ।

त्वयैतच्छान्तलाभेऽर्थे भोक्तव्यमिति निश्चितम् ॥

प्रविष्टक्षोदये द्रव्ये प्रदातव्यं त्वया मम ।

एवंभूतपरिभाषया चाभिहितं क्षयाधिमाचक्षते लौकिकाः । स्मृतिचन्द्रिकाव्यवहारे ३४३

**परिभोक्ता**—वञ्चयित्वा यः भुङ्क्ते । अनुचितभोक्ता इति कुल्लूकः

परिभोक्ता कृमिर्भवति । मनुः २-२०१

परिभोजनं वञ्चयित्वा भोजनम्

**परिभागः**—१) पराभवं कृत्वा धनग्रहणम् इति नरसिंह-वाजपेयी नित्याचारप्रदीपे २-५०६

२) स्वच्छन्दभोगः

सागमो दीर्घकालश्चाविच्छेदोऽपरवोज्झितः ।

प्रत्यर्थिसंनिधानश्च परिभोगोऽपि पञ्चधा ॥

इति मिताक्षरायाम् २-२७

**परिभोजनम्** वञ्चयित्वा भोजनम् ॥ इति वैजयन्त्यां नन्द-पण्डितः विष्णुः ३२-११ ।

**परिमण्डलम्** वर्तुलम् । लक्षोत्तरं सार्द्धनवकोटियोजनम्

**परिमण्डलः**— परिमण्डलं भूवलयस्य क्षणेन सगव्यूत्युत्तरं द्विसहस्रयोजनानि स भुंक्ते । भागवते ५-२२-१६

न्यग्रोधौ तु स्मृतौ बाहू व्यासे न्यग्रोध उच्यते ।

व्यासेन उच्छ्रयो यस्य अध ऊर्ध्वं च देहिनः ॥

समोच्छ्रायपरीणाहो न्यग्रोधः परिमण्डलः ॥

इति मात्स्ये । १-१-८

वस्त्रोत्तरीयाभावे द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं वा सूत्रं वंशाकृतिपरिमण्डलं तदुत्तरीयं कुर्यात् । इति जातु-कर्ण्यः स्मृतिचन्द्रिकाव्यवहारे ३०२

(२) परिमाणविशिष्टः परमाणुः ।

**परिमाणा**—तुलादण्डमानविशेषः ।

**परिमार्गणम्**—अन्वेषणम् ।

सुग्रीवः प्रेषयामास सीतायाः परिमार्गणे ।

अस्मान् वानरवृन्दान् वै महासत्त्वान् महाबलः ॥

अध्यात्मरा-कि-७-४७

परिमेहः परि समन्तात् मेहः सेचनं वशीकरणं परिमेह इति हरिहरः "उतुल परिमेहः" पारस्करः ३-७-१

परिविष्टा—(१) ज्येष्ठे अकृतसोमयागे कृत सोमयागः कनिष्ठ भ्राता।

(२) ज्येष्ठे अकृत विवाहे कनिष्ठस्य विवाहकर्म यः संपादयति।

परिविष्टा याजक इति मिताक्षरायां हारीतः ३-२६५

परियोगः—बलीवर्दानां हले संयोजनमिति कल्पतरुः। गृहस्थ-१६५

परिवत्सरः—वर्षसंज्ञाविशेषः।

सम्वत्सरस्तु प्रथमो द्वितीयः परिवत्सरः॥ इति निर्वत्तनानि द्वात्रिंशन्मनुमानेन तस्य वै।

चतुःसहस्रहस्ताः स्युर्दण्डाश्चाष्टशतानि हि॥ २०७

शुक्रनीतिः प्रथमाध्यायः।

सम्वत्सरे तथा दानं तिलस्य च महाफलम्।

परिपूर्वे तथा दानं यवानां द्विजसत्तमाः॥ २

इडापूर्वेऽन्नवस्त्राणां धान्यानां चानुपूर्वके।

उदासम्वत्सरे दानं रजतस्य महाफलम्॥ ३

विष्णुधर्म-३-३१७ अध्याये

परिवर्त्तनम्— (१) भूमिमानविशेषः शुक्रनीतिः १-२०४, २०७

पंचविंशतिसाहस्रैरङ्गुलैः परिवर्त्तनम्।

मानवं षष्टिसाहस्रैः प्राजापत्यं तथाङ्गुलैः॥ २०४

पंचविंशाधिकैर्हस्तैरेकत्रिंशच्छतैर्मनोः।

परिवर्त्तनमाख्यातं पंचविंशशतैः करैः॥ २०५

प्राजापत्यं पदहीन चतुर्लक्षयवैर्मनोः।

अशीत्यधिकसाहस्रं चतुर्लक्षयवैः परम्॥ २०६

(२) विनिमयः।

परिवादः— (१) व्यसनविशेषः परदोषकथनात्मकः मनुः ७-४७

(२) विद्यमानस्य दोषस्याभिधानमिति कुल्लूकः।

गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते।

कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः॥

मनुः २-२००

परदोषकथनमिति गौतमीये हरदत्तः।

परिवापः— (१) परिच्छदः पितुः परिवापाद्यानमाभरणं च ज्येष्ठांशः कौट ३-६-६

(२) वपनम्।

परिवासः— (१) छेदः।

लिंगं वासवृषणं परिवास्याञ्जलावाधाय दक्षिणा प्रतीच्योर्दिशोरन्तरेणगच्छतानिपतनात् बौधा. २-१-१-१४

(२) निवासः।

जापिनां होमिनां चैव ध्यायिनां तीर्थवासिनाम्।

न परिवसन्ति पापानि ये च स्नाता शिरोव्रतैः॥

वसिष्ठः २६-१२

(३) समूहावस्थानम् ।

सम्मार्जनोपांजनेन सेकेनोल्लेखनेन च ।

गवां च परिवासेन भूमिः शुद्ध्यति पंचभिः ॥

मनुः ५-१२४

अत्र गवां परिवासः एकाहमात्रं गोष्ठीकरणम् ।

इति कुल्लूकः

**परिवाहः**—बृ जलाशयाज्जलनिर्गममार्गः जलप्रवाहश्च ।

आधारपरिवाहकेदारोपभोगैः परक्षेत्रकृष्टबीजहिंसायां यथोपघातं मूल्यं दद्युः ॥ कौटल्यः ३-६-२७

अकृत्रिमेण सेतुबन्धेनोपपन्नं सुप्रतिविहितप्रनाली-परीवाहमीढविधानं इति रुद्रदामशिलालेखे ।

**परिवित्तिः**—परिवेत्तुरग्रजः ।

दाराग्निहोत्रसंयोगं कुरुते योग्रजे स्थिते ।

परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥

मनुः ३ १७१

**परिविविदानः**—परिवेत्ता ।

अथ परिविविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा इत्यादि वसिष्ठः २०-८

**परिवृक्ता**—राज्ञः अधमजातीया स्त्री इति सायणाचार्याः ।

**परिवेत्ता**— (१) अग्रजे अनूढे यो दाराग्निहोत्रस्वीकारं करोति ।

(२) आवसथ्यमनादृत्य त्रेतायां यः प्रवर्तते ।

सोऽनाहिताग्निर्भवति परिवेत्ता तथोच्यते ॥

इत्यपरार्के वृद्धयाज्ञवल्क्यः ।

**परिवेदनम्**—अग्रजे अनूढे अनुजस्य विवाहः ।

एकमातृप्रसूतानां पुत्राणां परिवेदने ।

दोषः स्यात् सर्ववर्णेषु न दोषो भिन्नमातृषु ॥

इति प्रयोगपारिजाते गर्गः ।

कुब्जवामनषण्ढेषु गद्गदेऽथ जडेषु च ।

जात्यन्धबधिरे मूके न दोषः परिवेदने ॥ १०५

क्लीबे देशान्तरस्थे च पतिते व्रजितेऽपि वा ।

योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥ १०६

पिता पितामहो यस्य अग्रजो वापि कस्यचित् ।

नाग्निहोत्राधिकारोऽस्ति न दोषः परिवेदने ॥

अत्रिस्मृतिः १०७

गोभिलस्मृतौ च १-७३-७५

जडमूकान्धबधिरकुब्जवामनकुण्ठकान् ।

अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च ॥ ७३

धनवृद्धिप्रसक्तांश्च परिविन्दन्न दुष्यति ।

धनवार्धुषिकं राजसेवकं कर्मकं तथा ॥ ७४

प्रोषितं च प्रतीक्षेत वर्षत्रयमपि त्वरन् ॥ इति

**परिवेदनी**—अग्रजे अनूढे अनुजः यां कन्यां विवहति सा कन्या परिवेदनी कन्या इति हारीतः ।

...वः—वातेन मंडलीभूताः सूर्याचंद्रमसोः कराः ।
मालामाभ्यो...न्वन्तः परिवेषाः प्रकीर्त्तिताः ॥
इति गोभिलभाष्ये ४-५-३१

परिवेषणम्—भोक्तुः समीपे अन्नव्यंजनादिस्थापनम् ।
उपनीय तु तत्सर्वं शनकैः सुसमाहितः ।
परिवेषयेत प्रयतो गुणान् सर्वान् प्रचोदयन् ॥
मनुः ३-२२८

परिव्ययणम्—वेष्टनम् ।
परिव्ययणम् त्रिगुणरशनया शाखावेष्टनम् ।
इति गदाधरः पारस्करगृ-३-११-२

परिव्राड् संन्यासी ।
सर्वेन्द्रियसपाहारो धारणा ध्याननित्यता ।
भावशुद्धिस्तथैवेयं परिव्राड् धर्म उच्यते ॥
पुलस्त्यः-२१

परिश्रितम्—तिरस्करण्यादिना आच्छादितं स्थानम् ।
वस्मात् परिश्रिते दद्यात् गो, ध. २-६-२६
परिश्रितस्य परिवेष्टितस्य सर्वतः प्रच्छादितस्य
समावर्त्तनाङ्गहोमसाधनाग्निस्थापनप्रदेशस्य इति
हरिहरभाष्ये । पारस्कर गृ २-६-६

परिश्रुतम्—वस्त्रपूतम् ।
परिश्रुतं वस्त्रपूतमिति कल्पतरुः ।

अथातयामं रसवत्प्रत्ययं सुपरिश्रुतम् ।
द्रव्यं द्रव्येषु धर्मज्ञैरेतन्मेध्यतमं स्मृतम् ॥

परिषत्—सभा ।
परिषद् ब्राह्मणानां या सा राज्ञां द्विगुणा मता ।
वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतम् ॥
उ आङ्गिरस ५-७
दशावरा परिषत् त्र्यवरा परिषच्छन्दाः स्वस्वस्थाने
द्रष्टव्याः ।

परिसंवत्सरः—परिपूर्णः संवत्सरः ।
आपरिसम्वत्सरादित्येके आप २-६-१५-१०

परिसंख्या—अन्यार्थे श्रूयमाणा च याऽन्यार्थप्रतिषेधिका ।
परिसंख्या तु सा ज्ञेया यथा प्रोक्षितभोजनम् ॥
यथा पञ्च पञ्चनखा भक्ष्या इति ।
श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात् ।
प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका ॥
रोगी नियुक्तो विधिना हुतं विप्रवृतस्तथा ।
मांसमध्वाच्चतुर्द्धैषा परिसंख्या प्रकीर्त्तिता ॥
इति बृहस्पतिः ।

परिसंख्यानम्—अनुसंधानम् ।
विषयेन्द्रियसंरोधस्तन्द्रालस्य विवर्जनम् ।
शरीरपरिसंख्यानं प्रवृत्तिष्वघदर्शनम् ॥
याज्ञ-३-१५८

**परिसमूहनम्**—(१) त्रिभिर्दर्भैः पांसूनामपसारणम् इति हरिहरः पारस्कर १-१-२५

(२) परितो मार्जनम् । विप्रकीर्णस्याग्नेराशीकरणमित्यन्ये इति हरदत्तः आप १-१-४-१६

(३) जलसहितेन पाणिना। अन्यायतनोपरिष्टाद्भागे । ऐशानदिश आरभ्य पुनस्तद्दिक्पर्यन्तं प्रदक्षिणं संमार्जनं परिसमूहनमिति श्रौत प. निर्वचने

(४) परिसमूहनं वह्नि संधुक्षणम् इति हरिहरः पाणिनाग्नं परिसमूहति इति पारस्करः २-४-२

**परिस्रुतम्**—पुष्परसः मधु ।

ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थतर्पयतमे पितॄन् ।

**परिस्कन्दः**—देवालयः इति हरदत्तः । गौतमः ३-१-१४

गृहयावास प्रदेश इति गोविन्दस्वामी ।

सर्वे शिलोच्चयाः सर्वाः स्रवन्त्यः पुण्याह्रदास्तीर्थान्यृषिनिवासगोष्ठपरिस्कन्धां इति देशा । इतिर्वासिष्ठः ।

२२-१२

**परिस्तरणम्**—परिस्तरणस्वरूपं यथा ।

अग्निं बर्हिर्मुष्टिमादाय ईशानादिप्रागग्रै बर्हिर्भिरुदक्संस्थपरनैः परिस्तरणं कृत्वा इति हरिहरः पारस्कर

१-१-२

**परिस्तृतम्**—सर्वतः प्रच्छादितम् इति विज्ञानेश्वरः ।

परिस्तृते शुचौ देशे दक्षिणाप्रवणे तथा याज्ञ १-३२७

**परिस्तोमाः**—(१) सोमचमसादयः महाभा उद्-१४१-४१

इषवोऽत्र परिस्तोमा मुक्ता गाण्डीवधन्वना ।

महारथप्रयुक्ताश्च द्रोणद्रौणिप्रचोदिताः ॥ इति

(२) परिस्तोमः चित्रकम्बलः ।

परिस्तोमैश्चित्रकंबलैरिति नीलकंठः

महाभा, भीष्मवध प. ५७-२६

परिस्तोमैः कुथाशिश्च कम्बलैश्च महाधनैः ।

भूर्भाति भरतश्रेष्ठ स्रग्दामैरिव चित्रिता ॥ इति

**परिस्पन्दः**—चलनात्मिका क्रिया ।

उत्क्षेपणावक्षेपणाकुंचनप्रसारणानि ।

मृगैः सह परिस्पन्दः संवासस्तैर्भिरेव च ।

तैरेव सदृशी वृत्तिः प्रत्यक्षं स्वर्गलक्षणम् ॥

बोधा, ध ३-३-२-१७

**परिहारः**—त्यागः ।

(१) क्षमा, अनुग्रहः, ।

जित्वा संपूजयेद् देवान् ब्राह्मणांश्चैव धार्मिकान् ।

प्रदद्यात् परिहारांश्च ख्यापयेदभयानि च ॥

मनुः ७-२०१

परिहारः अदण्ड इति विवादरत्नाकरे ६५९

ब्राह्मणस्य परीहारो राज्ञश्चासनमग्रतः इति तत्र नारदः

(२) पशुचारणभूमिः । मनुः ८-२३७

धनुः शतं परीहारो ग्रामस्य स्यात् समन्ततः ।
शाम्यापात स्त्रयो वापि त्रिगुणो नगरस्य तु । इति

(३) करमोक्ष इति श्रीमूला करत्याग इत्यर्थ ।
तटाकसेतुबन्धानां नवप्रवर्त्तने पांचवार्षिकः परिहारः
कौट ३-९

(४) दानम् इति मित्रमिश्रः ।
यथेन्द्रश्चतुरो मासान् वार्य्योघेणैव भूतलम् ।
आप्याययेत्तथा लोकान् परिहारैर्महीपतिः ॥
इति मार्कण्डेयपुराणे मदालसोपाख्याने ।
अत्र परिहारे दानैरिति राजनीतिप्रकाशे ॥ ३१

**परिहारलेशः**– राज्ञः अनुग्रहप्रकाशकं पत्रम् ।
जातेर्विशेषेषु पुरेषु चैव ग्रामेषु देशेषु च तेषु तेषु ।
अनुग्रहो वा नृपतेर्निदेशात् तज्ज्ञः परीहार इति
व्यवस्येत् ॥ कौट—२

**परीज्या**—ज्येष्ठमूल्लध्य कनिष्ठेन कृता इज्या ।

**परीणाहः**—विशालता ।

**परीभाण्डम्**—गृहोपकरणं पीठादि इति हरदत्तः
आप २-६-१४-८

**परीवाहः**—प्रवृद्धजलस्य निर्गममार्गः ।

**परीष्टः**–कनिष्ठे कृतसोमयागे
अकृत सोमयागो ज्येष्ठो भ्राता।

**परुषावाक्**– विद्यमाने दोषे गुणाख्यापका वाक् यथान्धं
चक्षुष्मान् इति गोविंदस्वामी ।
शुचता रुक्षाः परुषा वाचो न ब्रूयात् । बौधा
२-३-६-२०

**परुषकम्**—कुंकणे प्रसिद्धमिति हेमाद्रिः । परुषफल इति
वंग भाषा फरूषा इति फ़ालूहे इति च हिन्दीभाषा
इति शब्दकल्पद्रुमे ।
उत्कलेषु फारसाकोलि इति प्रसिद्धफलंतत् ।
परुषकं श्राद्धे देयमिति ब्रह्मपुराणवचनं प्राचोना-
मलकशब्दे द्रष्टव्यम् ।

**परोक्तः**—पराजितः परोक्तदंडः पंचबन्धः । इति कौट
३-१-२०

**परोक्षदेवाः**—देवाः
देवाः परोक्षदेवाः । प्रत्यक्षादेवा ब्राह्मणाः २०
विष्णुः १९-२०
यद्ब्राह्मणास्तुष्टतमावदन्ति तद्देवताः प्रत्यभिनन्दयन्ति ।
तुष्टेषु तुष्टाः सततं भवन्तिप्रत्यक्षदेवेषु परोक्षदेवाः ॥
विष्णुः १९-२३

**परोवरीयसी**—उपसन्यायशब्दो द्रष्टव्यः ।

**पर्कः**—सामविशेषः वेदगानारम्भ एव अग्नआयाहिवीतये
इतिच्छन्द आर्चिकस्य प्रथमायामृचि गीयते । इति
गोभिलीयस्नानभाष्ये १३

**पर्णकूर्चः**—एतान्येव समस्तानि त्रिरात्रोपोषितः शुचिः ।
क्वाथयित्वा पिबेदद्भिः पर्णकूर्चोऽभिधीयते ॥
इति यमः

एतानि पर्णकुछ्र द्रव्याणि ।

**पर्णकृच्छ्रम्**— पर्णोदुम्बरराजीव विल्वपत्रकुशोदकैः ।
प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतम् । याज्ञ ३-३१६

**पर्णपुटाः**—यज्ञियवृक्षपर्णनिर्मिताः चमसाकृतय इति श्राद्धमयूखे ।

**पर्पटः**—पापड़ इति भाषायाम् ।
पर्पटा कर्वुरा रम्या माषकुष्माण्ड़संयुता । इति जैमिनीयाश्वमेधे ६-४६ ।

**पर्पटाः**— खाद्यद्रव्यविशेषः तथा वै मुद्गदाली च
पर्पटा वटिका तथा इति स्कन्द. ब्रह्म. धर्मारण्य २३-२३

**पर्यग्नीकरणम्**— तेजसा शुद्धिः पर्य्यग्निकरणम् ।
पयोदश्च विकारादि शुचिपत्रान्तरस्थितम् ।
पवनोत्पावनाभ्यां च पर्यग्निकरणेन च ॥ इति
हेमाद्रौ-८२६
हविषामासमन्तात् प्रादक्षिण्येन उल्मुकस्य परिभ्रमणं पर्यग्निकरणमिति श्रौ, प, निर्वचने ।

**पर्य्यांकबन्धनम्**—वस्त्रादिना पृष्ठजानुजंघाबंधनम् ।
पादप्रसारणं चाग्रे तथा पर्यंकबंधनम् ।
इत्यापराधगणनायां हरिभक्तिविलासे ।

**पर्यङ्कलक्षणम्**— आयामः सप्ततालं स्याच्चतुस्तालं च विस्तृति ।
द्वितालमुन्नतं ज्ञेयमेतत् पर्यङ्क लक्षणम् ॥
इति आचारभूषणे—३३६

**पर्यनुयोगः**— आक्रमणात्मकप्रश्नः ।
उत्तरपक्षेतोरधीयानस्य किं पठसि नाशितंत्वया
इत्येवं पर्य्यनुयोगः अनुयोगप्रदानम् ।
पर्य्यनुयोगः दोषोद्भावनमिति दायभागव्याख्याने
श्रीकृष्णः अतएवास्यापि पर्य्यनुयोगस्यानवकाशः ।
दाय-६

**पर्ययः**— क्रमशो गतिः इति यावत् ।
(१) अवसरः ऋतुपर्यये स्वकार्यावसरे इति कुल्लूकः
यथर्तुलिङ्गान्यृतवः स्वयमेवर्तुपर्यये ।
स्वानि स्वान्यभिपद्यन्ते तथाकर्माणि देहिनः ॥
मनुः—१-३०

(२) क्रमोल्लंघनम् अतिपातस्तु स्यात्पर्यय उपात्यय
इत्यमरः २-७-३७

(३) परिवर्त्तनम् ।
पश्य पाण्डव मेदस्थां यथा नार्हामि वै तथा ।
युष्मासु ध्रियमाणेषु पश्य कालस्य पर्ययम् ॥
महाभा विरा २०-१०

न्याधेभ्यो मेध्यमांसानि ग्राह्याणि द्रव्यपर्ययैः ।

पित्रर्थं स्वगृहे हिंसन् खादन् मांसं न पापभाक् ॥

प्रजापतिस्मृतिः—१४३

**पर्य्ययणम्**—परि सर्वतोभावेन धान्यानां खलात् गृहानयनमिति चंद्रकान्तभाष्ये ।

एता एव देवताः सीतायज्ञखलयज्ञप्रवपण-प्रवलन-पर्य्ययणेषु इति गोभिलः ४-४-३०

पर्ययनं प्रथमं क्षेत्रे गमनमिति अष्टावक्रभाष्ये मानव गृ २-१०-७

आयोजनपर्ययन-प्रवपनप्रलवनसीतायज्ञ-खलयज्ञ तन्त्रायज्ञानुड्यज्ञेष्वेता देवता इति ।

पर्ययणं खलप्राप्तानां व्रीहीणां क्षदनं वलीवर्दचरणैर्गाहनं यत्र गाहिकेति प्रसिद्धिरार्य्याणामिति देव-काठक गृ ५-१७-१०

एतद् कर्म उत्कलेषु वेङ्गला इत्युच्यते ।

(२) पर्ययणमग्निपरिगमनमिति देवपालः ।

पर्ययणे पर्ययणे लाजहोमः । इति काठक गृ ३-१-३४

पर्ययण पर्ययपर्यावर्त्त शब्दाः समार्थाः ।

**पर्याचान्तम्**—पंक्तौ एकेनाचमने कृते अपरैर्यद् भुज्यते तदन्नं पर्याचान्तम् ।

आचमनस्थानस्थमिति नरसिंहबाजपेयी ।

पर्याचांतमितिपाठे परिगतमाचान्तं गण्डूषग्रहणं यस्मिन् तत् पर्याचान्तं तन्न भोक्तव्यम् ।

एतदुक्तं भवति गण्डूषग्रहणादूर्ध्वम् ।

आचमनात्प्राक् न भोक्तव्यमिति मिताक्षरा १-१६८

**पर्याटिका**—किलाटिका दुग्धपर्याटिका इति नित्याचार प्रदीपे-पृ ६६६

**पर्याधाता**—ज्येष्ठे अकृताधानेकृताधानः कनिष्ठः

गौतमः २-६-१८

**पर्याधानम्**— ज्येष्ठे अकृता धाने कनिष्ठभ्रातुरग्न्याधानम् ।

**पर्याप्तम्**— कार्यसाधनोचितम् । अपेक्षितमिति यावत्

अपर्य्याप्तं तदस्माकं बलं भीष्माभिरक्षित ।

पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥

यस्य त्रैवार्षिकं उक्तं पर्य्याप्तं भृत्यवृत्तये ।

भगवद् गीता १-१०

अधिकं वापि विद्येत स सोमं पातुमर्हति ।

मनुः ११-७

**पर्य्यायः**—प्रकारेऽवसरक्रमे इति मेदिनी ।

( ) वैपरीत्यम् च कालपर्यायमाज्ञायमास्मशोके मनः कथाः इति महाभा द्रोण २-५

(२) क्रमः स पर्यायेण यातीमान्नरकान्विंशतिम् ।

मनुः ४-८७

ग्रामार्थेन ग्रामिकं व्रजन्तं उपवासाः पर्यायेण अनुगच्छेयुः

कौट ३-१०-१६

**पर्यायान्नम्**—ब्राह्मणान्नं ददच्छुद्रो शूद्रान्नं ब्राह्मणोददत् ।

उत्यादिरूपमित्याचारे गदाधरः ॥

अन्यसंबंधि अन्यव्यपदेशेन यद्दयते इति

विज्ञानेश्वरः

उदकयास्पृष्टसंघुष्टं पर्यायान्नं च वर्जयेत् ।

गोघ्रातं शकुनोच्छिष्टं पदा स्पृष्टं च कामतः ॥

याज्ञ-१-१६८

**पर्यावर्त्तनम्**—परिक्रमा ।

नापपर्यावर्त्तेत गुरोः प्रदक्षिणीकृत्यापेयात् ॥

आपस्त १-२-७-२

**पर्य्यासः**—महाभूतप्रमाणं च लोकालोकं तथैव च ।

पर्य्यासपरिमाणं च गतिं चंद्रार्कयोरपि ॥

मर्कण्डेय पुराण-१५४-

**पर्याहारः**—परित आह्रियतेऽनेनेति पर्याहारउभयतो

बद्धशिक्यं काष्ठम् ।

बाहांगी इति उत्कलेपु प्रसिद्धम कावडी इत्यन्यत्र ॥

**पर्याहितः**—पर्याधातुर्ज्येष्ठो भ्राता ॥ गो, ध, २-६-१८

**पर्युक्षणम्**--जलसहितेन पाणिना ईशानकोणमारभ्य तत्पर्यन्त

दूरतोऽस्पर्शनेन प्रदक्षिणं जलपरिषेकमात्रं पर्युक्षणम्

श्रौ, प, नि.

अग्नेः सर्वतोजलासेक इति गदाधरभाष्ये पारस्करः

**पर्युप्तशिशः**—मुण्डितमुण्डः पारस्करः २-२-७

**पर्य्युदासः**—(१) त्यागः, परिहारः ।

ततश्चगोत्रप्रवरयोः पृथक्पृथक्कन्यापर्युदासे निमित्तत्वं

सिद्ध्यति इति संस्कारप्रकाशे-पृ ६०

(२) प्रतिषेधः ।

प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।

पर्युदासः स विज्ञेयो यत्रोत्तरपदेननञ् ॥

त्र्यहंप्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितमिति बृहस्पतिः

अत्र अयाचितपदे पर्य्युदासः ।

**पर्युषितम्**—रात्र्यन्तरितमन्नादि ॥ मिता पृ१-६७

यातयामं गतरसं पूतिपर्य्युषितं च यत् ।

उच्छिष्टमपि चामेध्यं भोजन तामसप्रियम् ॥

इति भ, गीता १७-१०

**पर्व** (१) अमावस्यापूर्णिमे ।

पर्वणि अमावास्यायां विहितं पार्वणं

श्राद्धमित्याद्युक्तेः ॥

(२) अमावास्यादि । चतुर्द्दश्याष्टमी चैव ह्यमावस्या

थ पूर्णिमा ।

पर्वाण्येतानि राजेंद्र रविसंक्रान्तिरेव च ॥ ३-१-११६

स्त्रीतैलमत्स्यमांसाशीपर्वस्वेतेषु वै पुमान् ।

विड्मूत्रप्राशनं नाम नरकं यात्यसंशयम् ॥

विष्णुपुराणे-३-११-११७

(३) वंशादिग्रन्थिः ।

ग्रन्थिर्नापर्वपरुषीत्यमरः २-४-१६२

पर्वक्लीवं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे ।

दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि ॥

इति मेदिनी

पर्वकारः—इषुकारः इति कल्परुः । श्र द्व-९०

पर्षत्—सभा, धर्मव्यवस्थासभा ।

पर्षद्या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता ।

वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतम् ॥

इत्यंगिराः

प्रकाशिताङ्गिरसस्मृतौ तु परिषद् ब्राह्मणानामिति

पाठः श्र, ५-७

पलम्—(१) मांसम् ।

(२) परिमाणविशेषश्च पलं कर्षचतुष्टयम्

आम्रमुष्टि [illegible] इत्यादिवाच्यमितिभावप्रकाशे उक्तं

खारीशब्दे द्रष्टव्यम् मुष्टिमात्रं पलं स्मृतमिति

महार्णवे इति निर्णयसिंधौ ॥

(३) कालविशेषः दण्डस्य षष्टिभागैकभागः ।

दशगुर्वक्षरोच्चारकालः प्राणः षडात्मकैः ।

तैः पलं स्यात्तु तत्षष्ट्या दण्डइत्यभिधीयते ॥

इति शब्दकल्पद्रुमे ज्योतिःशास्त्रवचनम्

पललम्—(१) मांसम् ।

(२) तिलपिष्टम् पललं तिलपिष्टमिति विज्ञानेश्वरः

कृताकृतांस्तण्डुलांश्च पललौदनमेव च ।

मत्स्यान्पक्वांस्तथैवान्नं मांसमेतावदेव तु ।

इति याज्ञ-१-२८७

पललौदनः तिलपिष्टमिश्र ओदनः इति मिताक्षरायाम् ।

याज्ञ १-२८७

अपक्वमांसमिश्र ओदन इति तु युक्तम् ।

इति नीलकंठः शान्तिमयूखे

पलाण्डुः—पिआज इति भाषाप्रसिद्धः कंदविशेषः ।

तस्य दशभेदाः सुश्रुते दर्शिताः ॥

लशुनं दीर्घपत्रं च पिच्छगंधा महौषधम् ।

करण्यश्च पलाण्डुश्च लताकर्कश्च पारिका ।

गृंजनो यवनेष्टश्च पलाण्डोर्दशजातयः ॥ इति

पलाण्डुं विड्वराहं च छत्राकं ग्रामकुक्कुटम् ।

लशुनं गृंजनं चैव जग्ध्वा चांद्रायणं चरेत् ॥

याज्ञ-१-१७६

पलालः—शस्यशून्यधान्यनालः ।

प्रोक्षणात्तृणकाष्ठं च पलालं चैव शुद्ध्यति ।

मार्जनोपाञ्जनैर्वेश्म पुनः पाकेन मृण्मयम् ॥

मनुः ५-१२२

खजः पलालहरणात् इति मार्कण्डेये-१५-३१

पलाशः—(१) किंशुकद्रुमः ।

ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ ।

पैलवौदुम्बरौ वैश्या दण्डानर्हन्ति धर्मतः ॥

मनुः २-४५

**पलिक्नी**—श्वेतकेशा संवत्सराय पलिक्नीम्

शु, य, ३०-१५

**पल्पूलनम्**—मलनिर्णेजनमिति नियतकालकाडे

कल्पतरुः

नाप्सु सतः प्रयमणं विद्यते न वासः ।

पल्पूलनं नोपस्पर्शनम् बौधा २-५-८-८

पल्पूलनं मलापनयनाय पाणिभ्यामवस्फोटनमिति

गोविंदस्वामी ।

**पल्ललनम्**—मलनिःसारणाय वस्त्रताडनम् ।

वासः पल्ललनं वासो मलक्षालनमिति आचारसारे

गदाधरः

**पल्वलम्**—अल्पसरः । अनुगुप्तमेतं सकेशः

गोमयपिण्डं निधाय ।

गोष्ठे पल्वले उदकान्ते वा पारस्करः २-१-२०

तत्र पल्वले अल्पोदके इति हरिहरः ।

**पवित्रम्**—(१) मन्त्राः ।

दर्भाः पवित्रं पूर्वाह्णो हविष्याणि च सर्वशः ।

पवित्रं यच्च पूर्वोक्तं विज्ञेया हव्यसम्पदः ॥

मनुः-३-२५६

मन्त्राः पवित्रमिति निरुक्तकार इति वीरमित्रोदये

परिभाषाप्रकाशे ।

स्नातोधिकारी भवति दैवे पित्र्ये च कर्मणि ।

पवित्राणां तथा जप्ये दाने च विधि चोदिते ॥

इतिविष्णुः

(२) पवित्राः कुशा इति नरसिंहवाजपेयी ।

प्राक्कूलान् पर्युपासीनः पवित्रैश्चैव पावितः ।

प्राणायामैस्त्रिभिः पूतस्तत ओंकारमर्हति ॥

मनुः १-७५

अत्र पवित्रैः कुशैः करद्वयस्थैरिति कुल्लूकः ।

(३) दक्षिणहस्तग्राह्यकुशद्वयनिर्मित कुशवटु नाम्ना प्रसिद्धमपि पवित्रम् ।

अनन्तर्गर्भितं साग्रं कौशं द्विदलमेव च ।

प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥

अनन्तगर्भिणमिति पाठान्तरमस्य कात्यायनस्मृतिः-२-१०

अत्र अनन्तगर्भितमिति सर्वान्तर्वर्त्तिगर्भवद्भिन्नमित्यर्थ इतिमित्रमिश्राः । मैथिलस्तु अनन्तर्गर्भो यस्य तत् अन्तर्गर्भितं तृतीयं तदभिन्नं चतुर्थादि इत्यर्थ इत्याहुः कुशपत्रद्वयमन्तर्गर्भशून्यं साग्रं प्रादेशप्रमाणं सर्वत्र पवित्रमिति परिशिष्टप्रकाशे ।

अनन्तगर्भिणमित्यादिश्लोकः प्रजापतिस्मृतौ वर्त्तते।

१०५

गोभिलस्मृतौ आप-१-२८

संलङ्घ्य वैष्णवमार्गं ब्रह्ममार्गविनिःसृतम् ।
सकृत्प्रदक्षिणीकृत्य पवित्रमभिधीयते ॥
अत्र वैष्णवमार्गः पश्चाद्भागः ब्रह्ममार्गः ।
पवित्रकर्तुरभिमुखमिति हेम द्रिः ॥
(४) पवित्रं वै हिरण्यमिति श्रुतेरित्याचार्येंदुः ।
(५) दण्डकमण्डल्वादिरिति कुल्लूकः ॥
अगारादभिनिष्क्रान्तः पवित्रोपचितो मुनिः ।
समुपोढेषु कामेषु निरपेक्षः परिव्रजेत् ॥
मनुः ६-४१

(६) अनवच्छिन्नं साग्रं प्रादेशमात्रं मंत्रसंस्कारयुक्तं नखपरिणाहं प्रोक्षणादौ प्रायः उपयोगि दर्भद्वयं पवित्रसंज्ञं भवति श्रौतपदार्थनिर्वचने ।
(७) मन्त्रविशेषश्च ।
सर्ववेदपवित्राणि वक्ष्याम्यहमतः परम् ।
येषां जपैश्च होमैश्च पूयन्ते नात्र संशयः ॥ १०
अघमर्षणं देवकृतं शुद्धवत्यस्तरत् समाः ।
कुष्माण्डानि पावमान्यो दुर्गासावित्रिरेव च ॥
अभिपङ्क्ताः पदस्तोभाः सामानि व्याहृतीस्तथा ।
भारुण्डानि च भासं च तथा देवव्रतानि च ॥
अब्लिङ्गं बार्हस्पत्यं तु वाक्सूक्तं मध्वृचस्तथा ॥ १३
शतरुद्रियमथर्वशिरस्त्रिसुपर्णं महाव्रतम् ।
गोसूक्तं चाश्वसूक्तं च शुद्धाशुद्धीये सामनी ॥ १४
त्रीण्याज्यदोहानि रथन्तरं च अग्नेर्व्रतं वामदेव्यं बृहच्च ।
एतानि जप्तानि पुनन्ति जन्तून्जातिस्मरत्वं लभते यदीच्छेत ॥ वसिष्ठः २८-१५

**पवित्रवती** –पवित्रवतीभिरिति पवित्रशब्दयुक्ताभिर्ऋग्भिरिति गोभिलपरिशिष्टभाष्ये ।
पवित्र आंगिरसऋषिः पवमानः सोमो देवता ।
जगतीछन्दः ऋ. म. ९-८३
पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशत ॥ १ ॥
तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिरन् अवन्त्यस्य पवीतारमाशवो दिवस्पृष्ठमधितिष्ठन्ति चेतसा
२
अरूरुचदुषसः पृश्निरग्रिय उक्षा बिभर्ति भुवनानि वाजयुः ।
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमादधुः ॥ ३
गन्धर्व इत्था पदमस्य रक्षति पाति देवानां जनिमान्यद्भुतः ।
गृभ्णाति रिपुं निधया निधापतिः सुकृत्तमा मधुनो भक्षमाशत । ४
हविर्हविष्मो महि सद्म दैव्यं नभो वसानः परिधास्यध्वरम् ।
राजा पवित्ररथो वाजमारुहः सहस्रभृष्टिर्जयसि श्रवो बृहत् ॥ ५

अत्र यद्यपि आदिममृक्त्रयं पवित्रवती रुपेणचंद्रकान्तेन तर्कितं तथापि सूक्तान्ते पवित्रशब्ददर्शनात् ऋक्-पञ्चकस्य ग्रहणं युक्तमिति मन्मतम् ॥

**पशव्यम्**—पशुवृद्धिकरं स्थानम् ।

रम्यं पशव्यमाजीव्यं जाङ्गलं देशमावसेत् ।

तत्र दुर्गाणि कुर्वीत जनकोशात्मगुप्तये ॥ याज्ञ १-३२१

**पशुः**— (१) द्विविधा हि पशवः ग्राम्या आरण्याश्च ते तत्तच्छब्दे द्रष्टव्याः ।

गौरजः पुरुषो मेषो ह्यश्वोतरगर्दभौ ।

एतान् ग्राम्यान् पशूनाहुरारण्यांश्च निबोधत ॥ ४२

श्वापदा द्विगुरोहस्तीवानरः पक्षिपञ्चमाः ।

उन्दकाः पशवः सृष्टाः रुप्तमास्तु सरीसृपाः ॥

वायुपु-१-९-४३

(२) पशुरग्निः पशुरग्निरग्निः पशुरासीदिति मंत्रलिंगात् ।

गोसुक्तेन चाग्नेरुपस्याभदर्शनात् इत्युज्वलावृतिः ।

"सुवर्णं दत्त्वा पशुं वा भुंजीत" आप १-६-१८-६

**पश्चात्कारः**—जयपत्रमिति व्यवहारचिन्तामणिः ।

अनेन विधिना लेख्यं पश्चात्कारं विदुर्बुधाः ॥

इतिकात्यायन

पश्चात्क्रियते इति पश्चात्कारः ।

पश्चात्कारः जयपत्रमिति व्यवहाकल्पतरुः ॥ १६०

निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना ।

पश्चात्कारो भवेत्तत्र नसर्वासु विधीयते ॥

कात्यायनः-२६४

**पह्लवः**—क्रियालोपात् शूद्रत्वं गतः क्षत्रियः । मनुः १०-४४

ओड्रशब्दोद्रष्टव्यः

ततः शकान् सयवनान् काम्बोजान् पारदास्तथा ।

पह्लवांश्चैव निःशेषान् कर्तुं व्यवसितो नृपः ॥ १३४

ते हन्यमाना वीरेण सगरेण महाभुना ।

वसिष्ठशरणं सर्वे संप्राप्ताः शरणैषिणः ॥ १३५

वसिष्ठोवीन्द्धतान्युक्तान् विनयन महामुनिः ।

सगरंवारयामास तेषां दत्त्वाभयं तथ ॥ १३६

सगरः स्वाप्रतिज्ञां च गुरोर्वाक्यं निशाम्य च ।

जघानधर्मं वै तेषां वेषान्यत्वं सकारह ॥ १३७

अर्द्धं शकानांशिरसो मुडयित्वा वासर्जयत् ।

यवनानां शिरःसर्वकाम्बोजानां तथैव च ॥ १३८

पारदा मुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः ।

निःस्वाध्यायवषट्काराः कृतास्तेन महाभुना ॥ १३९

शकायवनकाम्बोजाः पह्लवाः पारदैः सह ।

कलिस्पर्शामाहिषिका दार्वाश्चोलाःखरास्तथा ॥ १४०

सर्वे वै क्षत्रियगणा धर्मस्तेषां निराकृतः ।

वसिष्ठवचनात् पूर्वं सगरेण महात्मना ॥ १४१

ब्रह्माण्ड २-३-६३-१४१

पाकयज्ञः - गृह्यकर्म ।

पाकयज्ञ इति गार्हयाणां कर्मणामाख्या ॥

यथाहापस्तम्बः

लौकिकानां पाकयज्ञशब्द इति हरदत्तः

गौतमधर्मसू १-८-१९

पच्यते अप्यते ओदनादिकमस्मिन्निति पाको गृह्याग्निः ।

तस्मिन् पाको नान्यत्रेति भावः पाके यज्ञाः पाकयज्ञाः

इति हरिहर ॥

चत्वारः पाकयज्ञा हुतोऽहुतः प्रहुतः प्राशित इति

पारस्करगृ १-४-१

पाकयज्ञा अल्पयज्ञाः प्रशस्तयज्ञा वा ।

दृष्टश्चोभयत्र पाकशब्दः योऽस्मत् पाकतरः इत्यत्राल्प-

त्वे पाकशब्दः तं पाकेन मनसापश्यम् ॥

(ऋ, सं १०-११४-४)

इति योमा पाकेन मनसा (ऋ, सं ७-१०४-८) इति

च प्रशंसायाम् ।

तेन आज्यहोमेष्वपि पाकयज्ञतन्त्रं सिद्धं भवति ।

यदिहि पाकशब्दः पक्तो वर्त्तते आज्यहोमेषु तन्त्रं

न स्यात् ॥

इष्यते च तस्मात् न तत्र वर्त्तते प्रशस्तयज्ञा इत्युक्तम् ।

कथं प्रशस्तत्वम् उच्यते यस्मादेतेषु संस्कारा उच्यन्ते

तैश्च ब्राह्मण्यमवाप्यते इति गार्ग्यनारायणवृत्तौ-

अश्व, गृ. १-१-२

अल्पायाससाध्यत्वादल्पत्वम् मह फलत्वात् प्रशस्तत्वम्

इति अनाविलावृत्तिः त्रयः पाकयज्ञाः हुता अग्नौ हूय-

माना, अनग्नौ प्रहुता, ब्रह्मणे भोजने ब्रह्मणि हुता इति

आश्व, गृ, १-१-२

हुता, २-प्रहुता, ३-ब्रह्मणि हुता ॥

"गृह्य ग्नौ पाकयज्ञान् विहरेत् ह्रस्वत्वात् २ ।

पाकयज्ञो "ह्रस्वं हि पाक इत्याचक्षते" ३ ॥

इति वाराहगृह्ये २१-१(१-३)

त एते प्रयाजा अननुयाजा अनिला अनिगदा

असामिधनीकाश्च सर्वे पाकयज्ञा भवन्ति इति

शाङ्खयनगृ-१-१०-५

पाकयज्ञाः ब्राह्मयज्ञव्यतिरिक्ता देवयज्ञादय इति कल्प-

तरुः नियत १०६

**पाखण्डी** — नरशिरः कपालादिश्रुतिवाह्यलिंगधारणं

पाखण्डं तद् विद्यते यस्य स पाखण्डीति विज्ञानेश्वरः ।

पाखण्ड्यनाश्रिताः स्तेनाभर्तृघ्न्यः कामगादिकाः ।

सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः ॥

याज्ञ ३-६

वेदवाह्यागमानुष्ठातार इति कल्पतरुः ।

**पागलः**—उन्मत्तः पारक्षणम् ततो गलति आत्मरक्षणाद्-

विच्युतो भवति इति, शब्दकल्पद्रुमे ।

पागलायाङ्गहीनाय चांधाय वधिराय च ॥

जडाय चैव मूर्खाय क्लीबवृल्याय पापिने ।
ब्रह्महत्यां लभेत् सोपि यः स्वकन्यां ददाति च ।
ब्रह्मवैवर्त्तप्रकृतिखण्ड–१४–अध्याये ॥

**पाचकः**—सूचिकः सूचिकशब्दो द्रष्टव्यः ।

**पाचकान्नम्**—पाचकान्नं नवश्राद्धं भुक्त्वा चान्द्रायणं चरेत्,
अत्रिसंहिता–६२

**पाटली**—पुष्पविशेषः निष्णुदेय इति शेफालीशब्दे द्रष्टव्यः,

**पाठीनः**—चंद्रकाख्यः मत्स्यः इति मिताक्षरा ।
शशश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः ॥
तथा पाठीनराजीव सशल्काश्च द्विजातिभिः ॥
याज्ञ–१–१७८

**पाणिः**—करः ।
पाणिभ्यां तूपसंगृह्य स्वयमन्नस्य वर्द्धितम् ।
विप्रान्तिके पितृन् ध्यायन् शनकैरुपनिक्षिपेत् ॥
मनुः ३–२२४

**पाणिका**—शिवस्तुतैप्रयोज्यो गीतविशेष इति
संगीतरत्नाकरे–५–५–५
छन्दकासारिते वर्द्धमानकं पाणिकं तथा ।
ऋगगाथा पाणिका दक्षविहिता ब्रह्मगीतिका ॥
गेयमेतत्तदभ्यासकरणान्मोक्षसंज्ञितम् । याज्ञ–३–११३

**पाणिग्राहः**—वरः ।
ध्यायत्यनिष्टं यत्किंचित्पाणिग्राहस्य चेतसा ।
तस्यैव व्यभिचारस्य निण्हवः सम्यगुच्यते ॥
मनुः ६–२१

**पाणितलम्**— (१) परिमाणविशेष । चतुर्भिः शाणैः
पाणितलम् ।
अंगुल्यग्रत्रयग्राह्यं शाणमित्यभिधीयते ।
शाणं पाणितलं मुष्टिः प्रसृतिश्च तथांजलिः ॥
कुडवश्च तथा प्रस्थ आढको द्रोण एव च ।
मानी खारी च विज्ञेयाः संख्यायाश्चतुरुत्तराः ॥
इति स्मृतिचन्द्रिका
(२) कर्षापरपर्यायः खारीशब्दे द्रष्टव्यः ।

**पाणिमानिका**—कर्षापरपर्यायः खारीशब्दे द्रष्टव्य ।

**पाणिमार्गः**—नाभेरारभ्य ऊर्द्ध्वब्रह्मद्वारपर्य्यन्तम जनैरिति
देवपालः । काठकगृ–१–४–१६

**पाण्डु**—खटी, खड़ो इति प्रसिद्धम् ।
पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयत् ।
पाण्डुलेखेन फलके ततः पत्रे विशोधितम् ॥
इति मिताक्षरायां कात्यायनः २–७

**पाण्डुलेखः**–पाण्डुद्वारा लेखः । मिताक्षरायां कात्यायनः २–६
पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत् ।
पाण्डुलेखेन फलके ततः पत्रे विशोधितम् ॥
प्राथमिकलेखे लक्षणया सांप्रतिकव्यवहारः ।

पाण्डुसोपाकः—चण्डालाद् वैदेह्यां जातः।

चण्डालात पाण्डुसोपाकस्त्वक्सारव्यवहारव न् ॥

आहिण्डिको निषादेन वै ह्यामेव जायते ॥

मनुः १०-३६

पाण्यास्यः- ब्राह्मणः। पाणिरेवास्यमस्येति व्युत्पत्तिः।

प्राणि वा यदिवाऽप्र णि यत्किंचिच्छ्राद्धिकं भवेत्।

तदालभ्याऽप्यनध्यायः पाण्यास्योहि द्विजः स्मृतः ॥

मनुः ४-११७

पातः—गर्भपातः।

आचतुर्थाद्भवेत्स्राव: पातः पञ्चमषष्ठयो।

अप्रसवसंज्ञा तु सप्तमाष्टममासयोः ॥

पातालः—पातालशब्दः गणकप्रसिद्धयाऽक्षरसंख्यया एकषष्ट्यधिकशतत्रयमाचष्टे। इति कालमाधवे-२ प्रमाणमतुलशब्दे मृग्यम्।

पातालम्—अतलं सुतलंचैव वितलं च गभस्तिमत्।

महातलं रसातलं पातालं सप्तमं स्मृतम् ॥

अग्निपुराणे

ब्रह्मपुराणेत्तु—

विस्तार एष कथितः पृथिव्या मुनिसत्तमाः।

सप्ततिस्तु सहस्राणि तदुच्छ्रायोऽपि कथ्यते ॥ १

दशसाहस्रमेकैकं पातालं मुनिसत्तमाः।

तलातलं रसातलं पातालं चापि सप्तमम्।

कृष्णाशुक्लारुणापीता शर्करा शैल काञ्चनी ॥ ३

भूमयो यत्र विप्रेन्द्रा वरप्रासादश भिताः।

अतलं वितलं चैव नितल सुतलं तथा ॥ २

तेषु दानवदैत्येयजातयः शतशः स्थिताः ॥ ४

नागानां च महानागज्ञानां ज्ञातयश्च द्विजोत्तमाः।

स्वर्लोकादपि रम्याणि पातालानीति नारदः ॥ ५

प्राह स्वर्गसदोमध्ये पातालेभ्यो गतो दिवम् ॥ ६

ब्रह्मपु-२१-६

पात्रम्— (१) तपो विद्यासमृद्धो ब्राह्मणः।

न विद्यया केवलया तपसावपि पात्रता।

यत्र वृत्तमिमे चोभे त्विद्धि पात्र प्रकीर्तितम्।

याज्ञ-१-२००

विद्याशीलो धर्मयुक्तः प्रशान्तः क्षान्तोदान्तः सत्यवादीकृतज्ञः।

वृत्तिग्लानोगोहितोगोशरण्यो दाता दत्वा ब्राह्मणः माहुरिति दायभागे यमः। ६

स्वाध्यायोत्थं योनिमन्त्रं प्रशान्तं, वैतानस्थं पापभीरुं बहुज्ञम् स्त्रीषु क्षान्तं धार्मिक गोशरण्यं व्रतैः क्लान्तं तादृशं पात्रमाहुः। वसिष्ठः ६-३०

किंचिद् वेदमयं पात्रं किंचित्पात्रं तपोमयम्।

पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे ॥

त्रिशुक्लः कृशवृत्तिश्च घृणालुः सकलेन्द्रियः।
कस्मुक्तो योनिदोषेभ्यो ब्राह्मणः पात्रमुच्यते ॥ इति
देवलः श्राद्धप्रकाशे-६५

त्रिशुक्लः शुक्लवृत्तिश्च घृणालुः संयतेन्द्रियः।
विमुक्तो योनिदोषेभ्यो ब्राह्मणः पात्रमुच्यते ॥
देवलः पराशरमाधवे-१-३४ पृ-१६

पातनात्त्रायते यस्मात्तस्मात्पात्रं प्रकीर्तितम्।
इति पराशरमाधवोद्धृत विष्णुधर्मोत्तरे ॥ आचा १-३७

तपो निष्ठा ज्ञाननिष्ठा योगिनो यतयस्तथा।
पूजायाः पात्रमेते हि पापसंक्षयकारणम् । १३
चतुर्विंशतिलक्षणं वा गायत्र्या जपसंयुतः।
ब्राह्मणस्तु भवेत् पात्रं संपूर्णफलभोगदम् । १४
पतनात् त्रायत इति पात्रं शास्त्रे प्रयुज्यते।
दातुश्चापातकात् त्राणात् पात्रमित्यभिधीयते ॥
शिवपु-१-२३५

(२) भाजनम्।

दत्त्वार्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः।
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः ॥
याज्ञ-१-२३२

**पादकृच्छ्रः**—एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन इति प्रायश्चित्तविवेके तृतीयपादः
पठितः ॥ प्राः विवेके याज्ञवल्क्यः ५०६

**पादवंदनिकम्**—पादवंदनलब्धः स्त्रीधनविशेषः।

प्रीत्यादत्तं तु यत्किंचिच्छ्वश्र्वा वा श्वशुरेण वा।
पादवंदनिकं चैव प्रीतिदत्तं तदुच्यते ॥
इति नारदः मिताक्षरायाम् २-१४३

व्यवहारनिर्णये तु कात्यायनपठितमिदं पद्यम्।
तत्रचतुर्थपादस्तु यत्तल्लावण्यार्जितमुच्यते इति
विशेषः व्यव-४६५

**पादशेषम्**—पादप्रक्षालनावशिष्टजलम्।

पादशेषं पीतशेषं शौचशेषं जलं सुरासमं
पर्यग्निकरणं विना ॥ इति गौतम-धर्मसूत्रपरिशिष्टे
१४-११

**पादशौचम्**—पादप्रक्षालनम्।

श्रान्तं सम्वाहनं रोगिपरिचर्य्यासुरार्चनम् ॥
पादशौचं द्विजोच्छिष्टं मार्जनं गोप्रदानवत् ॥
याज्ञ-१-२०९

**पादिनः** प्रागस्तुत्पोतोन्नेतासुब्रह्मण्यश्च पादिन-
इत्युच्यन्ते।

सर्वेषामर्धिनो मुख्यास्तदर्धेनार्धिने परे।
तृतीयिनस्तृतीयांशश्चतुर्थांशाश्च पादिनः।
इति मनुः ८-२१०

**पादुकम्**—पादुका पालाशमासनं पादुके दन्तप्रक्षालनमिति
च वर्जयेदित्यापस्तम्बः १-११-३६-९

**पादूनम्**—पादेन ऊनं सर्वम्।

उपेतस्याचार्यकुले ब्रह्मचारिवासः ।
अष्टाचत्वारिंशद्वर्षाणि, पादूनम् ॥
इति आपस्तम्ब.-१-१-२-१३

पाद्यम् - पादार्थमुदकम् ।

पानम्—मद्यपानम् ।
पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ।
स्वप्नोन्यगेहवासश्च नारीसंदूषणानि षट् ॥
मनुः ९-१३

पानकम्—प्रपानकम् ।
उष्णमन्नं द्विजातिभ्यः श्रद्धया विनिवेदयत् ।
अन्यत्र फलमूलेभ्यः पानकेभ्यश्च पण्डितः ॥ इति
संस्कृतिसंस्थानप्रकाशितशंखस्मृतौ तु पीठक
इति पाठः १४-१३
मन्वर्थमुक्तावल्यां शंखः मनुः ३-२३६
वैशाखे पानकं दत्वा सायाह्ने श्रमशान्तये ।
सर्वपापविर्मिुक्तो विष्णोः सायुज्यमाप्नुयात् ॥
इति स्कंदे वैष्ण, वैशाख-४-४६

पानसम्—मद्यविशेषः पनसभवः ।
पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम् ।
माध्वीकं टाङ्कमाद्वीकमैरेयं नारिकेलजम् ॥
इति पुलस्त्यः मन्वर्थमुक्तावल्याम्-११-९५

पान्थमुट्—पथिकधनापहारी ।
उत्क्षेपकः संधिभेत्ता पान्थमुट् ग्रन्थिभेदकः ।
स्त्रीपुंगोऽश्वपशुस्तेयी चौरो नवविधः स्मृतः ॥
इति कल्पतरौ व्यासः

पापनाशिनी— (१) वैष्णवैकादशीविशेषः ।
यदा तु शुक्लद्वादश्यां पुष्यं भवति कर्हिचित् ।
तदा सा तु महापुण्या कथिता पापनाशिनी ॥
इति कालसारोद्धृते ब्राह्मे
(२) अलभ्यस्नानयोगविशेषः ।
पुनर्वसौ देवगुरौ निशाकरे दिनेशवारेऽमरपूज्य-
केऽथवा ।
कुम्भे रवौ मत्स्यगते वृहस्पतौ एकादशी स्यात्-
खलु पापनाशिनी ॥
जप्यं च तप्यं च तपोर्चितं हुतं यत्किंचिदस्यां किल
धर्मसंचितम् ।
अनन्तपुण्यानि भवन्ति तस्य वै सूर्य्यग्रहात्
कोट्यधिक फलं तथा॥
क्षारोदके वाह्यावगाह्य यो नरः सम्पूज्य कृष्णं रजनी-
मुपोषितः ।
एतेन पापं दशजन्मभिः कृतं जेघ्नीयते तस्य सहस्र-
माशुचेत् ॥ इति कालसारे ब्रह्माण्ड पु
कुम्भे वा यदि वा मीने फाल्गुनेकादशी सिता ।
पुष्यर्क्षगुरुसंयुक्ता महापापप्रणाशिनी ॥
इति तत्र वायवीये ।

एकादश्यां सिते पक्षे पुष्यर्क्षं यत्र सत्तम ।
तिथौ भवति सा प्रोक्ता विष्णुना पापनाशिनी ॥
इति वाराहे ।

**पापरोगः**—उन्मादस्त्वग्दोषोराजयक्ष्मा श्वासोमधुमेहो ।
भगंदरो महोदरो अश्मरीत्यष्टौ पापरोगाः ॥
इति पराशरमाधवे देवलः ।

**पापवसीयसी**— (१) पापशीला ।
(२) पापं प्रसिद्धं, वसीयः पुण्यं तदुभयवती वेति चंद्रकान्तभाष्ये ।
पापवसीयसी ह्यस्यप्रजा भवति इति गोभिलः १-६-२

**पायसम्**—पयसासिद्धमन्नं द्रवीभूतम् । परमान्नमिति पायसं परमान्नमित्याचारे गदाधरः

**पायुः**—कर्मेन्द्रियविशेषः अपानप्रदेशः गुदमिति यावत् ।
गुदं त्वपानं पायुर्ना इत्यमरः
श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता ॥
मनुः २-९०

**पारजायी**—पारदारिकः ।

**पारणम्**—कर्मान्तभोजनम् । पारतीरकर्मसमाप्तौ ॥
इति धातोर्निष्पन्नम् ।
संकटे समनुप्राप्ते द्वादश्यां पारयेत् कथम् ।
अद्भिस्तु पारणं कुर्यात् पुनर्भुक्तं न दोषकृत् ॥
इति कालसारे देवलः-१०९

**पारत्र्यम्**—धर्मः-परत्र परलोके हितम् ।
जन्पान्तरे यस्य फलं भुज्यते तदिति मेधातिथिः ।
तेषामनुपरोधेन पारत्र्यं यद्यदाचरेत् ।
तत्तन्निवेदयेत्तेभ्यो मनोवचनकर्मभिः ॥
मनुः २-२३६

**पारदः**—क्रियालोपात् शूद्रत्वं गतः क्षत्रियः ।
शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ॥
वृषलत्वं गता लोके ब्राह्मणा दर्शनेन च ।
पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजाः यवना शकाः ।
पारदाः पह्लवाश्चीनाः किराता दरदाः खसाः ॥
मनुः १०-४४

**पारदार्य्यम्**—परदारगनम् पारदार्य्यं परिवित्तित्यादि उपपातक प्रकरणे याज्ञवल्क्यः ३-२३५

**पारन्ती**—शेफालिकासदृशं पुष्पमिति हेमाद्रिः ।
परिशिष्ट-६८१
रङ्गिणीपुष्पमिति नरसिंहवाजपेयिनः ।
तत्र,
पारन्तीकुसुमैश्चैव कुसुमैः कुटजोद्भवैः ।
नारायणं समभ्यर्च्य चिरं स्वर्गे महीयते ॥
नित्याचारप्रदीपे १-६२०

हेमाद्रौ—

जातीचम्पकलोध्राश्चमल्लिकावाणवर्वरीः।

वृन्ताशोकाटरूषं च तुलसीतिलकं तथा। १६२

पारन्तीं शतपत्रं च गन्धशेफालिकामपि।

कुब्जकं तगरं चैव मृगमारं च केतकीम्॥

ब्रह्मपु २२०-१६३

प्रकाशितपुराणे तु पारन्तीस्थानेपावन्तीतिपाठः।

तत्रापि पारधिं पारत्रीम् इति पाठभेदो मन्मते

हेमाद्रिपाठस्तु समीचीनः॥

पारम्पर्यम्—परम्पराक्रमेणागतम्।

यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः।

वर्णानां सान्तरालानां स सदाचार उच्यते॥

मनुः २-१८

पारशवः—ब्राह्मणात् शूद्रकन्यायां जातः जातिविशेषः।

यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम्।

स पारयन्नेव शवस्तस्मात् पारशवः स्मृतः॥

मनुः ९-१७८

पारयन्नेव शवः जीवन्नेव शव इति स्मृतिचंद्रिका-२८८

पारयन्पिंडदानादिना उपकुर्वन्नपि शवतुल्यः अनुपकारक

इति मेधातिथिः॥

पारयन्नेव कर्मणे शक्त एव सन् शवो अनधिकारी इति

मन्वर्थमुक्तावलिः।

शूद्रायां विधिना विप्राज्ज तः पारशवोमतः।

भद्रकालीं समाश्रित्य जीवेयुः पूजकाः स्मृताः॥ ३६

शिवाद्यागमविद्याद्यैस्तथा मङ्गलवृत्तिकः। ३७

निषादः चौर्य्यात् पारशवस्तु विधिना जात इति

तयोर्भेदः।

वसिष्ठशापात्त्रेतायां केचित् पारशवास्तथा। ४५

वैखानसेन केचित्तु केचिद् भागवतेन च।

वेदशास्त्रावलम्बास्ते भविष्यन्ति कलौ युगे॥ ४६

औशनसस्मृतिः

पारायणम्—धर्मार्थमादित आरभ्य समाप्तिपर्यन्तपठनमिति

नरसिंहवाजपेयी-आप-१-३-११-७

उपाकरणसमापनयोश्च पारायणस्यतां विद्याम् इति

पारिकूटः—परिचारकः इति राजनीतिप्रकाशे-१०६

श्रान्तः पारिकूटान्प्रैसत् इति ऐतरेय ब्रा, ८-४-२२

पारिणाय्यम्—परिणयनलब्धं धनमिति जीमूतवाहनः।

पारिणेयमिति पाठान्तरम्।

पारिणाह्यम्—गृहोपकरणम्। शय्यासनकुण्डकयहादि

अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्।

शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्यवेक्षणे॥

मनु ९-११

आसन्दीखट्वादिगृहोपकरणमिति मेधातिथिः।

पारिणेयम्—परिणयलब्धं धनम्।

मातुः पारिणेयं स्त्रियो विभजेरन् वसिष्ठः १७-४४

पारिणाय्यमिति दायभागे जीमूतवाहनोद्धृतपाठः

**पारिपात्रः**—परियात्राख्य पर्वतविशेषः।

पारिपात्र इति पाठभेदः।

**पारिभद्रः**—पालधुआ इति लोकप्रसिद्धः वृक्षः।

स च दन्तकाष्ठाय विष्णुना निषिद्धः॥

फलहट्ट इति प्रसिद्ध इति कल्पतरुः।

रक्तस्तबकयुक्तो मन्दार इति हेमाद्रिः। परिशिष्ठ-६८६

फरहट्ट इति प्रसिद्ध इति मित्रमिश्रः

पारिभद्रो मंदार इति माधवाचार्य्याः॥

रक्तस्तबको मंदार इति मित्रमिश्रः श्राद्धप्रकाशे १६०

**पारियात्रः**— (१) कुलाचलविशेषः।

दक्षिणेन हिमवन्तमुदक् परियात्रादिति वसिष्ठबौधायनौ

वसिष्ठः १ ८

महेंद्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः।

विंध्यश्च पारियात्रश्च सप्तैते कुलपर्वता॥

मार्कण्डेये तु सप्तैवात्र कुलाचला इति पाठः ५७-११

विंध्यस्य पश्चिमे मालवदेशस्य सीमापर्वतः सः इति

शब्दकल्पद्रुमे।

पारिपात्र इत्यस्य पाठान्तरं नामान्तरं वा तदुद्भवा

नद्यो यथा मार्कण्डेये ५७-१९-२०

वेदस्मृतिर्वेदवती वृत्रघ्नी सिंधुरेव च।

वेण्यासानंदिनी चैव सदानीरा मही तथा॥

पाराचर्मण्वतीनूपी विदिशा वेत्रवत्यपि।

शिप्राह्यवर्णी च तथा पारिपात्राश्रयाः स्मृताः॥ इति

एतेन पारियात्रः विन्ध्यस्य पश्चिमो भाग इति

काणे इतिहासे तीर्थसूच्याम्।

(२) पातिआलादेश इति धर्मकोशे।

**पारुष्यम्**—अप्रियाभिधानमिति कुल्लूकः मनुः १२-६

**पारेवतः**—कामरुपेरेवात इति ख्याते यस्य फलं महाकाल-

फलवद् भवति इति वैद्यकशब्दकोषे।

जंभीराकारफलं काश्मीरदेशे प्रसिद्धमिति दिव्यसिंहः

पालेवत इति पाठान्तरम्।

पारेवतं जम्भीराकारं फलं काश्मीरदेशे तु आउ आउ

इति प्रसिद्धमिति कालसारे॥

पारावतमिति हेमाद्रिधृतकूर्मपुराणपाठः

पारेवतं च रैवतमारेवतकं च किं च रैवतम्।

मधुफलममृतफलाख्यं पारेवतकं च सप्ताह्वम्। इति।

द्रव्यगुणपुस्तके। एतत् फलं प्रयागे अमृत इति उत्कलेषु

चाउलिआ इति, पिजुली इति गोदावरी तीरे ग्रामि

इति वदन्ति।

**पार्णः** पालाशमयः खादिरो वाथपार्णोवाद्विवितस्तिः

स्रुवः स्मृतः इति वीरमित्रोदये।

पाणिकः—पत्रोपजीवीति नरसिंहवाजपेयी "शौण्डिकः पाणिकश्चैव निषादेन समाः स्मृताः" अत्र पाणिकः ताम्बूलपर्णविक्रेता इति मन्मतम् । पानरा इति लोके य उच्यते ।

पार्थिवस्नानम्— मृदालंभः । मृदालंभश्च पार्थिवमिति- योगियाज्ञवल्क्यः ।

पार्वणम्—पर्वणि अमावास्यायां भवं पार्वणं श्राद्धम् । पुनश्च त्रिपुरुषोद्देशेन क्रियमाणं श्राद्धं पार्वणमिति ।

पार्वणः—संस्कारकर्मविशेषः । स च गौतमेनोक्तः,

गौत १-८-१६

'अष्टकापार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्तपाकयज्ञसंस्थाः ।

अत्र पर्वणि भवः स्थालीपाकः पार्वण इति हरदत्तः ।

पार्श्वकः य ऋजुनो पायेनान्येष्टव्यानर्थाननृजुनो पायेनान्विच्छति स उच्यते पार्श्वक इति महाभाष्ये पतंजलिः पार्श्विक इत्यस्य संज्ञान्तरम् ।

पार्श्वकाः कक्षाधः प्रवेशसंबद्धान्यस्थीनि मिताक्षरा

३-८६

पार्श्वाचान्तम्—पार्श्वाचान्तमिति पाठे एकस्यापि, कौ पार्श्वस्थे आचान्ते न भोक्तव्यं भस्मोदकादिविच्छेदेन विना इति विज्ञानेश्वरः—१-१६८

विज्ञानेश्वरेण तु पर्यायान्नमिति पाठो गृहीतः ।

पार्श्विकम् उत्कोचादिना लब्धं धनम् ।

पार्श्विकः - यो हि राजादिपार्श्वे वर्त्तमानः कस्यापि स्वतः संभावितमुपकारं कथंचिदुपलभ्य तं प्रतिब्रूते तवेमं चेदुपकारं कारयामि तदा त्वया इदंममदेयमिति एवं धनमर्जयति स पार्श्विकः । एवं विपत्प्रशममप्रदर्शनेनापि धनार्जयिता पार्श्विक इति हेमाद्रिः पार्शक इत्यस्य संज्ञान्तरं मन्ये, अपात्रः पात्रतथ्य योऽर्जयति स इति शूलपाणिः ।

पार्षतः—श्वेतविंदुमान् मृगः इति वैद्यकशब्दसिंधौ । पार्षत मांसेन पितॄणां साप्तमासिकी तृप्तिरितियाज्ञवल्क्याभिप्रायः तत्र पृषत् चित्रमृगः तन्मांसं पार्षतमिति विज्ञानेश्वरः ।—१-२५८

पार्ष्णिः—पादयोः परिममो भागौ पार्ष्णिः इति विज्ञानेश्वरः य ज्ञ—३-८६

पार्ष्णिग्राहः—विजिगीषोः पश्चाद्वर्त्ती भूपतिः । यस्तु विजेतुं गतस्य राज्य पश्चाद्भाग आक्रम्य गृह्णाति । पार्ष्णिग्राहं च संप्रेक्ष्य तथाऽऽक्रंदं च मंडले । मित्रादथाप्यमित्राद्वा यात्राफलमवाप्नुयात् ॥

मनुः ७-२०७

पालः = गवादीनां पशूनां रक्षणे नियुक्तः दासः ।

दिवा वक्तव्यता पाले रात्रौ स्वामिनी तद्गृहे । योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात् ॥ इति

मनुः ८-२३०

**पालकम्** - पालङ्ग नाम्ना प्रसिद्धः पत्रशाकः।

भूस्तृणं सुरसं शिग्रपालकं सिन्धूकं तथा॥

इति शंखः १४-१६

कूष्माण्डालातूवार्त्ताकि कोविदारांश्च वर्जयेदिति।

**पालंकी**—पालंग इति प्रसिद्धः पत्रशाकः। पालंक्यादि अस्या नामान्तरं पाठान्तरं वा

पालंकी मध्यदेशे पोइ इति प्रसिद्ध इति निर्णय सिंधौ। उत्कलेषु पालंकी पालंग इति पूतिका तु पोइ इति प्रसिद्धा।

**पालंक्या**—पालंग इति प्रसिद्धः पत्रशाकः।

मुकुन्दाक्षगन्धश्च द्रव्यमिति हेमाद्रिः

**पालनी**—गृहस्थस्य वृत्तिविशेषः।

पालनीत्याहिंसिकेत्येवेदमुक्तं भवति तुषविहीनांस्तण्डुलानिच्छति सज्जनेभ्यो बीजानि वा पालयतीति पालनी बौधायनधर्मसू-३-२-१०

**पालागली**—नृपतिजायाविशेषः।

चतस्रो जाया उपक्लृप्ता भवन्ति महिषी।

वावाता, परिवृक्ता, पालागली। शतपथब्राह्मणे।

१३-२-६-४

**पालिः**—उत्कारः इत्यष्टावक्रभाष्ये ६-२

**पालिवतम्**—जम्बीरं पालिआलमिति गौडप्रसिद्धं वा इति निर्णयसिन्धौ।

पालेवतशब्दस्यायं पाठभेदो नवेति चिन्त्यम्।

**पाली**—चुआ, गडिआ, इति उड्रभाषायां प्रसिद्धः क्षुद्रजलाधारः, पाल्यः क्षेत्रमध्यकृताः सेवतः इति श्रीमूला २-२४

**पालेवतम्**— पालेवतं कोशातकी इति निर्णयसिन्धौ।

जंभीराकारं फलं वोट इति काश्मीरेषु प्रसिद्धमिति तत्र आम्रान् पालेवता न्क्षिपन् इत्यादि शंखः।

पालेवतो जम्भीराकारफलं काश्मीरदेशे प्रसिद्धमिति दिव्यसिंहः। उत्कलेषु चाउलिआ, विदुर, विरजु प्रभृति शब्दैः प्रयोगादिषु अमृत इति नाम्माख्यातं भवेत् नवेति विमृश्यम्।

**पावनम्**—वस्त्रादिना गालनम् इति हेमाद्रौ परिशिष्टे ८२८

पयोदधिविकारादि शुचिपात्रान्तरस्थितम्।

पावनोत्पवनाभ्यां च पर्य्यग्निप्रकरेण च। इति लौगाक्षिः।

**पावमानी**—अग्ने हंसिन्यत्रिणम् इति नवपावमान्य इति हेमाद्रिः। यः पावमानीरध्येति इत्यादि ऋच इति कुल्लूक मृ ७-२-१८

स्वादिष्ठयामदिष्ठयेत्यादि चत्वारोध्याया इति याज्ञ-टि मृ-६-७-१६

केचित उपास्मैगायतेत्याद्याः तिस्रः दविद्युवत्येत्याद्या षट् इत्येवं नवेति मित्रमिश्रः ।

कुल्लूकमते - ऋक्-८-२-१८

यः पावमानीरध्येत्यृषिभिः संभृतं रसम् ।

सर्वं सपूतमश्नाति स्वदितंमातरिश्वना ।

पावमानीर्यो अध्येत्युषिभिः सम्भृतं रसम् ।

तस्मै सरस्वतीद्वहे क्षीरं सर्पिर्मधूदकम् ।

हेमाद्रिमते— अग्नेहंसीन्यादिसूक्तस्य उरुक्षय ऋषिः गायत्रीछंदः । रक्षोहाग्निर्देवता ॥ ऋक्-म-८-६-२५

अग्नेर्हंसि न्यत्रिणं दीद्यन्मर्त्येष्वा स्वे क्षये शुचिव्रत

उत्तिष्ठसि स्वाहुतो विरोचतेऽग्निरीलेन्यो गिरा,

तुचा प्रतीकमज्यते ॥ ३

घृतेनाग्निः समज्यते मधुप्रतीक आहुतः रोचमानो विभावसुः । ४

जरमाणः समिध्यसे देवेभ्यो हव्यवाहन । तं त्वाहवन्त मर्त्याः ॥ ५

तं मर्त्ता अमर्त्यं घृतेनाग्निं सपर्य्यत ।

अदाभ्यं गृहपतिम् ॥ ६

अदाभ्येन शोचिषाग्ने रक्षस्त्वं दह गोपा ऋतस्य दीदिहि ॥ ७

स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः उरुक्षयेषु दीद्यत । ८

तं त्वा गीर्भिरुरुक्षया हव्यवाहं समीधिरे । यजिष्ठं मानुषे जने ।। इति

गोभिलपरिशिष्टभाष्यकारस्य चन्द्रकान्तस्य मतेन पावमानी पवमानपर्वपठिता पावमानं त्यचं सूक्तत्रयम् ॥

"यथा उपास्मै गायता नर" इति प्रथमा ।

मित्रमिश्रमते—

(१) उपास्मै इत्यस्य असितः काश्यपऋषिः गायत्रीछन्दः सोमोदेवता षड्ज स्वरः ।

(२) अभिते इत्यस्य कश्यपो मारीचऋषिः गायत्री छन्द सोमोदेवता षड्जः स्वरः ।

(३) स नः पवस्वेत्यस्य वैखानसा अङ्गिरसऋषयः गायत्रीछन्दः सोमोदेवता षड्जः स्वरः ।

(४) दवि इत्यस्य भरद्वाजऋषिः गा. छ. अग्नि देवता, षड्ज स्वरः ।

(५) हिन्वान इत्यस्य विश्वामित्रो जमदग्निर्वा ऋषिः गायत्रीछन्दः मित्रावरुणौ देवते षड्जः स्वरः ।

(६) ऋधकसोमइत्यस्य इरिम्बिठः ऋषिः गायत्री छन्दः इन्द्रो देवता षड्जः स्वरः ।

(७) पवमानस्येत्यस्य विश्वामित्रो गाथिनः ऋषिः गायत्री छन्दः इन्द्राग्नीदेवता षड्जः स्वरः ।

(८) अच्छाकोशमित्यस्य अमहीयुराङ्गिरसः ऋषिः गायत्री छन्दः सोमो देवता षड्जः स्वरः ।

(९) अच्छासमुद्रमित्यस्य अमहीयुराङ्गिरसः ऋषिः बृहती छन्दः सोमोदेवता मध्यमः स्वरः ।

ओम् पास्मैगायता नरः पवमानायेन्दवे अभि देवां इयक्षते । १

अभिते मधुना पयोऽथर्वाणो अशिश्रयुः देवं देवाय देवयुः ॥ २

स नः पवस्व शं गवे शं जनाय शमर्वते । शं राजन्नोषधीभ्यः ॥ ३

द्विद्युतत्यारुचा परिष्टोभन्त्या कृपा, सोम शुक्रा गवाशिरः ॥ ४

हिन्वानो हेतृभिहित आ वाजं वाज्यक्रमीत् । सीदन्तो वनुषो यथा ॥ ५

ऋधक् सोम स्वस्तये संजग्मानो दिवाकवे । पवस्व सूर्यो दृशो ॥ ६

पवमानस्य ते कवे वाजिन्त्सर्गा असृक्षत । अर्वन्तो न श्रवस्यवः ॥ ७

अच्छाकोशं मधुश्चुतमसृग्रं वारे अव्यये अवावशन्त-धीतयः ॥ ८

अच्छासमुद्रमिन्दवोऽस्तं गावो न धेनवः । अग्मन् ऋतस्य योनिमा ॥ ६

इति सप्तपावमान्यः सप्तपावमानीशब्दे द्रष्टव्याः ।

**पाशाभिधानाद्वादशी**—पञ्चाननस्थौ गुरुभूमिपुत्रौ मेषे रविः स्याद् यदि शुक्लपक्षे । पाशाभिधाना करभेण युक्तातिथिर्व्यतीप त इतीह योगः ॥

**पाषाण्डम्**—वेदवाह्यागमसमाश्रया प्रतिषिद्धव्रतचर्या पाषाण्डमिति कुल्लूकः । मनुः १-११८

**पाषाण्डः**—पाषण्डयोगात् पुरुषोऽपि पाषण्ड इति कुल्लूकः मनुः १-११८

पाखण्डमित्यस्य पाठान्तरम् ।

बुद्ध श्रावक निर्ग्रन्थाः पञ्चरात्रविदो जनाः ।
कापालिकाः पाशुपताः पाषण्ड़ा ये च तद्विधाः ॥
कूर्म पु. २-२१ अध्याये ।

**पाषण्डिनः** – वेदवाह्यव्रतलिंगधारिणः ।
भगवन्तमनुद्दिश्य यः कर्म कुरुते नरः ॥
स पाषण्डीति विज्ञेयः सर्वलोकेषु गर्हितः ।
वृद्धहारीत स्मृतिः ८-१८

**पाषाणचतुर्दशी**—मार्गशिरशुक्लाचतुर्दशी ।

**पिंगला**—(१) 'पिङ्गल क्षी इति कुल्लूकः ।
पिंगला अग्निवर्णा इति माधवाचार्याः २-१६
न वाचाटां न पिङ्गलाम् । मनुः ३-८
पिङ्गलवर्णस्वरूपं यथा शब्दार्णवे —
सितपीतहरिद्रक्तः कड़ारस्तृणवह्निवत् ।
अयत्रिक्तपीताङ्गः कपिले गोवि भूषणः ॥
हरितांशेऽधिकेऽसौ तु पिशङ्गः पद्मधूलिवत् ।
पिशङ्गस्त्वसितावेशात् पिङ्गो दीपशिखादिषु ॥
पिङ्गलस्तु परच्छायः पिङ्गशुक्लाङ्गखण्ड़वत् । इति

(२) जीवविशेषः शाकुनज्ञानं-- पिङ्गलादिपतत्रि चेष्टालिङ्गकं ज्ञानमिति विज्ञानेश्वरः । याज्ञ ३-१७१

छुछुन्दरी शूकरिका शिला च श्यामारला पिङ्गलिकान्यपुष्टा ।

वामाः प्रशस्ता गृहगोधिका च पुंसंज्ञका ये च पतत्रिणश्च ।। इति नीतिमयूखे-९३

**पिचुः**—पिचुः कर्षापरपर्यायः खारीशब्दे द्रष्टव्यः ।

**पिचुमंदः** -निम्बवृक्षः पारस्करः ३-१०-२४

पिचुमंद इति हरिहरगदाधराभ्यां पाठोगृहीतः ।

अन्यत्र पिचुमर्द इति पाठः ।

अश्वत्थमेकं पिचुमर्दमेकं न्यग्रोधमेकं दश पुष्पजातीः ।

द्वे द्वे तथा दाडिममातुलुङ्गे पञ्चाम्ररोपी नरकं न याति।।

इति वाराहे ।

**पिच्छा**--लाला - अठा इति प्रसिद्धा ।

न पिच्छिलम् विष्णुः ६१-११

पिच्छाप्रकृतिकं दन्तकाष्ठं वर्जयेत् इत्यर्थः ।

पिच्छली पवित्रम् इति रघुनन्दनः संस्कारतत्वे-५२

पवित्रस्य कुशवट्ट इति संज्ञा प्रसिद्धा ।

**पिंजूलम्**—पवित्रमिति कल्पतरुकारः ।

मस्तानां दर्भाणां स्तवकः पिंजुलमिति श्रौतपदार्थनिर्वचने ।

**पिंजूलः**—पिंजूलम् ।

त्रिभिश्च दर्भपिंजूलैरिति पारस्करः १-१५-४

अत्र दर्भपिंजूलैः दर्भपवित्रैरिति हरिहरगदाधरौ ।

**पिंजूली** -प्रादेशप्रमाणमेव कुशमयीमार्द्रां मंजरीं शुष्कां वाभ्रष्टकुसुमां पिंजूलीमेके मुख्या आचक्षते । परिभाषा प्रकाशे मित्रमिश्राः

एतत् प्रमाणमेवैके कौशीमेवार्द्रमञ्जरीम् ।

शुष्कां वा शीर्णकुसुमां पिंजूलीं परिचक्षते ।।

गोभिलस्मृतिः १-३०

**पिटकम्**—वंशपात्रविशेषः ।

पिटकं पूरयेत्तस्मिन् इष्टकाग्रावपांशुभिः इति मिताक्षरायां पितामहादिवचनम् याज्ञ २-१००

वुरुडः शूर्पपिटकादिवंशपात्रकर्ता इति हेमाद्रिव्याख्यानात् पिटकं वंशपात्रविशेषः इति ज्ञायते ।

पिटकं मंजूषा इति हेमाद्रि इति दानमयूखे -११३

महाभा उद् १५५-७

**पिटकः**—पिटकामंजूषा इति नीलकंठः ।

सकाण्डदण्डकाः सर्वे समीरविषतोमराः ।

सशूर्पपिटकाः सर्वे सदात्रांकुश तोमरा ।। इति ।

कुद्दाल दातृपिटकं तद्वत्स्थाल्यादिभाजनम् ।

यत्तत्त्वे क्षिप्तानि तव दद्युः प्रतिश्रयम् ।।

मार्कण्डेय पु. ५०-८६

चतुर्दिशं विन्यस्तोद कुभं हिरण्यबीजपिटिकायां (वेद्याम्) इति मानवगृह्ये २-६-४

(२) चिह्नविशेषः ।

लांछनं पिटकं चैव ज्ञेयं स्फुरणवत्सदा

इति मात्स्ये २४०-११

**पिठरः**—पाकपात्रम् ।

तैजसानामभावे तु पिठरे मृण्मये तु यः ।

नवे शुचौ प्रकुर्वीत पाकं पित्रर्थमादरात ॥

इति चमत्कारकाडे इति हेमाद्रिः परिशेष - ६७६

हांड़ी इति भाषायाम् ।

पिठरः स्थाल्युखाकुण्डमित्यमरः २-९-३१

मध्यदेशभाषायां हण्डीति प्रसिद्धा इति लक्षणप्रकाशे मित्रमिश्रः ।

क्लीबेपि—पिठराणि विततमुखानि दारुपात्राणि इति नीलकण्ठः भारतभावदीपे ।

घटाः पात्र्यः कटाहानि स्थाल्यश्च पिठराणि च ।

नासीत् किंचिदसौवर्णं रन्तिदेवस्य धीमतः ॥

महा भा, शा, २९-१२६

**पिण्डः**—(१) शरीरम् ।

पिंडे वाय्वग्नि संशुद्धे हृत्पद्मस्थां परां म ।

अणवीं जोवकलां ध्यायेन्नादां ते सिद्धभाविताम् ॥

पिण्डो वेले वशे सान्द्रे देहागारैकदेशयोः ।

देहमात्रनिवापे च गोलसिहलकयोरपि ॥

ओडपुष्पे च पुंसि स्यात् क्लीवनाझीवनायसोः ।

इति मेदिनी ।

(२) श्राद्धे पित्रुद्देशेन दीयमानः पिण्डः ।

त्र्यं स्तुतस्मद्धाविः शेषात पिण्डान् कृत्वा समाहितः

औदलेनैव विधिना निर्वपेद्दक्षिणामुखः ॥

(३) ग्रासः । यावतोग्रसते पिण्डान् हव्यकव्येष्वमंत्रवित्

तावतो ग्रसते प्रेत्यदीप्तशूलष्टर्ययो गुडान् ॥

मनुः ३-१३३

(४) पिंडाकारं कर्दमादि ।

पंचपिंडाननुद्धृत्यनस्नायात परवारिषु ।

याज्ञः १-१५९

(५) क्षीरविकारविशेषः ।

दधिक्षीरयो ग्रहणं मस्तु पिण्ड किलाटकर्चिकादीनां वर्दुविकाशमुपलक्षणमिति विज्ञानेश्वरः या-२-३१

पिंड़कः नवनीतमिति वैद्यकशब्दसिंधौ ।

घनीभूतक्षीरविकारः राविड़ि इति ख्यातः ॥

पिण्ड़तदुग्धम् इति कृत्यरत्नाकरे -५६३

मस्तुपिण्ड़किलाटादिकूर्चिका दानतस्तथा ।

गोरसानां प्रदानेन तृप्तिमाप्नौत्यनुत्तमाम् ॥

इति तत्रविष्णुधर्मे

(६) शरीरैकदेशः पेण्डा इति प्रसिद्धः ।

(७) गृहैकदेशः पिंड़ा इसि प्रसिद्धः ।

(८) पाथेयम् इति व्यवहारकल्पतरौ -३५९

भाण्ड़पिण्ड़व्ययोद्धार इतिश्लोकाः भाण्ड़शब्दे द्रष्टव्याः

**पिंड़तर्ककाः**—पिण्डचिन्तकाः

पिंडलेपाभिलाषिण इति कल्पतरुः । श्राद्ध-१२१
उरःस्थाः पितरस्तस्य वामपार्श्वे पितामहाः ।
प्रपितामहादक्षिणतः पृष्ठतः पिंडतर्ककाः ॥
बौधा, ध, -२-१५-१२
तस्यपितृब्राह्मणस्येति श्राद्धकाण्डे ।
पिण्डचिन्तका मातामहादय इति गोविन्दस्वामी ।
उरस्त इति प्रकाशितबौधायनधर्मसूत्रे पाठः

पिण्डपितृयज्ञः—पिण्डदानरूपः पितृयज्ञः पिण्डप्रदानमित्यर्थः ।

पिण्डमूलकम्—हस्तमूलकम्, न तु पिंडसारु इति प्रसिद्धं मूलमिति दिव्यसिंहः श्राद्धदीपे ।
पिण्डमूलकं गोलमूला इत्याचारेंदौ।
पिप्पलीं मरिचं चैव तथा वै पिण्डमूलकम् ।
कृतं च लवणं सर्वं वंशाग्रं तु विवर्जयेत ॥
शंखस्मृतिः -१४-२०

पिण्डारकः—तीर्थविशेषः शवदाहकाले तस्य स्मरणमावश्यकमिति हारलतायाम् -१२०
वैष्णवं च वराहं च तीर्थं पिण्डारकं तथा । इति

पिण्डालकम्—पिण्डालकं सुधनी, महाराष्ट्राणां मोहलक द इति प्रसिद्धम् । इति निर्णयसिन्धौ ।
काकोल्या क्षीरकाकोल्या तथा पिण्डालकैः शुभैः इति ।
तत्र मांस प्रतिकरे श्राद्धदेये मार्कण्डेयः पिण्डालकं महाराष्ट्रेषु पेण्डरमिति प्रसिद्धमिति शंखवचनव्याख्याने स एव एकस्य एतादृशः अर्थभेदः न सम्भवतीति अत्र पाठदोषः आशंकनीयः ।

पिण्डिका (१) जंघयोरुर्वोश्च मांसलप्रदेशः ।
पेंडा इति भाषायाम् याज्ञ-३-९७
(२) कस्तुरीभेदः ।
चूर्णाकृतिस्तु खरिकातिलकातिलाभा ।
कौलीथ बीजसदृशी च कुलित्थका हि ॥
स्थूला ततः कियदियं किल पिण्डका स्यात् ।
तस्याश्च किंचिदधिका यदि नाधिका सा ॥ इति
वीरमित्रोदयलक्षणप्रकाशे कस्तुरीलक्षणे ।
(३) पिण्डिका ग्रास इति अन्यत्र मित्रमिश्रः ॥
तिष्ठते ममपार्श्वे तु यत्रैवाहं प्रतिष्ठितः ।
प्रायश्चित्तं प्रवक्ष्यामि तस्य संसारमोक्षणम् ।
सप्ताहं यावकं भुक्त्वा त्रिरात्रं खलु पिण्डिकाः ।
त्रीणि पिंडशिवारं तु एवं मुच्येत किल्बिषात ॥
इति तत्र वाराहे
(४) पिण्डिका पिण्डतमरपुष्पम् तस्य प्रयोगः शेफालीशब्दे द्रष्टव्यः ।

पिण्डितम्—संयुक्तम् ।
दैवं पुरुषकारश्च कालश्च पुरुषोत्तम ।
त्रयमेतत् मनुष्यस्य पिण्डितं स्यात फलावहम् ॥ ७

कृष्टि वृष्टि समायोगा दृश्यन्ते फलसिद्धयः ।

तास्तु काले प्रदृश्यन्ते नैवाकाले कथंचन ॥

इति मात्स्ये-२२-८

**पिण्याकः**—(१) यंत्रे पीडितानां तिलानां कल्कः पिण्याकमिति हरदत्तः । गौतमः १९-१५८

कणान् वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि ।

सुरापानापनुत्त्यर्थं बालवांसाजटीऽध्वजी ॥

मनुः ११-९२

पिण्याकः तिलकल्कः इति तीर्थचिन्तामणौ-११

(२) पिण्याकः खलिः इति मित्रमिश्रः ।

पिण्याकं भक्षयित्वा तु यस्तु मामुपसर्पति ॥

जम्बूको दशवर्षाणि वकश्चैव समा नवः ॥ इति पूजाप्रकाशे-१८२ वाराहे

खलिरिति शूलपाणिः प्रायश्चित्तविवेके पृ-१९०

पुंसि क्लीवे चास्य शब्दस्य पाठः ।

**पिता**—उत्पादकः ।

अन्नदाता भयत्र ता पत्नीतातस्तथैव च ।

विद्यादाता जन्मद ता पञ्चैते पितरो नृणाम् ॥

ब्रह्मवै, ब, १०-१५३

**पितृक्षयः**— (१) अमावास्या ।

(२) गया च । गया पितृणां निवासभूता ।

**पितृतीर्थम्**—प्रदेशिन्यंगुष्ठयोरा पित्र्यमिति

वसिष्ठः ३-६८

**पितृदैवतम्**—(नक्षत्रम्) मघा ।

**पितृदैवतम्**—(कर्म) अष्टकाकर्मेति कल्पतरु ।

**पितृबंधुः**— पितुः पितृष्वसृमातृष्वसृमातुलपुत्राः ।

पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः ।

पितुर्मातुलपुत्र श्च विज्ञेया पितृबान्धवाः ॥

इति मिताक्षरायाम् २-१३६

**पितृयानम्** / **पितृयानमार्ग** — धूमं निशां कृष्णपक्षं दक्षिणायनमेव च ।

पितृलोकं चंद्रमसं वायुं वृष्टिं जलं महीम् ।

क्रमात्र संभवन्तीह पुनरेव व्रजन्ति च ॥

याज्ञ-३-१९७

इज्याध्ययनदानानि तपः सत्यं क्षमादमः ।

अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥

अत्रपूर्वश्चतुर्वर्गः पितृयाणपथे स्थितः ॥

इति शास्वतधर्मदीपिकायाम्-१६

महा, वन, २-७५

उत्तरं यदगस्त्यस्य अजवीथ्याश्च दक्षिणम् ।

पितृयानः सवै पन्थाः वैश्वानर पथाद्वहिः ॥

वायु, पु, १-५०-२०८

**पितृवनम्**—श्मशानम् ।

**पितृश्रवणः**—पितृश्रद्धातिवर्द्धक पुत्रः ।

पिताश्रूयते प्रख्याते येन इति सायणः ।

शादत्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥

ऋक्संहिता-१-९१-२०

पितृष्वसा—पितुः भगिनी ।

पितृष्य.—अभिभावकः (धर्मकोषे) । ११८०

पित्तलम्—ताम्ररङ्गमिश्रितधातुविशेषः ।

"पित्तलं ताम्ररङ्गजम्" शुक्रनीति-४-८७

कांस्येनायसपात्रेण त्रपुसीसकपित्तलैः ।

आचान्तः शतकृत्वोऽपि नैव शुद्धिमवाप्नुयात् ॥

नित्याचारप्रदीपधृतभविष्ये २७७

पित्र्यहोरात्रम्—वसन्ति सततं राजन् पितरश्चंद्रमण्डले ।

तेषां मासमहोरात्रं विभागं तत्र मे शृणु ॥

कृष्णपक्षाष्टमीमध्ये तेषां तूदयते रविः ।

शुक्लाष्टम्यां तथैवास्तं तेषां याति दिवाकरः ॥

अमावास्या सदा तेषां मध्याह्नो जायते नृपः ।

तस्माच्छ्राद्धानि देयानि तस्मिन्काले प्रयत्नतः ॥

पित्र्यम्—मघानक्षत्रम् ।

पिपीलिकामध्यचान्द्रायणम् यस्य मध्ये अमावास्या पतति ॥

विधिश्चान्द्रायणशब्दे द्रष्टव्यः ।

पिप्पलजम्—फलम् ।

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।

तयोन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाक-शीति ॥ इति

पिप्पलः—अश्वत्थवृक्षः ।

न च कोविदार शमीपीलुपिप्पलेङ्गुदगुग्गुलजम् ।

विष्णुः ६१-१४

एतानि दन्तकाष्ठाय अनर्हाणि ॥

पिप्पलकम्—सीवनसूत्रम्—इतिकल्पतरोर्मोक्षकाण्डे-४६

शुचि पिप्पलकं चैव त्रिपिष्टपकमण्डलुम् ।

कन्थां पवित्रं पुण्यं च लघुमात्रः परिव्रजेत् ॥

इति यमः-४५

पिप्लुः शरीरचिह्नविशेषः ।

दमयन्तीनिर्णयप्रस्तावे—

अस्याह्येष भ्रुवोर्मध्ये सहजः पिप्लुरुत्तमः ॥ ५

श्यामायाः पद्मसंकाशो लक्षितोन्तर्हितो मया ।

महाभा, वन, ६९-५

मलेन सम्वृतोह्यस्याश्छन्नो भ्राणेव चन्द्रमा । ६

पिशुनः—खलः ।

परदोषसंकीर्त्तनशीलः इति विज्ञानेश्वरः ॥

याज्ञ:-१-२२३

पिष्टम्—(१) गोधूमादीनां चूर्णम् ।

पिष्टशाकेक्षुपयसां विकारान्नृपनन्दन ।

तथा मांसविकारांश्च ते च वर्ज्याश्चिरोषिताः ॥

मार्कण्डेयपुराणम्-३४-५८

दध्यन्नं पायसं चैव गुडपिष्टसमोदकम् ।

याज्ञ-२८६

(२) स्वस्तिकादिचित्रसाधनं द्रव्यम् गुरुल

इति भाषायां प्रसिद्धम् ।

एवं स्वस्तिकपद्माद्यैर्भुशोभां सूर्यमन्दिरे ।

कृत्वा वर्णक पिष्टाद्यैर्लभेच्छतगुणं फलम् ॥

नित्याचारप्रदीपः-१-५२१

**पिष्टपशुः**—पशुकार्ये पिष्टम् ।

**पिष्टातकम्**—सुगन्धचूर्णम् । इति उद्गर्गमयूखे-२४

**पीटकम्**—भूपर्णमिति हेमाद्रिः ।

**पीठम्**—पीढ़ा इति प्रसिद्धः ।

पीठमासनमित्यमरः २-६-१३८

पीठमस्त्रियामिति त्रिकाण्डशेषः ।

महाभारते—

पीठं दत्त्वा माधवेऽभ्यागताय आनीयापः परिणि-

र्णिजयपादौ ।

सुखं पृष्ट्वा प्रतिवेद्यात्मसंस्थां ततो दद्यादन्नमवेक्ष्य धीरः ॥

उद्-३८-२

"न पीठोपहितपादाः" विष्णुः ८१-१४

**पीठकम्**—पिष्टकम् उष्णमन्नं द्विजातिभ्यः श्रद्धया विनिवेदयेत् ।

अन्यत्र फलमूलेभ्यः पीठवेभ्यश्च पण्डितः

इति शंखः १४-१३

पानवेभ्य इति पाठान्तरम् ।

**पीठसर्पी**—पीठद्वयेन गच्छन् खंज इति मन्वर्थविवृत्तिः ।

पीठसर्पी क्षुः पादयुक्तगमनेन पीठवत् सर्पत् शीलम-स्येति मन्वर्थचन्द्रिका ।

अन्धो जड़ः पीठसर्पी सप्तत्या स्थविरश्च यः ।

श्रोत्रियेषूपकुर्वंश्च न दाप्याः केनचित्करम् ॥

मनुः-८-३९४

**पीतशालाः**—पियाशाल इति ख्यातः वृक्षः ।

अथपीतशालके सर्जकासनबन्धूकपुष्पप्रियकजीवकाः ।

इत्यमरः २-४-४३

**पीथम्**—घृते जले इति वैदिकशब्दसिंधौ हेमचन्द्रः ।

**पीलुः** गुडफलवृक्षः पीलु इति पश्चिमदेशे प्रसिद्धो वृक्षः ।

इति लक्ष्मीधरः । दन्तकाष्ठत्वेन तस्योल्लेखः

स्कान्दे काशी-३५-८०

शेलुशब्दो द्रष्टव्य ।

**पुंश्चली**—व्यभिचारिणी ।

पूयं चिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम् ।

विष्ठावाद्धुषिकस्यान्नं शस्त्रविक्रयणो मलम् ॥

मनुः-४-२२०

**पुंसवनम्**—संस्कारकर्मविशेषः ।

पुंसः सवनं स्पन्दनात् पुरा ॥ याज्ञ-१-११

**पुक्कसः**—निषादात् शूद्रायां जातः ।

जातो निषादाच्छूद्रायां जात्या भवति पुक्कसः ।

शूद्राज्जातो निषाद्यां तु सर्वे कुक्कुटकः स्मृतः ॥

मनुः-१०-१८

क्षत्रियायां शूद्रात् जात इति शूलपाणिः ॥

प्रायश्चित्तविवेके-२७२

**पुञ्जः**—असच्छास्त्रपाठिसमूहः ।

असच्छास्त्राधिगंतृणां समूहः पुञ्जः उच्यते ॥

इति कात्यायनः

**पुटम्**—पणपुटम् मृत्तिकापुटम् ।

ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् वने वसन् ।

प्रतिगृह्य पुटेनैव पाणिना शकलेन वा ॥

भाषायां तु पुड़ा इत्युच्यते

मनुः ६-२८

**पुटभेदनम्**—नगरम् ।

स हास्तिनपुरे रम्ये कुरुणां पुटभेदने ।

वसन् सागरपर्यन्तामन्वशाषद् वसुन्धराम् ॥

महाभा, आदि १००-१२

**पुण्डरीकः**—(१) यज्ञविशेषः ।

पुण्डरीको यज्ञविशेष इति कल्पतरुः नियत १६७

तत्र पुण्डरीकसहस्रेण योगिष्वावसथो वरः ॥

इति यमः

(२) व्याघ्रविशेषः ।

(३) रोगविशेषः ।

वल्मीक पुण्डरीकाद्या रोगाः पापसमुद्भवाः ।

शातातपः १-१०

कांस्यहारी च भवति पुण्ड्रीकसमन्वितः ॥

शंखस्मृतिः ४-३

**पुण्ड्रः**—इक्षुः ।

पुण्ड्रः इक्षुभेद इति शब्दकल्पद्रुमे ।

त्रिपुण्ड्रशब्दो द्रष्टव्यः पुण्ड्रं वर्त्तुलमित्यपरार्कप्रभृतय

इति मदनपारिजाते-५७८

**पण्यम्**—पुण्यंनाम विहितविधिवद्धकर्म इति गदाधर-

राजगुरुः निषेकप्रकरणे-१७१

**पुत्**—नरकविशेषः ।

पुदिति नरकस्याख्या दुःखं च नरकं विदुः ।

पुदि त्राणात्ततः पुत्रमिहेच्छन्ति परत्र च ॥

इति बौधायनगृह्यपरिशिष्टे

**पुत्तिका**—उइ इति प्रसिद्धाः कीट विशेषा या वल्मीकं

रचयन्ति ।

धर्मं शनैः संचिनुयाद् वल्मीकमिव पुत्रिकाः ।
परलोकसहायार्थं सर्वभूतान्यपीडनम् ॥ मनुः ४-२३८
"पतङ्गिका पुत्तिकास्या" दित्यमरोक्तिरपि (२-५-२७)
संगच्छते वर्षारम्भे तासां पक्षयोगात् ।।
पुत्तिका पिपिल्लिकाभेद इति परिभाषाप्रकाशे-६४

**पुत्रः**—आत्मजः ।
पुंनाम्नो नरकाद् यस्मात्त्रायते पितरं सुतः ।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥
मनुः ६-१३८

स च द्वादशविधः पुत्रिकां वर्जयित्वा मनुना दर्शितः ।
पुत्रान् द्वादश यानाह नृणां स्वायं भुवो मनुः ।
तेषां षड्बन्धुदायादाः षड्दायादबान्धवाः ॥ १५८
औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्चषट् ॥ १५६
कानीनश्च सहोढ्श्च क्रीतः पौनर्भवस्तथा ।
स्वयं दत्तश्च शौद्रश्च षड्दायादबान्धवाः ॥ ६-१६०
इति

पुत्रिका अपि पुत्रत्वेन प्रदर्शिता मनुना-६-१३५
पुत्रिकायां कृतायां तु य पुत्रोऽनुजायते ।
समस्तत्रविभागः स्या ज्येष्ठता नास्ति हि स्त्रिया ॥ इति
वसिष्ठेन पुत्रिकायाः पुत्रोऽपि पुत्रत्वेन सम्मतः ।
अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥
वसिष्ठः १७ १७
भृत्यः शिष्यश्च पोष्यश्च वीर्यजः शरणागतः ।
धर्मपुत्राश्च चत्वारो वीर्यजो धनभागिति ॥
ब्रह्मवै-गणेशः ८-४६

**पुत्रजीवकः**—पुइँचान्दिआ इति प्रसिद्धः वृक्षः यस्य बीजैः
पुत्रार्थिभिः जपमाला क्रियते ।

**पुत्रिका**—अभ्रातृका कन्या, यस्याः पुत्रं मातामहः
पुत्रत्वेन स्वधाकरं मन्यते ।
अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥
वसिष्ठः १७-१७
अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् ।
यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम् ॥
इति मनुः ६-१२७
पुत्रिकाविधिं विनाऽपि प्रतिपादिता भ्रातृविहीना
पुत्रिकैव विष्णु १५-६

**पुत्रिकापुत्रः**—(१) पुत्रिकायाः पुत्रः ।
दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् ।
स एव दद्याद् द्वौ पिण्डौ पित्रे मातामहाय च ॥
मनुः ६-१३२

(२) पुत्रिका एव पुत्रः पुत्रिकापुत्रः ।
तृतीयः पुत्रिकाः १५ विज्ञायते अभ्रातृका पुंसः

पितृन् अभ्येति प्रातीचीनं गच्छति पुत्रत्वम् । १६

इति वसिष्ठः-१७-१५

पुनःपुनः—गयाक्षेत्रस्था नदी ।

पुनरेता—असंस्कृते पूर्वगर्भे प्रसूते सति द्वितीयगर्भे संस्कारो यस्याः सा पुनरेता इति प्रायश्चित्तेन्दुशेखरे

पूर्वं तु स्रवते गर्भो यस्याश्चैवाथ संस्कृतः ।

द्वितीयो गर्भसंस्कारः पुनरेता तु सोच्यते ॥

अङ्गिरस्मृतिः १११

पुनर्भूः—पुनः परिणीता स्त्री ॥ सा त्रिविधा

तदुक्तं नारदेन—

कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।

पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा ॥ ४६

देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते ।

उत्पन्नसाहसान्यस्मै सा द्वितीया प्रकीर्त्तिता ॥ ४७

असत्सु देवरेषु स्त्री बान्धवैर्यत् प्रदीयते ।

सवर्णाय सपिण्डाय सा तृतीया प्रकीर्त्तिता ॥

नारदसंहिता १३-४६-४८

अक्षता भूयः संस्कृता पुनर्भूः

भूयस्त्वसंस्कृतापि परपूर्वा ॥ ६ विष्णुस्मृतिः १५-६

वाग्दत्ता मनोदत्ता अग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूस्तां गृहीत्वा न प्रजां न धर्मं विन्देदिति ॥

इतिबोधायनः चतुर्विंशतिमतसंग्रहव्याख्याने ८७

पुनस्तोमः—एकाहात्मकः सोमयागः ।

कात्यायन श्रौतसूत्रे २२-१०-१६ सूत्रेण विहितः सोमयागः एकाहात्मकः पुनस्तोमः ।

एकसुत्याकः सोमयागः एकाह इत्युच्यते ॥

पुनस्तोमेनेष्ट्वा पुनः सवनमायान्ति ॥

पुरम्—(१) गुग्गुलम् ।

पुरं वदरमानं स्याद्रामठं तत्समं स्मृतम् इतिनित्याचार-प्रदीपे-१-१६२ ।

दानमयूखे च २३

पुरो गुग्गुलुः इति आचारेन्द्रौ १०५

(२) नगरम् ।

दशी कुलं तु भुञ्जीत विंशी पञ्चकुलानि च ।

ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः पुरम् ।

मनुः-७-११६

अस्य लक्षणम्—

सोत्सेधवप्रप्राकारं सर्वतः परिखावृतम् ।

योजनार्द्धार्द्धविष्कम्भमष्टभागोत्तरं पुरम् ॥

प्रागुदक्प्रवणं शस्तं शुद्धवंशबहिर्गमम् ।

तदर्द्धेन तथा खेटं तस्मादूनं च कर्बटम् ॥ इति

विवादरत्नाकरोद्धृतमार्कण्डेये-२३१

प्रकाशितमार्कण्डेयपुराणे तु तदर्द्धेन तु कर्वटमिति पाठः ४६-४५

**पुरन्ध्रः**—(१) बहुप्रज्ञा ।

(२) देवताविशेषश्च ।

भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय

देवाः ऋक्—१०-८५-३६

**पुरन्धिः**—(१) सभर्तृका स्त्री

क्षीरे तथा सर्पिषि शाद्वले च ।

क्षौद्रे तथा दधिन पुरन्ध्रिगात्रे ।

देहे कुमर्य्याश्च तथा सुराणां

तपस्विनां यज्ञहुतां च देहे ॥ विष्णुः ११-१४

(२) पुष्पविशेषः ।

पुरन्ध्रिः पूर्वदेशे फगुः इति प्रसिद्धा इति ॥

आचारमयूखे ८७

**पुरन्ध्री** – पतिपुत्रादियुक्ता स्त्री ।

**पुरस्तात्**—पूर्वम् ।

पुरस्तादेवमुपरिष्टात्स्थालीपाकस्याग्न्याधेयदेवताभ्यो

हुत्वा जुहोति ॥ पारस्करः १-२-६

पुरस्तात् – पूर्वं कस्य अग्न्याधेय देवता होमस्य इति

हरिहरः ।

**पुराणम्**—ब्राह्मादीनि अष्टादश पुराणानि

तदुक्तं विष्णुपुराणे । ३-६-२१-२४

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।

तथान्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ॥

आग्नेयमष्टमं चैव भविष्यं नवमं स्मृतम् ।

दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं स्मृतम् ॥

वाराहं द्वादशं चैव स्कान्दं चात्र त्रयोदशम् ।

चतुर्दशं वामनं च कौर्मं पञ्चदशं तथा ॥

मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् ।

महापुराणान्येतानि ह्यष्टादश महामुने ॥ ११२१

नित्याचारप्रदीपे सरस्वतीविलासे च एतेषामेव पुराण-

त्वेन निर्देशः ॥

एतद्भिन्नानि पुराणत्वेन उपपुराणान्येव

उपपुराणानि तु पुराणेभ्य एव निर्गतानि ॥

तदुक्त मात्स्ये ५३-६३

अष्टादशभ्यस्तु पृथक् पुराणं यत् प्रदिश्यते ।

विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतम् ॥ इति

उपपुराणानि यथा—

आद्यं सनत्कुमारोक्तं नारसिंहमथापरम् ।

तृतीयं नान्दमुद्दिष्टं कुमारेण तु भाषितम् ॥

चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ।

दुर्वाससोक्तमाश्चर्यं नारदीयमतः परम् ॥

कापिलं वामनं चैव तथैवोशनसोदितम् ।

ब्रह्माण्डं वारुणं चैव कालिकाह्वयमेव च ॥

माहेश्वरं तथा शाम्बं सौरं सर्वार्थसञ्चयम् ।

पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ॥

इति परिभाषा प्रकाशोद्धृतकौर्मे

प्रकाशितपुराणे तृतीयं स्कान्दमितिपाठः।

शब्दकल्पद्रुमे गारुडे २२७ इति ॥

ब्रह्मवैवर्त्तेऽपि—

आद्यं सनत्कुमारं च नारदीयं द्वितीयकम्।

तृतीयं नारसिंहाख्यं शैवधर्मं चतुर्थकम् ॥

दौर्वासं पञ्चमं षष्ठं कापिलेयमतः परम्।

सप्तमं मानवं प्रोक्तं शौकमष्टममेव च ॥

वारुणं नवमं प्राहुर्ब्रह्माण्डं दशमं स्मृतम्।

कालीपुराणं च तत एकादशमनुच्यते ॥

वासिष्ठलैङ्गं द्वादशं माहेशं च त्रयोदशम्।

शाम्बं चतुर्दशं प्रोक्तं सौरं पञ्चदशं स्मृतम् ॥

पाराशर्यं षोडशं च मारीचं तु ततः परम्।

अष्टादशं भार्गवाख्यं सर्वधर्मप्रवर्त्तकम् ॥

एतान्युपपुराणानि सर्ववेदमयानि च। इति

शिवपुराणेऽपि—

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा।

भविष्यं नारदीयं च मार्कण्डेयमतः परम् ॥ १२०

आग्नेयं ब्रह्मवैवर्त्तं लिंगं वाराहमेव च।

वामनाख्यं ततः कौर्मं मात्स्यं गारुड़मेव च ॥ १२१

स्कान्दं तथैव ब्रह्माण्डाख्यं पुराणं च कीर्त्तितम् ॥

शिवपु० ५-४५-१२१

पुराणलक्षणं मात्स्ये ५३-६४

सर्गश्च वंशो मन्वन्तराणि च।

वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥

पुराणानामुपपुराणानां चेदमेव लक्षणम्।

वायुपुराणे तु—

यस्मात् पुराह्यनतीदं पुराणं तेन तत् स्मृतम्।

निरुक्तमस्य योवेद सर्वपापैः प्रमुच्यते ॥

वायु, पु-१-१८३

मन्मते तु कश्चिद्विशेषः—

उपदेशप्रधानं पुराणम् वृत्तप्रधानमितिहासइत्यनयोर्भेदः

लक्षणं च ॥

तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुव्यच-

लन्। अथर्व १५-६-११

अत्रत्यपुराणशब्दो न ब्राह्मादिलौकिकपुराणपरो भवितु-

मर्हति अपितु वैदिकपरः इति अवधेयम्।

यन्नदृष्टं हि वेदेषु नदृष्टं स्मृतिषु द्विजाः।

उभयोर्यन्नदृष्टं च तत् पुराणेषु गीयते ॥

स्कन्द प्रभास २-९१

पुराणः—षोडशपणाः।

पुराणशब्दोऽत्र द्वात्रिंशद्रूप्यकुष्णलपर इति

विवादरत्नाकरे।

द्वे कृष्णले समधृते विज्ञेयो रौप्यमाषकः । १३५।
ते षोडश स्याद्धरणं पुराणश्चैव राजतः ॥ १३६

मनुः ८-११६

पुरुष—(१) मनुष्यः ।

द्वाविमौ पुरुषौ लोके स्वर्गस्योपरि तिष्ठतः ।
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥

विष्णुधर्म-१-२१८-१७

(२) ब्रह्मा, हिरण्यगर्भः ।

प्राकृतेऽण्डे विवृद्धे तु क्षेत्रज्ञो ब्रह्मसंज्ञितः ।
स वै शरीरी प्रथमः स वै पुरुष उच्यते ॥
आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत ।
यमाहुः पुरुषं हंसं प्रधानात् परतः स्थितम् ॥

कुर्म, पु-४अध्याये

(३) परमात्मा ।

अव्यक्ते च पुरे शेते पुरुषस्तेन चोच्यते ।
विश्वं वहुविधं ज्ञेय स च सर्वत्र उच्यते । ६८
तस्मात् स वहुरूपत्वाद् विश्वरूप इति स्मृतः ।
तस्यैकस्य महत्त्वं हि स चैकः पुरुषः स्मृतः ॥

ब्रह्म पु, ३०-६६

पुरुषकारः—उद्योगः ।

पुरुषप्रयत्न इति यावत् ।

दैवे पुरुषकरे च कर्मसिद्धिर्व्यवस्थिता ।
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ॥

याज्ञ-१-३४९

पुरुषगतिः—सामविशेषः ।

अहमस्मि प्रथमजा ऋतस्य इत्यस्यामृचि पुरुषगतिरिति गौतमीयवृत्तौ हरदत्तः ॥ ३-१-१२

पुरुषव्रतम्—"सहस्रशीर्षा पुरुष" इत्यृदिग्भ्य, कयान श्चित्र इत्येतेषु षट्सु गीयमानं सामइति गोभिलपरिशिष्टभाष्ये स्नाने-१२

वैश्वानरम् इत्यादि इति याज्ञवल्क्यटिप्पण्याम् ।

"पुरुषव्रतं च भासं च" वसिष्ठः १८-१५

शङ्खस्मृति-११-३

पुरुषसुक्तम्—सहस्रशीर्षापुरुष इत्यादि मन्त्राः षोडशः ।

अथर्ववेदिनां सहस्रबाहुः पुरुष इत्यादि पुरुषसूक्तम् ।
इन्द्रस्य बाहू इति अप्रतिरथसूक्तम् ॥

श्राद्धप्रकाश-१३०

पुरुषी—स्त्री ।

ज्योतिष्टोमातिरात्राणां शतं शतगुणीकृताम् ।
प्राप्नोति पुरुषीं दत्त्वा होममन्त्रैश्च संस्कृताम् ॥

इति सम्वर्त्तः

अत्र पुरुषी कन्या इति संस्कार प्रकाशे ।

तथैव कल्पतरौ गार्हस्थ्य-८०

पुरुषोत्तमम्—श्रीजगन्नाथस्थानक्षेत्रम् ।

श्राद्धदेशत्वेन मत्स्यपुराणे प्रोक्तम् ।

वैष्णवक्षेत्रमध्ये तद्गणितं वृहस्पतिना क्षेत्रशब्दे द्रष्टव्यम् ॥ स्कान्देऽपि

कुरुक्षेत्रं रामतीर्थं काञ्ची च पुरुषोत्तमम् ।

पुष्करं दर्दुरं क्षेत्रं वराहं विधिनिर्मितम् ।
बदर्याख्यं महापुण्यं क्षेत्रं सर्वार्थसाधनम् ।
इति स्कान्दे वै, खण्डे बदरिकामाहात्म्ये १- ३
अन्यच्च तीर्थप्रवरं पूर्वदेशेषु शोभनम् ।
एकान्तं देवदेवस्य गाणपत्यं फलप्रदम् ॥
दत्त्वा शिवभक्तानां किंचिच्छश्वन् महीं शुभाम् ।
सार्वभौमो भवेद्राजा मुमुक्षुर्मोक्षमाप्नुयात् ॥
महानदीजलं पुण्यं सर्वपापविनाशनम् ।
ग्रहणे तदुपस्पृश्य मुच्यते सर्वपातकैः ॥
अन्या च विरजा नाम नदी त्रैलोक्यविश्रुता ।
तस्यां स्नात्वा नरो विप्रा ब्रह्मलोके महीयते ॥
तीर्थं नारायणस्यान्यन्नाम्ना तु पुरुषोत्तमम् ।
पूजयित्वा परं विष्णुं स्नात्वा तत्र द्विजोत्तमः ।
ब्राह्मणान् पूजयित्वा तु विष्णुलोकमवाप्नुयात् ।
कूर्मपु-२-३५ अध्याये
सत्यं सत्यं मुनिश्रेष्ठा भवद्भिः समुदाहृतम् ।
पुरुषाख्यसमं क्षेत्रं नान्यत्र पृथिवीतले ॥ १०
सन्ति यानि तु तीर्थानि पुण्यान्यायतनानि च ।
तानि श्रीपुरुषाख्यस्य कलां नार्हन्ति षोडशीम् ।
यथा सर्वेश्वरो विष्णुः सर्वलोकोत्तमोत्तमः ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् १२
आदित्यानां यथा विष्णुः श्रेष्ठत्वे समुदाहृतः ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ १३

नक्षत्राणां यथा सोमः सरसां सागरो यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
वसूनां पावको यद्वद्रुद्राणां शंकरो यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
वर्णानां ब्राह्मणो यद्वद् वैनतेयश्च पक्षिणाम् ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
शिखरिणां यथा मेरुः पर्वतानां हिमालयः ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
प्रमदानां यथा लक्ष्मीः सरितां जाह्नवी यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ।
ऐरावतो गजेन्द्राणां महर्षीणां भृगुर्यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
सेनानीनां यथा स्कन्दः सिद्धानां कपिलो यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
उच्चैःश्रवा यथाश्वानां कवीनामुशनाः कविः ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ।
इन्द्रियाणां मनो यद्वद्भूतानामवनी यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
अश्वत्थः सर्ववृक्षाणां पवनः प्लवतां यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
भूषणानां च सर्वेषां यथा चूडामणिर्द्विजाः ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
गन्धर्वाणां चित्ररथः शस्त्राणां कुलिशो यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥

आकारः सर्ववर्णानां गायत्री छन्दसां यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
सर्वाङ्गेभ्यो यथा श्रेष्ठमुत्तमाङ्गं द्विजोत्तमाः ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
अरुन्धती यथा स्त्रीणां सतीनां श्रेष्ठतां गता ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
यथा समस्तविद्यानां मोक्षविद्यापरास्मृताः ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ।
मनुष्याणां यथा राजा धेनूनामपि कामधुक् ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
सुवर्णं सर्वरत्नानां सर्पाणां वासुकिर्यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
प्रह्लाद सर्वदैत्यानां रामः शस्त्रभृतां यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ।
झषाणां मकरो यद्वन्न पाणां मृगराड् यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषत्तमम् ॥
समुद्राणां यथा श्रेष्ठः क्षीरोदः सरितांपतिः ।
तथा समस्ततीर्थानां वरिष्ठ पुरुषोत्तमम् ॥
वरुणं यादसां यद्वद्यमः संयमिनां यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ।
देवर्षीणां यथा श्रेष्ठो नारदो मुनिसत्तमाः ।
धातूनां काञ्चन यद्वत् पवित्राणां च दक्षिणा ॥
प्रजापतिर्यथा दक्ष ऋषीणां काश्यपो यथा ।
ग्रहाणां भास्करो यद्व न्मन्त्राणां प्रणवो यथा ॥
अश्वमेधस्तु यज्ञानां यथा श्रेष्ठ प्रकीर्त्तितः ।
तथा समस्ततीर्थानां क्षेत्रं च तद्द्विजोत्तमाः ॥
अषोधीनां यथा धान्यं तृणेषु तृणराड् यथा ।
तथा समस्ततीर्थानां धर्मः संसारतारकः ।
तथा समस्ततीर्थानां श्रेष्ठं तत्पुरुषोत्तमम् । ४३

ब्रह्मपु-६६-४३

**पुरुषोत्तमः**—जगन्नाथः ।

सर्वपापहरं विन्ध्ये ओड्रे तु पुरुषोत्तमम् ।
आत्मानं हृदये विद्धि जपतां भुक्तिमुक्तिदम् ॥

अग्निपु ३०५-१३

**पुरोडाश**—मदन्तीजलेन सिद्धस्य पिष्टपिण्डस्य चतुर्थ्यन्त देवतानामपूर्वकत्वेति पदान्तेन मन्त्रेण अभिमर्शनानन्तरं कूर्मवदाकारे कृते पुरोडाशशब्दवाच्यता, इति श्रौत. प. निर्वचने ॥

**पुरोनुवाक्या**—ऋगविशेषः ।

अध्वर्युप्रेषितो होता एकश्रुत्या पुरोनुवाक्यां पठति ।
सा च प्रायः एकैव ऋग् भवति तस्याः प्रथमार्द्धर्चे एकमवसनं चतुर्मात्रिप्रणवान्तद्वितीयार्द्धर्चे द्वितीयमवमानम् ॥
यस्मिन् यागे मैत्रावरुणे भवति तत्र स एव पुरोनुवाक्यां पठति ।
पुरः पूर्वं यागात देवतामनुकूलयितुं या ऋगुच्यते इति

व्युत्पत्त्या पुरोनुवाक्यापदम् अनुवाक्या पदं च ऋग्-विशेषबोधकम् ।। इति श्रौत. प. निर्वचने ।

पुरोहितः—पुरोहितः शान्त्यादेः कर्त्ता इति विज्ञानेश्वरः

१-१५८

पुरोहितं च कुर्वीत दैवज्ञमुदितोदितम् ।
दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा ।।

याज्ञ १-३१३

पञ्चकल्पविधानज्ञः पुरोहितः कर्त्तव्य इत्युक्तं राजधर्म_कौस्तुभे-पृ-२५६

पञ्चकल्पविधानज्ञं वरयेत्तु सुदर्शनम् ।
नक्षत्रकल्पो वैतानस्तृतीयः संहिताविधिः ।
चतुर्थो शिरसाकल्पः शान्तिकल्पस्तु पञ्चमः ।। ६
पञ्चकल्पविधानज्ञमाचार्यमाप्यभूपतिः ।
सर्वोत्पातप्रशान्तात्मा भुनक्ति वसुधां चिरम् ।। ७

पुर्यष्टकम्—भूतेन्द्रियादि ।

भूतेन्द्रियमनोबुद्धिवासनाकर्मवायवः ।
अविद्या चाष्टकं प्रोक्तं पुर्यष्टमृषिसत्तमैः ।। इति

सनन्द इति कुल्लूकः १-५६

पुर्यष्टकं लिङ्गशरीरमिति कल्पतरुः मोक्षकाण्डे-९

पुलकः—कोद्रवाद्यपेक्षया सूक्ष्माणि धान्यानि पुलका इति हेमाद्रिः ।

अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा ।

इति महाभारते

पुलाक इति अमर ३-३-५

असम्यक् कृष्टाः पुलका इति स्मृतिचन्द्रिका-४५६

पुलाकः—तुच्छधान्यम् ।

स्यात् पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके ।।

३-३-५

उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च ।
पुलाकान्श्चैव धान्यानां जीर्णाश्चैव परिच्छदाः ।।

मनुः १०-१२५

पुलिन्दः—पुलिन्दाः निष्टयात् किरात्यां जाता इति

श्रीमूला-२-१

नृपायां वैश्यतश्चौर्यात् पुलिन्दः परिकीर्त्तितः ।
पशुवृत्तिर्भवेत्तस्य हन्युस्तान् दुष्टसत्त्वकान् ।।

औशनसस्मृति-१६

पुल्कसः—कोहूलः ।

वैश्येन राजन्यायां पुल्कस इति वसिष्ठः १८-५

पुल्कसी कोलिणी इत्याचारेन्दौ-२४५

जातो निषादवीर्येण शूद्रायां पुल्कससंज्ञकः ।
अन्त्यजानां तु सदृशः इति जातिभास्करे । ३६१

उग्रान्निषाद्यां कुक्कुटकः, विपर्यये पुल्कसः ।।

इति कौटल्यः३-७

शूद्रायां निषादेन पुल्कस इति व्यवहारकल्पतरौ शंखलिखितौ-८१९

नृपायां शूद्रसंसर्गात्जायः पल्कस उच्यते ।
सुरावृत्ति समारुह्य मधुविक्रयकर्मणा ॥ १७
कृतकानां सुराणां च विक्रेता पाचको भवेत् ।

औशनःस्मृतिः

**पुष्करः**—(१) मुखम् ।

अङ्गुष्ठपर्वमात्रवर्त्तुलपुष्कर इति स्रुवलक्षणे हरिहरः

पार. गृ-१-१

(२) तीर्थविशेषः ।

पुष्करेष्वक्षयं श्राद्धम् विष्णुस्मृतिः ८५-१

त्रीणि पुष्कराणि ।

तेषां ज्येष्ठमध्यमकनिष्ठपुष्कराणीति संज्ञा भारते

प्रथमं ब्रह्मदैवत्यं द्वितीयंविष्णुदैवतम् ।
तृतीयं रुद्रदैवत्यं त्रयो देशा स्थिता इति ॥

तत्र टीकायाम् ।

(३) पुष्करः जातिविशेषः ।

धर्मकारो भटो भिल्लो रजकः पुष्करो नटः ।
वराटो मेदचाण्डालो दाशश्वपचकोलिकाः ॥

वेदव्यासस्मृतिः १-१२

(४) दोषविशेषः ।

भद्रातिथौ पापवारे त्रिपादर्क्षे यदामृतिः ।
तदा चितौ शवारोपे कृते कुर्य्यादिमं विधिम् ॥
कुशैः प्रतिकृतिं कृत्वा मृतौ क्षत्रियविप्रयोः ।
वैश्यस्य पिष्ठैः शूद्रस्य गोमयेनाकृतिं तथा ॥
संयोज्य मधुदध्याज्यैः शवेन सह दाहयेत् ।
त्रिपुष्करे द्वे संयुक्ते दहेदेकादिपुष्करे ॥

इति कालसारे दाहप्रकरणे ।

(५) पद्मपुष्पम् ।

स राजास्त्वकृतप्रज्ञः कामवृत्तश्च पापकृत् ।
अधर्मेणाभिशास्तूर्वीं यस्ते हरति पुष्करम् ॥

इति महाभा, अनु, दान ९४-३६

(६) पुष्करं शुण्डाग्रम् ।

विस्तीर्णकर्णहनुनाभिललाट गुह्याः कूर्मोन्नतैर्द्विनवविंशतिभिर्नखैश्च ॥
रेखात्रयोपचितवृत्तकराः सुवाला धन्याः सुगन्धिमदपुष्कर मारुताश्च ॥ इति नीतिमयूखे-८३

**पुष्कलम्**—(१) मुष्टिचतुष्टयात्मिका भिक्षा ।

ग्रासमात्रा भवेद् भिक्षा पुष्कलं तच्चतुर्गुणम् ॥

इति पराशरशातातपौ ॥ मिता-१-१०८

लघुशातातपस्मृतिश्च-५७

(२) उत्कृष्टम् ।

सत्यं साक्ष्ये ब्रुवन् साक्षी लोकानाप्नोति पुष्कलान् ।

मनुः ८-८१

(३) आढ़कस्य चतुर्थांशः ।

अष्टमुष्टि भवेत् किंचित् किंचिदष्टौ च पुष्कलम् ।
पुष्कलानि च चत्वारि आढकः परिकीर्त्तितः ॥

**पुष्ट्यर्थश्राद्धम्**—गच्छेद् देशान्तरं यस्तु श्राद्धं कार्य्यं तु

र्षिषा ।

पुष्ट्यर्थ मेतद् विज्ञेयं (क्षयाहं द्वादशं स्मृतम्) ।।

स्कन्द, प्रभा, २०५-५०

**पुष्पकृच्छ्रः**—व्रतविशेषः ।

यदि बिल्वादिपुष्पाणि क्वथितानि मासं पीयन्ते

तदा पुष्पकृच्छ्रः ।। मिता ३-३१६

**पुष्पधः**—जातिविशेषः ।

व्रात्यविप्रात् सवर्णायां जातः ।

व्रात्यात्तु जायते विप्रात्पापात्मा भूर्जकण्टकः ।

आवन्त्य वाटधनौ च पुष्पधः शैख एव च ।।

मनुः १०-२१

**पुष्पप्रासादाः**—चतुरस्रायताः प्रासादा पुष्पसंज्ञकाः नव ।

वड़भी गृहराजो च तथा शालागृहोऽपरः ।

मन्दरश्च विशालश्च ब्रह्ममन्दर एव च ।।

भवनः प्रभवश्चैव जविका वेश्म एव च ।

नवैते शूरशार्दूल कीर्त्तिताः पुष्पकोद्भवः ।।

नित्याचारप्रदीपः-२-३७४

**पुष्पमाणवकः**—ज्योतिःशास्त्रवित् ।

पुष्पमाणवकत्वेन ज्योतिः शास्त्रवित्त्वेन इति शवरस्वामी ।

मागधानां पुष्पमाणवककर्म इति शंखलिखितौ

व्यवहारकल्पतरो-८१६

**पुष्पिता**—रजस्वला ।

पुष्पिता पतिता कन्या लिंगिनी श्रेष्ठजातिजा ।

परस्त्री विवशा श्वश्रूः स्वसाथ दुहिता तथा ।। ४१

गुरुब्राह्मणभार्याश्च पुत्रमित्रनृपस्त्रियः ।

पत्न्यश्च भृत्यबन्धूनामगम्याः परिकीर्त्तिताः ।।

अभिलषितार्थचिन्तामणिः १-१-४२

**पुष्पोदनम्**—पुष्पमिश्रमोदनमिति नरसिंहवाजपेयी ।

नित्याचारप्रदीपः २-१०१

मनुमते कानिका इति यदुच्यते घृतशर्करादि

युक्तमन्नम् ।।

**पुष्यम्**—पुष्यानक्षत्रम् । मनुः ४-९६

**पुस्तम्**—पञ्जिका फाइल इति पञ्चलित भाषायाम् ।

पुस्तं पञ्जिका इति चण्डेश्वरः ।

**पूगः**—(१) भिन्नजातीयानां भिन्नवृत्तीनामेकस्थाननिवासिनां

समूहः ।

यथा ग्रामजनपदादय इति विज्ञानेश्वरः ।।

याज्ञ २-३०

पूगः संघ इति कल्पतरुः

पूगा हस्त्यश्वारोहकादय इति स्मृतिचन्द्रिका ।

व्यवहार-५२३

समूहो वणिगादीनां पूगः संपरिकीर्त्तित ।।

इति कात्यायनः ६७६

(२) गुवाकः घोण्टा तु पूगः क्रमुको गुवाकः खपुरः ।

अमरः २-४-१६९

**पूजाः**—(१) पूजा नाम देवतोद्देशेन द्रव्यत्यागात्मकत्वाद् याग एव ।

(२) सत्कारः ।

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवता ।

यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ।।

मनुः-३-५६

(३) शलाका इति आचारमयूखे—१००

लिङ्गमस्तकविस्तारं पूजाभागसमं नयेत् ।

नाहं तत्त्रिगुणं कुर्यान्नाहवत् पीठविस्तृतिम् ।।

इति तत्र सिद्धान्तशेखरे

**पूतिकम्**—पूतिकं सुगन्धितृणविशेषः करञ्जकाष्ठं वा इति हेमाद्रिः वर्ज्यगन्धप्रकरणे । परि-६८२

पूतिकं मृगनाभिं च रोचनां रक्तचन्दनम् ।

कालीयकं जोंगकं च तुरुष्कं चापि वर्जयेत् ।।

इति ब्रह्मपुराणे

कालीयकं तृणगन्धं तुरुष्कं च विवर्जयेत् ।

इति प्रकाशितपुराणे पाठः ब्रह्म २२०-१७२

**पूतिका**—पोइ इति भाषाप्रसिद्धा लता ।

सोमाभावे पूतिका ग्राह्या सोमापचारे पूतिकानामिव ।।

इति दत्तकमीमांसायाम्-३३

पूतिका सुगन्धितृणविशेष इति मित्रमिश्रः श्राद्धप्रकाशः-१५८

सुगन्धितृणविशेषः करञ्जो वेति हेमाद्रिः ।।

**पूतिखषः**— हिमवति प्रसिद्धः प्राणिविशेष इति कपर्दी इति लक्ष्मीधरः कल्पतरौ नियत-३०६

शशाकृतिर्हिमवति प्रसिद्ध इति हरदत्तः ।

पञ्चनखनां गोधाकच्छपश्वाविच्छल्यक खड्गशशपूतिखषवर्जम् इत्यापस्तम्बः १-५-१७-३७

पूतिखग इति पाठान्तरम् ।

पूतिश इति आचारसारे पाठ उद्धृतः ।।

**पूरः**— पुलिका इति प्रसिद्ध इत्याचारसारे गदाधरराजगुरुः

**पूरणम्**—चणकपिष्टगुडनिर्मितं महाराष्ट्रभाषायां प्रसिद्धम् तत उत्कलेषु पूर इति प्रसिद्धम् ।

वटकं कोकरसकं पूरणं मधुसूणम् ।।

इति देवभागवते-८-२४-२६

**पूरयन्ती**—शुक्लत्रयोदशी रात्रिः । कालमाधवः २

**पूरिका** अनेनैव नाम्ना प्रसिद्धः अपूपविशेषः ।

इति हेमाद्रिः परि-६०२

पायसं शालिमुद्गाढ्यं मोदकादींश्च भक्तितः ।

पूरिकां च रसालां च गोक्षीरं च नियोजयेत् ।।

इति ब्रह्मपुराणे

**पूर्णकुम्भः**—प्रहारप्रकारविशेषः ।

ग्रथिताङ्गुलिभ्यां हस्ताभ्यां शिरसि प्रहारः पूर्णकुम्भ

इति नीलकण्ठः ॥ महाभा, सभा, २३-१४

बाहुपाशादिकं कृत्वा पादाहतशिरावुभौ ।

उरो हस्तं ततश्चक्रे पूर्णकुम्भौ प्रयुज्य तौ ॥

तौ भीमसेनजरासन्धौ

**पूर्णकोशिका**—कोशातकी इति शान्तिमयूखे ।

**पूर्णमासः**—पौर्णमास्यामन्वाधाय प्रतिपदि क्रियमाणो यागः

दर्शशब्दवत् लक्षणया पूर्णमासशब्दप्रतिपाद्यो भवति ।

**पूर्णा**—शुक्लचतुर्दशी रात्रि । कालमाधवः-२

**पूर्णातिथिः**—पञ्चमी दशमी पञ्चदशी च ।

**पूर्णिमा**—शुक्लपञ्चदशी ।

**पूर्तम्**—वापीकूपतड़ागादि देवतायनानि च ।

अन्नप्रदानमारामाः पूर्त्तं धर्मं च मुक्तिदम् ॥

इति जातुकर्ण्यः

पूर्त्तमित्यभिधीयते इति अत्रिस्मृतौ विशेषः ४४

ग्रहोपरागे यद्दानं सूर्यसंक्रमणेषु च ।

द्वादश्यादौ च यद्दानं पूर्त्तं तदपि नाकदम् ॥

इति कालसारोद्धृताग्नेयपुराणे कालिकापुराणे च

वापीकूपतड़ागानि देवतायतनानि च ।

अन्नप्रदानमारामाः पूर्त्तमार्य्याः प्रचक्षते ॥

परिभाषाप्रकाशे-४५

**पूर्यमाणा**—शुक्लद्वादशीरात्रिः । कालमाधवः-२

**पूर्वन्यायः**—प्राङ्न्यायः (उत्तरविशेषः)

पूतिकां मृगनाभिं च रोचनां रक्तचन्दनम् ।

कालीयकं जोङ्गकं च तु तुरुष्कं चापिवर्जयेत् ॥

ब्रह्मे

**पूर्वपक्षः**— (१) शुक्लपक्षः ।

यथा चैवापरः पक्षः पूर्वपक्षाद् विशिष्यते ।

तथा श्राद्धस्य पूर्वाह्णादपरह्णो विशिष्यते ॥

मनुः-३ २७८

(२) पूर्ववादी ।

साक्षिषु भयतः सत्सुसाक्षिणः पूर्ववादिनः ।

पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥

याज्ञ-२-१७

(३) राशि आवेदनपत्रं च ।

अनेकपदसंकीर्णः पूर्वपक्षो न सिद्ध्यति ॥

**पूर्वमारिणी**—पत्युः पूर्वं मृता स्त्री ।

भार्यायै पूर्वमारिण्यै दत्वाग्नीनन्त्य कर्मणि ।

पुनर्दारक्रियां कुर्यात् पुनराधानमेव च ॥

इति मनुः-५-१६८

**पूर्ववादी**—पूर्वस्मिन्काले मया भुक्तमिति गृहीतमिथि

वा यो वदति इति [ ताक्षराशयः ।

आज्ञालेखः पट्टकः शासनं वा, आधिः पत्रं विक्रयो वा क्रयो वा ।

राज्ञे कुर्याद् पूर्वमावेदनं यः तस्य ज्ञेयः पूर्ववादो विधिज्ञैः ॥ इति नारदः-२-३८

व्यवहारकल्पतरौ-५४

**पूर्वसभा** –अधस्तनविचारालयः ।

उत्तरसभया च पूर्वसभातो ज्यायस्या भवितव्यमिति स्मृचिन्द्रिका ॥

**पूर्वसेवा**—पुरश्चरणमिति गोविन्दस्वामी ।

पूर्वसेवा भवेदेषा मन्त्राणां कर्मसाधने बौधा ४-८-१७

**पूर्वाह्णः**—दिवसस्य प्रथमो भागः ।

दिवसस्य द्विधाविभागपक्षे प्रातरारभ्य सार्द्धसप्तमुहूर्त्त पर्यन्तम् ।

त्रिधाविभागपक्षे पञ्चममुहूर्त्तपर्यन्तम् ॥

पञ्चधाविभागपक्षे तृतीयमुहूर्त्त पर्यन्तम् ।

चतुर्धाविभागपक्षे दिवसस्य प्रथमः प्रहरः ॥

इति द्विधाविभागस्तु

यथा चैवापरः पक्षः पूर्वपक्षाद् विशिष्यते ।

तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ॥

इति मनुः ३-२७८

त्रेधाविभागश्च ।

ऊर्ध्वं सूर्योदयात्प्रोक्तं मुहूर्त्तानां तु पञ्चकम् ।

पूर्वाह्णः पञ्चकं प्रोक्तो मध्याह्नस्तु ततः परम् ॥

अपराह्णस्तथा प्रोक्तो मुहूर्त्तानां तु पञ्चकम् ॥

इति पञ्चधाविभागोऽपि स्मृतिषूक्तः—

मुहूर्त्तत्रितयं प्रातस्तावानेव तु संगवः ।

मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णश्च तादृशः ।

सायाह्नस्त्रिमुहुर्त्तः स्यात् सर्वधर्मबहिष्कृतः ॥ इति

**पूर्वेद्युः**—अष्टकापूर्वदिनविहितं श्राद्धम्

अन्वष्टक्यं च पूर्वेद्युर्मासि मास्यथ पार्वतीम् ।

काम्यमभ्युदयेष्टम्या मेकोद्दिष्टमथाष्टम्म् ।

अस्यार्थः अष्टकाश्राद्धेषु नवमीश्राद्धमन्वष्टक्यं सप्तम्यां क्रियमाणं पूर्वेद्युः ॥ इति मदनपारिजाते-५८४

**पृतना**—सेना ।

गणनया तिस्रः वाहिन्योऽपि पृतना ।

एका वाहिनी ८१ जना +८१ रथा +२४३ अश्वाः ४०५ पदातयः ॥

एषां त्रिगुणसंख्यान्विता पृतना ।

प्रमाणमक्षौहिणीशब्दे मृग्यम् ।

दशोत्तरशतान्यष्टौ रथास्तावद् गजामताः ।

त्रिंशच्चतुः शतान्येव द्वे सहस्रे च वाजिनः ॥

पदातयश्च पञ्चाशत् सहस्राणां चतुष्टयम् ।

पृतनेत्युच्यते धीरैः सैन्यसंख्यानकोविदैः ॥

इति वीरसर्वस्वे-२८५

पृथक्पिण्डः समानोदकः ।

बाले देशान्तरस्थे च पृथक्पिण्डे च संस्थिते ।

सवासा जलमाप्लुत्य सद्य एव विशुद्ध्यति ॥

मनुः ५-७८

पृथुकः—चिपिटकः ।

शर्कराः क्षीरसंयुक्ताः पृथुका नित्यमक्षयाः ॥

इति कालसारे मार्कण्डेयः

पृथुका चिपिटा इति कल्पतरु ।

अङ्गारभृष्टकणिशगलिता धान्यकणाः पृथुका इति

हेमाद्रिः परिशिष्ट-६०४

व्रीहयस्त्वर्द्धपक्वाश्च तप्तास्ते पृथुकाः स्मृताः ।

अकुला गुरवो वृष्या मधुरा बलकारिण इति आचारेन्दौ

स च गणेशप्रियत्वेनोक्तः विद्याकरपद्धतौ प्रपञ्चसारे-

मोदकैः पृथुकैर्लाजैः सक्तुभिश्चेक्षुपर्वभिः ।

नारिकेलैस्तिलैः शुद्धैः सुपक्वैः कदलीफलैः ॥

अष्टद्रव्याणि विघ्नस्य कथितानि मनीषिभिः । इति

द्विःस्विन्नमन्नं पृथुकं शुद्धं देशविशेषके ।

नात्यन्तशस्तं विप्राणां भक्षणे न निवेदने ॥ इति

ब्रह्मवै-ब्रह्म-२७-१८

पृथुकतण्डुलाः भृष्टानां व्रीहीणां तण्डुला पृथक्कृताः ।

पृथक्तण्डुला इति उज्ज्वलावृत्तिः ।

आपस्त-१-५-१७-१९

आचारसारे पृथक्तण्डुल इति पाठो गृहीतः ।

अर्थस्तु "चिपिटकः" चुडा इति प्रसिद्धः इति

प्रदर्शितः ।

पृथक्कृताः तण्डुलाः पृथक्तण्डुला इति समीचीनम् ॥

अपि तु पृथुकृताः तण्डुला इति समीचीनमिव

प्रतिभाति ॥

पृथूकः—सरस्वत्या दक्षिणतीरे वर्त्तमानः पेहोवा नामकं

स्थानम् ।

सरस्वत्युत्तरे तीर्थे यस्त्यजेदात्मन स्तनुम् ।

पृथूदके जप्यपरो नैतस्य मरणं भवेदिति ॥

वामनपु ३८-२०

पृश्नीपर्णी दन्तकाष्ठयोग्यो वृक्षः हारीतः ४-७

पृषतः—(१) जलविन्दुः । अमरः १-१०-६

(२) चित्रमृग इति हेमाद्रिः बिन्दुचित्रितो मृग इति

कल्पतरुः ।

पृषत्—चित्रमृग इति विज्ञानेश्वरः १-२५८

पृषदाज्यम्—दधिमिश्रितमाज्यं संस्कारयुक्तम् ।

सर्पिषि दध्यानयति एवमेतत् पृषदाज्यम् ।

पृषदाज्यं घृते दधिप्रक्षेपाद् भवति इति ॥

हरिहरःपारस्क २-१६-३

पृषदाज्यमितिप्रोक्तं दधिसर्पिरिति द्वियम् ।

क्षीरे श्रृतोष्णे दधियुज्यामिक्षेति द्विसम्भवात् ॥

परिभाषाप्रकाशे-११३

**पृषातकम्**— (१) घृतपयसी ।

पयो यदाज्यसंयुक्तं तत् पृषातकमुच्यते ॥

दध्येके इति कात्यायन: २६-१२

गोभिलस्मृति ३-१०६

(२) दधिघृते ।

दधिघृतमिश्रः पृषातक इति मानवगृ-२३-६

पृषातकं सदध्याज्ये पृषदाज्यं तदुच्यते ॥ इति कोषे

**पृषितम्**—वृष्टि: ।

विद्युत्स्तनयित्नुपृषितेष्वाकालम् । गोभिल: ३-३-१७

**पृष्ठघातकः**— **पृष्ठघाती**— परोक्षे घातोपायप्रयोक्ता । चमरीपुच्छच्छेत्ता बलीवर्दपुच्छोत्पाटनेन वाणिज्यादिकर्त्ता वेति हेमाद्रि: ।

**पृष्ठवास्तु**—गृहस्योपरि यद्गृहं तत् पृष्ठवास्तु इति कुल्लूक: ।

पृष्ठवास्तुनि कुर्वीत बलिं सर्वात्मभूतये ।

पितृभ्यो बलिशेषं तु सर्वं दक्षिणतो हरेत् ॥

मनु: ३-९१

**पृष्ठानि**—स्तोत्रविशेषः ।

मासि मासि पृष्ठान्युपयन्ति इति कालमाधवे ।

**पृष्ठोपघाती**—पृष्ठमैथुनकर्त्ता ।

परोक्षापकरणशीले वा चमरीपुच्छच्छेत्ता वा इति

मित्रमिश्रः श्राद्धप्रकाशे-९६

मन्मते परोक्षापकारी इति समीचीनः अर्थः ॥

**पृष्ठ्यः**—सोमयागे षण्णामहर्विशेषाणां गणः अभिप्लवः

पृष्ठयश्च कालमाधव-२

त्रिवृत्स्तोमसाध्यं प्रथममह ।

पञ्चदशस्तोमसाध्यं द्वितीयम् ॥

सप्तदशस्तोमसाध्यं तृतीयम् । एकविंशस्तोमसाध्यं चतुर्थम् ।

त्रिणवस्तोमसाध्यं पञ्चमं । त्रयस्त्रिंशस्तोमसाध्यं षष्ठमहः

सोऽयं षड़हः पृष्ठ्य इत्युच्यते ।

**पेचकः**—(१) गजपुच्छमूलप्रदेश इति मित्रमिश्रः ।

अरत्निद्वयमानं तु पेचकात् पश्चिमासनम् ॥

इति भद्रगजलक्षणे

तथा तत्र बार्हस्पत्यसंहितायाम् ।

पेचकात् प्रतिमानं तु आयामो रत्नयो नव ।

मध्यदेशे तथा नाहो दशरत्नि: प्रकीर्त्तितः ॥ इति

(२) दिवान्धः पक्षिविशेषः ।

**पेयूषम्**—नवप्रसूतायाः गोः क्षीरम् ।

लोहितान् वृक्षनिर्यासन् व्रश्चनप्रभवांस्तथा ।

शेलुं गव्यं च पेयूषं प्रयत्नेन विवर्जयेत् ॥

मनु: ५-६

स्मृतिचन्द्रिकायां पीयूषमिति पाठः ॥ श्राद्ध-२३२

**पेशी**—(१) पेश्यः मांसलाकाराः ऊखपिण्डकाद्यङ्गप्रत्यङ्ग संधि पञ्चशत नि भवन्ति इति विज्ञानेश्वरः याज्ञ-३-१००

(२) काहलाख्यवाद्यविशेषः ।

पेश्यः काहला इति नीलकंठ ।

ततो भेर्यश्च पेश्यश्च क्रकचा गोविषाणिकाः ।
सहसैवाभ्यहन्यन्त ततः शब्दो महानभूत ॥
महाभा, भीष्मवध-१-८

**पेषणी**—बृहदुपलादिनिका इति कुल्लूकः ।

बृहदुपला तु भाषायां शिल इति व्यवह्रियते ।
मन्मते तु अत्र पेषणीपदेन व्यवह्रियमाणे मुद्गगोधूमादिपेषणसाधने फलकद्वयात्मक पाषाणवस्तु विशेषे मनोरभिप्रायः सिध्येत् ।
तत्रैव जन्तुवधसम्भावनाधिक्यात् ॥

पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥
मनुः ३-६८

**पैशाचविवाहः**—विवाहविशेष ।

सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति ।
स पापिष्ठो विवाहानां पैशाचश्चाष्टमोऽधमः ॥
मनुः ३-३४

**पैष्टी**—मुख्यसुरा । सा तु पिष्टेन कृता अमेध्यतमा ।

गौड़ी पैष्ठी च माध्वी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः ॥
मनुः ११-९४

**पोगण्डः**—अप्राप्तव्यवहारः ।

बाल आषोडशाद् वर्षात् पोगण्डश्चापि कीर्तितः ।

**पोतम्**—पोइ इति प्रसिद्धमिति निर्णयसिन्धौ ।

वृन्ताकं नालिका पोत कुसुम्भाश्मन्तकानि च ।
शाकानामभक्ष्या इति पैठीनसिः ।

**पोता**—ऋत्विग्विशेषः ।

**पोष्यवर्गः**—माता पिता गुरुभार्य्या प्रजा दीनाः समाश्रिताः ।
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ॥
दक्षस्मृतिः २-३

**पौंश्चल्यम्**—पुंसोदर्शने संभोगाद्यभिलाषशीलत्वम् ।

पौंश्चल्याच्चलचित्ताच्च नैस्नेह्याच्च स्वभावतः ।
रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ॥
मनुः ९-१५

**पौण्डरीकः**—यागविशेषः ।

बकुलागुरुमिश्रेण चन्दनेन सुगन्धिना ।
समालभ्य जगन्नाथं पौण्डरीकफलं लभेत ॥
इति पूजाप्रकाशोद्धृतनारसिंहे ।

**पौंड्रकः**—क्रियालोपात् शूद्रत्वं गतः क्षत्रियः मनुः १०-४४

**पौतविवीतमानम्**—आरण्यपरिमाणविशेषः।

**पौतीकः**—आपादकेति पर्यायाभिधेयं शाकमिति हेमाद्रिः।

आपादकस्थाने उपोदकीतिपाठं शुद्धं मन्ये॥

पालंक्या नालिका पौतीकाशिग्रु-सुमृक इत्यादि

हारीतः॥

**पौनर्भवः**—क्षतायामक्षतायां वा पुनर्भ्वां जातः पुत्रः।

अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः॥

याज्ञ-१-३०

**पौनाशः**—आम्रातकवृक्ष इति कल्पतरुः।

आम्रपौनाशविल्वानामपामार्गशिरीषयोः।

भक्षयेत्प्रातरुत्थाय वाग्यतो दन्तधावनम्।

इति यमः

**पौपिक**—पिष्टकविक्रयी।

**पौरसख्यम्**—सेवानिबन्धनं बान्धवम्।

पौरसख्यं सेवानिबन्धनं बान्धवमिति उज्वलावृत्तिः।

दशवर्षं पौरसख्यं पञ्चवर्षं तु चारणम्।

त्रिवर्षपूर्वः श्रोत्रियः अभिवादनमर्हति॥

आपस्त-१-४-१४-१३

एकपुरवासीनां विद्यादिगुणरहितानां सख्यमिति

कुल्लूकः।

दशाब्दाख्यं पौरसख्यं पञ्चाब्दाख्यं कलाभृताम्।

त्र्यब्दपूर्वं श्रोत्रियाणां स्वल्पेनापि स्वयोनिषु॥

इति मनुः २-१३४

पौरसख्यं सेवानिबन्धनं बान्धवमिति उज्ज्वलावृत्तौ॥

आपस्त १-४-१४-१

**पौरुषम्**—(१) पुरुषकारः।

स्वमेव कर्म दैवाख्यं विद्धि देहान्तरार्जितम्।

तस्मात् पौरुषमेवेह श्रेष्ठमाहुर्मनीषिणः॥ २

प्रतिकूलं तथा दैवं पौरुषेण विहन्यते॥

मत्स्यपु अ २२०-२

(२) दण्डः।

तान् सर्वानभिसन्दध्यात् सामादिभिरुपक्रमैः।

व्यस्तैश्चैव समस्तैश्च पौरुषेण नयेन च।

अत्र पौरुषेण दण्डेन इति कुल्लूकः॥

मनुः ७-५६

**पौर्णमासी**—(१) शुक्लपंचदशीरात्रिः। कालमाधवः २

(२) शुक्लपंचदशी तिथिः।

यः परमविप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी, यः

परमः संनिकर्षः सामावास्या इति गोभिलः॥

**पौष्करः**—पञ्चबीजमिति श्राद्धमयूखे।

**पौस्तिकः**—पुस्तकलेखनकर्मणा जीवतीति पौस्तिकः।

पुस्तकविक्रेता वा मूल्येन पुस्तकलेखको वाऽइति

हेमाद्रिः ।

तस्करकितवाजपालगौस्तिककधक-इत्यादि तत्र

सुमन्तुः ॥

प्यायमाना—शुक्लसप्तमी रात्रिः । कालमाधवः २

प्याया—शुक्लाष्टमी रात्रिः । कालमधवः २

प्रकरः—दण्डसंग्राहक ।

यः राजकीयं दण्डधनं गृह्णाति ।

प्रतिरूपस्य कर्त्तारः प्रेक्षकाः प्रकराश्च ये ।

राजार्थमोषकाश्चैव प्राप्नुयुर्विविधं बधम् ॥

इति व्यवहारकल्पतरौ कात्यायनः

प्रकरी—संगीतशास्त्रप्रसिद्धः गीतविशेषः ।

याज्ञ-३-११३

प्रकर्त्री—योनिक्षतिकर्त्री ।

स्त्रीप्रकृता सकामा समाना द्वादशपणं दण्डं दद्यात् ।

प्रकर्त्री द्विगुणम् कौट-४-१२

प्रकर्म—योनिक्षतिः ।

शूद्राणां च प्रकर्मणः । कौट ३-१५

या तु कन्यां प्रकुर्यात् स्त्री सा सद्यो मौण्ड्यमर्हति ॥

अङ्गुल्योरेव वा च्छेदं खरेणोद्वहनं तथा ॥

मनुः-८-३७०

अदत्तां कन्यां प्रवृत्तकृच्छ्रं चरन् इत्यादि सामविधान

ब्राह्मणे १-८-४

प्रकल्पमानम्—शुक्लसप्तमीदिवसभागः । कालमाधवः २

प्रकालः—निर्दिष्टकालः अवधिरिति भावः । ३०६

याचमानाय दातव्यमप्रकालकृतमृणम् ।

पूर्णविधौ शान्तलाभमभावे च पितुः सुतैः ॥

इति विवादरत्नाकरे बृहस्पतिः प्रकालोऽवधिरिति

चण्डेश्वरः ।

प्रकालनम्—सञ्चारदेशं प्रति गवां नयनम् ।

गाः प्रकाल्यमानाश्चोपकाल्यमानाश्च सदोपतिष्ठेत ।

गव्यो षुण इति सामविधानब्राह्मणम् का-३-३-१

प्रकीर्णः—नृपायत्तव्यवहारः ।

यदुक्तं तत् प्रकीर्णकम् इति वचनात् अष्टादशपद-

व्यवहारेषु यदनुक्तं तत् प्रकीर्णं व्यवहारपदमित्युच्यते ।

बृहस्पतिः—

एषवादिकृताः प्रोक्तो व्यवहारः सतांमतः ।

नृपाश्रयं प्रवक्ष्यामि व्यवहारं प्रकीर्णकम् ॥

स्मृतिचन्द्रिकाव्यवहार-७७१

प्रकीर्णम्—, प्रकीर्णकम्— } अतिपातकादिषु अष्टविधेषु पापेषु यत नोक्तम् । यदनुक्तं तत् प्रकीर्णकम् ।

प्रकीर्णपातके ज्ञात्वा गुरुत्वम् विष्णु ४१-२

**प्रकुंच**—प्रकुंच इति पलस्य नामान्तरं खारीशब्दे द्रष्टव्यम् ।

**प्रकृतिः**—(१) शरीरम् ।

तत्र ये पुण्यकृतस्तेषां प्रकृतयः पराज्वलन्त्य उपलभ्यन्ते इत्यापस्तम्बः २-६-१४-१३

(२) राज्याङ्गम् ।

स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा ।

सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते ॥

मनुः ९-२९४

(३) सांख्यशास्त्रप्रसिद्धं प्रधानम् ।

(४) स्वभावः ।

प्रकृतिविशिष्टं चातुर्वर्ण्यं संस्कारविशेषाश्च ॥

वसिष्ठः ४-१

(५) आदर्शकृत्यम् ।

सपरिकराऽभिहिता प्रकृतिः विकृतिरन्येतिमीमांसकसिद्धान्त इति गोभिलीयस्नानभाष्ये ।

(६) कारणम् ।

पितुर्वा भजते शीलं मातुर्वोभयमेव वा ।

न कथंचन दुर्योनिः प्रकृतिं स्वां नियच्छति ॥

मनुः १०-५९

अत्र प्रकृतिः आत्मकारणमिति कुल्लूकः

**प्रकृष्टम्**—प्रकर्षेण कृष्टं क्षेत्रम् ।

गर्त्तानूपं सुपेकं च समन्तात् क्षेत्रसंयुतम् ।

प्रकृष्टं च कृतं काले वापयन् फलमश्नुते ॥

इतिबृहस्पतिः

**प्रकोष्ठः**—मणिबन्धकूर्परयोर्मध्यभागः ।

प्रकोष्ठस्तस्य चाप्यधः इत्यमरः २-६-८०

प्रकोष्ठो विस्तृतकरो हस्तो मुष्ट्या तु बद्धया ।

सरत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना ॥

**प्रक्रमः**—(१) भूमानविशेषः ।

संसक्तपदविन्यासस्त्रिपदः प्रक्रमः स्मृतः ।

स्मार्त्ते कर्मणि सर्वत्र श्रौते त्वध्वर्युचोदित ॥ इति कात्यायनः-२८-५

साधिके प्रक्रम इति गोभिलः ३-७-१

(२) स्वाभाविकपदक्षेपः ।

अथैनामुदीचीं सप्तपदानि प्रक्रामयति ॥

पारस्कर गृ १-८-१ अत्रसप्तपदानि

(३) आरम्भः ।

एवं प्रक्रमादूर्ध्वम् बौधायनः १-६-१३-६

अत्र प्रक्रम उपक्रम इति गोविन्दस्वामी ।

प्रकामयति सप्तप्रकामान् दक्षिण पादेनकारयति उत्तरोत्तरं वर इति हरिहर प्रक्रमचडभाषायां पाहुण्डइत्युच्यते ॥

**प्रक्षेपः**—वाणिज्यादौ प्रक्षिप्त मूलधनम् । स्वांशो वा फलहेतोरुपायेन कर्म सम्भूय कुर्वताम् ।

आधारभूतः प्रक्षेपस्तेनोत्तिष्ठेयुरंशतः ॥ नारदस्, ४-२

मूलधनं प्रक्षेः इत्युदारार्क -२-२५६

वस्तुमूल्यमिति श्रीमूला ।

प्रक्षेपं पण्यनिष्पत्तिं शुल्कं वृद्धिमवक्रयम् ।

व्ययानन्यांश्च संख्याय स्थापयेदर्धमर्धवित् ॥

कौट-४-२-३६

**प्रगण्डी** —दुर्गप्राकारभित्तौ शूराणामुपवेशनस्थानम् ।

सञ्चारी यत्र लोकानां दूरदेवावबुध्यते ।

प्रगण्डी सा तु विज्ञेया बहिः प्राकारसंज्ञिता ।

स एवाकाशपक्षीति ह्युच्यते शास्त्रकोविदैः ॥

इति भारतभावदीपे

प्रगण्डीं कारयेत् सम्यगाकाशजननीस्तथा ॥

महाभा, शा, ६६-४

**प्रगे**– अह्नः प्रथमोदये इति मेधातिथिः । मनुः ६-६

प्रगे प्रातःकाले इत्याचारसारे गदाधरः ।

न भुञ्जीतोर्ध्वतः स्नेहं नातिसौहित्यमाचरेत् ।

नातिप्रगे नातिसायं न प्रायं सातराशितः ॥

मनुः ४-६२

**प्रग्रहः** –(१) बलीवर्दादि बन्धनरज्जुः पघा इति प्रसिद्धा ।

उपस्करः उपकरणं लाङ्गलादीनां प्रग्रहयोक्त्रादिकम् ॥

मिताक्षरा-२-१६३

विज्ञानसारथिर्यस्तु मनः प्रग्रहबन्धनः ।

सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥

(२) स्रुवस्रुचौर्दण्डश्च । शंखस्मृतिः ७-३२

प्रगृह्यते अस्मिन्निति प्रग्रहो दण्ड इति संस्कारतत्त्वे-१४

खादिरो वाथ पाणौ वा द्विवितस्तिः स्रुवः स्मृतः ।

स्रुग् बाहुमात्रा विज्ञेया वृत्तस्तु प्रग्रहस्तयो ॥

इति कात्यायनस्मृतौ-८-१२

गोभिलस्मृतौ च १-१०६

(३) वृक्षविशेषोऽपि ।

आरेवतो राजवृक्षः प्रग्रहश्चतुरङ्गुल इति वैद्यक-रत्नमालायाम् ॥

(४) विष्णुः ।

प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥

इति महाभा, १३-१४९-६४

(५) आदरः ।

असतां प्रग्रहो यत्र सतां चैवावमानना ।

दण्डादेव कृतस्तत्र सद्यः पतति दारुणः ॥

ब्रह्मपुराणे-२२०-१३६

**प्रचरणम्** –अनुष्ठानम् । इति नरसिंहवाजपेयी

ह्रस्वाः प्रचरण याः स्युः कुशा दीर्घाश्च बर्हिषः ॥

**प्रचलाकः**– कामरूपी कृकलास इत्युज्ज्वलावृत्तौ हरदत्तः ।

आपस्त १-६-२५-१३

डिम्ब इति गोविन्दस्वामी बौधा १-७-८

चलाकः शिखण्डश्च कलापो बर्ह उच्यते इति

हलायुधकोशे का-२

**प्रचारः**—(१) आचरणम्, चेष्टा वा ।

कृत्स्नं चाष्टविधं कर्म पञ्चवर्गं च तत्त्वतः ।

अनुरागापरागौ च प्रचारं मण्डलस्य च ॥

मनुः ७-१५४

(२) मार्गः ।

वस्त्रं पत्रमलंकारं कृतान्नमुदकं स्त्रियः ।

योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते ॥

मनुः ९-२१९

गवादीनां प्रचारमार्ग इति कुल्लूकः

(३) गवादिचरणस्थानम् ।

परिश्रान्तः पिपासार्त आससाद मुनिं वने ।

गवां प्रचारेष्वासीनं फेनमापिबतां पयः ॥

महाभा, १-४०-१८

(४) इति कर्त्तव्यता ।

प्रचारश्च प्राजापत्यपशुवत् ज्ञेयः इति अष्टावक्रभाष्ये

मानवगृ-१-५-५

**प्रच्छन्दकः**—स्वच्छन्दचरः ।

प्रच्छन्दकः स्वच्छन्दचर इति गूढार्थविरक्षाव्या-

ख्याने श्रीमूला कौ-४-४

**प्रजनम्**—(१) उत्पाद म् ।

प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थं च मानवाः ।

तस्मात् साधारणो धर्मः श्रुतौ पत्न्या सहोदितः ॥

मनुः ९-९६

(२) जननेन्द्रिम् ।

मनसीन्दुं दिशः श्रोत्रे क्रान्ते विष्णुं बले हरम् ।

वाच्यग्निं मित्रमुत्सर्गप्रजने च प्रजापतिम् ॥

मनुः १२-१२

यदि हि स्त्री न रोचेत पुमांसं न प्रमोदयेत् ।

अप्रमोदात् पुनः पुंसः प्रजनं न प्रवर्त्तते ॥

मनुः-३-६१

**प्रजा**—(१) सन्ततिः ।

ऋत्विया प्रजां विन्दामहे इति श्रुतिः ।

प्रजनयति इति प्रजा इति नन्दपण्डितः ॥

दत्तकमीमांसायाम्

(२) शासने वर्त्तमाना जनाः ।

दण्डः शास्ति प्रजाः सर्वाः दण्ड एवाभिरक्षति ।

दण्डः सुप्तेषु जागर्त्ति दण्डं धर्मं विदुर्बुधाः ॥

(३) शिष्यादयश्च ।

यानुत्पादयते यानुपनयते यानध्यापयते

यान् याजयते इति सर्वा अस्यैषा प्रजा भवतीति प्रजा

व्याख्याता इति बौधायनगृ, परिशिष्टे १-२-३

द्वयमुह व पुरुषस्य रेतो ब्राह्मणस्योर्द्ध्वं नाभेरधस्तादवाचीन

मन्यत्तदादूर्ध्वं नाभेस्तेन हैतत् प्रजा जायते यद्

ब्राह्मणानुनयति यदध्यापयति यद्याजयति यत् साधु

करोति ।

अथ यदवाचीनं नाभेस्तेनेहास्यौरसी प्रजा जायते ॥

तस्माच्छ्रोत्रियमयचानमप्रज्ञोऽसीति न वदन्तीति ॥

वसिष्ठः-२-५

**प्रजाता**—अचिरप्रसूता स्त्री ।

बालवृद्धतरुणप्रजाताः इत्यादि वसिष्ठः १६-१५

**प्रजातिः**— सन्तानपरम्परा ।

अथाप्यस्य प्रजातिममृतमाम्नाय आह ॥

आपस्त-२-२४-१

**प्रजीवनम्**—ग्रासाच्छादनम् ।

एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ।

शेषाणामानृशंस्यार्थं प्रदद्यात् प्रजीवनम् ॥

मनुः-९-१६३

**प्रज्ञा**—(१) धैर्यम्, प्रकृष्टज्ञानं च ।

(२) अर्थग्रहणशक्तिः ।

प्रज्ञा अर्थग्रहणशक्तिरिति हरदत्तः ॥ आपस्त २-१-२-३

(३) तत्त्वज्ञानम् इति कुल्लूकः ।

इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् ।

तेनास्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम् ॥

मनुः-२-९९

(४) प्रज्ञा त्रैकालिकी बुद्धिरिति श्रीमूला ।

श्रुताद्धि प्रज्ञोपजायते कौट-१-१-५

**प्रज्ञानम्**—शुक्लतृतीयादिनभागः कालमाधवः २

**प्रज्ञापत्रम्**—

**प्रज्ञापनापत्रम्**—

ऋत्विक्पुरोहिताचार्यमान्येष्व
भ्यर्चितेषु तु । कार्यं निवेद्यते येन
पत्रं प्रज्ञापनाय तत् ॥

इति व्यवहारमयूखे वसिष्ठः

पत्रं प्रज्ञापनात्मकमिति पाठान्तरम् ॥

अयं श्लोकः उपलब्धवसिष्ठस्मृतौ नास्ति

**प्रणप्ता**— प्रपौत्रः ।

**प्रणवः**— ओँकारः ।

सव्याहृतिः स प्रणवाः प्राणायामास्तु षोडश ।

अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः ॥

मनुः-११-२४८

प्रणवस्य ऋषिर्ब्रह्मा गायत्रीच्छन्द एव च ।

देवोऽग्निः परमात्मा स्याद् योगो वै सर्वकर्मसु ॥

अग्निपु-२१५-३२

**प्रणयनम्**—स्थापनम् ।

शालाग्नेरग्निं प्रणयन्ति इति गोभिलः ३-७-३

**प्रणाली**— (१) यथा जलाशयं प्रति जलाधारान्तराज्जल

मागच्छति ।

काष्ठादिमयी जलनिर्गमोपायः प्रणालीति

अपरार्कः २-१५४

प्रणाली जलनिर्गममार्ग इति चण्डेश्वरः विवादरत्नाकरे

२१६

कृत्रिमजलनिःसारणमार्ग इति अमरव्याख्याने ।

मेखलाभ्रमनिष्कासवाक्षान् नोपरोधयेत् ।

गृहवास्तुप्रणालीं च पीड़यन् दण्डभाग् भवेत् ।।

इति कात्यायनः ७५२

(२) प्रणाली परम्परा इति दायभागव्याख्याने

रामभद्रः ।

प्रणाल्या ज्योतिष्टोमोपकारकत्वेऽपि भोजनस्य साक्षात्

तृप्त्यर्थत्वात् इति दायभागे जीमूतवाहनः

**प्रणिधिः**—चरः ।

सन्ध्यां चोपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत् ।

रहस्याख्यायिनां चैव प्रणिधीनां च चेष्टितम् ।।

मनुः ७-१५३

**प्रणिपातः**—प्रकर्षेण नीचैः पतनं प्रणिपातः ।

दीर्घनमस्कार इति श्रीशङ्कराचार्याः ।।

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।।

भ. गीता-४-३४

**प्रणीतः**—प्रणीतः वैदिकसंस्कारसंस्कृत इति आह्निके

मित्रमिश्रः-४४२

कल्पतरुरपि नियत-१७७

प्रणीत आहित इति कुल्लूकः ।

अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ।।

प्रणीतश्चाऽप्रणीतश्च यथाग्निर्दैवतं महत् ।।

मनुः ९-३१७

**प्रणीता**— (१) कर्मसम्पादनार्थं कर्माङ्गत्वेन सम्पादिता

आपः ।

(२) यज्ञपात्रविशेषः । यत्र प्रणीताजलं स्थाप्यते

प्रणीतापात्रं वारणं चतुरङ्गुलविलं चमसवत् ।।

**प्रणीताप्रणयनम्**—अश्वत्थकाष्ठनिर्मितं चतुरङ्गुलदण्डम्

अष्टाङ्गुलविलं प्रादेशमात्रं प्रणीतानामकं जलं नयते

अनेनेति करणव्युत्पत्त्या प्रणीताप्रणयनमित्युच्यते इति

श्रौपः निर्वचने ।।

**प्रतानः**—तुपुषालाबूप्रभृतयस्तन्तुयुक्ता लताः ।

प्रतानास्तन्तुयुक्तास्त्र पुषालाबूप्रभृतय इति कुल्लूकः ।

मनुः-१-४८

प्रतानाः काण्डप्ररोहरहिताः सरलयायिन्यः सारिवा-

प्रभृतय इति विज्ञानेश्वर ।। याज्ञः २-२१९

प्रताना वल्लरीति विश्वरूपः ।

लता वल्यः ता एव स्थूलाः प्रताना इत्यपरार्कः ।।

**प्रतिकर्म**— (१) प्रतिकारः ।

उषितास्मो वने वासं प्रतिकर्म चिकीर्षवः ।

कोपं नार्हसि नः कर्तुं सदासमरदुर्जय ।।

महाभा विरा ५१-१८

(२) अङ्गसंस्कारः ।

आकल्पो मण्डनं वेषः प्रतिकर्म प्रसाधनम् ।

भर्त्तरि प्रवसितेऽप्रतिकर्मक्रिया ।। विष्णु, २५-९

अत्र प्रतिकर्म अलंकरणम् ।।

प्रतिकीलः—क्षुद्रकील इति कैयटः।

पचिकीला इति भाषायाम्।

कील आहन्यमानः प्रतिकीलं निर्हन्ति इति पातञ्जलमहाभाष्ये २-२-१

प्रतिकृतिः—आकारस्य प्रतिनिधिः।

प्रतिकृतिं कुशमयीं तीर्थवारिषु मज्जयेत्।

यमुद्दिश्य निमज्जेत द्वादशांशं फलं लभेत्॥

अत्रिसंहिता-५१

प्रतिकृष्टम्— (वस्त्रम्) निकृष्टं जीर्णं मलवत् स्थूलं च।

तद्विपरीतमप्रतिकृष्टमिति हरदत्तः॥

आपस्त १-११-३१-१३

प्रतिक्रेता प्रतियोगिक्रेता।

प्रतिक्रेतृभयाद् वा पण्यमूल्यादुपरि मूल्यं वर्द्धयतः मूल्यवृद्धिं राजा हरेत्॥ कौट-२-२१

प्रतिक्रोष्टा—क्रयविक्रयस्थाने य आग्रहात् पूर्वक्रेतुरिच्छापेक्षया द्रव्यमूल्यं वर्द्धयति।

विक्रयप्रतिक्रोष्टा शुल्कं दद्यात्॥ कौट-३-६

अथवा विक्रयादिव्याघातकः॥

प्रतिग्रहः—अर्चनापूर्वं प्रदत्तस्य वस्तुनः स्वीकारः।

प्रतिश्रुतद्रव्येऽपि प्रतिग्रहः स्मर्यते॥

तथा नारदः ४-७

याच्यमानं न दद्याच्चेदृणं वाधिप्रतिग्रहम्।

तद्द्रव्यं वाधते तावद् यावत् कोटिशतं भवेत्।

अत्र प्रतिश्रुत इति व्यवहारप्रकाशे॥

प्रतिचारः— (१) शूद्रः।

प्रतिचारः शूद्र इति मित्रमिश्राः पूजाप्रकाशे-२

पूजाप्रकाशे देवीपुराणोक्तं ब्रह्मवाक्यम्।

एतासां शास्त्रवेत्ता यो देवपूजाविधौ शुभः।

मातृमण्डलवेत्ता च ब्राह्मणः क्षत्रियोऽथवा॥

प्रतिचारोऽथ वैश्यो वाऽप्यन्यो वा तन्त्रविद्यदि।

पूजाविधौ भवेच्छ्रेष्ठो नापटुर्न कुशीलवः।

नानैष्ठिको दाम्भिको वा पूजका प्राप्येते शुभः॥

(२) प्रच्छन्नः चरः। ये चाराः चाराणां दोषविज्ञानाय नियुक्ताः।

जनपदचरितज्ञानाय प्रच्छन्नचारी इति राजनीतिप्रकाशे १-६

तच्चरितज्ञः प्रच्छन्नः प्रतिचारः॥

विशेषेण चारप्रतिचारौ मन्त्रप्रणिधयश्च सर्पा इति शंखलिखितौ

(३) अभिचारस्य वैपरीत्याचरणम्।

कालमाधवे-पृ-४७

बाधके शत्रौ प्रत्यासन्ने सति तदेवाभिचारस्य कर्त्तव्यत्वात् प्रतिचारस्यापि स एव कालः॥ इति

**प्रतिज्ञा**—अर्थिनः राज्ञि निवेदनपत्रम् ।

भाषा प्रतिज्ञा पक्ष इति नार्थान्तरम् ॥ मिता २-६

अस्या लक्षणं पक्षशब्दे द्रष्टव्यम् ।

**प्रतिदत्तम्**—प्रत्यर्पितम् ।

**प्रतिदानम्**—प्रत्यर्पणम् ।

प्रतिश्रवः प्रतिदानश्रवणाय शुद्धिपत्रमिति व्यवहार-मयूखे नीलकण्ठः ।

विक्रेतुः प्रतिदेयं तत क्रेता मूल्यमवाप्नुयात् ॥

इति विवादरत्नाकरे पृ-१९९ नारदः

**प्रतिनिधिः**— स्थानपूरकः ।

अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा ।

पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात् प्रयत्नतः ॥

अत्रिसंहिता-५२

**प्रतिन्यासः**—परस्परन्यासः ।

प्रयोजनापेक्षया त्वयेदं मदीयं मयेदं त्वदीयं रक्ष्यते इति एवंप्रकारो न्यासः ॥ इति मिता २-६७

प्रतिन्यासः परस्परन्यास इति विवादरत्नाकरे ॥

व्यवहारकल्पतरौ च ३८८

**प्रतिपत्**— (१) व्यवस्था ।

पतिपत् व्यवस्था इति चण्डेश्वरः ।

आधिमेकं द्वयोर्यत्र कुर्यात् काप्रतिपद्भवेत् ।

द्वयोः पूर्वतरं ग्राह्यमाधाता चौरदण्डभाक् ॥

इति विवादरत्नाकरे कात्यायनः पृ-३५

(२) प्रारम्भः ।

प्रतिपत् प्रारम्भ इति कालमाधवे ।

(३) प्रथमा तिथि ।

**प्रतिपत्तिः**— (१) सत्योत्तरं स्वीकार इति यावत् ।

यथा सुवर्णशताभियोगे सत्यं धारयामि इति उत्तरम् ।

साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता ॥

इति कात्यायनः मिता-२-७

पतिपत्तौ न सा भवेत् । याज्ञ २-८०

(२) स्वीकारः ।

प्रेषितस्तदैव प्रतिपद्येत ॥ आपस्त १-२-७-२५

(३) निश्चयः ।

(४) ज्ञानम् ।

(५) फलशून्यं कर्माङ्गम् ।

आकीर्णस्य द्रव्यस्य विहितदेशप्रक्षेपः प्रतिपत्तिः ।

**प्रतिपन्नः**—अङ्गीकृतः अनुमतो वा ।

यथा मातृत्वेन प्रतिपन्नः मिताक्षरा-२-१३७

सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः ॥ इति

अत्र पतिपन्ना मातृभगिन्य इति हेमाद्रिः ।

**प्रतिपादनम्**— दानम् । आपस्त-२-८-१९-१९

न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ।

अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥

महाभा, उद्-३३-५९

प्रतिप्रणप्ता— पुत्रस्य प्रपौत्रः ।

सकुल्यो विभक्तपिण्डः प्रतिपणप्तृतः प्रभृति

पुरुषत्रयमधस्तनं वृद्धप्रपितामहादिसन्ततिश्चेति दाय-

भागे जीमूतवाहनः ११-६

प्रतिप्रदानम् — ऋणम् ।

प्रतिप्रदानशब्दे न ऋणमुच्यते इति व्यवहारनिर्णये

वरदराजः । व्यव-४२६

रिक्थं प्रतिप्रदानं तु दत्त्वा शेषं विभाजयेत् ।

आचतुर्थात्तु तद्ग्राह्यं क्रमेणैव तु तत्सुतैः ॥

इति तत्र कात्यायनः

प्रतिप्रश्नः – प्रश्नोपरि प्रश्नः ।

विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च ।

प्रियपूर्वं प्राड्वदति प्राड्विवाकोऽभिधीयते ॥

इति बृहस्पतिः १-६६ व्यवहारकल्पतरौ-२५

प्रतिप्रसवः— निषिद्धस्य पुनरभ्यनुज्ञानम् । इति हरिहर-

भाष्ये पारस्करः २-५-४३

प्रतिप्रस्थाता—ऋत्विग्विशेषः ।

वरुणप्रघासाख्ये पर्वणि वारुण्यां वेद्यां व्यापारकर्त्ता

अध्वर्युसदृशः ऋत्विक्पञ्चमः प्रतिप्रस्थाता ।

प्रतिभागः—अधिकारिपु उपहारः भेटि इति ख्यातः ।

प्रतिभागः फलाभरणिकाद्युपायनम् इति मेधातिथिः ।

प्रीत्योपढौकितमिति मन्वर्थविवृतिः ।

फलकुसुमशाकतृणाद्युपायनमिति कुल्लूकः ।

इति धर्मकोषे

प्रतिभूः— लग्नकः जामिनदार इति ख्यातः ।

स च त्रिविधः दर्शनप्रतिभूः दानप्रतिभूः प्रत्यय-

प्रतिभूश्चेति ॥

दर्शने प्रत्यये दाने प्रतिभाव्यं विधीयते ॥ इति

विष्णुयाज्ञवल्क्यौ याज्ञ-२-५३

उपस्थानाय दानाय प्रत्ययाय तथैव च ।

त्रिविधः प्रतिभूर्दृष्टस्त्रिष्वेवार्थेषु सूरिभिः ॥

इति नारदः ४-११८

बृहस्पतिस्तु प्रतिभुवश्चातुर्विध्यमाह ।

दर्शने प्रत्यये दाने ऋणिद्रव्यार्पणे तथा ॥

चतुःप्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिः ।

आहैको दर्शयाम्येनं साधुरेषोऽपरोऽब्रवीत् ।

दाताहमेतद्द्रविणमर्पयाम्यपरो वदेत् ॥

इति विवादरत्नाकरे पृ-४१

हारीतमते प्रतिभूः पञ्चधा तदुक्तं व्यवहारप्रकाशे ।

अभये प्रत्ययेदाने उपस्थाने प्रदर्शने ।

पञ्चस्वेषु प्रकारेषु प्र ह्यो हि प्रतिभूर्बुधैः ॥

लेख्ये कृते च दिव्ये वा दानप्रत्ययदर्शने ।

गृहीतबन्धोपस्थाने ऋणिकस्य गृहद्रव्यादि आनीय

अर्पयिष्यामीति प्रतिज्ञा कर्त्ता प्रतिभूः इति मित्रमिश्रः

प्रतिमानम्—(१) क्रयविक्रयद्रव्यतुला प्रतिनिधीभूतं वस्तु ।

तुलामान प्रतिमान व्यवहारार्थसंस्थापनं देशद्रव्यानुरूपम् इति शंखलिखितौ।

तुलामानं प्रतिमानं सर्वं च स्यात् सुलक्षितम् इति
मनुः-८४०३

अत्र प्रतिमानं प्रस्थद्रोणादि इति कुल्लूकः।

किन्तुप्रतिमानशब्दः मानप्रतिनिधिरत्रेति मन्मतम्।

(२) ललाटः।

प्रतिमानेषु ललाटेषु इति महाभारतव्याख्याने
नीलकण्ठः।

प्रतिमानेषु गात्रेषु पार्श्वेष्वपि च वारणान्।
आशुगा विमलास्तीक्ष्णाः सम्पेतुर्भुजगोपमाः ॥
भीष्मवध प, ४६-२६

गजदन्तद्वयान्तरालम् इति मित्रमिश्राः।

प्रतिमानं तु विज्ञेयं हस्तः स चतुरङ्गुलः ॥ इति
मन्दगजलक्षणे

**प्रतिराजः**—प्रतिकूलनृपतिः।

प्रतिराजस्य कर्त्तव्ये इति कुल्लूकः मनुः ७-६७

**प्रतिरूपम्**—मुद्रालेख्यादेरनुकरणम्। जाल् इति भाषायाम्।

प्रतिरूपकं वेशान्तरग्रहणमिति दानमयूखे-६

**प्रतिरूपकः** (१) परप्रवञ्चनार्थं मणिसुवर्णादेः प्रतिकृतिकर्त्ता।

(२) प्रतिनिधिः।

प्रमापणे प्राणभृतां दद्यात्तत्प्रतिरूपकम् इति
तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः ॥
इति पराशरः ९-२६

**प्रतिलाभः**—प्रत्युपकारः।

प्रयोगश्चास्य अदत्तशब्दे द्रष्टव्यः।

**प्रतिलोमजः**—उच्चवर्णस्त्रियां नीचवर्णपुरुषेण जातः।

**प्रतिवाचः**—परस्परनिन्दा स्वप्रशंसा चेति नीलकण्ठः।

लाङ्गूलचालनं क्ष्वेडा प्रतिवाचो विवर्त्तनम्।
दन्तदर्शनमारावस्ततो युद्धं प्रवर्त्तते ॥
महाभा, उद्-७२-७१

**प्रतिवादी**—प्रत्यर्थी।

सदार्पितोऽर्थिना योन्यः परो धर्माधिकारिणि।
प्रतिवादी स विज्ञेयः प्रतिपन्नश्च यः स्वयम्॥

**प्रतिवेशः**— (१) स्वगृहाभिमुखगृहवासी स्वगृहपार्श्वस्थः च।

स्ववेश्माभिमुखः स्ववेश्मपार्श्वस्थश्चोच्यते॥
मिता-२-२६३

(२) श्रमापनोदनाय गृहसमीपे यद् गृहम्।

प्रतिवेशः श्रमापनयनस्थानमासन्नगृहमित्यर्थ इति शंकराचार्याः।

प्रतिवेशोऽसि प्रमा पाहि प्रमा पद्यस्व ॥
तैत्ति उ, १-४-३

**प्रतिवेशी**—यः प्रतिकूलं वसति स्ववेश्माभिमुख इत्यर्थः। अपरश्च स्ववेश्मपार्श्वस्थः॥ प्रतिवेशशब्दो द्रष्टव्यः॥

**प्रतिशीर्षः**— प्रतिनिधिः ।

तवाहमित्युपगतो युद्धे प्राप्तः पणे जितः ।
प्रतिशीर्षप्रदानेन मुच्येरन्नल्पकर्मणा ॥

प्रतिशीर्षः प्रतिनिधिरिति व्यवहारमयूखे-१२६

प्रतिशीर्षः प्रदानेन तुल्यदासदानेन इति व्यवहार-कल्पतरौ-३६२

**प्रतिश्रयः**— (१) धर्मशालाः । स्वल्पकालार्थं प्रवासि-वासगृहम् ।

प्रवासिनां वासार्थं गृहमिति विज्ञानेश्वरः ।

प्रतिशयो धर्मशाला इति दानमयूखे-१८६

सत्रशाला प्रतिश्रय इति हलायुधः ॥

यः सम्प्रति धर्मशालेत्युच्यते ।

प्रतिशय तथा शय्यां पादाभ्यङ्गं सदीपकम् ।
प्रत्येकदानेनाप्नोति गोप्रदान समंफलम् ॥

विष्णुस्मृतिः ६७-४६

प्रतिशयं पादशौचं ब्राह्मणानां च तर्पणमिति वेदव्या-सस्मृतिः-४-७

औषधं पथ्यमाहारं स्नेहाश्यङ्गं प्रतिशयम् ।
यः प्रयच्छति रोगिभ्यः स भवेद् व्याधिवर्जित ॥

इति सम्वर्त्तः ८५

(२) निवासश्च ।

चण्डालश्वपचानां तु बहिर्ग्रामात् प्रतिशयः ।

मनुः १०-५१

प्रतिशयः निकेतनमिति स्मृतिचन्द्रिका-२३७

**प्रतिश्रवः**— (१) प्राप्तिस्वीकार पत्रम् ।

येनऋणपत्रादेः निष्क्रियत्वं प्रतिपादितं भवेत् ।

लेख्यं दद्याद् विशुद्धेर्णे तदभावे प्रतिश्रवः ।
धनिकर्णिकयोरेवं विशुद्धिः स्यात्परस्परम् ॥

इति व्यवहारमयूखे नारदः

प्रतिश्रवः प्रतिदानश्रवणाय शुद्धिपत्रमिति तत्र नीलकण्ठः । चण्डेश्वरस्तु विवादरत्नाकरे प्रतिश्रवः लोके दत्तमनेनेति ख्यापनमिति ॥

(२) प्रतिश्रवः प्रतिवचनमिति स्मृतिचन्द्रिका श्राद्ध-१६७

**प्रतिश्रवणम्**— (१) आज्ञाङ्गीकारः प्रतिवचनम् ।

प्रतिश्रवणसम्भाषे शयानो न समाचरेत् ॥

मनुः २-१९५

(२) प्रतिश्रुतिः, स्वीकृतिः ।

**प्रतिष्ठा**— (१) मन्त्राणां विनियोगः ।

(२) प्रतिमा ।

प्रतिष्ठा प्रतिमा इति मित्रमिश्रः ।

चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम् ।

इति पूजाप्रकाशे

(३) आश्रयः ।

गौरी त्वमेव शशिमौलिकृतप्रतिष्ठा इति शक्रादिस्तुतौ ।

(४) संस्कारविशेषः ।

**प्रतिष्ठानम्**— (१) प्रतिष्ठानम् आश्रयः इति परिभाषा-प्रकाशे मित्रमिश्रः ८७ ब्राह्मणशब्दो द्रष्टव्यः ।

(२) प्रतिष्ठानं विनियोग इति कल्पतरुः।

(३) प्रतिष्ठानं प्रतिष्ठा स्थितिरित्यर्थः इति हरिहर पारस्क-३-१६-१

(४) प्रतिकारः।

आगामिनमनर्थं हि प्रतिष्ठानशतैरपि।
न निवारयितुं शक्तस्तत्र का परिवेदना॥

इति हरिहरभाष्ये-पारस्क-३-१६

(५) वृक्षादीनां रोपणम्।

सुभूमि च सुमूलं च सुप्रतिष्ठानमेव च।
वृक्षं पुष्पफलोपेतं बहुशाखं स पश्यति॥

इति बौधायनगृह्यपरिभाषासूत्रे-१-६)१६

**प्रतिष्ठिततला**— यस्याः स्त्रियाः पादयोरधोभागः समग्रतया भूमिं स्पृशति सा।

प्रतिष्ठिततलाः सम्यक्संलग्नभूभाग पादाधर तला इति कल्पतरौ गार्हस्थ्य-१२

**प्रतिष्ठिता**—(१) सपुत्रा (स्त्री)।

स्त्री धनं दुहितृणामप्रत्ता नामप्रतिष्ठितानां च॥

इति गौतमः ३-१०-२२

प्रतिष्ठिताः पुत्रैः तुल्याः।

अप्रतिष्ठिताः अपजाः।

प्रजावै प्रतिष्ठेति ब्राह्मणवादात् निर्द्धना वा॥

इति व्यवहारनिर्णये-४६३

सधना सपुत्रा वेति मतान्तरम्।

(२) राज्ञा पुरे ग्रामे वा निर्णयार्थं स्थापिता सभा।

प्रतिष्ठिताऽप्रतिष्ठिता मुद्रिता साक्षिता तथा।
चतुर्विधा सभाप्रोक्ता सभ्याश्चैव तथाविधाः॥

इति व्यवहारकल्पतरौ-२६

प्रतिष्ठिता पुरे ग्रामे चला नामा प्रतिष्ठिता।
मुद्रित ध्यक्षसंयुक्ता राजयुक्ता च शासिता॥

वृहस्पति

**प्रतिष्ठितिः**— रोपणम्।

ज्ञानं सुभूमिराचारो मूलंश्रद्धा प्रतिष्ठितिः।
क्षमाऽहिंसा दमः शाखाः सत्यं पुष्पफलोपगम्।

इति बौधायन गृह्यपरिभाषासूत्रे-१-६-१७

**प्रतिसंस्कारः**— पुनः संस्कारः।

मरामति इति भाषायां प्रसिद्धः।

तडागभेदकं हन्यादप्सु शुद्धवधेन वा।
यद्वापि प्रतिसंस्कुर्याद् दाप्यस्तूत्तम साहसम्॥

मनुः ९-२७९

**प्रतिसंहारः**— त्यागः।

न पुनः प्रतिसंहरेत आपस्त-१-२-८-७

**प्रतिसंचरः**— प्रलयः।

चतुर्युगसहस्रान्ते सम्प्राप्ते प्रतिसंचरे।
आत्मसंस्थाः प्रजाः कर्त्तुं प्रतिपदे प्रजापतिः॥

कूर्मपु-२-४४ अध्याये

नित्यं नैमित्तिकं चैव प्राकृतात्यन्तिके तथा।
चतुर्द्धायं पुराणेऽस्मिन् प्रोच्यते प्रतिसंचरः॥

इति कौर्मे

तस्यान्ते सर्वसत्त्वानां स्वहेतौ प्रकृतौ लयः ।

तेनायं प्रोच्यते सद्भिः प्राकृतः प्रतिसंचरः ॥

कूर्मपु २-५ अध्याये

**प्रतिसरः**— यजमानस्य दक्षिणहस्ते पत्न्या वामहस्ते

ब्राह्मणैः समन्त्रकं बध्यमानं सूत्रं प्रतिसरः ।

कङ्कणं हस्तसूत्रं च विदुः प्रतिसरं बुधाः ॥

इति हलायुधः का, २

सूत्रमयः प्रतिसर इति अष्टवक्रभाष्ये । मानवगृ-२-६-४

हस्ते तन्तुमयः कंकण इति राजनीतिप्रकाशे-१७०

पटादिरचितसूत्रम् इति कृत्यरत्नाकरे-५७६

**प्रतिसर्गः** (१) संहार ।

प्रतिसर्गः संहार इति परिभाषाप्रकाशे मित्रमिश्रः-११

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।

वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥

कौर्मे—

ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि ।

प्रलयः प्रतिसर्गोऽयं कालचिन्तापरैर्द्विजैः ॥ इति

महदाद्यं विशेषान्तं यदा संयाति संक्षयम् ।

प्राकृत प्रतिसर्गोऽयं प्रोच्यते कालचिन्तकैः ॥

कूर्मपु-२-४४ अध्याये

(२) ब्रह्मसृष्ट्यनन्तरं दक्षादीनां सृष्टिः ।

तदुक्तं मात्स्ये-८ अध्याये

आदिसर्गस्त्वया सूत कथितो विस्तरेण च ।

प्रतिसर्गश्च ये येषामधिपास्तान् वदस्व नः ॥ इति

कालिकापुराणे—

वाराहोऽयं स्मृतः सर्गो वराहाधिष्ठितो यतः ।

प्रतिसर्गः स्मृतः सो वै दक्षाद्यैर्यः कृतः पृथक् ॥

रुद्रो विराड् मनुर्दक्षो मरीच्याद्यास्तु मानवाः ।

यं यं सर्गं पृथक् चक्रुः प्रतिसर्गः स स स्मृतः ॥

**प्रतिसूर्यः**—सूर्यसमीपे तदाकृतिः प्रतिसूर्य इति

उज्वलाकारः । आपस्त-१-३-११-३१

**प्रतिहर्त्ता**— ऋत्विग्विशेषः ।

बभूव स स्वयं धीमानध्वर्युर्यज्ञकर्मणि ।

तस्मिम् होता च शाण्डिल्यो ब्रह्मा गौतम एव च ॥ ५

आग्नीध्रश्च्यवनो नाम मैत्रावरुणः कार्मिकः ।

उद्गाता याज्ञवल्क्यश्च प्रतिहर्त्ता च जैमिनिः ॥ ६

प्रस्तोता शङ्कुवर्णश्च तथोन्नेता च गालवः ।

पुलस्त्यो ब्राह्मणाच्छंशी होता गर्गो मुनीश्वरः ॥ ७

नेष्टा चैव तथात्रेस्तु अच्छावाको भृगुः स्वयम् ।

तान् सर्वानृत्विजश्चक्रे त्रिशङ्कुः श्राद्धयान्वितः ॥ ८

स्वयं विश्वामित्रः ।

**प्रतिहस्तकः**— प्रतिनिधिः ।

भर्त्ता पुत्रः पुरोधाश्च भ्राता पत्नी सखापि च ।

यात्रायां धर्मकार्येषु जायन्ते पतिहस्तकाः ।

इति निर्णयसिन्धुकालसारयोः स्कान्दे ।

**प्रतिहारः**— (१) द्वारपालः ।

ज्ञातो हि प्रतिदेवी भाग,वते १-१७-३०

(२) इन्द्रजालम् ।

प्रतिहारः इन्द्रजालमितिश्राद्धकाण्डे कल्पतरुः ।

(३) सन्धिविशेषः ।

मयाऽस्योपकृतं पूर्वमयंचोपकरिष्यति ।

इति यः क्रियते सन्धिः प्रतीहारः स उच्यते ॥

(४) सप्तधाविभक्तस्य दिवसस्य पञ्चमोभागः ।

अथ यदूर्ध्वं मध्यन्दिनात् प्रागपराह्णात् स प्रतिहार

इति श्रुतिः छान्दोग्य-२-९-६ कालमाधवे

**प्रतीकम्**— मुखम् ।

प्रतीकं मे विचक्षणम् इति पारस्करः-३-१६-१

**प्रतीक्षा** - पूजा, सत्कारश्च ।

तस्यारण्येनैवात ऊर्ध्वं होमो वृत्तिः प्रतीक्षाच्छादनं च ।

आपस्त २-९-२२-७

प्रतीक्षा अतिथिपूजा इति हरदत्तः गोविन्दस्वामी च ।

**प्रतीतः**—(१) ख्यातः ।

तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः ॥ मनुः-३-३

(२) हृष्ट इति नीलकण्ठः ।

एतेनैव प्रतीताः स्म यत्त्वं मुक्तोऽद्य शत्रुभिः ॥

इति महाभा, विरा ३४-८

**प्रतीहारः**— (१) सन्धिविशेषः ।

मयास्योपकृतं पूर्वमयंचोपकरिष्यति ।

इति यः क्रियते सन्धिः प्रतिहारः स उच्यते ॥

(२) कुलीनो नीति शास्त्रज्ञः प्रतिहारश्च नीतिवित् ।

इति प्रतिहार लक्षणम् अग्निपु-२२०-२

**प्रतुदः**— दार्वाटाघदिः पक्षिविशेषः ।

यः चञ्च्वा प्रतुद्य प्रतुद्य भक्षयति स प्रतुद इति

लक्ष्मीधर कुल्लूकश्च ।

चञ्च्वा प्रतुद्य भक्षयन्ति इति प्रतुदाः श्येनादय इति

विज्ञानेश्वरः-१-१७२

**प्रतोदः**—बलीवर्दादिमनसाधनं यथा गजादेरङ्कुशादिरिति

मेधातिथिः ।

विनीतैस्तु व्रजेन्नित्यमाशुगैर्लक्षणान्वितैः ।

वर्णरूपोपसम्पन्नैः प्रतोदेनातुदन् भृशम् ॥

मनुः ४ ६८

**प्रत्यक्षम्**— वेदः ।

प्रत्यक्षं वेदः इतरानपेक्षत्वात् इति कुल्लूकः ।

श्रुतिं पश्यन्ति मुनयः स्मरन्ति तु यथास्मृति ॥

इति मनोः प्रक्षिप्तः श्लोकः

शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ।

व्यासूत्रम्-१-३-२८

प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामिति कुल्लूकः १-८

मनुरपि—

प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ।

त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥

१२-१०५

यद्यप्यत्र टीकाकारैः प्रत्यक्षानुमानशब्दयोरन्योऽर्थः

कृतः तथापि व्यासादिमहर्षिभाष्यापेक्षया अयमेवार्थः समीचीनः प्रतिभाति ॥

कालमाधवेऽपि स्मृतिः प्रत्यक्षमैति ह्यमनुमानश्चतुष्टयम् । एतैरादित्यमण्डलं सर्वैरेव विधास्यते तैत्तिरीये आरुणकेतुके इत्यस्य व्याख्याने

प्रत्यक्षं श्रोत्रग्राह्योऽकृत्रिमो वेदाख्योऽक्षरराशिर्योगि-प्रत्यक्षमौपनिषदाभिमतं साक्षिप्रत्यक्षं वा इति माधवाचार्या प्रः १

**प्रत्यक्षदेवाः**—ब्राह्मणाः परोक्षदेवशब्दो द्रष्टव्यः ।

**प्रत्यङ्गिराः**—शिरीषवृक्षः ।

मूलंतण्डुलवारिणा पिबति यः प्रत्यङ्गिरः सम्भवम् निर्दिष्टं शुचिभिद्रयोगदिवसे तस्याहि भीतिः कुतः । दर्पादेव यदा फणी दशति तं मोहान्वितो मूलपम् स्थानं तेन स एव याति नियतं वक्त्रं यमस्याचिरात् ।

प्रत्यङ्गाशिरीष इति कल्पतरुरत्नाकरे १९८

**प्रत्यनन्तरः**—(१) उत्तराधिकारी ।

निक्षेपोपनिधी नित्यं न देयौ प्रत्यनन्तरे ।
नश्यतो विनिपाते तादनिपाते त्वनाशिनौ ॥

मनुः ८-१८५

प्रत्यनन्तरे तदीयपुत्रादौ तदनन्तरं तदीयधनाधिकारिणि इति कुल्लूकः

(२) सन्निकृष्टः ।

अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा ।
जीवेत् क्षत्रियधर्मेण स ह्यस्यप्रत्यन्तरः ॥

मनुः १०-८१

**प्रत्यनीक**—विरोधी ।

यस्य यन्ता हृषीकेशो योद्धा यस्य धनञ्जयः ।
रथस्य तस्य कः संख्ये प्रत्यनीको भवेद्रथः ।

महाभा, ७-१०-३६

ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ इति भ. गीता ११-३२

**प्रत्यन्तवासी**— किरातादिः ।

प्रत्यन्तवासिनामप्यदृष्टशास्त्रव्यवहाराणां स्वत्वव्यवहारो दृश्यते ॥ मिताक्षरा २-११४

**प्रत्यभियोगः**— अभियोक्तरि अभियोगः ।

अभियोगमनिस्तीर्य नैनं प्रत्याभियोजयेत् ।
अभियुक्तं न चान्येन नोक्तं विप्रकृतिं नयेत् ।

याज्ञ-२-९

**प्रत्यभिवादनम्**— आशीर्वादः ।

योनवेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥

मनुः २-१२६

आयुष्मान् भव सौम्य देवदत्त इति प्रत्यभि-वादनवाक्यम् ।

**प्रत्ययः**—(१) प्रत्ययः दिव्यमिति स्मृतिचन्द्रिकापरार्कौ ।

स पुनर्द्विविधः प्रोक्तः साक्षिमानितरस्तथा ।
प्रतिदानं तथैवास्य प्रत्ययः स्याद् विपर्यये ॥
प्रत्ययः शपथः इति व्यवहारकल्पतरौ-३४०
(२) विश्वासः यथा प्रत्यय प्रतिभूः ।
(३) निश्चयः प्रमाणम्, वा ।
यदि संशय एव स्याल्लिङ्गानामपि दर्शने ।
साक्षिप्रत्यय एव स्यात सीमावादविनिर्णयः ॥
मनुः ८-२५३

(४) प्रथितत्वम् ।
प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु ।
प्रथितत्वे च सत्रादावधीनज्ञानयोरपि ॥
इति विश्वः
पुष्यद्दशप्रत्यय इति कालमाधवे बुक्कणवर्णने ।

**प्रत्ययाधिः**—अर्थप्रत्ययहेतुर्यः प्रत्ययाधिः स उच्यते ।
इति भरद्वाजः

**प्रत्यर्थी**— प्रतिवादी ।
समान्तः साक्षिणः प्राप्तानर्थिप्रत्यर्थिसंनिधौ ।
प्राड्विवाकोऽनुयुञ्जीत विधिना येन सान्त्वयन् ।
मनुः ८ ७९

**प्रत्यवनेजनम्**—प्रेताय पिण्डं दत्त्वाऽवनेजनदानप्रत्यवजनेषु नामग्राहम् । पारस्क ३-१०-२७

**प्रत्यवरोहणम्**— नौकादिभ्य उत्तरणम् ।
प्रातिव्रह्मन्निति प्रत्यवरोहति । वाराह गृ-१८-२
उत्तर्त्तुं प्रत्यवरोढुम इति हरिहरः पारस्क-३-१५-११

**प्रत्यवसितः**—प्रव्रज्यादिभ्रष्टः त्यक्तव्रत इति विवादरत्नाकरे
प्रत्यवसिताः पतिता इति गोविन्दानन्दः प्रायश्चित्तविवेकव्याख्याने -७६
जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानाशकच्युताः ।
विषप्रपतनप्रायशस्त्रघातच्युताश्च ये ॥ २२
नवैते प्रत्यवसिताः सर्वलोकबहिष्कृताः ।
चान्द्रायणेन शुद्ध्यन्ति तप्तकृच्छ्रद्वयेन वा ॥ २३
इति यमः
प्रत्यवसिताः निन्दिता इति प्रायश्चित्तविवेकव्याख्याने गोविन्दानन्दः-४४६

**प्रत्यवस्कन्दनम्**— उत्तरविशेषः ।
रूप्यकशतमनेन गृहीतमित्यभियोगे सत्यं गृहीतं दत्तं चेति उत्तरं प्रत्यवस्कन्दनम् कारणोत्तरमित्यस्य नामान्तरम् ।
अर्थिना लिखितोयोऽर्थः प्रत्यर्थी यदि तं तथा ।
प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं हि तत्
इति व्यवहारनिर्णये ।

**प्रत्यवहारः**— श्रवणम् ।
तेभ्यो यथाधिकारमर्थान् प्रत्यवहृत्य धर्मव्यवस्था ॥
गौतमः २-२-२२
प्रत्यवहृत्य श्रुत्या अवधार्य इति हरदत्तः ॥

**प्रत्यवायः**— (१) वैपरीत्यम् ।
उत्तमानुत्तमांश्चैव गच्छन् हीनांस्तु वर्जयन् ।

ब्राह्मणः श्रेष्ठतामेति प्रत्यवायेन शूद्रताम् ॥

४-२४८

प्रत्यवायेन विपरीताचरणेन इति मेधातिथिः ।

(२) अनिष्टम् ।

यथा नित्यकर्माकरणेन प्रत्यवायः ।

क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते ।

अनुत्पत्ति तथा चान्ये प्रत्यवायस्य मन्वते ॥

इति प्रायश्चित्त विवेके जावालिः प्राय-६

(३) व्यतिक्रमः ।

दृष्टो धर्मव्यतिक्रमः साहसं च महताम् ।७

तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ॥

आपस्त-२-६-१३-८

**प्रत्याकलितम्**— व्यवहारस्य तृतीयः पादः ।

पूर्वपक्षश्चोत्तरं च प्रत्याकलितमेव च ।

क्रियापादश्च तेनायं चतुष्पात् समुदाहृतः ॥ इति

कात्यायनः व्यवहारकल्पतरौ-४५

प्रत्याकलितस्य तृतीयव्यवहारपादत्वमभ्युपगच्छता-

स्मृतिचन्द्रिकाकारेण ॥ इति व्यवहारप्रकाशे-८२

इदं च प्रत्याकलितं व्यवहर्त्तृसम्बन्धाभवाद् व्यवहार-

दर्शितमात्रकर्त्तृकत्वान्न व्यवहारपादचतुष्टयान्तर्भूतम्

इति मिताक्षराकारस्य सम्मतम् इति व्यवहारप्रकाशे ॥

अपरार्कस्तु क्रियोपन्यासोत्तरकालीनविचारस्य सभ्यैः

क्रियमाणस्य प्रत्याकलितरूपतामभिप्रैति ॥

**प्रत्याख्यानम्**— निराकरणम् ।

विसेऽप्रत्याख्यायिन्यः पारस्करः २-५-५

**प्रत्याङ्गिरसः**— कृक्षुणं हेते मनसं हेते इति बौधा,

गृ. शे, १-१४

**प्रत्यादेशः**—(१) निराकरणम् ।

येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते ।

तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः ॥

मनुः ८-३३४

प्रत्यादेशाय पतिरू फलदर्शनाय स्वावष्टम्भेन सामि-

मानं सक्रोधं सावज्ञं न्यक्करणं वा प्रत्यादेशः।

य एवं करोति तस्याहमेवं कर्त्ता इति व्याख्यापनं

प्रत्यादेश इति मेधातिथिः ।

प्रत्यादेशाय अन्यस्यापि निषेधाय इति मन्वर्थविवृतिः

प्रसङ्गवारणाय इति मन्वर्थमुक्तावली ।

गृहीतान् चोरन् ताड़यित्वा गर्दभादिना भ्रामयित्वा

अवघुष्य च छेदनताडनदहनादिभिर्मारयितव्यास्ते

अन्ये मैवं कुरुतेति प्रत्यादेशार्थम् ॥ इति नारदभाष्ये

१९-६५

( ) प्रत्यादेशो भर्त्सनमिति नीलकण्ठः ।

स धर्मराजस्य वचो निशम्य रक्षाक्षरं विप्रलापा-

नुबद्धम् ।

प्रत्यादेशं मन्यमानो महात्मा प्रतत्वरे भीष्मवधाय

राजन् ॥ महाभा, भीष्म, ६०-२६

**प्रत्यापत्ति**— शुद्धिः ।

नास्यास्मिंल्लोके प्रत्यापत्तिर्विद्यते ॥

आपस्त १-९-२४-२५

प्रत्याहारः— (१) विषयेभ्य इन्द्रियाणामाहरणम् ।

प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषम् ।

प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् ॥

मनुः ६-७२

संहारश्चेन्द्रियाणां तु प्रत्याहारः प्रकीर्त्तितः ॥

इति शंखः ७-१५

विषयेषु प्रसक्तानि इन्द्रियाणि मुनीश्वराः ।

समाहृत्य निगृह्णाति प्रत्याहारस्तु स स्मृतः ॥

बृहन्नारदीयपु-३१-१३०

निवृत्तिर्विषयाणां तु प्रत्याहारस्तु संज्ञितः ॥

वायुपु, १-११-२८

(२) द्वादशप्राणायामाः ।

प्राणायामद्विषट्केन प्रत्याहार उदाहृतः ।

प्रत्याहारै द्वादशभिर्धारणा परिकीर्त्तिता ॥

स्कन्दकाशी ४१-४६

प्रत्युत्थानम्— पूज्यपूजार्थं तदाभिमुख्येन उत्थानम्

उर्ध्वं प्राणाह्युत्क्रामन्ति यूनः स्थविर आयाति ।

प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥

मनुः २-१२०

प्रत्युद्गमनम्—पूज्यपूजार्थं तदाभिमुख्येन गमनम् ।

आसीनस्य त्वासनतः पश्चाद्धावंस्तु तिष्ठतः ।

प्रत्युद्गम्य स्थितः कुर्यादभिगच्छंस्तु तिष्ठतः ॥

मनुः २-१९६

प्रत्युद्वाहः—देवदत्तस्य कन्या हरदत्तस्य पुत्राय दत्ता हरदत्तस्य कन्या देवदत्तस्य पुत्राय दत्ता इत्येवंरूपो विवाहः प्रत्युद्वाहः ।

प्रत्युद्वाहो नैव कर्यो नैकस्मै दुहितृद्वयम् ।

न चैकजन्ययोः पुंसोरेकजन्ये च कन्यके ॥

इति कालसारे-१८६

प्रत्युपविष्टः ऋणादिना कारणेन अधमर्णादिकं निरुध्य तत्पार्श्वे उपविष्टः इति हरदत्तः ।

मत्तउन्मत्तोवद्धोऽणिका प्रत्युपविष्टो यश्च प्रत्युपवेशयते तावन्तं कालम् ॥ आपस्त १-६-१९-१

प्रत्युपाकरणम् उदगयनोपाकरणम् प्रत्युपाकरणमुच्यते इति चन्द्रकान्तः ।

तस्मिन् प्रत्युपाकरणेऽभ्रानाध्याय आपुनरुपाकरणाच्छान्दसः ॥ गोभिल गृ-३-३-१६

प्रत्यूहः— प्रत्यूहो निरास इति कल्पतरौ शुद्धिकाण्डे २५

प्रथमसाहसः—सार्द्धपणशतद्वयात्मको दण्डः ।

पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः ॥

इति मनुः ८-१३८

मध्यमः पञ्चविज्ञेयः साहस्रं त्वेव चोत्तमः विष्णुरप्येवमेव-४-१४

याज्ञवल्क्यस्तु—

साशीतिपणसाहस्रो दण्ड उत्तमसाहसः ।

तदर्द्धं मध्यमः नोक्तस्तदर्द्धमधमः स्मृतः ॥ १-३६६

शंखलिखितौ—

चतुर्विंशतिरेकनवतिः प्रथमसाहसः स्मृतः ।
द्विशतं पञ्चशतं चेति मध्यमः षट्शतं सहस्रं
चेत्युत्तमः । इति व्यवहारनिर्णये-४०४

प्रथमाष्टमी—मार्गशिरकृष्णाष्टमी कार्त्तिकपूर्णिमापरवर्त्तिनी ।
अत्र श्रीभुवनेश्वरदेवस्य प्रथमा यात्रा भवति ।
तस्य चतुर्द्दशयात्राकालाः प्रदर्शिताः-कालसारे—
यात्राद्या प्रथमाष्टमी निगदिता प्रवारषष्ठी तथा
पुष्यस्नानमथाज्यकम्बलविधिर्माघे सिता सप्तमी ।
तद्वत्तस्याश्छिवरात्रिका रथगतिः स्याद्दामनं मञ्जनं
पुष्याक्षय्यतृतीयिका परशुरामीयाष्टमी शायनम् ।।
श्रवदे तत्र पवित्ररोपणयम द्वैतीयिके चोत्थितिः
क्षेत्रे श्रीभुवनेश्वरस्य विहिता यात्राश्चतस्रो दश ।
शवे स्पष्टतयोदिता दशविधास्तत्रादिना संग्रहा-
देकाम्रात् प्रथमाष्टमीप्रभृतयो यात्राश्चतस्रो धृताः ।।
इति गदाधरपद्धतौ कालसारे-१५५
अपिचोक्तकुलेषु प्रथमगर्भोत्पन्नस्य अ युवृद्ध्यर्थम्
अत्र कलशे गणपत्यादिपूजा क्रियते, तथा नववसनादिना सम्वर्द्धनाऽपि ।।

प्रदक्षिणम्—अभीष्टवस्तु दक्षिणतः संस्थाप्य गमनम् ।
देवालयं चैत्यतरुं तथैव च चतुष्पथम् ।
विद्याधिकं गुरुं चैव वुधः कुर्यात् प्रदक्षिणम् ।।
इति ब्रह्मपु-२२१-४१

प्रदक्षिणावृत्कः— प्रदक्षिणा आवृत् अनुष्ठानपद्धतिः यस्य सौ प्रदक्षिणावृत्कः प्रदक्षिणप्रचार इति यावत् ।।
इति विज्ञानेश्वरः १

प्रदरः—स्वयंदीर्णभूमाग इति नरसिंवाजपेयी । १-२६४
प्रदरो गर्त्त इति स्मृतिचन्द्रिका-२५४
आचारभूषणे अपि-२५
किंचिद्विभिन्न निम्नीभूतो भूभाग इति हेमाद्रिः ।
भूमेः स्वयंदीर्णप्रदेशः प्रदर इति उज्ज्वलावृत्तौ ।।
आपस्त १-५-१५-५
वृक्षादिरहिता अकृष्ट असंसकृता भूमिः वा तादृशी हि भूमिः लोकभाषायां पदर इत्युते ।
प्रदराभङ्गनारीरुग्बाणा इत्यमरः ३-३-१६४

प्रदाता—शुक्लपक्षगतरात्रि द्वितीयमुहूर्त्तः ।
कालमाधवे-३

प्रदेशिनी—करस्य वृद्धाङ्गुलिसमीपस्था अङ्गुलिः ।
तर्जनी इत्यस्याः नामान्तरम् ।।
अङ्गुष्ठेन प्रदेशिन्या प्राणं पश्चादनन्तरम् ।
अङ्गुष्ठानामिकभ्यां च चक्षुःश्रोत्रे पुनः पुनः ।।
इति मार्जनकल्पे दक्षः २-१६

प्रदेष्टा—कण्टकशोधनाधिकारी ।
कण्टकशोधनाधिकृताः प्रदेष्टार इत्याख्यायन्ते ।
इति श्रीमूला ।।
प्रदेष्टारस्त्रयस्त्रयोमात्यामात्याः कण्टकशोधनंकुर्युः
कौट-४-१-१

**प्रदोष** =(१) सूर्यास्तमारभ्य मुहूर्त्तत्रयम् ।

त्रिमुहूर्त्तं प्रदोषः स्याद् भानावस्तं गते सति ।

इति मदनरत्ने व्यासः

(२) अनध्ययनकालविशेषे लाक्षणिकोऽप्यस्ति

प्रदोषशब्दः ।

यथा नित्याचारप्रदीपे द्वितीयभागे वृद्धगार्ग्यः ॥

रात्रौ यामद्वयादर्वाक् सप्तमी च त्रयोदशी ।

प्रदोषः स तु विज्ञेयः सर्वविद्याविगर्हितः ।

रात्रौ नवसु नाडीषु चतुर्थी यदि दृश्यते ।

प्रदोषः स तु विज्ञेयो वेदाध्ययनवर्जितः ॥

तत्रैव शिष्टवाक्यम्—

रात्रौ यामत्रयादर्वाग् यदि पश्येत् त्रयोदशीम् ।

प्रदोषः स तु विज्ञेयः सर्वविद्याविगर्हितः ॥

इति अनध्यायप्रकरणे

**प्रद्राणकः**— कुत्सितावस्थां प्राप्तः । छन्दो १-१०-१

उदाहरणम् आटिकीशब्दे मृग्यम् ।

**प्रधना**— धनिनी ।

प्रधना प्रकृष्टधना इति विवादरत्नाकरे ।

अमतेनैव पुत्रस्य प्रधना यान्यमाश्रयेत् ।

पुत्रेणैवापहार्य्यं तद्धनं दुहितृभिर्विना ॥

**प्रधानम्**– प्रकृतिः ।

ईक्षतेरीक्षणश्रवणान्न प्रधानं जगत्कारणमिति कुल्लूकः ॥

मनुः १-८

**प्रपदम्**— पादाग्रम् ।

भूमौ विपरिवर्त्तेत तिष्ठेद्वा प्रपदैर्दिनम् ।

स्थानासनाभ्यां विहरेत्सवनेषूपयन्नपः ॥ मनुः ६-२२

प्रपदः पादाग्रैरिति विज्ञानेश्वरः-३-५१

**प्रपदः**— तपश्च तेजश्च इत्यादिको मन्त्रः ।

काम्येषु च प्रपदः । गोभिलः-४-५ ७

काम्येषु च प्रपदः तपश्च तेजश्चेत्यादिक इति

संस्कारतत्त्वे-१६

**प्रपा**— (१) जलसत्रशाला ।

जलदानगृहमिति मन्वर्थमुक्तावली ॥ ६-२६४

प्रपा पानीयशालिका इति स्मृतिचन्द्रिकाव्यवहार-५३

(२) यज्ञशाला ।

विश्वामित्रं पुरस्कृत्य शतानन्दं च धार्मिकम् ।

प्रपामध्ये तु विधिवद् वेदिं कृत्वा महातपाः ॥ १०

अलंचकार तां वेदिं गन्धपुष्पैः समन्ततः । इति

रामायणे-१ ७३-२०

(३) कृष्णपक्षसप्तमी रात्रिः । कालमाधवः-२

**प्रपाः**— प्रकर्षेण परिपालका इति विवादरत्नाकरे ।

प्रत्येकं प्रपाः स्युरिति वसिष्ठः-१६-१८

**प्रपाणिः**— पाणितलमिति शब्दकल्पद्रुमः ।

रजस्वलाधर्मे न खर्वेण पिबेत् न पर्णैः नप्रपाणिः ॥

इति पैठीनसिः

**प्रपुन्नाटः** -चक्रमर्द इति कमलाकरः-१४८

अपामार्गमथो तुम्बीं प्रपुन्नाटमथापरम् ।

भ्रामयेत् स्नानमध्ये तु नरकस्य क्षयाय वै ॥ इतिपाझे

प्रबर्हः— श्रेष्ठः ।

महामात्रः मोमकानां प्रबर्हः सन्त्यक्तात्मा पाण्डवार्थे श्रुतो । मे महाभा. उद्-२२-१८

प्रबाहुः— हस्त इत्याचारे गदाधरः ।

नाभेरधस्तात् प्रबाहुषुकायिकैर्मलैः सुराभिर्मद्यैश्चा-कराग्रमिति नन्दपण्डितः ॥

प्रबाहुः कफोणिकावधि बाहोरग्रभाग इति

मित्रमिश्रः शुद्धप्रकाशे-१३६

हतो मृत्तोयेन इत्यादि विष्णुः २१-७७

प्रबाहुः हस्त इति आचारादर्शे-१७

प्रभवः—(१) नदीनामुत्पत्तिस्थानम् ।

प्रभवः नदीनामुत्पत्तिस्थानमिति श्राद्धविवेककाराः ।

विष्णुना श्राद्धदेशत्वेन प्रशंसितः नदीनामुत्पत्तिदेशः ॥

(२) महात्म्यम् ।

ऋषीणां च नदीनां च कुलानां च महात्मनाम् ।

प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च ॥

महाभा, उद्, ३५-७२

(३) सम्वत्सरविशेषस्य नाम ।

प्रभवे यज्ञकर्माणि विभवे सुखिनो जनाः ॥

इति अग्निपु, १३९-१

प्रभवो जन्ममूले स्यात्जन्महेतौ पराक्रमे इति मेदिनी ।

प्रभवन्—शुक्लपक्षरात्रिद्वादशमुहूर्त्तः । कालमाधवे-३

प्रभान— प्रभान् शुक्लपक्षदिवसस्य तृतीयो मुहूर्त्तः ।

चित्तः केतुः प्रभान् आभान् सम्भान् ज्योतीष्मान् तेजस्वान् आतपन् तपन् अभितपन् रोचनः ।

रोचमानः रोचमाः शोभनः शोभमानः कल्याणः इति कालमाधवे तैत्तिरीयश्रुतिः ॥

प्रभूः— कृष्णपक्षरात्रि त्रयोदशमुहूर्त्तः । कालमाधवे-३

प्रभूतम्— अमावस्यादिवसस्य नाम कालमाधवः-२

प्रमगन्दः — वार्द्धुषिकः ।

प्रकृष्टं मह्यं गमयिष्यति इति यो ददाति स प्रमगन्द इति व्युत्पत्त्या वार्द्धुषिकः प्रमगन्दपदस्यार्थः कल्प्यते प्रसिद्धराजार्थं विहाय इति वीरमित्रोदय संस्कार-प्रकाशे ।

प्रमत्तः — वातसंक्षोभेण नष्टचेतन इति मेधातिथिः ।

षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते ।

चौराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः ॥ ८४

प्रमदाः कामयानेषु यजमानेषु याजकाः ।

राजा विवदमानेषु नित्यं मूर्खेषु पण्डिताः ॥

महाभा, उद् ३३-८५

प्रमदनम्— क्रीडास्थानम् इति पुराणव्याख्याने ।

कुमार्याः प्रमदने भगमर्यमणं पूषणं त्वष्टारमिति यजति ।

इति मैत्रायणीय मानवगृ-१-६-२८

प्रमदा कामिनी, स्त्री ।

अविद्वांसमलं लोके विद्वांसमपि वा पुनः ।

प्रमदाह्युत्पथं नेतुं कामक्रोधवशानुगम् ॥
मनुः २-२१४

**प्रमन्थः**— अग्निमन्थनयन्त्रस्य अवयवविशेषः ।
अष्टाङ्गुलः प्रमन्थः स्यादिति हरिहरः ॥

**प्रमापणम्**— मारणम् ।
अस्थिमतां तु सत्त्वानां सहस्रस्य प्रमापणे ।
पूर्णे चानस्यनस्थ्नां तु शूद्रहत्याव्रतं चरेत् ॥
मनुः ११-१४०

स चेत्तु पथि संरुद्धः पशुभिर्वा रथेन वा ।
प्रमापयेत् प्राणभृतस्तत्र दण्डोऽविचारितः ॥
मनुः ८ २९५

**प्रमीतः**— मृतः ।
असंस्कृतप्रमीतानां कुलयोषिताम् ।
उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च यः ॥
मनुः ३-२४५

सकुल्यैर्विद्यमानैस्तु मातृपितृसनाभिभिः ।
असुतस्य प्रमीतस्य पत्नी तद्भागहारिणी ॥
इति बृहस्पतिः

**प्रमुखः** (१) मुख्यः ।
हर्म्यं देवगृहं वापि धार्मिकोपस्कराणि च ।
संभूय कुर्वतां चेषां प्रमुखो द्व्यंशमर्हति ॥
इत्यपरार्के बृहस्पतिः ।
प्रमुखः प्रधानभूत इति विवादरत्नाकरे चण्डेश्वरः
पृ-१२५

**प्रमुखम्**— सम्मुखम् ।
यानेवहत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे
धार्त्तराष्ट्राः ॥ भ. गीता-२-६

**प्रमूढम्**— अपरिचितम् । अनाकलितम् , वा ।
प्रमूढम् अपरिचितमिति विवादरत्नाकरे ।
प्रमूढं न ज्ञायते पदमतश्चेतश्च बहुपदत्वात् ॥
इति दारदभाष्ये-१५-२३
पदे प्रमूढे भग्ने वा विष रव जनान्तिके ।
यस्त्वासन्नतरो ग्रामो व्रजो वा तत्र पातयेत् ॥

**प्रमृतम्**— कृषिः ।
ऋतंमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।
मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥
मनुः ४-५

**प्रमोदः**— शुक्लपक्षगतरात्रिपञ्चममुहूर्त्तं कृष्णपक्षगतरात्रि
पञ्चममुहूर्त्तश्च इति कालमाधवे-३

**प्रमोहिनी** – सुरा ।
प्रमोहनीनां पानं सुरापाने वद्यसमम् इति प्रायश्चित्त
विवेके देवलः ।

**प्रयतः**— शुद्धः ।
प्रयतत्वादुपचितमशुभं नाशयती प्रायश्चित्तम् ।
इति प्रायश्चित्तविवेके जाव लिः-२

**प्रयताञ्जलिः**— शुद्धबद्धाञ्जलिः ।

प्रयमणम्— प्रयमणं प्लवनमित्याचारसारे गदाधरः।

प्रयमणमितस्ततो गमनं प्रतरणं वेति लक्ष्मीधरः॥

प्रयमणं प्रायत्यकारणमाचमनादि इति आह्निके

मित्रमिश्रः-१०५

यत्र.क्वाधीनं प्रयमणं तत्रावासो धर्म्यो ब्राह्मणस्य

आपस्त-१-१५-२१

नाप्सु सतः प्रयमणं विद्यते आपस्त १-१५-१०

येन प्रयतो भवति तत्प्रयमणमाचमनमिति पुनश्च

प्रयमणं प्रायत्यं मूत्रपुरीषप्रक्षालनादि इति सूत्रद्वये

अर्थद्वयमुक्तं हरदत्तेन।

प्रयमणं मूत्रपुरीषाद्यपनयनलक्षणं शौचमिति गोविन्द-

स्वामी॥ बौ. धा. धर्म २-८-८

प्रयोगः— (१) पद्धतिः इति कर्त्तव्यता।

असकृद्यानि कर्माणि क्रियेरन् कर्मकारिणः।

प्रतिप्रयोगं नैव स्युर्मातरः श्राद्धमेव च॥ इति

कर्मप्रदीपे

(२) कुसीदवृत्तिः।

सप्त वित्तागमाधर्म्या दायो लाभः क्रयोजयः।

प्रयोगः कर्मयोगश्च सत्प्रतिग्रहएव च॥

मनुः १०-११५

प्रयोजकः— } हत्यादिव्यापारमात्रे प्रवर्त्तकः।
प्रयोजयिता— } अप्रवृत्तस्य प्रवर्त्तकः प्रयोजकः।

स च त्रिप्रकारः आज्ञापयिता अभ्यर्थयमान उपदेष्टा

चेति मिताक्षरा-३-२२७

प्ररोहः अङ्कुरः।

प्रलम्भनम्— विसंवादनम्।

मिथ्याफलाख्यनमिति हरदत्तः।

प्रलवनम् — धान्यच्छेदनमितिशूलपाणिः।

गोभिलभाष्ये चन्द्रकान्तश्च॥ गोभिलगृ. ४-४-३०

प्रवक्ता — (१) अध्यापयिता।

अध्यापको व्याख्याता इति मेधातिथिः।

आचार्यं च प्रवक्तारं पितरं मातरं गुरुम्।

न हिंस्याद् ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विनः॥

मनुः ४ १६२

षडिमान् पुरुषो जह्याद् भिन्नां नावमिवार्णवे।

अप्रवक्तारमाचार्य्यमनधीयानमृत्विजम्॥ ७६

अरक्षितारं राजानं भार्य्यांचाप्रियवादिनीम्।

ग्रामकामं च गोपालं वनकामं च नापितम्॥

महाभ, उद्-३३-८०

(२) निर्णायकः।

जातिमात्रोपजीवी वा कामं स्याद् ब्राह्मणब्रुवः।

धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथंचन॥

मनुः ८-२०

प्रवचनम्— अध्यापनम्, अध्ययनं च।

प्रवचनयुक्तो वर्षाशरद मैथुनं वर्जयेत॥

आपस्त १-१-३२-१

प्रवचनमध्यापनमिति हरदत्तः।

प्रवचनं पाठनमध्ययनं वेति हरिहरः पारस्क, गृ,
३-१६-१

**प्रवचनः**— वेदः ।

अनूचानः प्रवचने साङ्गेऽधीती ॥ अमरः २-७-१०

**प्रवणम्**— क्रमनिम्नम् ।

प्रवणं क्रमनिम्नमिति गोभिलसूत्रव्याख्याने चन्द्रकान्तः
१-१-८

दक्षिणाप्रवणं दक्षिणतोऽवनतो देश इति विज्ञानेश्वरः ॥
१-२२७

**प्रवणः**— क्रमनिम्ना इति संस्काररत्नमाला-१-४६

**प्रवपणम्**— बीजवपनम् ।

प्रवपणं बीजवपनमिति शूलपाणिः ।

एताएव देवताः सीतायज्ञ खलयज्ञ प्रवपणप्रलवन पर्ययणेषु इति गोभिगृ ४४-३०

**प्रवरः**— गोत्राचार्याणां पितृपितामहादयः प्रवराः ।

यद्गोत्रस्य यावन्तः प्रकर्षेण वरा ऋषया सम्बुध्यन्त पदेन आश्वलायनादिभिः प्रवराध्याये ताः ते प्रवरा इति श्रौतपदार्थनिर्वचने ।

प्रवरणानि प्रवराः कल्पकारा हि वासिष्ठेति होता वासिष्ठवादित्यध्वर्युरित्यादिना येषां प्रवणमामनन्ति ते प्रवराः ॥

तत्वं तु गोत्रभूतस्य पितृपितामहप्रपितामहाएव प्रवराः। पितैवाग्रेऽथपुत्रोऽथ पौत्रः इति शतपथश्रुतेः ।

तत्र परंपरंप्रथममित्याश्वलायनोवेश्चोत निर्णयसिन्धौ

असमान प्रवरैर्विवाहः । गौतमः १-४-२

**प्रवहणम्**— (१) गोष्ठीभोजनमिति श्रीमूला कौ ११-२

तुष्टिभोजनदानमिति श्रीमूला ॥ कौ ४-५

प्रवहणेषु योगसुरामत्तानवाग्राह्येयुरिति ।

नौविशेषः कर्णिरथश्च तेन जलस्थलयात्राक्रीडोद्यान-भोजनदिकं लक्ष्यते ॥ इति श्रीमूला १-१०

(२) नौका ।

तथापि पुत्र वै वच्मि पित्रोः पुत्रो यतो गतिः । ८१

मग्नानां दुःखपाथोब्धौ पुत्रः प्रवहणं परम् ॥ ८२

ब्रह्मपु-१०८-८२

**प्रवारणम्**— ईप्सितप्रदानम् ।

प्रवरणं पूर्वमर्हः पार्थो धनंजयः ॥

महाभा, उद् ७-१७

**प्रवासः**— (१) देशान्तरगमनम् ।

आहिताग्निश्चेत प्रवसन् म्रियेत पुनः संस्कार कृत्वा शववद शौचम् । वसिष्ठः ४-३७

(२) अर्थशास्त्रेषु प्रवासशब्दः मारणार्थे व्यह्रियते इति विज्ञानेश्वरः

**प्रवासनम्** वधः ।

प्रवासनं वध इति कुल्लूकः मनुः ९-२४२

**प्रवृत्तचक्रता**— सर्वदा अप्रतिहताज्ञाशालिता इति कल्पतरुः ।

अप्रतिहताज्ञतेति विज्ञानेश्वरः १-२६५

प्रवृत्ताशी— अपचमानक वानप्रस्थ विशेषः ।

हस्तेनादाय प्रवृत्ताशनः बौधा, ध, ३-३-३-११

प्रवेकः— समूहः ।

सभा तु सा मत्स्यपतेः समृद्धा मणिप्रवेकोत्तमरत्नचित्रा ॥

महाभा, उद् १-२

प्रवेणी— गजास्तरणकम्बल इति कल्पतरुगदाधरौ ॥

श्राद्ध-१५६

अजिनं क्षौमजं पट्टं प्रवेणीं मृगलोमिकाम् ।

दत्त्वा चैतानि विप्रेभ्यो भोजयित्वा यथाविधि ॥

इत्यादि तत्र वायुपुराणे

प्रवेशः— पुत्रोद्वाहः ।

पुत्रोद्वाहः प्रवेशाख्य इति मयूखे ।

प्रवेशान्निर्गमो नेष्ट इति ज्योतिःशास्त्रे ॥

प्रवेशनम्— अभिगमनम् स्त्रीसम्भोगः ।

यथर्तु प्रवेशनमिति पारस्करः १-११-७

प्रव्रज्या— संन्यासाश्रमः ।

जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम् ।

देवताराधनं चैव स्त्रीशूद्रपतनानि षट् ॥

अत्रिसंहिता-१३७

स्कान्दे तु चैवस्थाने दीक्षा इति विशेषः स्कन्द

आवरेव, २२८-६

प्रशठः— असाधुः ।

लिङ्गिनां प्रशठानां तु मन्त्रयोगक्रियाविदाम् ।

वर्णसंकरजातानां पापाभ्यास प्रवर्त्तिनाम् । ४२८

एतेष्वेवाभियोगेनैव राजाधर्मपरायणः ॥ ४२६

इति कात्यायनः

प्रशमनम्— (१) दानम् ।

तैः सार्द्धं चिन्तयेन्नित्यं समान्यं सन्धिविग्रहम् ।

स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च ॥

मनुः ७-५६

प्रशमनानि सत्पात्रे प्रतिपादनानि इति कुल्लूकः ।

(२) शान्ति ।

सर्वाबाधाप्रशमनं त्र लोक्याखिलेश्वरि । इति

मार्कण्डेये

प्रशान्तिः— विद्याद्यनुत्सेकः । हेमाद्रौ परिशिष्टे-३६४

प्रशान्तिका— प्रसातिकायाः पाठान्तरमितिसम्भाव्यते ।

प्रशान्तिकाः सनीवाराः श्यामाका द्विविधास्तथा ।

वन्यौषधीप्रधानास्तु श्राद्धार्हाः पुरुषर्षभ ।

विष्णु-३-१६-५

प्रशास्ता— स्कन्धावारनिवेशयिता । कौट १-१२

प्रसङ्गः— (१) गीतवादित्रादिः ।

नेहेतार्थान् प्रसङ्गेन नविरुद्धेन कर्मणा ।

न विद्यमानेष्वर्थेषु नार्त्यामपि यतस्ततः इति मनुः ४-१५

प्रसङ्गो नृत्यगीतादिरिति विज्ञानेश्वरः १-१२६

(२) दुःसङ्गः ।

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियोरक्ष्याविशेषतः ।

द्वयोर्हिकुलयोः शोकमावहेयुररक्षिताः ॥ मनुः ९-५

(३) अन्यादेश्येनानुष्ठितस्यान्यत्रोपकारसम्पादनं प्रसङ्गः ।

यथा हविःष्वसादितेषु प्रकृतौ प्रयाजस्यानुष्ठानात् । तिष्ठन्तं पशुं प्रयजति इति पशौकालभेदेऽपि प्रसङ्गवदेकोद्दिष्टपार्वणयोः कालभेदेऽपि प्रसङ्गसिद्धेः ।

इतिकालदीपे

अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति ।
गच्छतश्च प्रशवशंन तीर्थमर्द्धं फलंस्मृतम् ॥
स्कन्दपु. आव. रेवा, २२८-११

(४) प्रस्तावः ।

तत्रैव गङ्गा यमुन च तत्र गोदावरी तत्र सरस्वती च ।
सर्वाणि तीर्थानि वसन्ति तत्र यत्राच्युतोदारकथा प्रसङ्गः ॥

(५) प्रवृत्तिः ।

प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत् ।
प्रतिग्रहेणह्यस्याशु ब्रह्म तेजः प्रशाम्यति ॥

मनुः ४-१८६

प्रसङ्गः अत्य सक्तिरिति कल्पतरो दानकाण्डे-३०

**प्रसन्ना**— सुरा ।

प्रसन्ना स्त्री सुरायां स्यादच्छसन्तुष्टयोस्त्रिषु ।
इति व्याख्यासुधा १-१०-१४

बहुगुड़ो द्राक्षा बहुवेलं प्रसन्ना बहुपयो यवागुः ॥
पातञ्जलभष्यम् ५-३-२

**प्रसवः**— निर्देशः ।

यज्ञेषु चैतदादयः प्रसवाः आपस्त-१-४-१३-८
प्रसवानिर्देशा अनुज्ञाव क्यानि भवन्ति ब्रह्मादीनाम् । ओं प्रणय, ओं निर्वप, ओं स्तुधम् इति हरदत्तः ॥

**प्रसविता**—कृष्णापक्षगतदिवसस्य द्वितीयो मुहूर्तः ।
कालमाधवे-३

**प्रसातिका**— प्रशाटीति मध्यदेशसिद्धं धान्यंमिति लक्ष्मीधरः । कल्पश्राद्ध-४२

प्रसातिकाः पियङ्गुश्च ग्राह्याः स्युः श्राद्धकर्मणि ॥
इति वायुपुराणे

प्रसतिका अणुव्रीहिनामकं सूक्ष्मधान्यमिति वैद्यकशब्दसिन्धौ ।

नेते अणवः—

वर्ज्या मर्कटकाः श्राद्धे राजमाषास्तथाणवः । इति
मार्कण्डेपु, ३२-६

श्यामाकराजश्यामाकौ तद्वच्चैव प्रसातिकाः ।
नीवाराः पौष्कलाश्चैव धान्यानां पितृतृप्तये ॥ इत
तत्रैव दर्शनात्

**प्रसादः**— अनुग्रहः ।

पितृप्रसादाद् भुज्यन्ते ।
प्रसादो यश्च पैतृकः ।

**प्रसादपत्रम्**— देशादिकं यस्य राजा लिखितेन प्रयच्छति ।
सेवाशौर्यादिना तुष्टः प्रसादलिखितं तु तत ॥

इति बृहस्पतिः

प्रसाधनम्— केशरचनानुलेपनादि ।

प्रसाधनं मण्डनमिति गोविन्दस्वामी ॥

बौधा, १-३-३६

केशानां च प्रसाधनं विन्यासरचनादिकरणं कुङ्कुमसिन्दूरादिना सीमन्तोत्थापनमिति मेधातिथि ॥

मनुः २-२११

बालस्पष्टीकरणमिति देवपालः । काठकगृ-३-७-२

केशानां संस्कार इति आदित्यदर्शनः ।

आकल्पो मण्डनं वेशः प्रतिकर्म प्रसाधनम् ॥

इति हलायुधः का-२

प्रसूता— (१) कृष्णतृतीया रात्रिः । कालमाधवः-२

(२) कृतप्रसवा स्त्री ।

प्रसृतम्— पलद्वयमिति भावप्रकाशे खारीशब्दे द्रष्टव्यः ।

प्रसृतयावकः — प्रसृतं गोकर्णकरपरिमितं यावकं यवविकाशे यवागूर्वा ।

आत्मार्थे प्रसृतयावकं श्रपयेदिति ॥ बौधायनः ६-१

प्रसृतिः— परिमाणविशेषः पोष इति भाषायां प्रसिद्धः ।

संयुक्ताङ्गुलिपञ्चकेन प्रसारितपाणिना ग्राह्यं वस्तु ।

देवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत् ।

संश्राव्य पाययेत्तस्माज् जलात्तु प्रसृतित्रयम् ॥ इति

प्रसृतियावकः— अनुष्ठानविशेषः ।

तत्र हार तः य आत्मकृतैः कर्मभिर्गुरुमात्मान पश्येत

आत्मार्थे प्रसृयावकं श्रपयेत् ।

ततोऽग्नौ जुहुयात् तदेव बलिकर्म शृतं चाभिमन्त्रयेत् ।

यवोऽसि धान्यराजो वा वारुणो मधुसंयुतः ।

निर्णोदः सर्वपापानां पवित्र ऋषिभिः स्मृतः ॥

घृतं यवा मधुयवा आपोहिष्ठामृतं यवाः ।

सर्वं पुनन्तु मे पापं यन्मया दुष्कृतं कृतम् ॥

वाचाकृतं कर्मकृतं मनसा दुर्विचिन्तितम् ।

अलक्ष्मीं कालकर्णी च सर्वं पुनीत मे यवाः ॥

मातापित्रोरशुश्रुषा यौवने कारिता तथा ।

श्वशूकरावलीढं च उच्छिष्टोपहतं च यत् ॥

सुवर्णस्तेयं व्रात्यत्वं बालत्वादात्मनस्तथा ।

ब्राह्मणानां परीवादं सर्वं पुनीत मे यवाः ॥

वक्ष्यम णां रक्षां कुर्यात्—

नमोरुद्राय भूताधिपतये द्यौः सावित्रीमानस्तोके ति

पात्रे त्रिर्निषिच्य

ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितरस्ते

नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा

इत्यात्मनि जुहुयात् ॥

त्रिरात्रमेवार्थार्थी पापकृत षड्रात्रं पीत्वा पूतो भवति

सप्तरात्रं महापातकी द्वादशरात्रं पीत्वा सर्वं एम्ष-

कृतं निर्दहति ॥

निःसृतानां यवानामेकविंशतिरात्रं पीत्वा गणान्

पश्यति गणाधिपतिं पश्यति ।

विद्यां पश्यति, विद्याधिपतिं पश्यति ॥

योऽश्नीयाद् यावकं पक्वं गोमूत्रेषु सकृद्दधिक्षीरसर्पिः

प्रमुच्यते सोंऽहसः क्षण दित्याह भगवान्

मैत्रावरुणिः ॥ इति

**प्रस्कन्दः**— वृक्षस्य मध्यमशिफा।

ईषत्कार्यो वधस्तस्य यस्य चारित्रमीदृशम्।
प्रस्कन्देन प्रतिस्तब्धश्छिन्नमूल इव द्रुमः॥

**प्रस्कुन्दः**— चक्राकारवेदिका इति नीलकण्ठः।
महाभा, उद्-७३-२६
अत्र प्रस्कन्द इति प्रस्कुन्द इति पाठभेदः।

**प्रस्तरः**— (१) तृणमयासनमिति विज्ञानेश्वरः।
गृहान् व्रजित्वा प्रस्तरेत्यहमनश्नन्त आसीरन्॥
इति वसिष्ठः ४-१४
(२) प्रस्तरः कुशमुष्टिः इति गोभिलभाष्ये ४-१-६
कालसारे गदाधरोऽपि
प्रकृतीष्टौ चतस्रो दर्भमुष्टयश्छिद्यन्ते। प्रथमा दर्भमुष्टिः मन्त्रैः संस्कृता वेद्यां जुहूर्यस्यांनिधीयते विधृतिसंज्ञकयोः उदग्रयोः दर्भयोरुपरि या च प्रागग्रा स्थापिता भवति सा प्रस्तर इत्युच्यते इति श्रौतपदार्थनिर्वचने।
प्रस्तरोदर्भमुष्टिरिति राजनीति प्रकाशे-५०

**प्रस्तावः**— सप्तधाविभक्तदिवसस्य द्वितीयो भागः।
अथ यत् प्रथमोदिते स प्रस्ताव॥ इति छान्दोग्य-
२-९-३

**प्रस्तुतम्**— कृष्णाप्रतिपद्दिवसभागः। कालमाधवः-२

**प्रस्तोता**— ऋत्विग्विशेषः।

**प्रस्थः**— परिमाणविशेषः।

प्रस्थः षोडशपलमिति नरसिंहवाजपेयी। सेरिका कुडवः स च द्वादशप्रसृतिपरिमितः तच्चतुष्टयं प्रस्थ इति समयप्रकाशरत्नाकरस्मृतिसागरेषु प्रस्थः षोडशपलमिति भावप्रकाशे उक्तं खारीशब्दे द्रष्टव्यम्।

द्वात्रिंशता पलैः प्रस्थो मागधेषु व्यवस्थितः
इत्यपि वर्त्तते।

प्रस्थोऽस्त्री सानुमानयोरित्यमरः। ३-३-८८

इक्षुर्मधुघृतं चैव पयोदधि सहैव तु।
प्रस्थप्रमाणं वा ग्राह्यं मधुपर्कमिहोच्यते॥
इत्याचारभूषणे-१८२

**प्रस्नुषा**— पौत्रस्य पत्नी।

भार्या स्नुषा प्रस्नुषा च भार्यायाश्च प्रतिग्रहः।
एतान् हरन् ऋणं दाप्यो भूमिं यश्चोपजीवति॥
नारदस्मृ-४-२१

**प्रस्फोटनम्**— शूर्पम्।

शूर्पे प्रस्फोटनमिति नन्दपण्डितः॥ विष्णुः २३-११

**प्रस्रवः**— दोहनम्।

प्रस्रवे च शुचिर्वत्सः॥ मनुः ५-१३०

**प्रस्रवणम्**— पर्वतादेः प्रस्यन्दमानः स्तोकजलप्रवाहः।
इति हेमाद्रिः।

पर्वताद्युच्चप्रदेशाद प्रसृतमुदकं प्रस्रवणमिति
विज्ञानेश्वरः-१-१५६

निर्भर इति कल्पतरुः नियत-४३

**प्रस्रावः**— (१) मूत्रोत्सर्गः ।

प्रस्रावः मूत्रोत्सर्ग इति आह्निकप्रकाशे-२६

उच्चारे मैथुने चैव प्रस्रावे दन्तधावने ।

स्नाने भोजनकाले च षट्सु मौनं समाचरेत् ।।

इति तत्र हारीतः ।।

पुरीषे मैथुने होमे प्रस्रावे दन्तधावने ।

स्नान भोजन जप्येषु सदामौनं समाचरेत् ।।

अत्रिसंहिता-३२३

(२) निरवच्छिन्ना धारा ।

अत्यक्षराः शब्दाः सन्ततवलीकप्रस्रावः ।।

इति काठकगृ-१-६-६

**प्रहरः**— दिवसस्य रात्रेर्वा चतुर्थो भागः ।

महानिशा तु विज्ञेयं मध्यमं प्रहरद्वयम् ।

तस्यां स्नानं न कर्त्तव्यं काम्यनैमित्तिकादृते ।।

**प्रहर्षः**— कामः मैथुनेच्छा इति यावत् ।

कथं दनस्य सततं त्वमासाद्य रहो गतम् ।

तं विचिन्तयतः शापं प्रहर्षः समजायत ।।

महाभ, आदि-१२४-२०

**प्रहासः**— दीर्घहासः, अट्टहास इति यावत् ।

अधोवायुसमुत्सर्गे आक्रन्दे क्रोधसम्भवे ।

मार्जारमूषकस्पर्शे प्रहासेऽनृतभाषणे ।

निमित्तेषु धर्मार्थ कर्म कुर्वन्नुपस्पृशेत ।। इति

आह्निकप्रकाशे बृहस्पतिः

**प्रहुतः**— भूतबलिः ।

जपोऽहुतो हुतो होमः प्रहुतो भौतिकोबलिः ।

मनुः ३-७४

ब्राह्म्यं हुतं द्विजाग्र्यार्चा प्रशितं पितृतर्पणम् ।।

मनुः ३-७४

प्रहुतः यत्र होमः बलिकर्म भक्षणं च यथा पक्षादिकर्म

इति पारस्करगृह्यभाष्ये हरिहरः १-४-१

पिण्डपितृयज्ञ इति काठकगृह्ये १३-४

प्रहुतः पुंसवनादिरिति श्रीनिवासाध्वरिव्याख्यायाम् ।

**प्रहेलिका**— चटणी इति भाषाप्रसिद्धा ।

प्रहेलिकाः कृता यत्र कचोले रससंयुताः ।

नानाकुसुमसंमोदयुक्ताः सूदैः कृता हि ताः ।।

जैमि अश्व-६-४१

**प्राकाम्यम्**— ऐश्वर्यविशेष इति कालसारे गदाधरः ।

आयुः प्रकाम्यमैश्वर्यं रूपं च लभते सुखम्।।

इति सारोद्धतावायुपुराणे ।

**प्राकारः**—प्राचीरः ।

एकः शतं योधयति प्रकारस्थो धनुर्द्धरः ।।

मनुः ७-७४

प्राकारस्य च भेत्तारं परिखाणां च पूरकम् ।

प्राकारो वरणः सलः अमरः २-२-३

**प्राक्कूलः**— पागग्रः ।

प्राक्कूलान् पर्युपासीनः पवित्रैश्चैव पावितः

प्राणायामैस्त्रिभिः पूतस्तत ओंकारमर्हति ।।

मनुः २-७५

**प्रागमिकः**— लेखहारकादिः इति विवादरत्नाकरे। पृ-६०४

प्रागमिकः कुमार्यो मृतपत्न्यश्च ॥ वसिष्ठः १६-२४

**प्राङ्न्यायः**— उत्तरविशेषः।

रूप्यकशतमनेन गृहीतमित्यभियोगे अस्मिन्नर्थे पूर्वपराजितोऽयमिति प्रत्यर्थिन उत्तरम्।

आचारेणावसन्नोऽपि पुनर्लेखयते यदि।

सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते ॥

इति कात्यायनः १७१

**प्राचार्यः**— आचार्यस्य आचार्य इति उज्ज्वलावृतौ।

आचार्यप्राचार्यसंनिपाते इत्यादिः आपस्त १-२-८-१६

**प्राचीनामलकम्**— पानीयामलकमिति हेमाद्रिः।

पानीयामलकमिति मित्रमिश्रःश्राद्धप्रकाशे-४१

पाणिअंला कोलि इति उत्कलभाषाप्रसिद्धं फलम्।

प्राचीनामलकं क्षीरं नारिकेलं परूषकम् ॥

नारङ्गं च सखर्जूरं द्राक्षानीलकपित्थकम्।

इत्यादि श्राद्धदेयमिति ब्रह्मपुराणे ॥

करमर्द इति पूजाप्रकाशे मित्रमिश्रः।

प्रकाशितब्रह्मपुराणपाठस्तु—

आम्रमाम्रातकं बिल्वं दाडिमं बीजपूरकम्।

प्राचीनामलकं क्षीरं नारिकेलं परूषकम् ॥ १५६

नारङ्गं च सखर्जूरं द्राक्षानील कपित्थकम्।

पटोलं च प्रियालं च कर्कन्धूबदराणि च ॥ १५७

विकङ्कतं वत्सकं च कर्कारुर्वारुकानपि।

एतानि फलजातानि श्राद्धदेयानि यत्नतः ॥

ब्रह्मपु-२२०-१५८

**प्राचीनावीती**— अपसव्य दक्षिणस्कंधधृतयज्ञसूत्र इति यावत्।

सव्यं बाहुमुद्धृत्य शिरोवधाय दक्षिणेंऽशे प्रतिष्ठाप्य सव्यं कक्षमन्ववलम्बं भवत्येवं प्राचीनावीती भवति

गोभिल-१-२-३

**प्राजकः**— सारथिः।

प्राजकश्चेद् भवेदाप्तः प्राजको दण्डमर्हति।

युग्यस्थाः प्राजकेऽनाप्ते सर्वे दण्ड्याः शतं शतम् ॥

मनुः ८-२९४

**प्राजनम्**— प्रतोदः।

**प्राजापत्यम्**— (१) व्रतविशेषः।

त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्।

त्र्यहं परं च नाश्नीयात् प्राजापत्यं चरन् द्विजः ॥

(२) प्राजापत्यं रथ्योपसर्पणरादित्यम् इति

समयमयूख-२

तत्रापस्तम्बः दिवाआदित्यः सत्त्वानि गोपायति।

प्राजापत्येन ब्रह्मचर्यकालेन च ॥ इति

**प्राजापत्यविवाहः**— विवाहभेदः।

सहोभौ चरतां धर्ममिति वाच नुभाष्य च।

कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः ॥

मनुः-३-३०

प्राज्ञः— गम्भीरार्थावधारणक्षम इति विज्ञानेश्वरः-१-३११

प्राड्विवाकः— धर्मस्थः ।

राज्ञा धर्मनिर्णयकत्वेन नियुक्तः ।

सभान्तः साक्षिणः प्राप्तान् अर्थिप्रत्यार्थिसंनिधौ ।

प्राड्विवाकोऽनुयुञ्जीत विधिनानेन सान्त्वयन् ।।

मनुः ८-७९

पृच्छति इति प्राट् विवाचयति इति विवाकः प्राट्चासौ

विवाकश्चेति प्राड्विवाक इति विग्रहः ।

विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च ।

नयपूर्वं प्राग् वदति प्राड्विवाकस्ततः स्मृतः ।।

इति बृहस्पतिः १-६६

प्रियपूर्वमिति व्यवहारकल्पतरौ-२५

व्यवहारमयूखे च पाठः व्यवहारतत्त्वे-२

प्रियपूर्वमिति व्यवहारनिर्णये पाठः ।

प्राड्वदति इति सरस्वतीविलासपाठः ।।

व्यासश्च—

विवादानुगतं पृष्ट्वा ससभ्यस्तं प्रयत्नतः ।

विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः ।।

कात्यायनः-६६

व्यवहाराश्रितं प्रश्नं पृच्छति प्राडिति स्थितः ।

विवेचयति यत्तस्मिन् प्राड्विवाकस्ततः स्मृतः ।।

व्यवहारतत्त्वे-२

यदा स्वयं न कुर्यात्तु नृपतिः कार्यदर्शनम् ।

तदा नियुज्याद् विद्वांसं ब्राह्मणं कार्यदर्शने ।।

तस्यैव प्राड्विवाक इति संज्ञा इति वरदराजः ।

अष्टादशविवादपदाभिज्ञः तद्भेदाष्टसहस्रवित् श्रुति-

स्मृतिपरायणः आन्वीक्षिक्यादिकुशलः ब्राह्मणः

प्राड्विवाक इति सरस्वतीविलासे ।

तस्य प्राकृत इति संज्ञान्तरमपि ।

यस्मिन् देशे निषीदन्ति विप्रा वेदविदस्त्रयः ।

राज्ञश्च प्राकृतो विद्वान् सा यज्ञसदृशी सभा ।।

प्राकृतो विद्वान् प्राड्विवाक इत्यर्थ इति व्यवहारनिर्णये

वस्तुतस्तु मनुस्मृतौ-८-११

यस्मिन् देशे निषीदन्ति विप्रा वेदविदस्त्रयः ।

राज्ञश्चाधिकृतो विद्वान् ब्रह्मणस्तां सभां विदुः ।। ८-११

इतिपाठ परिलभ्यते नतु प्राकृतो विद्वान् इति पाठः ।।

प्राड्विवाकशब्दे विविच्य वक्तीति विवाकः इति

बृहस्पतिः ।

विचारयत्यभिधानात् विविनक्तीति विवाक

इति व्यास ।।

गौतममतेन विवक्तीति विवाक इति व्यवहारप्रकाशे-२४

प्राणः— (१) प्राणो नाम परिमाणविशेषश्चतुर्माषात्मकः ।

षोडशमाषात्मकः प्राण इत्याहुः एतदेवसम्यगिति सर-

स्वतीविलासे तत्र विष्णुगुप्तः ।

पञ्चगुञ्जलको माषः प्राणस्तेषु चतुर्गुणैः।

कलंजो चरणं प्राहुर्मणिमानविशारदाः॥ इति

प्राणशब्दमाहविष्णुः

मणीनां प्राणकलंजापहारं हस्तच्छदः।

(२) दशत्रुटिपरिमितः कालविशेषः।

द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणो दशत्रुटिः स्मृतः।

विनाड़िका तु षट् प्राणास्ताः षष्टिर्नाड़िका मता॥

इति विष्णुधर्मोत्तरे-पु-१-७३-३

(३) दशगुरुवर्णोच्चारणकालः प्राणः।

दशगुर्वोदारोच्चारकालः प्राणः षडात्मकैः।

तैः पलं स्याच्च तत् षष्ट्या दण्डइत्यभिधीयते॥

इति ज्योतिःशास्त्रे

(४) मुखनासिकासंचारिवायुश्च प्राणः।

(५) प्राणापानादि पञ्चवायवः प्राणः।

हृदि प्राणो गुदेऽपानो नाभिस्थस्तु समानकः।

कण्ठदेशेऽप्युदानः स्याद्व्यानः सर्वशरीरगः॥

देवीभाग ७-३२-४०

पुंसि भूम्न्यसवः प्राणा इत्यमरः २-६-११६

कोष्ठस्थितो वायुर्मुखनासिकाभ्यां निःसरन् प्राणः।

पुनस्तेनैव मार्गेणान्तः प्रविशन् अपानः।

प्राणो रेचकः अपानः पूरकः।

तयोर्वा अधः सन्धिः सन्धानं व्यानः कुम्भरूपः॥

उत्क्रमणादिरूर्ध्वगतिरुदानः।

देहस्थितस्याशितपीतस्यान्नरसस्य सर्वाङ्गेषु समनयात्

समान इति गदाधरभाष्ये।

पारस्करगृ-१-१६-११

**प्राणव्यायच्छनम्—** प्राणपीड़ाकरं कर्म इति हरदत्तः।

गौतमः-१-६-३२

**प्राणाग्निहोत्रम्—** ओँ प्राणाय स्वाहा इत्यादिप्राणाहुतयः।

**प्राणायामः—** पूरकरेचककुम्भकात्मकः अनुष्ठानविशेषः।

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।

त्रिः पठेदायतप्राणः प्राणायामः स उच्यते॥

गायत्रीं शिरसा सार्द्धं सप्तव्याहृतिपूर्विकाम्।

त्रिर्जपेत् सदशोंकारः प्राणायामोऽयमुच्यते॥

इति स्कान्दे काशी-२५-११५

निरोधाज्जायते वायुर्वायोरग्निः प्रजायते।

अग्नेरापश्च जायन्ते ततोऽन्तः शुध्यते त्रिभिः॥

अत्रिस्मृतिः-६

गायत्रीं शिरसा सार्द्धं जपेत् व्याहृतिपूर्विकाम्।

स च जपध्यानोपेतः सबीजः तद्रहिः अबीज

इत्युच्यते।

तदुक्तं मदनपारिजाते-६७

प्राणाख्यमनिलं वश्यमभ्यास त् कुरुते तु यः ।
प्राणायामः स विज्ञेयः सबीजोऽबीज एव वा ॥

इति विष्णुपुराणे

सबीजो ध्यानजपसहितः सगुणोपान्तः ।
अबीजो निर्गणोपासनम् ।
तच्च परमहंसविषयम् ।

प्राणाख्यमनिलं वश्यमभ्यासत्कुरुते तु यः ।
प्राणायामः स विज्ञेयः सबीजोऽबीज एव च ॥

इति नित्याचारपद्धतौ ।

प्राणायामस्तु द्विविधः सगर्भोऽगर्भ एव च ।
जपध्यानयुतो गर्भो विपरीतस्त्वगर्भकः ॥

अग्निपु-१६१-२१

प्राणो वायुः शरीरस्थ आयामस्तस्य निग्रहः ।
प्राणायाम इति प्रोक्तो द्विविधः कथितो हि सः ॥
अगर्भश्च सगर्भश्च द्वितीयस्तु तयोर्वरः ।
जपध्यान विनाऽगर्भः सगर्भस्तत् समन्वितः ॥ ३१-१२०
रेचकः पूरकश्चैव कुम्भकः शून्यकस्तथा ।
एवं चतुर्विधः प्रोक्तः प्राणायामो मनीषिभिः ॥

इति वृहन्नारदीयपुराणे-३१-१२१

प्राणानां च निरोधस्तु स प्राणायाम संज्ञितः ।
प्राणायामप्रमाणं तु मात्रा वै द्वादशस्मृताः ॥ ७४
मन्दो द्वादशमात्रस्तु उद्घातो द्वादश स्मृताः ।
मध्यमस्तु द्विरुद्घातश्चतुर्विंश त्रिमात्रकः ॥ ७५
उत्तमस्तत् त्रिरुद्घातो मात्राः षट्त्रिंशदुच्यते ।
स्वेदकम्पविषादानां जननो ह्युत्तमः स्मृतः ॥

वायुपु-१-१०-७६

**प्राणाहुतिः**— ओं प्राणाय स्वाहेत्यादि पञ्चाहुतयः ।

मधुपर्के तथा सामो अप्सु प्राण हुतिषु च ।
अनुच्छिष्टो भवेद्विप्रो यथा वेदविदो विदुः ॥

इति गोभिलभाष्ये- -८-२१

यथात्रेर्वचनं तथेति नित्याचारप्रदीपे अत्र्यंगिरसौ

प्र-२३०

महाव्याहृतिभिस्त्वन्नं परिधायोदकेन तु ।
अमृतोपस्तरणमसीत्यापोशानक्रियां ततः ॥
स्वाहा प्रणवसंयुक्तां प्राणायाद्याहुतिं ततः ।
अपानाय ततो भुक्त्वा व्यानाय तदनन्तरम् ॥ ६
उदानाय ततः कुर्यात् समानायेति पञ्चमीम् ।
विज्ञाय तत्त्वमेतेषां जुहुयादात्मनि द्विजः ॥

कूर्मपु. २-१९-७

प्राणाहुत्यर्थं ग्रासग्रहणप्रकारमाह शौनकः

तर्जनीमध्यमाङ्गुष्ठलग्ना प्राणाहुतिर्भवेत् ।
मध्यमानामिकाङ्गुष्ठैरपाने जुहुयात्ततः ॥
कनिष्ठानामिकाङ्गुष्ठैर्व्याने च जुहुयाद्धविः ।
तर्जनीं तु बहिः कृत्वा उदाने जुहुयात्ततः ॥
समाने सर्वहस्तेन समुदायाहुतिर्भवेत् ।
स्वाहान्ताः प्रणवाद्याश्च नाम्ना मन्त्राश्च वायवः ॥

जिह्वयैव प्रभेदन्नं दशनेन न संस्पृशेत् ।

इत्याचारभूषणे-२८८

**प्रातः**— सूर्योदयसमीपस्थदिवसांशः ।

स च त्रिधाभागपक्षे पञ्चमुहूर्त्ताः चतुर्द्धा भागपक्षे प्रथमप्रहरः पञ्चधा भागपक्षे मुहूर्त्तत्रयमिति.

प्रातः सार्द्धप्रहरात्मकः काल इति गदाधरभाष्येगर्ग्यः ।

ललाटसम्मिते भानौ प्रथमः प्रहरः स्मृतः ।

स एव सार्द्धसंयुक्तः प्रातरित्यभिधीयते ॥ इति

**प्रातराशः**— प्रातर्भोजनम् ।

अश्नन्त इत्याशा ग्रासाः इति हरदत्तः । गौत-३-८-२

अतएव प्रातर्भोज्य अंश प्रातराश इति विग्रह ।

प्राक् प्रातराशात् कर्षी स्यात् ॥ वसिष्ठः २-३२

**प्रातिभाव्यम्**— (१) प्रातिभूत्वेन देयमृणम् ।

प्रतिभाव्यं वृथादानं माक्षिकं सौरिकं च यत् ।

दण्डशुल्कावशेषं च न पुत्रो दातुमर्हति ॥

मनु ८-१५६

(२) प्रातिभाव्यं नाम विश्वासार्थं पुरुषान्तरेण सह समय इति विज्ञानेश्वर ।

दर्शने प्रत्यये दाने दाप्या वितरस्य सुता अपि ॥

याज्ञ-२-५१

**प्रतिरूपक**— } कूटतुलामानादिव्यवहारी इति मस्करी
**प्रतिरूपिक**— } हरदत्तश्च गौत ध. २-६-१८

**प्रातिरूपिक**— द्रव्याणां कूप्रविकृतिकर्त्ता इति हेमाद्रिः

परिशिष्टे-५०२

**प्रातिवेश्य**— विशन्त्यस्मिन्निति वेशो निवास तत्प्रतिगत प्रतिवेश गृहाभिमुख तत्र प्रभव प्रतिवेश्य एवमनुवेश्य पृष्ठतो वसन्निति मेधातिथि ।

प्रतिवेश्यो निरन्तरगृहस्थ अनुवेश्यस्तदनन्तर इति मन्वर्थविवृत्तौ ॥

एवमेव साम्प्रतिकलोकव्यवहार प्रतिवेश्यशब्दस्य पड़िशा इत्यपभ्रंश

प्रातिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे ।

अर्हावभोजयन् विप्रो दण्डमर्हति माषकम् ॥

मनुः ८-३९२

**प्रातिहारिक**— ऐन्द्रजालिक । द्वारपालश्च ।

प्रतिहार इन्द्रजालं तेन जीवति प्रातिहारिक इति कल्पतरु श्राद्ध-७७

प्रातिहारिको द्वारपालवृत्तिरिति हरदत्तः ।

न भोजयेत मद्यपकुचरकूटसाक्षिप्रतिहारिकान्.

गौत, ध, २-६-१५

**प्रात्ययिकः**— प्रत्ययप्रतिभू ।

दर्शनप्रतिभूर्यत्र मृत प्रात्ययिकोऽपि वा ।

न तत् पुत्राऋणं दद्युर्दद्युर्दानाय यः स्थित ॥

याज्ञ-२-५४

**प्रादुर्भाव**— उत्पत्तिः ।

औषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्यां

श्रावणस्य पञ्चमीं हस्तेन वा ॥ पारस्कगृ २-१०-२

प्रादुष्करणम्— विहरणम् ।

एतांस्त्वभ्युदितान् विद्याद् यदा प्रादुष्कृताग्निषु ।
तदा विद्यादनध्यायमनृतो चाभ्रदर्शने ॥ मनु ४-१०४

प्रादेशः— प्रसारितयोरङ्गुष्ठप्रदेशिन्योरन्तरालः ।

प्रादेशतालगोकर्णस्तर्जन्यादियुते तवे ।
अंगुष्ठे सकनिष्ठे स्याद् वितस्तिर्द्वादशाङ्गुला ॥

इतिकोशः

अंगुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते ।
इति आदित्यपुराणवचनं नित्याचारप्रदीपे-१-१४०

वायुपुराणे च-१-८-९८

सार्द्धदशाङ्गुलः प्रादेश इति कल्पतरुरिति ।
दानमयूखे-१५८

प्राधीतः— उपाकृत्याध्येतुं प्रवृत्त इति हरदत्तः ।

प्राधीतस्य च निशायां चतुर्मुहूर्त्तम् ॥
गौत. ध, २-८-४४

प्रक्रान्ताध्ययन इति कुल्लूकः ।

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
प्राधीते शतसाहस्रमनन्तं वेदपारगे ॥

मनुः ७-८५

प्राध्वम्— (१) आनुकूल्यम् ।

प्राध्वम् आनुकूल्यम् इति उज्वलावृत्तिः ।

तं योऽनुतिष्ठेत् सर्वत्र प्रध्वं चास्य सदाचरेत् ।
दुर्दर्शं निपुणं युक्तो यः पश्येत् स मोदेत विष्टपे ॥

आपस्त-१-८-२२-८

(२) प्राध्वं बन्धनम् इति श्रीशंकराचार्य्याः
आपस्तम्बविवरणे-१-८-२२-८

प्रानूनः— देशविशेषः । बौधा, धर्म, १-१-२-१५

प्रापणम्— नैवेद्यम् ।

प्रापणं नैवेद्यमिति परिभाषाप्रकाशे मित्रमिश्रः ।

तत्रत्यमहाभारते—

पञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः ॥
प्रापणं भगवत्प्रोक्तं भुंजते चात्र भोजनम् ॥ इति

वाराहे च—

सौवर्णं राजतं कांस्यं येन दीयेत प्रापणम् ।
तानि सर्वाणि सन्त्यज्य ताम्रं तु मम रोचते ॥ इति

पूजाप्रकाशे च यो वै वराहमांसेन मम कुर्वीत प्रापणम् ।

इति-१८३

प्राप्तिः— देशकालपुरुषाणां द्रव्येण सह सम्बन्धः प्राप्तिः
इति विज्ञानेश्वरः ।

सन्दिग्धलेख्यशुद्धिः स्यात स्वहस्तलिखितादिभिः ।
युक्तिप्राप्तिक्रियाचिह्न सम्बन्धागमहेतुभिः ॥

याज्ञ १-९२

प्रायः— (१) प्रायोपवेशनम् ।

मरणार्थमुपवेशनमिति भावः ॥

(२) प्रायो महाप्रस्थानमिति हरदत्तः । गौत २-५-११

विज्ञानेश्वरश्च ३-६

(३) तपः ।

प्रायो नाम तपः प्रोक्तम् इति अंगिराः ४-१

अत्र प्राय इति सान्तः ।

(४) ऋणसाधनोपायविशेषः । स चोपायः प्रार्थना ।

सुहृत सम्बन्धिसन्दिष्टैः सामोक्त्यानुगमेन च ।

प्रायेण वा ऋणी दाप्यो धर्मएष उदाहृतः ॥

इति बृहस्पतिः

अत्रप्रार्थनाबाहुल्यमिति स्मृतिचन्द्रिका

प्रार्थना इति मयूखकारः ।

प्रायोपवेशनमिति विवादरत्नाकरः ।

(५) अनशनमिति हलायुधः ।

प्रायः स्याद् भोजनत्याग इति-का-४

(६) प्रायः गमक इति शब्दकल्पद्रुमे ।

प्रक्षाल्य हस्तावाचम्य ज्ञातिप्रायं प्रकल्पयेत् ॥ इति

अत्र ज्ञातिप्रायमन्नं कुर्यादिति ज्ञातीन् प्रैति गच्छतीति ज्ञातिप्रायं कर्मण्यण् ।

ज्ञातीन् भोजयेत् इति कुल्लूकः-३-२६४

(७) बाहुल्यम् ।

प्रायः प्रातरुपोष्या हि तिथिर्दैवफलेप्सुभिः ॥ इति

**प्रायणम्**— मृत्युः ।

दत्वा धनं तु विप्रेभ्यः सर्वदण्डमसुस्थितम् ।

पुत्रे राज्यं समासृज्य कुर्वीत प्रायणं रणे ॥

मनुः ९-३२३

प्रायणं प्राणत्यागम् इति कुल्लूकः ।

**प्रायत्यम्**— शौचम् ।

दोषविशेषात् प्रायत्यमुपैति ॥ वसिष्ठ-३-५६

**प्रायश्चित्तम्**— पापक्षयार्थकर्म तच्च नैमित्तिको धर्मः

प्रायश्चित्तं पापक्षयमात्रसाधनं कर्मेति शूलपाणिः

प्रायो नाम तपः प्रोक्तं तपो निश्चय उच्यते ।

तपो निश्चयसंयुक्तं प्रायश्चित्तमितिस्मृतम् ॥

इत्यांगिरसस्मृतो उ, ४-१

प्रयतत्वात् उपचितमशुभंनाशयतीति प्रायश्चित्तं

इति प्रायश्चित्तविवेके जाबालिः ।

प्रायो नाम नष्टं तस्य चितं नाम पुनः सन्धानम् ।

अकृतस्य कृतत्वसम्पादकम् अन्यथाकृतस्य सुष्टुकृतत्वसम्पादकं कृतस्यनिषिद्धस्य अकृतत्वसम्पादकं

कर्म विधायकश्रुत्यादिनैव तथा प्रतिपादनात्

तच्च जपहोमादिरूपं दोषानुसारेण श्रुत्यादिप्रतिपादितं

प्रायश्चित्तमिति श्रौतपदार्थनिर्वचने ।

**प्रायोपवेशनम्**— अनशनपूर्वकं मरणायोपवेशनम् ।

सुग्रीवस्त्रीलक्ष्णदण्डोऽस्मान् निहत्ये वन संशयः ।

सुग्रीववधतोऽस्माकं श्रेयः प्रायोपवेशनम् ॥

अध्या-कि ७-२७

**प्रारब्धम्**— इह जन्मनि भोग्यं पूर्वं कर्म ।

आदित्यं पूजयित्वा तु ब्राह्मणान् भोजयेत्ततः ।

दिनं मासं तथा वर्षं वर्षत्रयमथापि वा ॥ २६

प्रारब्धं प्रबलं चेत् स्यान्नश्येद्रोगजरादिकम् ।
जपायमिष्टदेवस्य वारादीनां फलं विदुः ॥
शिव पु, १-१४-२७

**प्रावरणम्**— उत्तरीयम् ।
परिधाने सितं शस्तं वासः प्रावरणे तथा ॥
इति लघ्वाश्वलायनस्मृतिः-१-२८

**प्रावरणषष्ठी**— मार्गशिरशुक्लषष्ठी ।
तत्र श्रीजगन्नाथदेव श्रीभुवनेश्वरदेवयो शीतवस्त्र-ग्रहणोत्सवः क्रियते ।

**प्रावारः**— आच्छादनम् उत्तरीयम् ।
आच्छादयसि प्रावारानश्नासि पिशितौदनम् ।
महाभा, भीष्म, १२४-१०
यत्र प्रावारादौ रोमाणि वध्यन्ते स रोमबन्धः
इति व्यवहारप्रकाशे-२९०

**प्रावारकम्बलः**— आच्छादनयोग्यः सूक्ष्मकम्बलः ।
इति लक्ष्मीधरः श्राद्ध-१५६

**प्रावारषष्ठी**— प्रावरणषष्ठी । (मार्गशिरशुक्लपक्षषष्ठी)

**प्रावृट्**— वर्षर्त्तुः ।
यथा पक्वेषुधान्येषु निष्फला प्रावृषो गुणाः ।
निवृत्त व्यवहाराणां प्रमाणमफलं भवेत् ॥
इति नारदः व्यवहार कल्पतरौ ९१

**प्राशितम्**— (१) पितृतर्पणम् ।
जपोऽहुतो हुतोहोमः प्रहुतो भौतिको बलिः ।
ब्राह्म्यहुतं द्विजाग्र्यार्चा प्रशितं पितृतर्पणम् ।
मनुः ३-७४
(२) ब्राह्मणभोजनम् ।
मधुपर्को ब्रह्मौदनश्च प्राशितानामिति काठकगृह्ये ।
११-५
प्राशित श्राद्धकर्म इति श्रीनिवासाध्वरिव्याख्यायाम् ।
जैमि, गृ-१-१

**प्राशितः**— यत्र प्राशनमात्रं न होमो न बलिः यथा सर्वासां गवां पयसि पायसश्रपणानन्तरं ब्राह्मणभोजनमिति हरिहरः । पारस्क, गृ-१-४-१

**प्राशित्रहरणम्**— खदिरकाष्ठ निर्मितं प्रादेशपरिमितं गोकर्णाकारं चतुरङ्गुलपरिमितदण्डयुतं प्राशित्रं नाम ब्राह्मणे दीयमानो हुतशेषहविर्भागः, स ह्रियते अनेनेति वारणव्युत्पत्त्या प्राशित्रहरणपदवाच्यम् ।

**प्रासः**— भल्लः ।
प्रासाः हस्तक्षेप्या भल्लाः सन्तीति प्रसिद्धाः ।
कुन्ता इत्यपरे इति नीलकण्ठः महाभा, भीष्म, ४६-२१
तैर्विमुक्ता महाप्रासा जाम्बूनदविभूषणाः ।
आशुगा विमलास्तीक्ष्णाः सम्पेतुर्भुजगोपम्यः ॥ इति
प्रासः कुन्त इति निर्णयसिन्धुकृतामाशयः ।
यतस्तत्र अथकुन्तपूजा इत्युपक्रम्य ।
प्रास पातय शत्रूंस्त्वम इत्यादिप्रासप्रार्थना प्रदर्शिता ।

**प्रासङ्गः**— युगान्तरम् ।

प्रासङ्गो द्वितीययुग काष्ठमिति कल्पतरौ

दानकाण्डे-२४३

प्रासङ्गो ना युगान्तरम् इत्यमरः २-८-५१

युगं द्वितीयं प्रासङ्ग इत्यमरव्याख्याने काल्यः ।

अन्यवृषयुग्ममिति व्याख्यासुधा ।

प्रासङ्गः युगं योआलि इतिभाषा इति शब्दकल्पद्रुमे

सप्रासङ्गं च शकटं सधान्यं वस्त्रसंयुतम् ॥

इति महाभा, दान, ६४-१६

**प्रासङ्गिकम्**— प्रसङ्गः विषयोपभोगः ।

तदर्थं शय्यासनादि इति कल्पतरुः श्राद्ध-२५०

राजनि च प्रेते दद्यात् प्रासङ्गिकम् वसिष्ठ-१६-२६

दत्तं च भरतेन दशरथर्थम् ब्राह्मणेभ्यो धनं रत्नं

दादावन्नं च पुष्कलम् ।

वासांसि च महार्हाणि रत्नानि विविधानि च ।

वास्तिकं बहुशुक्लं च गाश्चापि बहुशस्तथा ॥ २

दासीदासांश्च यानानि वेश्मानि सुमहान्ति च ।

ब्राह्मणेभ्यो ददौ पुत्रो राज्ञस्तस्यौर्ध्वदैहिकम् ॥

रामा, अयो, ७७-३

**प्रासादः**— देवानां भूभुजां च गृहम् ।

इत्युक्त्वा सचिवान् राजा कल्पयित्वा थ प्रासादं

सप्तभूमिकमुत्तमम् ॥ देवीभागवते-२-६-४२

तद्भेदा गारुडादौ द्रष्टव्या ।

मात्स्ये—

मेरुमन्दरकैलासकुम्भसिंहमृगास्तथा ।

विमानं छन्दकस्तद्वच्चतुरस्रस्तथैव च ।

अष्टास्रः षोडशास्रश्च वर्त्तुलः सर्वभद्रकः ॥

सिंहास्यो नन्दनश्चैव नन्दिवर्द्धनकस्तथा ।

हंसो वृषः सुवर्णोशः पद्मकोऽथ समुद्गकः ।

प्रासादा नामतः प्रोक्ता विभागं शृणुत द्विजाः ॥

मेरुप्रभृतीनां लक्षणानि तत्रवोक्तानि ॥

२६८-अध्याय

**प्रियः**— सुहृत् ।

जामाता इति कुल्लूकः मनुः ३-११६

**प्रियकः**— वृक्षविशेषः मृगविशेषश्च ।

प्रियकः केलिकदम्बे महाकदम्बे इति पर्यायमुक्तावली

तेन्दुकवृक्ष इति रत्नमाला ।

पीतशाल (पिआशाल) वृक्ष इति चरके सू-२५

अध्यये ।

बिलेशयमृगविशेष इति मेदिनी ।

असनवृक्ष इति राजनिघण्टुः ६६ इति

वैद्यकशब्दसिन्धुः ।

प्रियकोबीजपूरक इति कल्पतरौ दानकाण्डे ५४ तत्र

जीवक इति पाठान्तरम् ।

**प्रियङ्गुः**— प्रियङ्गवः कङ्गवः प्रसिद्धा इति महीधरः ।

शुक्ल, य. १८-१२

काङ्गनीति प्रसिद्धा इति कतीरत्नाकरे चण्डेश्वरः-५१६

प्रियालम्— चारवृक्षस्य फलमिति हेमाद्रिः । परि-५५१

चिरौंजी इति निर्णयसिन्धौ ॥

प्रियालः— चारवृक्षः ।

प्रीतिदत्तम् – (१) याचितकम् ।

प्रीत्या यत् वृद्धिं विना दीयते ।

प्रीतिदत्तं न वर्द्धेत यावन्न प्रातियाचितम् ॥

याच्यमानं न दत्तं चेद्वर्द्धते पञ्चकं शतम् ।

इति कात्यायनः

(२) पादवन्दनिकम् ।

प्रीत्यादत्तं तु यत् किंचिच्छ्वश्रा वा श्वशुरेण वा

पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते ॥

इति व्यवहारप्रकाशे कात्यायनः

प्रीतिदायः— प्रीतिदानेन लब्धमिति हेमाद्रिः ।

क्रमागतं प्रीतिदायः प्राप्तं च सह भार्यया ।

अविशेषेण सर्वेषां वर्णानां त्रिविधं धनम् ॥

प्रीतिदानमत्र प्रीतिपूर्वक दानं नतु याचितकमिति ।

प्रेक्षणिकः— सामुद्रिकः ।

हस्तरेखादर्शनेन यो जीवति ।

ईक्षणिक इत्यस्य पाठान्तरम् ॥

उत्काचकाश्चौपधिका वञ्चकाः कितवास्तथा ।

मङ्गलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह ॥

मनुः ९-२५८

प्रेक्षा— (१) नृत्यादिस्थानम् ।

प्रतिषिद्धापि चेद्यातु मद्यमभ्युदयेष्वपि ।

प्रेक्षासमाजं गच्छेद्वा सा दण्ड्याकृष्णलानि षट् ॥

मनुः ९८४

(२) नृत्यादि ।

प्रेक्षायामनंशदः सस्वजनो न प्रेक्षेत ॥ कौट-३-१०

(३) प्रज्ञा ।

सा तस्मै सर्वमाचष्ट यवक्रीभाषितं शुभा ।

प्रत्युक्तं च यवक्रीतं प्रेक्षापूर्वं तथात्मना ॥

महाभा, वन, १३६-७

प्रेङ्खा— दोला ।

निखातदारुलम्बमानक्रीडाफलका प्रेङ्खा इति

गोविन्दस्वामी प्रेङ्खा हान्दोलिका इति नरसिंह-

वाजपेयी ।

प्रेङ्खयोरन्तरेण न गच्छेत इति बौधायनः ।

प्रेङ्खा दोला इति व्यवहाकल्पतरौ-६१२

प्रेङ्खोलनम्— इतस्ततश्चालनम् ।

प्रेङ्खोलनम् इतस्ततश्चालनमिति नरसिंहवाजपेयी ॥

प्रेङ्खोलनं पादयो र्वर्जयेत् इत्यापस्त २-६-२०-१३

प्रेतः— (१) मृतः ।

प्रकर्षेण इतः गत इति विग्रहः ।

प्रेतेभ्य एव निपृणीयात् ॥

इति सामान्येन प्रतशब्दस्य प्रयोगदर्शनात् मृतमात्रः

प्रेतः ।

आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते ।

गुरुवारे सपिण्डो वा गुरुवद् वृत्तिमाचरेत् ॥

मनुः २-२४७

(२) मृतः असपिण्डीकृतः ।

प्रेतलोके तु वसति नृणां वर्षं प्रकीर्त्तिता ।

क्षुत्तृष्णे प्रत्यवं तत्र भवेतां भृगुनन्दन ॥

इति विष्णुधर्मोत्तरे २-११३-१३

**प्रेतपक्षः**— पूर्णिमान्ताश्विनमासस्य कृष्णपक्षः दर्शान्तभाद्र-कृष्णपक्षः ।

आषाढीमवधि कृत्वा यः पक्षः पञ्चमो भवेत् ।

तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके ।

निषिद्धेऽपि दिने कुर्यात् तर्पणं तिलमिश्रितम् ॥

**प्रेतपर्पटः**— कुतपः ।

प्रेतपर्पट भूतघाः इति पूर्वाङ्गिरसे-५१६

**प्रेत्य**— लोकान्तरे मनुः २-९

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः ।

इह कीर्त्तिमाप्नोति प्रेत्यचानुत्तमं सुखम् ॥

मनुः २-९

**प्रेष्यः**— भृत्यः ।

न रात्रौ प्रेष्याहृतम् भक्षयेदितिशेषः ॥

गौतमः १-९-७०

**प्रैषः**— प्रेरणा, निर्देशः ।

**प्रोक्षितम्**— समन्त्रजलसेचनेन संस्कृतम् ।

प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानां च काम्यया ।

यथाविधि नियुक्तस्तु प्राणानामेव चात्यये ॥

मनुः ५-२७

**प्रौढपादः**— आसनाद्यारूढपादः ।

आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा ।

कृतावसक्थको यस्तु प्रौढपादः स उच्यते ॥

इति शाट्यायनः

अत्र सम्पूर्णपादतलभागस्य आसनसम्बधो ।

निषिद्ध इति मित्रमिश्राणां स्वरसः परिशिष्टप्रकाशे ।

परिभाषाप्रकाशेतु जानुनोर्वाथजंघयोरितिपाठः

**प्रौष्ठपदी**— भाद्रपूर्णिमा ।

श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि ।

युक्तश्छन्दांस्यधीयीत मासान् विप्रोर्धपञ्चमान् ।

मनुः ४-९५

**प्लक्षः**— वृक्षविशेषः । जटी इति हेमाद्रिः

**प्लक्षजातासरस्वती**— कुरुक्षेत्रगता सरस्वती नदीति हेमाद्रिः ।

आदित्यदुहिता गङ्गा प्लक्षजाता सरस्वती ।

रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञिताः ॥

इति मार्कण्डेयः

**प्लवः**— (१) समुद्रसन्तरणमिति मेधातिथिः ।

(२) प्लवः तृणादिनिर्मितं सन्तरणसाधनम् ।

यादृशं फलमाप्नोति कुप्लवैः सन्तरन् जलम् ।

मनुः ९-१६१

(३) पक्षिविशेषः ।

यः प्लवनेनैव आहारं प्राप्नोति इति कृत्यकल्पतरौ ।

प्लवः शकटविलाख्यो बकविशेष इति हरदत्तः ॥

आपस्त १-५-१७-३

गौतमः-२-८-२८

प्लवो जलकुक्कुट इति विज्ञानेश्वरः ।

कोयष्टिप्लवचक्राह्वबलाकाबकविष्किरान् ॥

याज्ञ-१-१७३

प्लवः शकटविलाख्यः इति विज्ञानेश्वरः ३-२१४

(४) प्लवः जातिविशेषः लोके हाड़ी इति प्रसिद्धः ।

आन्ध्रस्य वनितासङ्गाच्चाण्डालोऽजनयत्सुतम् ।

प्लवसंज्ञं स हाड़ीति लोके सर्वत्र विश्रुतः ॥

आचारेन्दुः २४६

(५) प्लवः जलान्तरमिति हेमचन्द्रः ३-५-४३

पोल इति भाषायाम्

(६) प्लवः सम्वत्सरविशेषः प्लवे प्लवन्ति तोयानि

इत्यग्निपुराणे १३९- ०

प्लवकर्म— अनुष्ठानविशेषः ।

उदकं तरिष्यन् स्वस्त्ययनं करोति उदकाञ्जलींस्त्रीनप्सु जुहोति, समुद्राय, वैणवे नम इत्यादि जप्त्वा ।

तरंश्चेद्भयं शङ्केतसमुद्रज्येष्ठसूक्तं (ऋक् ७-४९-१) जपेत् ।

प्लवगः— ब्राह्मणविशेषः ।

मूल्यैश्चिकित्सां कुरुते कथां चित्रं तनोति यः ।

गीतं गायति भृत्यर्थे विप्रः स प्लवगो मतः ॥

प्लवनम्— द्रवद्रव्यस्य ऊर्ध्वप्रापणम् । प्रजापतिस्मृतिः-२१

तापनं घृततैलानां प्लावनं गोरसस्य च ।

तन्मात्रमुद्धृतं शुद्ध्येत् कठिनं तु पयोदधि ॥

इति शुद्धितत्त्वे

प्लावनेन भण्डस्य बहिः प्रदेशे सलिलपूरणेन ।

गोरसानां शुद्धिरिति हेमाद्रिः । परि-८२६

प्लीहा— आयुर्वेदप्रसिद्धा मांसपिण्डाकारा सव्यकुक्षिगता ।

याज्ञ-३-९४

प्लुतः— (१) सिक्तः ।

अग्नौकरिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम् ।

कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवत् ॥

याज्ञ-१-२३५

(२) पूर्ण इति श्रीधरस्वामी ।

यावानर्थ उदपाने सर्वतः संप्लुतोदके ।

तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥

भ. गीता-२-४६

(३) त्रिमात्रः वर्णः ।

आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ।

अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥

मनुः २-१२५

( फ )

फलकः— (१) दीर्घस्थूलकाष्ठम् ।

गोऽश्वोष्ट्रयान प्रासादस्रस्तरेषु कटेषु च ।
आसीत गुरुणा सार्द्धं शिलाफलनौषु च ॥

मनुः २-२०४

अत्र फलके दारुघटितदीर्घासने इति कुल्लूकः ।

शाल्मलीफलके श्लक्ष्णे नेनिज्यान्नेजकः शनैः ।
न च वासांसि वासोभिर्निर्हरेन्न च वासयेत् ॥

मनुः ८-३९६

(२) लेखार्थं काष्ठविशेषः ।

ब्लाकबोर्ड इति सम्प्रति उच्यते ।

पाण्डुलेखनश्लोकप्रथमार्द्धं—

पूर्वपक्षं स्वभावोक्तं प्राड्विवाको भिलेखयेत् ।
पाण्डुलेखेन फलके ततः पत्रे विशोधितम् ॥

मिताक्षरायां कात्यायनः-२-६

(३) शस्त्रविशेषः ।

फलकोऽस्त्री फलं धर्म इत्यमरः २-८-९०

सघण्टफलकाः सर्वे सायो गुडजलोपलाः ।
सशालभिन्दिपालाश्च समधूच्छिष्टमुद्गराः ॥

महाभा, उद्, १५५-६

**फलचमसः**— सफलवटशुंगारसः चमसशब्देनोच्यते इति प्रायश्चित्तविवेकव्याख्याने गोविन्दानन्दः ।

**फलमालः**— बीजपूरभेदः ।

फलमालः बीजपूरभेद इति नरसिंहवाजपेयी ।

आम्रातकः श्रुवाम्लोटः फलमालःपियालकम् ।
जम्बूबिल्वफले चैव जात्यं वीणातकं तथा ॥

इति विष्णुधर्मे

**फलवती**— सफला बदरीशाखा ।

सफला बदरीशाखा फलवत्यभिधीयते ॥

इति गोभिलभाष्ये-३-६-४

गोभिलस्मृतौ च-३-१४२

**फलीकरणम्**— तण्डुलकणाः ।

फलीकरणमिश्रान् तण्डुलकणानग्नावावपति ॥

पारस्करः १-१६-११

अत्र फलीकरणैः तण्डुलकणैः युक्तान् मिश्रान् सर्षपान् इति हरिहरगदाधरौ ।

फलीकरणानि कणा इति परिशिष्टप्रकाशे ।

आचितं शकटं प्राहुः द्रोणः स्यात् कांसमानकः ।
कञ्चुकाश्च कणाश्चैव फलीकरण ककुशाः ।

**फल्गु**— (१) निःसारम् ।

एतद्वः सारफल्गुत्वं बीजयोन्योः प्रकीर्त्तितम् ।
अतः परं प्रवक्ष्यामि योषितां धर्ममापदि ॥

मनुः ९-५६

(२) फल्गु क्षुद्रामलकम् इति मित्रमिश्रः श्राद्धप्रकाशे

**फल्गुः**— (१) काकोदुम्बरवृक्षः ।

फल्गुः काकोदुम्बरवृक्ष इति हेमाद्रिः । परि-६७१

अस्य फलं श्राद्धे देयम् ।

पियालामलकैर्मुख्यैः फलगुभिश्च तिलण्टकैः ।

इत्याद्याढकशब्दे द्रष्टव्यम् ।

(२) गयास्थनदीविशेषः ।

एतद् गयाशिरः प्रोक्तं फलगुतीर्थं तदुच्यते ॥ इति

**फलगुपात्रम्** — काकोदुम्बरकाष्ठनिर्मितं पात्रम् ।

**फाणितम्** — पाकजन्यइक्षुरसविकारः ।

फाणितं पानविशेषः इक्षुरस इति केचित् इत्युज्वला-वृत्तिकारः ॥ आपस्त १-५-१७-१९

इषत्क्वथितेक्षुरसस्य द्रव एव विकारः फाणितमिति हेमाद्रिः परिशिष्ट-६०१

अयमेव पाठः मित्रमिश्रेण उद्धृतः श्राद्धप्रकाशे-५५

इक्षुरसविकारः पाकजन्यो द्रवः इति लक्ष्मीधरः नियत-२६१

फाणितम् इक्षुरसविकारः काकवीति लोके प्रसिद्धं इतिमिताक्षराटिपण्याम् । निर्णसिन्धौ च ।

इक्षो रसस्तु य पक्वः किंचिद् गाढो बहुद्रवः ।
स एवेक्षुविकारेषु ख्यातः फाणितसंज्ञया ॥
इति भावप्रकाशे

फल्गुनी पूर्वसमये ब्राह्मणानामुपोषितः ।
भक्ष्यान् फाणितसंयुक्तान् दत्त्वासौभाग्यमृच्छति ॥
महाभा दान ६१-२३

नैवेद्ये पायसा पूपशष्कुली वटकं तथा ।
मोदकं फाणितं वाल्पं फलानि च निवेदयेत् ॥
ब्रह्मपु-६७-२७

फाणितस्य प्रदानेन ब्रह्मयादेयं फलं लभेत् ।
विष्णुधर्म ३ ३४१-२८३

**फाण्टम्** — अनायासकृतकवाथविशेषः ।

आलविसैलं फाण्टं पाययति कौशिकसू-अ ४-१-१८

क्षुण्णो द्रव्यपले सम्यग् जलमुष्णंविनिर्क्षिपेत् ।
मृत्पात्रे कुड़वोन्मान ततस्तु स्रावयेत् पटात् ।
स स्याच्चूर्णद्रवः फाण्टः इति गोभिलभाष्ये ।

सर्वौषधिविफाण्टाभिरद्भिरिति गोभिलः ३-४-११

फाण्टमनायासाभिधाने इति वैयाकरणाः ।

उषधीनां पञ्चविधा तथा भवति कल्पना ।
रसः कल्कः शृतः शीतः फाण्टकश्च मनुजोत्तम ॥ २१
रसश्च पीतको ज्ञेयः कल्क आलोडिताद् भवेत् ।
क्वथितश्च शृतो ज्ञेयः शीतः पर्य्युषितो निशाम् ।
सद्योभिश्शृतपूतं यत् तत् फाण्टमभिधीयते ॥ इति

**फालम्** — (१) फलोद्भवे फालं कार्पासादि इति विवादरत्नाकरे-१७

मणिमुक्ताप्रवालानां सुवर्णरजतस्य च ।
तिष्ठति द्विगुणा वृद्धिः फालकौटाविकस्य च ॥

(२) लौहपिण्डम् लक्षणया अग्निदिव्यम् ।
ना सहस्राद्धरेत्फालम् न विषं न तुलां तथा ॥
याज्ञ २ ९९

(३) लाङ्गलस्थभूमिविदारकलौहः ।
न फालकृष्टे न जले इति मलमूत्रोत्सर्जनप्रस्तावे ।
मनुः ४-४६

फालाहतमपि क्षेत्रं न कुर्याद् यो न कारयेत् ॥
स प्रदाप्यः कृष्टफलं वा लभेत ॥ पारस्करः २-१३-५

**फेणिका**— खाद्यद्रव्यविशेषः ।

सहस्रमोदकाश्चापि फेणिका घुर्घुरादयः ॥ इति

स्कन्द, ब्रह्म, धर्मारण्यम् २३-२२

उत्कलेषु फेणा इति फेणी गुड़विकारवस्तुद्वयं दृश्यते ।

फेणिकामहाराष्ट्रभाषायां तारफेणीत प्रसिद्धा इति

देवीभागवतटीकायम् ८-२४-२५

तत् वस्तु सूत्राकारगोधूमचूर्णनिर्मितं घृतपक्वं

शर्करापङ्का च ॥

**फेनः**— जलादिद्रवद्रव्यसपमतसमुत्थितबुद्बुदाकार वस्तु विशेषः ।

भोः फेनं पिबामि यमिमे वत्सा मातृणां स्तनात्

पिबन्त उद्गिरन्ति महाभा १-३-५२

अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्मवित् ॥

शौचेप्सुः सर्वदाचामेदेकान्दे प्रागुदङ् मुखः ।

मनुः २-६१

## व

**वकः**— (१) पुष्पविशेषः ।

वकुलपुष्पमित्याचारेन्दुः १५७

मुनिद्रुमापरपर्यायागस्तिवृक्षपुष्पं वकपुष्पमिति

वैद्यकशब्दसिन्धौ शब्दकल्पद्रुमे च ।

वकपुष्पसहस्रेभ्य एकं धत्तुरकं वरम् ॥

इत्याचारेन्दौ ।

पद्मपुष्पसहस्रेभ्यो वकपुष्पं विशिष्यते इत्याचारप्रकाशे

शिवमल्लिरित्यस्य संज्ञान्तरम् ।

स्कान्देऽपि—

बिल्वपुष्पसहस्रेभ्यो वकपुष्पं विशिष्यते ।

वकपुष्पसहस्रेभ्यो नंद्यावर्त्तं विशिष्यते ॥

वैष्ण मार्ग ७-१८

(२) पक्षिविशेषश्च धवलवर्णो मीनघाती ।

शुक्लवायसः

**वकवृत्तिः**— **वकवृत्तिकः**— **वकव्रती**—

अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च वकव्रतचरो द्विजः ॥

मनुः ४ १९६

**वटुः**— ब्रह्मचारी इत्यर्थः ।

उपवीतं वटोरेकं द्वे तथेतरयोः स्मृते ।

एकमेव यतीनां स्यादिति शास्त्रस्य निश्चयः ॥

इति भृगुः संस्कारप्रकाशे ४२१

कृच्छ्रत्रयं चोपनेता त्रीन् कृच्छ्रांश्च वटुश्चरेत् ।

इति वृद्धविष्णुः संस्कारप्रकाशे

**बड़वा**— तीर्थविशेषः स च विशिष्टश्राद्धदेश इति विष्णुना

उक्तः ८५-४१

बडवा तीर्थविशेषः दक्षिणदेशस्थ इति तत्र

नन्दपण्डितः ।

**बदरी**— फलवृक्षविशेष ।

तत्स्वरूपम्—

बदरी सूक्ष्मकण्टका मधुरा इति पातञ्जलमहाभाष्ये ।

१-२-२

यत्फलं सेव इति बदन्ति तत् बदरीफलमिति

काञ्चीपीठेश्वरा जयेन्द्रस्वामिनः उक्तवन्तः
परन्तु उत्कलेषु कठिनबीजमध्यानि फलानि
बदरीशब्देनोच्यन्ते तत्पत्राणिपूजायां
प्रयुज्यन्ते ।

बद्धः—निगडादिना बद्धः वाचा स निरुद्धश्चेति विज्ञानेश्वरः
कदर्यबद्धचौराणां क्लीवरङ्गावतारिणाम् ।
वेणाभिशस्तवाधुष्यगणिकागणदीक्षिणाम्-याज्ञ-१६१

बद्धपर्यङ्कः— वस्त्रादिना वेष्टितजघनभाग इति हेमाद्रिः ।

बधिरः— श्रवणशक्तिरहितः ।
एवंकर्मविशेषेण जायन्ते सद्विगर्हिताः ।
जड़मूकान्धवधिरा विकृताकृतयस्तथा ॥ मनुः ११-५२

बन्दी— स्तुतिपाठकः ।
भिक्षुकाः बन्दिनश्चैव दीक्षिताः कारवस्तथा ।
सम्भाषणं सहस्त्रीभिः कुर्युरप्रतिवारिताः ॥
मनुः ८-३६०
धूर्ते बन्दिनि मन्दे च कुवैद्ये कितवे शठे ।
चाटु चारणचौरेभ्यो दत्तं भवति निष्फलम् ॥
दक्षः ३-१६

बन्धः – (१) अशः ।
आगमेनोपभोगेन नष्टं भाव्यमतोऽ यथा ।
पञ्चबंधो दमस्तस्य राज्ञे तेनाविभाविते ॥
याज्ञ-२-१७
अत्र पञ्चबन्धः पञ्चमांश इत्यर्थः ।

(२) मूलधनम् ।
अकृत्वा वृद्धि साधयतो वा मूल्यं वा
वृद्धिमारोप्य श्रावयतो बन्धचतुर्गुणो दण्डः ॥
कौ-३-११
(३) गुणः । (४) आधिः ।
आधिर्बन्धः समाख्यात स च प्रोक्तश्चतुर्विध इति
बृहस्पतिः विवरत्नाकरे-२२

बन्धकम्—
बन्धकः—
आधिः ।
चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम् ।
सत्यंकारकृतंद्रव्यं द्विगुणं प्रतिदापयेत् ॥
याज्ञ-२-६१

बन्धकी— व्यभिचारिणी ।
बन्धकी स्वैरिणी इति विज्ञानेश्वरः याज्ञ ३-२६०
पुंश्चलीति स्मृतिचन्द्रिका व्यवहार-५८०
मदनपारिजाते तु—
चतुर्थे स्वैरिणी प्रोक्ता पञ्चमे बन्धकी मता ।
अतः पञ्चमे व्यभिचारे स्त्री बन्धकीत्युच्यते ॥
पाण्डुस्तु पुनरेवैनां पुत्रलोभान्महायशाः ।
वक्तुमैच्छद्धर्मपत्नीं, कुन्तीत्वेनमथाब्रवीत ॥
नातश्चतुर्थं प्रसवमापत्स्वपि वदन्त्युत ।
अतः परं स्वैरिणी स्याद् बन्धकी पञ्चमे भवेत् ॥
महाभा आदि, १२२-७८
प्रायश्चित्तविवेकेऽयं सिद्धान्तः-३६१

बन्धनागारः— कारागृहम् ।

धनदानासहं बध्वा स्वाधीनं कर्म कारयेत् ।

अशक्तो बन्धनागारे प्रवेश्यो ब्राह्मणादृते ॥

इति कात्यायनः

बन्धनिकः— कारागाराध्यक्षः इति कल्पतरुः नियतकाल-काण्डे-२६४

उत्सृष्टपुंश्चल्यभिशस्तानपदेश्यदण्डिक तक्षकदर्यबन्धनिक चिकित्सकमृगय्वनिषुचार्युच्छिष्टभोजिगण-विद्विषाणानाम् ॥ गौतमः २-८-१७

बन्धुः— (१) अनुकूलालापकुशलः ।

स्नेहेनबध्नातीति बन्धुः ।

अतिथि श्रोत्रियं तृप्तमासीमान्तमनुव्रजेत् ।

अहःशेषं समासीत शिष्टैरिष्टैश्च बन्धुभिः ॥

याज्ञ-१-११३

(२) बन्धुः स्वजनः सगोत्रश्च ।

पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय वसिष्ठः १५-६

(३) पितृष्वसृमातुलपुत्राः बन्धुपदेन गृह्यन्ते ।

ते च आत्मन आत्मबन्धवः पितुस्ते पितृबन्धवः

मातुश्च ते मातृबन्धव उच्यन्ते ।

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः ।

आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥

पितुः पितृष्वसुः पुत्रा पितुर्मातुः स्वसुः सुताः ।

पितुर्मातुलपुत्राश्च विज्ञेया पितृबान्धवाः ॥

मातुः पितृष्वसुः पुत्रामातुर्मातृष्वसुः सुताः ।

मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥

इति मितक्षरायाम् २-१३५

बन्धुजीवः— पुष्पवृक्षविशेषः ।

बन्धुजीवस्य पुष्पाणि रक्तान्यपि निवेदयेत् ।

इति विष्णुधर्मवचनं पूजाप्रकाशे-५४

बन्धुदुर्गम्— सोदरादिबन्धूनां मध्ये राजगृहस्य अवस्थानं बन्धुदुर्गमिति मयूखे नीलकण्ठः ।

बन्धूकः— सूर्यप्रियपुष्पविशेषः ।

दुपारी इति आचारेन्दुः-१५८

बन्ध्यः— स्रोतोरोधकः सेतुः ।

सेतुश्च द्विविधो ज्ञेयः खेयो बन्ध्यस्तथैव च ।

तोयप्रवर्त्तनात् खेयो बन्ध्यश्च तन्निवर्त्तनात् ॥

इति मिताक्षरायाम्-२-१५६

नारदः १५-१

बन्ध्या — प्रसवशून्या स्त्री ।

बन्ध्याऽष्टमेऽधिवेद्याद् द्वे दशमे तु मृतप्रजा ।

एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥

मनुः ९-८१

बभ्रु — कपिलवर्णविशिष्टम् ।

नाक्रामेत् कामतश्छायां बभ्रुणो दीक्षितस्य च ॥

मनुः-४-१३०

अत्र बभ्रुणः नकुलवर्णस्य इति विज्ञानेश्वरः १-१५२

बभ्रुः कपिल इति मदनपारिजातः-१२०

बभ्रुः— (१) नकुल इति हेमाद्रिः।

विवादरत्नाकरेऽपि पृ-३७३

हंत भासबर्हिणचक्रवाकवलाका काकोलूकमूषिकभेक

तैलीक बभ्रुनकुलादीनां वधः शूद्रवत् इति

रत्नाकरे बौधायनः।

नकुलपदस्तत्र जलनकुलपरम्।

(२) गीताचार्यविशेषः वैश्वामित्रः।

सहदेवरातो वैश्वामित्र आस तस्यैते कापिलेयबाभ्रवाः

ऐ, ब्रा-३३-५

बरुडः— कोष्ठभूर इति प्रसिद्ध इति प्रायश्चित्तविवेके

शूलपाणिः-३७५

रजकश्चर्मकारश्च नटो वरुड एव च।

कैवर्तो मेदभिल्लाश्च सप्तैते आन्त्यजाः स्मृताः॥

इति यमः

बर्करः— बर्कराः तरुण अजः।

वर्कर इति हेमाद्रौ पाठः।

अस्मदेव शब्दात् वक्री इति अपभ्रंशः॥

बर्बरः—मेकला द्राविडा लाटाः पौण्ड्राः कान्वशिरास्तथा।

शौण्डिका दरदा दार्वाश्चौराः शवरबर्बराः।

किराता यवनाश्चैव तास्ताः क्षत्रियजातयः॥

वृषलत्वमनुगप्ता ब्राह्मणानाममर्षणात्।

महाभा, अनु, दान ३७-१८

वर्बरमल्लिका— वर्बरी इति प्रसिद्धा इत्याचारेन्दौ।

वर्बरी — पुष्पवृक्षविशेषः।

कर्वरी इति हेमाद्रौ पाठः। परि-६८३

बर्बुरः - कण्टकवृक्षविशेषः। बबुल इति ख्यातः

पारनस्त शब्दो द्रष्टव्यः।

बर्हिः— कुशः।

विशाखानि प्रतिलूनाः कुशाः बर्हिरिति गोभिलः

१-५-१६

अत्र कुशस्कन्धप्रदेशं लक्ष्यीकृत्य छिन्नाः कुशा बर्हिष

इति चन्द्रकान्तः॥

मूलसमीपेलूना कुशा वर्हिः सज्ञा इति परिभाषा

प्रकाशे-१००

उपमूललूनं बर्हिः पितृणाम् कौशिकसूत्रम् १-१-२२

बर्हिषदः-- दैत्यादीनां पितरः।

दैत्यदानवयक्षाणां गन्धर्वोरगरक्षसाम्।

सुपर्णकिन्नराणां च स्मृता बर्हिषदोऽत्रिजाः॥

मनुः ३-१९८

बलम्— (१) सैन्यम्।

बलस्य स्वामिनश्चैव स्थितिः कार्यार्थसिद्धये।

द्विविधं कीर्त्यते द्वैधं षाड्गुण्यं गुणवेदिभिः।

मनुः ७-१६७

(२) सामर्थ्यम् ।

नायमात्मा बलहीनेन लभ्यः ॥ मुण्डक, उ, ३-२-४

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।

चत्वारि तस्य वर्द्धन्ते आयुर्विद्यायशोबलम् ॥

मनुः २-१२१

(३) बलात्कारः ।

बल द्दत्त बलाद्भुक्तं बलाद्यच्चापि कारितम् ।

सर्वान् बलकृतानर्थान् कृतान् मनुरब्रवीत् ॥

मनुः ८-१६८

(४) ऋणसाधनोपायविशेषः ।

धर्मेणव्यवहारेणच्छलेनाचरितेन च ।

प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥

मनुः ८-४९

नारदस्मृतिः ४-१२२

बध्वा स्वगृहमानीय ताड़नाद्यैरुपक्रमैः ।

ऋणिको दाप्यते यत्र बलात्कारः स कीर्त्तितः ॥

इतिबृहस्पतिः

**बलस्कन्धः**— सैन्यसमुदायः ।

भीमं च युयुधानं च पाण्डवं च धनञ्जयम् ।

द्वितीयं प्रेषयामास बलस्कन्ध युधिष्ठिरः ॥

महाभा, उद्, १९६-६

**बलाका**— पक्षिविशेषः ।

बकजातिविशेष इति शब्दकल्पद्रुमे ।

बकसदृशः तदपेक्षया महदाकृतिः बृहच्चञ्चुः ।

मत्स्यभोजी उत्कलेषु बड़काङ्क इति प्रसिद्धः पक्षि-विशेषः बलाका इति तर्कयामि ।

स च अभक्ष्यपक्षिषु मनुना प्रदर्शितः बकं चैव बलाकां चेति ॥ मनुः ५-१४

को यष्टिप्लवचक्राह्व बलाकविष्किरान् इति याज्ञ

१-१७३

**बलाध्यक्षः**— दशसु सेनापतिषु एकः नायकः ।

हस्त्यश्वरथपदात्यात्मकस्याङ्गदशस्यैकः पतिः कार्यः

स च पत्तिक उच्यते पत्तिकदशकस्यैकः पतिः

सेनापतिरुच्यते तद्दशकस्यैकः सेनानायकः स एव च

बलाध्यक्ष इति कुल्लूकः ॥

सेनापतिबलाध्यक्षौ सर्वदिक्षुनिवेशयेत् ।

यतश्च भयमाशङ्केत् प्राचीं तां कल्पयेद्दिशम् ॥

मनुः ७-१८९

**बलिः**— (१) राजभाग इति यावत् ।

बलिः धान्यादेः षष्ठोभाग इति मेधातिथिः ।

करो द्रव्यादानम् शुल्कं वणिक्प्राप्यभागः इत्ये-

तेषा बलिकरशुल्कानां परस्परभेदस्तन्मते ।

योऽरक्षान् बलिमादत्ते करं शुल्कं च पार्थिवः ॥

प्रतिभागं च दण्डं च स सद्यो नरकं व्रजेत् ।

मनुः ८-३०७

(२) बलिः पूजोपहारः ।

उपहार इति हरिहरः पारस्करः ३-८-१०

आर्द्रामलकमानेन कुर्याद्धोमहविर्बलीन् ।
प्राणाहुतिबलिं चैव मृदं गात्रविशोधिनीम् ।
इति परिभाषाप्रकाशे-११३

बलीवर्दः — अनड्वान् ।
रासभं महिषं मेषं बलीवर्दं क्रमेलकम् ।
आरुह्य ब्राह्मणो मोहात् पुनः संस्कारमर्हति ॥
इति वैजयन्त्यां यमः ॥ विष्णुः ५४-२३

बल्वजः—बल्वजास्तृणविशेषाः मध्यदेशे वग इति प्रसिद्धाः ।
बुगेइ इति : त्तरोत्कलेषु ।

बस्तः— छागः ।
तस्योपहतमात्रमपास्थ गायत्र्याभिमन्त्रितं सुवर्णाम्भः ।
प्रक्षिपेत् बस्तस्य च प्रदर्शयेदग्नेश्च विष्णुः २३-३७
अजस्य बस्तस्य इदम् आजम् इति हरिहरः ॥
पारस्करः २-५-९१

बस्तिः— (१) मूत्राशयः ।
वसत्यस्मिन् मूत्रादिकमिति वस्ति लिङ्गोपरितनो
नाभेरधोभाग इति लक्षणप्रकाशे ।
गुदमेढ्रयोरन्तरालमिति हरिहरः कात्यायनसूत्रम् १-६
क्षुद्रान्त्रं वृक्कौ वस्तिः पुरीषाधानमेव च ।
प्राणायतनमिति याज्ञ ३-९४
वस्तिर्नाभेर्देश इति आचारादर्शे-६२
(२) योनिद्वारमिति संस्कारप्रकाशचन्द्रकान्त
भाष्ययोः ।
प्रतिष्ठिति वस्तौ इति गोभिलः २-७-१४

उत्कलेषु तदर्थेऽपि वस्तुशब्दस्य व्यवहारः ।

बहिःकक्षः—उत्तरीयवासो बहिर्भूतकक्षद्वयः (पुरुष)
इति हेमाद्रिः ।

बहिःस्नायी— गृहाद् बहिः नद्यादौ स्नानशीलः ।
कार्त्तिकं सकलं मासं बहिःस्नायी जितेन्द्रियः ।
जपन् हविष्यभुग्दान्तः सर्वपापैः प्रमुच्यते ॥
इतिस्कान्दे ।

बहिर्जपः— गृहाद्बहिर्नदीतीराख्यादौ यो जपः क्रियते ।

बहिर्निष्क्रमणम्— चतुर्थे मासि शिशोः सूर्यावलोकनं कर्म ।
चतुर्थेमासि कर्त्तव्यं शिशोर्निष्क्रामणं गृहात् ।
षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥
मनुः २-३४

बहिर्वेदिदानम्— यज्ञादेर्बहिः दानम् ।
एतेभ्यो हि द्विजाग्र्येभ्यो देयमन्नं सदक्षिणम् ।
इतरेभ्यो बहिर्वेदिकृतान्नं देयमुच्यते ॥
मनुः ११-३

बहिष्पवमानम्— उपास्मै गायता नरः इत्येतासु गीतं
साम बहिष्पवमानमिति हरदत्तः । गौतम, ध, ३-१-१२

बहुला चतुर्थी— भाद्रकृष्णचतुर्थी ।
भाद्रकृष्णचतुर्थी बहुलाख्या मध्यदेशे प्रसिद्धा
इति निर्णयसिन्धौ-९५

सा धेनुप्रजाशब्देनाप्युच्यते ॥

**बहुश्रुतः**— बहुश्रुतलक्षणं यथा गौतमधर्मसूत्रे ।

स एष बहुश्रुतो भवति १-८-४

लोकवेदवेदाङ्गवित् १-८- वाकोवाक्येतिहासपुराण-

कुशल (१-८-६) स्तदपेक्षस्तद्वृत्ति (१-८-७)

श्चाष्टचत्वारिंशत् संस्कारैः संस्कृत (१-८-८)

स्त्रिषु कर्मस्वभिरतः (१-८-९) षट्सु वा (१-८-१०)

समयाचरिकेष्वभिविनीतः (१-८-११) इति

गुरु वा बालवृद्धौ वरब्राह्मणं वा बहुश्रुतम् ॥

मनुः ८-३५०

**बहूदकः** - संन्यासिविशेषः ।

कुटीचकं तु प्रदहेत पूरयेत्तु बहूदकम् ।

हंसो जले तु निक्षेप्यः परहंसं प्रपूरयेत् ॥ इति

निर्णयसिन्धुः ३-३

स्कान्देऽपि

बहूदकस्तु संन्यस्य बन्धुपुत्रादिवर्जितः ।

सप्तागारं चरेद् भैक्षमेकान्नं च परित्यजेत् ॥

गोवालरज्जुसम्बद्धं त्रिदण्डं शिक्यसुदृढतम् ।

जलपात्रं पवित्रं च खनित्रं च कपाणिकाम् ॥

शिखां यज्ञोपवीतं च देवताराधनं चरेत् ।

इति पराशरमाधवे

त्रिदण्डं कुण्डिकां चैव भिक्षाधारं तथैव च ।

सूत्रं तथैव गृह्णीय नित्यमेव बहूदकः ॥

लघुविष्णुः ४-१६

**बह्वृक्**— ऋग्वेदी ।

यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम् ।

शाखान्तगमथाध्वर्युं छन्दोगं तु समाप्तिगम् ॥

मनुः ३-१४५

**बह्वृचः**— ऋग्वेदी ।

त्रिमुहूर्त्ता च कर्त्तव्या पूर्वा खर्वा च बह्वृचैः ।

इति निर्णयसिन्धौ हारीतः ॥

**बाणः**— पुष्पविशेषः ।

आर्त्तगल इति हेमाद्रिः । परि-६८३

बाणः कृष्णकुरण्टक इति आचारेन्दौ ॥

करसन्दा इति च तत्र-१५८

जातिचम्पकरोध्रांश्च मल्लिकाबाणबर्बरी । इति

वृन्ताशोकाटरूषं च तुलसी तिलकं तथा ।

पारन्तीं शतपत्रं च गन्धशेफालिकामपि । १६२

कुब्जकं तगरं चैव मृगमारण्यकेतकीम् ॥

ब्रह्मपु-२२०-१६३

(२) वीणाविशेषः ।

बाणः शततन्तुरिति महाव्रते दर्शनात् ।

इति गौतमधर्मसूत्रव्याख्याने हरदत्तः हेमाद्रावपि ।

बाणभेरिमृदङ्गगर्त्तार्त्तशब्देषु ॥ गौतम.ध-२-७-७

शततन्तुवीणाशर इत्यन्ये इति मित्रमिश्रः संस्कारप्रकाशे

५३३

(३) बाणो वंश इति विज्ञानेश्वरः ।

(४) बाणः बाद्यविशेष शङ्खादिरिति अष्टावक्रभाष्ये ।

अत्रैव बाणशब्दं कुरुतेति प्रेष्यति ॥
मैत्रायणीयगृह्यसूत्रे १-१०-७

बादरम्— कार्पासवस्त्रम् ।
शाणबादरजातं तु जीर्णं मलिनमेव वा ।
उपयुक्तं तु नादद्याद्वर्त्रिकार्थं कदाचन ।
कार्पासं बादरं च तदत्यमरकोषदर्शनात् कार्पासिकं वस्त्रं बादरम् ॥ इति दानक्रियाकौमुद्याम्-४२

बाधकः— समिदनर्हवृक्षविशेषः । गोभिलः १-५-१५

बान्धवः— (१) ज्ञातिः ।
अदूरे बान्धवं बन्धुमन्त्रिकृष्टमेव प्रतिगृहणीयात् ॥
वसिष्ठः १५-६
(२) आत्मबान्धवाः पितृबान्धवाः मातृबान्धवाश्चेति बान्धवास्त्रिधा, तेषां स्वरूपं स्वस्वशब्दे द्रष्टव्यम् ।

बार्हस्पत्यसम्वत्सरः— बृहस्पतेरेकराशिभोगकालः ।

बार्हस्पत्याः—गणानांत्वेत्यादिऋगिति कल्पतरुः नियत ६३ ऋग्, म, २- सू २३-१ बृहस्पतिः, जगती गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन् नूतिभिः सीदसादनम् ।
अब्लिंगं बार्हस्पत्यं च वाक्सूक्तं मध्वृचं तथा ।
शंखस्मृ ११-३

बालः— (१) अप्राप्तषोड़शवर्षः ।
गर्भस्थैः सदृशो ज्ञेय आष्टमाद् वत्सराच्छिशुः ।
बाल आषोडशाद् वर्षात् पोगण्डश्चापि कीर्त्तितः ॥
इति नारदः व्यवहारनिर्णये-२६६
(२) अकृतचूड़ाकरणश्च ।
प्राक् चूड़ाकरणाद् बालः प्रागन्नप्राशनाच्छिशुः ।
कुमारस्तु स विज्ञेयो यावन्मौञ्जीनिबन्धनम् ॥
शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतम् ।
रजस्वलादिसंस्पर्शे स्नातव्यं तु कुमारकैः ॥ इति हरिहरभाष्ये शातातपः पारस्कर गृ, २-१-२३
(३) केशः ।
कर्णौ धर्म च वालांश्च वस्तिं स्नायुं च रोचनाम् ।
पशुषु स्वामिनां दद्यान्मृतेष्वङ्गानि दर्शयेत् ॥
मनुः ८-२३४

बालम्— कुरुवेलि इति प्रसिद्धम् ।
नित्याचारप्रदीपे १-६१६

बालकृच्छ्रः— प्राजापत्यव्रतविशेषः ।
तदाह बौधायनः ४-५-७
अहरेकं तथा नक्तमज्ञातं वायुभक्षणम् ।
त्रिवृदेष परावृत्तो बालानां कृच्छ्र उच्यते ॥

बालखिल्यः— ब्रह्मचारी इति हेमाद्रिः । परि-४२८
तत्र वायुपुराणे—
बालखिल्यो यतिश्चैव विज्ञेयो ह्यतिथिः सदा ।
अभ्यागतः पचानः स्यादतिथिः स्यादपाचकः ॥

बालधिः— लाङ्गलम् ।

नाविनीतैर्व्रजेद्धुर्यैर्न च क्षुद्व्याधिपीडितैः ।
नभिन्नशृङ्गाक्षिखुरैर्न बालधिविरूपितैः ॥

मनुः ४-६७

**बालग्रहः**— बालकानां हन्ता ग्रहविशेषः ।

**बालवासाः**— गोबालवस्त्रधारी ।

गोच्छागादि लोमनिर्मितवस्त्रप्रावृत इति

विज्ञानेश्वरः ३-२५४

गोरोमादिकृतवासा इति कुल्लूकः ११-९२

**बालातपः**— उदयकालिकसूर्यातपः कन्याकतिपो वा ।

बालातपः प्रेतधूमो वर्ज्यं भिन्नं तथासनम् ।
नच्छिन्द्यान्नखलोमानि दन्तैर्नोत्पाटयेन्नखान् ॥

मनुः ४-६९

**बालिशः**— मूर्खः ।

न वै कन्या न युवतिर्नाल्पविद्यो न बालिशः ।
होता स्यादग्निहोत्रस्य नार्त्तो नासंस्कृतस्तथा ॥

मनुः ११-३६

बालिशः मूर्ख इति कुल्लूकः षोडशवर्षादर्वाचीन

इति लक्ष्मीधरः

**बालिश्यम्**— ज्ञानानुत्पादः मूर्खता इति यावत् ।

याज्ञ २-८१

**बालेयः**— गर्दभः ।

बालेयश्चक्रीवान् खरगर्दभरासभाश्च तुल्यार्थाः ।

इति हलायुधः का-१

एकच्छागं द्विबालेयं त्रिगवं पञ्चमाहिषम् ।
षडश्वं सप्तमातङ्गं गृहं यक्षाशु शोषय ॥ इति

मार्कण्डेये ५०-५

**बास्तम्**— छागचर्म । मनुः २-४१

कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः ।
वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥ इति

**बाहुकः**- यः बाहुभ्यां नदीं तरति ।

बाहुभ्यां तरतीति बाहुक इति गोविन्दस्वामी ।

न नदीं बाहुवस्तरेत् ॥ बौधा. धर्म-२-३-२६

**बाहुकण्टकम्**— केतकपत्रम् तद्वद् यत्र बलिना

दुर्बलस्य शरीरं पाट्यते तेन युद्धेन ।

एकां जङ्घां पदाक्रम्य परामुद्यम्य पाट्यते ।
केतकीपत्रवच्छत्रुर्युद्धं तद् बाहुकण्टकम् ॥

इति महाभारतव्याख्याने नीलकण्ठः

बाहुकण्टकयुद्धेन तस्य कर्णोऽथ युद्ध्यतः ।
बिभेद सन्धिं देहस्य जरया श्लेषितस्य हि ॥

महाभा, शान्ति, ५-४

**बाहुलेयः**— स्कन्द इति शान्तिमयूखे ।

**बाह्लीकाः**—देशविशेषाः ।

पञ्चानां सिन्धुषष्ठानां नदीनां यत्र संगमः ।
बाह्लीका नाम ते देशाः महा रारण्य।ख्याने
नीलकण्ठः उद् ३६-७६
मलं पृथिव्या वाह्लीकाः पुरुषस्यान्नृतं मलम् ।
कौतूहलमता साध्वी विप्रवासमलाः स्त्रियः ॥
उद्-३९-७९

**बिड़ालः**— मार्जारः ।
बिड़ालकाकाखूच्छिष्टं जग्ध श्वनकुलस्य च ।
केशकोटावपन्नं च पिवेद्ब्रह्मसुवर्चलाम् ॥
मनुः ११-१५९

**बिन्दुः**— नष्टप्रजा स्त्री ।
बिन्दुः नश्यत्प्रसूतिरिति श्रीमूला ।
पुत्रवती धर्मकामां वन्ध्यां बिन्दुं नीरजस्कां
वा नाकामामुपेयात् ॥ कौट ३-२

**बिन्दुकः**— बिन्दुकः दक्षिणदेशस्थः तीर्थविशेषः ।
बिल्वक इति पाठेऽपि तत्रैव सः विष्णुः ८५-१२

**बिन्दुसरः**— सम्प्रति बिन्दुसागरनाम्ना ख्यातः
भुवनेश्वरस्थः पुष्करिणीविशेषः ।
पृथिव्यां यानि तीर्थानि सरितश्च सरांसि च ॥ ५१
पुष्करिण्यस्तड़ागानि वाप्यः कूपाश्च सागराः ।
तेभ्यः पूर्वं समाहृत्य जलविन्दून् पृथक् पृथक् ॥ ५२
सर्वलोकहितार्थाय रुद्रः सर्वसुरैः सह ।
तीर्थं बिन्दुसरो नाम तस्मिन क्षेत्रे द्विजोत्तमाः ॥ ५३
चकार ऋषिभिः सार्द्धं तेन बिन्दुसरः स्मृतम् ।
ब्रह्मपु ४१-५४

**बिभीदकः**— समिदनर्हवृक्षविशेषः । गोभिलः १-५-१५
बिभीतकस्यायं पाठभेदः सम्भवति ॥

**बिम्बः**— कामरूपी कृकलासः इति हरदत्तः ।
मण्डूकनकुल-काक-बिम्बदहरमूषकश्वहिंसासु च ।

**बिल्वम्**— पात्रविशेषः ।
यवमतीषु प्रोक्षणीषु यूपावटादिषु चोपयोक्तव्याना
यवानां भाजनम् ।
अलाबूबिल्वविनालानाम् बोधा, ध, १-६-१०

**बिल्वः**— वृक्षविशेषः ।
वनस्पति स्तववृक्षोऽथबिल्वः ॥ इति श्रीसूक्ते ।
पर्णोदुम्बरराजीव विल्वपत्रकुशोदकैः ।
प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः ॥
याज्ञ-३-३१६

**बिल्वकः** (१) वृक्षविशेषः ।
बिल्वकः चील इति पश्चिमदेशे प्रसिद्ध इति
आह्निके मित्रमिश्रः ।
स च हारीतेन दन्तकाष्ठाय निषिद्धः ॥ पृ १२१
नायं बिल्ववृक्षः तत्रैव विल्वस्य प्रशस्तदन्तकाष्ठत्वेन-
निर्देशात् ।

(२) बिल्वकः दक्षिणदेशस्थः तीर्थविशेषः बिन्दुक इति अस्य पाठान्तरं नन्दपण्डितेन मुख्यत्वेन गृहीतम् ॥

विष्णु, ८५-१२

**बिसम्—** (अब्रि) श्राद्धदेयवस्तुविशेषः।

पद्मिनीमूलमिति हेमाद्रिः। मृणालमिति मित्रमिश्रः। मध्यदेशभाषायां भसीडमिति कमलाकरः ॥

दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटबिसकेवुकान् ॥

इति शंखस्मृतिः १४-२३

बिसशृङ्गाटशालूकहविष्यान्नानि यानि तु।
ऐतान्यनुव्रतान्याहुः शस्तानि जपकर्मणि ॥

इति आह्निकप्रकाशे योगियाज्ञवल्क्यः ॥

आह्नि पृ-३१५

**बिसोर्णा—** बिसतन्तुः।

निपुणोऽणीयान् बिसोर्णाया यः सर्वमावृत्य तिष्ठति।

आपस्त १-२३-२

**बीजपूरः—**
**बीजपूरकम्—** मातुलुङ्गम् इति हेमाद्रिः। मातुलिङ्गमिति श्राद्धमयूखे ॥ मन्मते बीजपूरः विदुर इति विजुल इति आन्ध्रेषु जामि इति उत्तरापथे अमृत इति प्रसिद्धं फलम् ॥ काञ्चीपीठेश्वरा जयेन्द्रसरस्वती स्वामिनोऽपि तथैव

उक्तवन्तः

**बुद्धिः—** प्रज्ञा, अध्यात्मबुद्धिरित्याहुः इति धर्मकोशे

**बुद्धीन्द्रियम्—** श्रोत्रादिपञ्चकम्।

श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी।
बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्वशः ॥

इति मनुः २-९१

**बुध्नः—** अरण्यङ्गविशेषः।

चात्रबुध्ने प्रमन्थाग्रं गाढं कृत्वा विचक्षणः।
कृत्वोत्तराग्रामरणिं न बुध्नमुपरि न्यसेत् ॥

गोभिलस्मृतिः १-९६

(२) मूलं बुध्नोऽङ्घ्रि नामक इत्यमरः २-४-१२
बुध्नोना मृगरुद्रयोः
(३) लताग्रपल्लवः।

लताग्रपल्लवो बुध्नः शुङ्गेति परिकीर्त्यते ॥

गोभिलस्मृतिः ३-८१

**बुरुडः—** शूर्पपिटकादिवंशपात्रकर्ता इति हेमाद्रिः।

रजकबुरुडश्चर्मकारा अभोज्यान्ना इति सुमन्तुः ॥

रजकश्चर्मकाराश्च नटो बुरुड एव च।
कैवर्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः ॥

इत्यापस्तम्बो मिताक्षरायाम्-३-२६५

यमस्मृतौ च-३३

**बुर्बुरः—** बबुल् इति ख्यातो वृक्षः।

गोहिरा इति लोकभाषा अपि।

पातञ्जलमहाभाष्यप्रयुक्तस्य बर्बुरस्य पाठान्तरमिदम्।

खदिराबर्बुरौ गौरकाण्डौ सूक्ष्मपर्णौ कंटवान् खदिर इति १-१-७

बुसम्— पलालादि क्षोदः ।
कडङ्गरो बुसं क्लीबे इत्यमरः ।
बुसैश्च गोशकृत पिण्डैरग्निसंरक्षणं स्मृतम् ॥
इत्याचारेन्दुधृतपारिजाते
कडङ्गरो बुसं क्लीवे इत्यमरः २-९-२२
बुस शब्दस्य भूसि इत्यपभ्रंशः ॥

बृहती— कण्टकारिका इति संस्कारप्रकाशे ।
बृहतीफलं निदिग्धिका फलमिति श्राद्धदेये माधवाचार्याः
काकादन्या मेचकरातन्याः कोशातक्याः बृहत्याः
काकादकस्य मूलानि पेषयित्वा उपलेपयेत् देशं
यस्मिन् जायेत रक्षसामपहत्यै ॥ इति सांख्यायनगृह्ये
बृहती क्षुद्रवार्त्ताक्यां कण्टकार्यां च वाचि च ।
वारिधान्यां महत्यां च छन्दोवसनभेदयोः ॥
इति विश्वः

बृहत्तपा— श्रावणकृष्णद्वितीया इति निर्णयसिन्धुव्याख्याने
बृहत्तपा तथा रम्भा सावित्री वटपैतृकी ।
अनङ्गत्रयोदशी रम्भा कर्त्तव्या पूर्वसंयुता ॥

बृहत्पत्रम्— हस्त्यश्वादिः, इति शूलपाणिः चन्द्रकान्तश्च ।
गोभिलः ४-५-३१

बृहत्साम— त्वामिद्धि हवामहे इत्यस्यामृचि बृहदिति
गौतमव्याख्याने हरदत्तः ।
त्वामिद्धीतिमन्त्रस्य शंयुर्बार्हस्पत्य ऋषिः ॥
त्वामिद्धि हवामहे सातौ वाजस्य कारवः ॥ ८०९
त्वांवृत्रेष्विन्द्र सत्पतिं नरस्त्वा काष्ठास्वर्वतः ।

स त्वं नश्चित्र वज्रहस्त धृष्णुयामहस्तवानो अद्रिवः ।
गामश्वँ रथ्यमिन्द्र सं किरसत्रा वाजं न जिग्युषे ॥
सामवे-८१०

बृहस्पतिकूर्चः— व्रतविशेष ।
यवागूं यावकं शाकं पयः सर्पिः कुशोदकम् ।
त्र्यहं त्र्यहं तु प्राश्नीयाद् वायुभक्षः परं त्र्यहम् ॥
इति काठकगृह्ये १-६-४

बेकनाटः— वार्द्धुषिकः ।
वे इत्यपभ्रंशो द्विशब्दार्थे एकं कार्षापणम् ऋणिकाय
प्रयच्छन् द्वयौ मह्यं दातव्यौ इति ये नाटयन्ति ते
बेकनाटाः इति सायणः ऋ ७-६-३

बैड़ालव्रतिकः— यस्तु दुरात्मा कपटेन आत्मनो धार्मिकतां नाटयति ।
धर्मध्वजी सदालुब्धश्छाद्मिको लोकदम्भकः ।
बैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः ॥
मनुः ४-१९५
यस्य धर्मध्वजो नित्यं सुरध्वज इवोच्छ्रितः ।
प्रच्छन्नानि च पापानि बैड़ालं नाम तद्व्रतम् ॥
महाभा, उद्-१६०-१४

ब्रध्नः— सूर्यः ।
पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥
मनुः ९-१३७

ब्रह्म— (१) वेदः ।

कृतोपनयनस्यास्य व्रतादेशनमिष्यते ।
ब्रह्मणो ग्रहणं चैव क्रमेण विधिपूर्वकम् ।।

मनुः २-१७३

उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद् ब्रह्मणश्चैव धारणात् ।
सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः ।।

मनुः १-९३

अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च ।
आध्यात्मिकं च सततं वेदान्ताभिहितं च यत् ।।

मनुः ६-८३

ब्रह्म वेद इति लक्ष्मीधरः कल्पतरौ । नियतकाल-६५

(२) वेदान्तप्रसिद्धमनिर्वचनीयं तत्त्वम् ।

यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद् विजिज्ञासस्व, तद्ब्रह्म ।। तैत्ति २-१

धर्मशास्त्रेऽपि —
प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।
विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम् ।।

मनुः ६-७९

(३) ब्राह्मणजातिः ।
नाब्रह्मक्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्द्धते ।
ब्रह्मक्षत्रं च सम्पृक्तमिह चामुत्र वर्द्धते ।।

मनुः ९-३२२

क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान् प्रति सर्वशः ।
ब्रह्मैव संनियन्तृ स्यात् क्षत्रं हि ब्रह्मसम्भवम् ।।

मनुः ९-३२०

ब्रह्मौदनशब्देऽपि ब्राह्मणार्थे ब्रह्मशब्दस्य प्रयोगः ।

(४) ब्रह्मभागः ।
यथोदितेन विधिना नित्यं छन्दस्कृतं पठेत् ।
ब्रह्म छन्दस्कृतं चैव द्विजो युक्तो ह्यनापदि ।।

मनुः ४-१००

वेदस्तत्त्वं तपो ब्रह्म विप्रः प्रजापतिरिति
अमरः ३-३ ११४

**ब्रह्मकूर्चम्** – } **ब्रह्मकूर्चः**— } व्रतविशेषः ।

तत्स्वरूपं यथा ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्
यवाचामेन संयुक्तो ब्रह्मकूर्चोतिपावनः ।।

बौधा, पृ-२८१

गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति वै क्षीरं दधिक्राव्णेति वै दधि ।।
तेजोसीति घृतं चैव देवस्य त्वा कुशोदकम् ।
गोमूत्रभागस्तस्यार्द्धं शकृत् क्षीरस्य च त्रयम् ।।
द्वयं दध्नो घृतस्यैकमेकं च कुशवारिणः ।
ब्रह्मकूर्चमिदं नाम व्रतं सर्वाघसूदनम् ।। इति

प्रायश्चित्तविवेके शंखः

गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ।।४
तेजोसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ।
चतुर्दशीमुपोष्यैवं पौर्णमास्यां समाचरेत् ।।५
गोमूत्रमाषकं दद्यादङ्गुष्ठार्द्धं गोमयम् ।

क्षीरं सप्तपलं दद्यात् दध्नस्त्रिपलमेव च ।। ६
आज्यमेकपलं प्रोक्तं पलमेकं कुशोदकम् ।
एवं क्रमेण कर्तव्यं ब्रह्मकूर्चं यथाविधि ।। ७
सप्तपर्णाः शुभा दर्भा अच्छिन्नाग्राः समायताः ।
तैः समुद्धृत्य होतव्यं देवताभ्यो यथाविधि ।। ८
अग्नये सोमायेति इरावतीदं विष्णुरिति ।
विष्णोर्नुकं सुमित्रियान सुजानातकस्त्वगा ।
एतेषां देवताहुतीनां हुतशेषं तु यः पिबेत् ।
आलोड्य प्रणवेनैव पिबेच्च प्रणवेन तु ।। १०
उद्धृत्य प्रणवेनैव पिबेच्च प्रणवेन तु ।
एवं कुर्वन् ब्रह्मकूर्चं मासे मासे च वै द्विजः ।।
सर्वपापविशुद्धात्मा जायते नात्र संशयः ।।
इति वृद्धशातातपस्मृतिः ।

**ब्रह्मकोशः**— हृदयम् ।
मे मन ब्रह्मकोशं हृदयं विश सर्वेषां वेदानां
हृदयमेवायनमितिश्रुतेः ।। इति हरिहरभाष्ये
पारस्करगृ, २-१६-१

**ब्रह्मक्षेत्रम्**— विनशनम् । कुरुक्षेत्रमिति यावत् ।

**ब्रह्मगीतिका**—मोक्षाय प्रयुक्तो गीतिकाविशेषः ।
याज्ञ-३-११४

**ब्रह्मग्रन्थिः** ग्रन्थिविशेषः ।
द्विगुणीकृतानां दर्भशाखानां पाशः प्रदक्षिणमर्द्धावेष्टनं विधाय पश्चाद्भागेन यदा प्रवेश्यते तदा वर्तुलो ग्रन्थिः ।
स एव यदा प्रादक्षिण्येन समवेष्टनं विधाय पुरोभागेन प्रवेश्यते तदा ब्रह्मग्रन्थिरिति हेमाद्रिः ।
यज्ञोपवीते मौञ्ज्यां च तथा कुशपवित्रके ।
ब्रह्मग्रन्थिः विजानीयादन्यत्र तु यथारुचिः ।।
इति आचारभूषणे-५०
ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थिर्विधियते ।
भोजने वर्तुलः प्रोक्त एवं धर्मो न हीयते । इति
अत्रिः आचारमयूखे-३१

**ब्रह्मचर्यम्**— (१) ब्रह्मचारिव्रतम् ।
ब्रह्मचर्यं समाप्य गृही भवेद् गृही भूत्वा वनी भवेद् वनी भूत्वा प्रव्रजेत् इति जाबालश्रुतिः ।
एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः ।
स गच्छत्युत्तमस्थानं न चेहा जायते पुनः ।।
मनुः २-२४६
मृत्यो परस्तादमृता भवन्ति ये ब्राह्मणा ब्रह्मचर्यं चरन्ति । इति हारीतः संस्कारप्रकाशे-५२०
(२) वीर्यधारणम् ।
ब्रह्मचारी भवेन्नित्यमप्यृप्तौ स्नातको द्विजः ।
ब्रह्मचर्यं सकलेन्द्रिय संयम इति विज्ञानेश्वरः ।
याज्ञ ३-३१२
ब्रह्मचारिवनस्थानां भिक्षुकाणां द्विजोत्तमाः ।
साधारणं ब्रह्मचर्यं प्रोवाच कमलोद्भवः ।।
ऋतुकालाभिगामित्वं स्वदारेषु न चान्यतः ।
पर्ववर्जं गृहस्थस्य ब्रह्मचर्यमुदाहृतम् ।।
कूर्मपु, २ अध्याये

(३) व्रतविशेषश्च ।

यथाह हारीतः ।

ब्रह्मचर्यं नाम दिव्यमानुषीणां तथा चित्रकाष्ठ पात्रस्थमृण्मयादीनामापि अप्रार्थनमसंकल्पनमनभिप्रेक्षणमसंकोर्त्तनमनभिगमनमसंदर्शनमसंगमश्चासाम् । तच्चतुर्विधम् कृष्णं रक्तं शुक्लं विमलमिति ॥
परदारवर्जने नित्यं नित्यं स्वदारसेवनं कृष्णम् ।
पर्ववर्जननियमो रक्तम् । ऋतुकालाभिगमनं शुक्लम् ॥
ऊर्ध्वरेतस्त्वं विमलं ब्रह्मचर्यमिति ।
कृष्णेनेमं जयेल्लोकं मध्यं रक्तेन वै जयेत् ।
शुक्लेन वै जयेत् स्वर्गं विमले मोक्षमाप्नुयात् ॥

हारीतः नित्याचारप्रदीपे-२-४२४

**ब्रह्मचर्यकालः**—षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम् ।
तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव वा ॥

मनुः ३-१

**ब्रह्मजीवी**— ब्राह्मणकार्येषु मूल्येन परिचारक इति मिताक्षरायाम् ३-२८८

**ब्रह्मण्यता**—शीलविशेषः ।
ब्रह्मणि साधुत्वम् वेद पारगत्वमिति यावत् ॥
इति श्राद्धप्रकाशे-६८
शीलशब्दो द्रष्टव्यः ।

**ब्रह्मतीर्थम्**—अङ्गुष्ठमूलम् । याज्ञ-१९

अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते ।

मनुः २-५९

हस्तमध्ये ब्रह्मतीर्थम् इति ब्रह्मपुराणे इति परिभाषप्रकाशे-७६

**ब्रह्मदण्डः**—ब्रह्मशापः अभिचारो वा इति स्मृतिचन्द्रिकाया अशौचकाण्डे-१२०

**ब्रह्मदण्डी**— अधःपुष्पा इति शान्तिमयूखे ।
अधःपुष्पीति पाठान्तरम् ।

**ब्रह्मदायः**— ब्रह्म, वेद एव दायः ब्रह्मदाय ।
तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः ।
स्रग्विणं तल्प आसीनमर्हयेत् प्रथमं गवा ॥

मनुः ३-३

**ब्रह्मदेया**— ब्राह्मविवाहेनोढ़ा कन्या ।
ब्रह्मदेयानुमन्तानो ब्रह्मदेया प्रदायकः ।
ब्रह्मदेयापतियश्च ब्राह्मणाः पंक्तिपावनाः ॥

शंख-१४-६

**ब्रह्मदेयात्मसन्तानः**— ब्राह्मविवाहेन विवाहितायां कन्यायामुत्पादितः पुत्रः ।
त्रिणाचिकेतः पञ्चाग्निस्त्रिषुणार्णः षड़ङ्गवित् ।
ब्रह्मदेयात्मसन्तनो ज्येष्ठसामग एव च ॥

मनुः ३-१८५

**ब्रह्मधर्मः**— वैदिकधर्मः ।
यमधुना सनातन धर्म इति भणन्ति ।

इतरेषु तु शिष्टेषु नृशंसानृतवादिनः ।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥

मनुः ३-४१

**ब्रह्मधर्मा**— ब्रह्मैव धर्मो यस्य सः ब्रह्मधर्मा ।
ब्रह्मवित्त्वव्याजेन सकलधर्मत्यागी ॥

हेमाद्रिः श्राद्ध-४६७

**ब्रह्मपुरुषः**— जीवन्मुक्तवेषेण लोकं प्रतारयन् यो जीवति इति हेमाद्रिः परि-४६२
नक्षत्रादेशवृत्ति ब्रह्मपुरुषो मद्यपो ब्रह्मविक्रयीत्यादि शंखलिखितौ ॥

**ब्रह्मबन्धुः**— मूर्खो ब्राह्मणः ।
ब्रह्मबन्धुस्तथाऽश्रुव इति कात्यायनः २५-६
जातिमात्रब्राह्मण इति हरदत्तः ॥ गौत, ध, ३-४-२६
ब्रह्मबन्धुः-ब्राह्मणान् बन्धून् व्यपदिशति न स्वयं ब्राह्मणवृत्त इति श्रीशङ्कराचार्याः ।
न वै सोम्यास्मत् कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति छान्दो:-६-१-१

**ब्रह्मबान्धवः**— ब्रह्मबन्धुः ।

**ब्रह्मभूयम्**— ब्रह्मत्वम् ।
वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् ।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते ॥

मनुः १२-१०२

**ब्रह्ममार्गः**— अभिमुखप्रदेशः ।
सन्त्यज्य वैष्णवमार्गं ब्रह्ममार्गविनिःसृतम् ।
सकृत् प्रदक्षिणीकृत्य पवित्रमभिधीयते ॥
तद् ब्रह्मग्रन्थिमत्प्रोक्तं पवित्रं वेदवादिभिः ।
पवित्र कर्तुरभिमुखः प्रदेशो ब्रह्ममार्ग इति हेमाद्रिः ॥

परिभाषाप्रकाशे-६७

**ब्रह्मर्षिदेशः**— कुरुक्षेत्रादिदेशाः ।
कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः ॥

मनुः २-१९

**ब्रह्मवर्चम्**— वेदाध्ययनजन्यं तेजः
ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥

मनुः २-३७

अत्र वेदाध्ययनतदर्थज्ञानादिप्रकर्षकृतं तेजः ब्रह्मवर्चस मिति कुल्लूकः ॥

**ब्रह्मवादिनी**— ब्रह्मचारिणी ।
द्विविधाः स्त्रियः ब्रह्मवादिन्यः सद्योवध्वश्च ॥
तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धननवेदाध्ययन स्वगृहे च भैक्षचर्या इति निर्णयसिन्धौ ३ हारीतः ॥
संस्कारप्रकाशे च-४०२

**ब्रह्मवादी**— वेदपाठी वेदवादी वा ।

**ब्रह्मवित्**— वेदवित् ।

**ब्रह्मविद्या**— ब्रह्मणः ऋग्यजुः समाख्यस्य विद्यां ब्रह्मविद्यां शिक्षाकल्पच्छन्दश्चितयः इति श्रीशङ्कराचार्याः ॥

छन्दो-७-१-२

**ब्रह्मवृक्षः**— पलाशवृक्षः।

**ब्रह्मशीर्षकः**— अथर्वशिरोऽध्येता। इति कल्पतरुः

श्राद्ध ५८०

पञ्चाग्निर्वा चतुर्वेदी त्वथवा ब्रह्मशीर्षकः॥
इति तत्र यमः

**ब्रह्मसत्रम्**— वेदाध्ययनं वेदाध्यापनं च।

(१) नैत्यके नास्त्यनध्यायो ब्रह्मसत्रं हि तत् स्मृतम्।
ब्रह्माहुतिहुतं पुण्यमनध्यायवषट्कृतम्॥ मनुः २-१०६

अत्र ब्रह्मसत्र शब्देन नैत्यकस्वाध्याय एव विवक्षितः। तेन वेदाध्ययनं सिद्धयति।

(२) (क) षट्कर्मैकोभवत्येषां त्रिभिरन्यः प्रवर्त्तते।
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति॥

मनुः ४-९

अत्र ब्रह्मसत्रेण अध्यापनेन इति कुल्लूकः।

(ख) ब्रह्मसत्रं शिलोञ्छयोरन्यतरा वृत्तिः, ब्रह्मणो ब्राह्मणस्य सततभवत्वात् सत्रमित्याह, इति मेधातिथिः

(ग) उञ्छः।

ब्रह्मसत्रशब्दः ब्रह्म सततं त्रायते इति व्युत्पत्त्या उच्चारः इति नित्याचारप्रदीपे नरसिंहवाजपेयी॥

**ब्रह्मसदनम्**— गृहस्यांशविशेषः गृहमध्य इति यावत्।

गृहस्य ब्रह्मसदनाख्यो देशः वास्तुविद्यायां प्रसिद्ध इति हरदत्तः।

मतान्तरे यत्र ब्रह्मा सीदतीति गार्ह्येषु कर्मसु अग्ने दक्षिणतः ब्रह्मसदनमिति॥ आपस्त २-२-४-४

उत्तरैर्ब्रह्मसदने॥

**ब्रह्मसार्ष्टिता**— ब्रह्मतुल्यता।

ब्रह्मणः सार्ष्टिताम् मनुः ४-२३२

**ब्रह्मसुवर्चला**— ओषधिविशेषः सुवर्चलाशब्दे द्रष्टव्या

**ब्रह्मसूक्तम्**— ब्रह्मजज्ञानमिति षडृचम् इति बौधायन गृह्यसूत्रशेषे-१-१५

**ब्रह्मसूत्रम्**— यज्ञोपवीतम्।

दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्रमुदङ्मुखः।
कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः॥ याज्ञ १-

यज्ञसूत्रमिति पाठभेदः।

ब्रह्मसूत्रं विना भुंक्ते विड्मूत्रं कुरुते तथा।
गायत्र्यष्टसहस्रेण प्राणायामेन शुद्धति॥
इति नित्याचारपद्धतौ-१६४

**ब्रह्मस्थलम्**— गृहमध्यम्। इति कल्पतरौ नियत १६२

अग्निष्ठेष्वग्निशालासु तथा ब्रह्मस्थलेषु च।
सरीसृपाणि दृश्यन्ते हव्येषु च पिपीलिकाः॥
इति रामायणे-६-१०-१६

ब्रह्मणे नम इति ब्रह्मस्थले बलिं हरेत्॥ इति शंखलिखितौ इति आह्निकप्रकाशे-४०४

**ब्रह्मा**— (१) हिरण्यगर्भः।

बृहत्त्वाद् बृंहणत्वाच्च भत्रानां सलिलाश्रयात्।

यस्माद् बृंहयते भवान् ब्रह्मा तेन निरुच्यते ॥
वायु, पु, १-४-२६

ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता ।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥
मुण्डकः उ १-१-१

यत्तत्कारणमव्यक्तं नित्यं सदात्मकम् ।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते ॥
मनुः १-११

(२) कर्मसु कृताकृतावेक्षकत्वेन वृतो ब्राह्मणः ।
तदभावे पञ्चाशत्कुशनिर्मितः ।

(३) ऋत्विग्विशेषः ।
कर्मकाले यजमानआहवनीयस्य दक्षिणतं उदङ्मुख उपविशति तस्य पूर्वस्यां दिशि तत्रैवोदङ्मुखो दक्षिणोत्तरेणास्थेन (सव्यजानोरुपरि) दक्षिणजानुं संस्थाप्य दक्षिणेऽङ्के उत्तानं सव्यं पणिं प्रागग्रं निधाय तदुपरि तथैवन्यञ्चं दक्षिणं निधाय य आस्ते सर्वदा कर्मणि दत्तचितः प्रणीताप्रणयनादौ अभ्यनुज्ञाकर्त्ता ऋग्यजुः समान्त्रकर्मभ्रेषे गार्हपत्यदक्षिणान्याहवनीयेषु क्रमेण प्रायश्चित्ताहुतिहोमकर्त्ता ब्रह्मा ॥
इति श्रौतपदार्थनिर्वचने
प्रायश्चितहोमकर्त्तृत्वं च केवलं बौधायनीयानामेव

(४) विप्रः ।
अभिवाद्यमादित्यं ब्रह्माणांमनड्वाहमन्नमपोदधीति ।
गोभिलः ३-२-३८

आत्मन् पश्यन् सर्वभूतानि न मुह्यच्चियन्तयन् कविः ।
आत्मानं चैव सर्वत्र यः पश्येत् स वै ब्रह्मानाकपृष्ठे विराजति ॥ आपस्त १-८-२३-१

ब्रह्मानन क्षत्रभुजो महात्मा विडूरुरङ्घ्रिश्रितकृष्णवर्णः
ब्रह्मा विप्र इति श्रीधरस्वामी भागवते-२-२-७

**ब्रह्माञ्जलिः**— वेदाध्ययनारम्भासानयोः शिष्यकृतः अञ्जलिबन्धाद्युपवेशनप्रकार विशेषः ।
ब्रह्मारम्भेवसाने च पादौ ग्राह्यौ गुरोः सदा ।
संहत्य हस्तावध्येयं स हि ब्राह्मञ्जलिः स्मृतः ॥
मनुः २-७१

तत्र उत्तानाभ्यां पाणिभ्यां गुरुपादस्पर्शः उपसंग्रहणशब्द द्रष्टव्यः ।

**ब्रह्मार्पणम्**— स्रुक्स्रुवादि ।
अर्प्यते अनेनेति व्युत्पत्त्याकल्पतरौ मोक्षकाण्डे-१५२

**ब्रह्मावर्त्तः**— सरस्वतीदृषद्वत्योर्मध्यवर्ती देशः ।
सरस्वतीदृषद्वत्योर्देवनद्यो यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥ मनुः २-१७

**ब्रह्मोज्झः** – अधीतवेदोपि अनभ्यासेन यः विस्मरति ।
सूर्याभ्युदितः सूर्याभिनिम्रुक्तः कुनख श्यावदन्तः परिवित्तिः परिवेत्ताऽग्रेदिधिषुदिधिषपतिर्वीरहा ब्रह्मोज्झइत्येनस्विनः ॥ वसिष्ठः १-१८

**ब्रह्मोदनम्**— आधानाङ्गभूतं चतुःप्रश्यम् ।
अत्र चत्वारः ऋत्विजः प्राश्नन्ति इति विधिः ।

ब्रह्मौदने च सोमो च सीमन्तोन्नयने तथा ।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ।।
अत्रिस्मृतिः-३००

**ब्रह्मोद्याःकथाः**— परमात्मनिरूपणपराः कथाः ।
ब्रह्मोद्याश्च कथाः कुर्यात् ।। मनुः २-२३१

**ब्रह्मौदनम्**— ब्राह्मणभोजनम् ।
ब्रह्मौदनेषु च तेषु सर्वेषु दर्भैरद्भिः प्रक्षालनम् ।
बौधा, १-१३-३०

ब्रह्मणभोजनार्थ ओदनो ब्रह्मौदन इति मित्रमिश्राः संस्कारप्रकाशे ।। ४४०
ब्रह्मौदने च सोमेच सीमन्तोन्नयने तथा ।
जातश्राद्धे नवश्राद्धे द्विजश्चान्द्रायणं चरेत् ।। इति मिताक्षरायांधौम्यः अत्र ब्रह्मौदनाख्यं कर्म आधानाङ्गभूतं सोमसाहचर्यात् इति विज्ञानेश्वरः ३-२८६

**सुवर्च्चल**— पीतवर्णकुसुमसूर्य्यावर्त्तः ।
(सूर्य्यमुखीतिभाषा) इति शूलपाणिः प्राय,-३२१

**णम्**— वेदभागविशेषः ।
ह्मणलक्षण यथा—
रुक्तं यत्र मन्त्रस्य विनियोगः प्रयोजनम् ।
तिष्ठानं स्तुश्चैव ब्राह्मणं तदिहोच्यते ।।
रुक्तं निर्वचनं यत्र वेदभागे ।
नयोगः विनियोगविधिः प्रयोजनम् अधिकारविधिः
ष्ठानम् आश्रयः यथा तैत्तिरीयब्राह्मणे
सोमप्रणयिनीनामृचामसावादित्य एकविंश

उत्तमा प्रतिष्ठेति ।। परिभाषाप्रकाशे ।। ८७
ब्राह्मणं ब्रह्मसंघाते वेदभागे नपुंसकम् ।
भूमिदेवे तु पुंलिङ्गं फञ्जिकापृक्कयोः स्त्रियाम् ।।
इति मेदिनी

**ब्राह्मण**— (१) ब्राह्मणो वेदस्य रक्षकत्वेन सम्बन्धवानयमिति ब्राह्मणो वैदिक इत्यर्थः ।
ब्राह्मणा जङ्गमं तीर्थं तीर्थभूता हि साधवः ।।
पराशरः ६-६१
(२) जातिविशेषः ।
ब्राह्मणोऽस्य मुखमासीद्बाहूराजन्यः कृतः ।।
शु, यजुः ३१-११
जन्मना ब्राह्मणो ज्ञेयः संस्काराद्द्विज उच्यते ।
विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव च ।। इति
अत्रिस्मृतिः १४०
ब्राह्मण्यां ब्राह्मणेनैवमुत्पन्नो ब्राह्मणः स्मृतः ।
तस्यधर्मंप्रवक्ष्यमि तद्योग्यं देशमेव च ।।
हरीतस्मृतिः १५
जन्मना ब्राह्मणो ज्ञेय इति हेमाद्रिधृतब्रह्मवेवर्त्त ।
अयं ब्राह्मणः दशविध उक्तः अत्रिसंहितायाम् ।।
(२) देवो मुनिर्द्विजोराजावैश्यः शूद्रो निषादकः ।
पशुर्म्लेच्छोऽपि चाण्डालो विप्रादशविधाः स्मृताः ।।
३७३
सन्ध्यां स्नानं जपं होमं देवतानित्यपूजनम् ।।
अतिथिं वैश्वदेवं च देव ब्राह्मण उच्यते ।। ३७४

शाके पत्रे फले मूले वनवासे सदा रतः ।
निरतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते ।। ३७५
वेदान्तं पठते नित्यं सर्वसङ्गं परित्यजेत् ।
सांख्ययोगविचारस्थः स विप्रो द्विज उच्यते ।। ३७६
अस्त्राहताश्च धन्वानः संग्रामे सर्वतो मुखे ।
आरम्भे निर्जिता येन स विप्रः क्षत्र उच्यते ।। ३७७
कृषिकर्मरतो यश्च गवां च प्रतिपालकः ।
वाणिज्यव्यवसायश्च स विप्रो वैश्य उच्यते ।। ३७८
लाक्षालवणसंमिश्रः कुसुम्भक्षीरसर्पिषः ।
विक्रेता मधुमांसानां स विप्रः शूद्र उच्यते ।। ३७९
चौरश्च तस्करश्चैव सूचको दंशकस्तथा ।
मत्स्यमांसे सदा लुब्धो विप्रो निषाद उच्यते ।। ३८०
ब्रह्मतत्त्वं न जानाति ब्रह्मसूत्रेण गर्वितः ।
तेनैव स च पापेन विप्रः पशुरुदाहृतः ।। ३८१
वापीकूपतडागानामारामस्य सरःसु च ।
निःशङ्करोधकश्चैव स विप्रो म्लेच्छ उच्यते ।। ३८२
क्रियाहीनश्च मूर्खश्च सर्वधर्मविवर्जितः ।
निर्दयः सर्वभूतेषु विप्रश्चण्डाल उच्यते ।। ३८३
(३) विप्रविशेषश्च ।
मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च तपःपरः ।
अनूचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः ।।
एकदेशमतिक्रम्य वेदस्याचारवान् द्विजः ।
स ब्राह्मण इति प्रोक्तो निवृत्तः सत्यवानृणी ।।

इति देवलः

अत्र एकादशातिक्रमः वेदस्य किञ्चिन्न्यूनस्य अध्ययनमिति हेमाद्रिः ।

स्कन्दपुराणे तु—

एकोद्देश्यमतिक्रम्य वेदस्याचारवान् ऋजुः ।
स ब्राह्मण इति प्रोक्तो निभृतः सत्यवागघृणी ।।
इति पाठः स्कन्दमाहे २-५-११३
जन्मशरीरविद्याभिराचारेण श्रुतेन च ।
धर्मेण च यथोक्तेन ब्राह्मणत्वं विधीयते ।।

उ, आङ्गि ४-६

पराशरमाधव प्राय-१५६

चित्रं कर्म यथानेकैरङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यापि तद्वत्स्यात्संस्कारैर्मन्त्रपूर्वकैः ।।

उत्तराङ्गिरसः ४-१०

पराशरस्मृतौ तु अन्तिमपादे विधिपूर्वकैरितिविशेषः ।

८-२६

**ब्राह्मणब्रुवः**— ब्राह्मणब्रुवः य आत्मानं ब्राह्मणं ब्रूते न ब्राह्मणकार्यं कुरुते, जातिमात्रब्राह्मण इत्यर्थः ।

गर्भाधानादिसंस्कारैर्वेदोपनयनैर्युतः ।
नाध्यापयति नाधीते स भवेद् ब्राह्मणब्रुवः ।

पराशरः ८-२

जातिमात्रोपजीवी वा कामं स्याद् ब्राह्मणब्रुवः ।
धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथंचन ।।

मनुः ८-२०

**ब्राह्मणाच्छंशी**— ऋत्विग्विशेषः ।

**ब्राह्मतीर्थम्**— ब्रह्मतीर्थम् ।

अंङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते ॥
कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः ॥

मनुः २-५९

अंगुष्ठमूलस्योत्तररेखा ब्राह्मं तीर्थम् ॥

वसिष्ठः ३-२६

अङ्गुष्ठमूलम् अधोभागः तस्य तलप्रदेशे ब्राह्मं तीर्थम् हस्ताभ्यन्तरं तलमाह महारेखान्तमभिमुखम् आत्मनो ब्राह्मम् इत्याह्निके मित्रमिश्रः-७७

**ब्राह्ममुहूर्त्त**— रात्रेरुपान्त्यमुहूर्त्तः ।

ब्राह्मे मुहूर्त्ते बुध्येत धर्मार्थौचानुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ॥

मनुः ४-९२

ब्राह्मो मुहूर्त्तः रात्रेः पश्चिमो याम इति कुल्लूकः । किन्तु तन्न संगच्छते मुहूर्त्तशब्दश्रावणात्, रात्रेरुपान्त्यमुहूर्त्तस्य तन्नाम्ना प्रसिद्धेश्च ॥

तदुक्तं कालमाधवे पुराणवाक्यम्—
शङ्करश्चाजपादश्च तथाहिर्बुध्न्य मैत्रकौ ।
आश्विनो याम्यवाह्नेयौ वैधात्रश्चान्द्र एव च ।
आदितेयोऽथ जैवश्च वैष्णवः सौर एव च ।
ब्राह्मानामस्वतश्चैव मुहूर्त्ताः क्रमशो निशि ॥

इति तत्रापि ज्योतिःशास्त्रम्
निशामुहूर्त्तागिरि जाजपादाऽहिर्बुध्न्यपूश्विश्वयमाग्नयश्च ।
विधातृचन्द्रादितिजीवविष्णुस्तिग्मद्युति त्वष्ट्रसमीरणश्च ॥

**ब्रह्मविवाहः**— विवाहविशेषः ।

आच्छाद्य चार्चयित्वा च श्रुतिशीलवते स्वयम् ।
आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्त्तितः ॥

मनुः ३-२७

वसिष्ठस्तु इच्छते उदकपूर्वं यां दद्यात्सब्राह्मः ॥

इति १-३०

**ब्राह्मसंस्कारः**— द्विविध एव संस्कारो भवति ब्राह्मो दैवश्च ।

गर्भाधानादिस्मार्त्तो ब्राह्मः पाकयज्ञा हविर्यज्ञाश्चेति दैव इति हारीतः संस्कारप्रकाशे-१३५

ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ।
सर्वस्यास्य यथान्यायं कर्त्तव्यं परिरक्षणम् ॥

मनुः ७-२

**ब्राह्मसम्बन्धः**— वैदिकसम्बधः ।

गुरुशिष्यसम्वधः सहाध्ययनसम्बन्धश्च ।
नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् ।
ब्राह्मान् यौनांश्च सम्बन्धानाचरेद् ब्राह्मणः सह ॥

मनुः २-४०

**ब्राह्मस्नानम्**— मन्त्रस्नानम् ।

**ब्राह्मी**— ब्राह्मविवाहेन विवाहिता स्त्री ।

दशपूर्वान् परान्वंश्यानात्मानं चैकविंशकम् ।
ब्राह्मीपुत्रः सुकृतकृन् मोचयेदेनसः पितॄन् ॥

मनुः ३-३७

ब्राह्मयं हुतम्— ब्राह्मणपूजनम् ।

अहुतं च हुतं चैवतथा प्रहुतमेव च ।

ब्राह्मयंहुतं प्राशितं च पञ्चयज्ञान प्रचक्षते ॥ ७३

जपोऽहुतो हुतो होमः प्रहुतो भौतिकोबलिः ।

ब्राह्मयं हुतं द्विजाग्र्यार्च्या प्राशितं पितृतर्पणम् ॥

मनुः ३-७४

# ( भ )

भम्— नक्षत्रम् ।

भान्यर्कोदयमारभ्य प्रवृत्तान्यधिकानि चेत् ।

समानि वातदाप्येषां व्रताचरण योग्यता ॥

श्रवणाव्यतिरिक्तेषु नक्षत्रेषु खलु त्रिषु ।

सूर्यास्तमनपर्यन्तं कार्य्यं द्वादश्यपेक्षणम् ॥

इति हरिभक्तिविलासकारिका

भक्तम्— (१) अशनमिति विज्ञानेश्वरः याज्ञ २-२७६

भोजनमिति मस्करी अन्नमिति हरदत्तः

भक्तं तेभ्यो दद्यात् गौत, ध, २-१-३४

अष्टौ ग्रासा मुनेर्भक्तं वानप्रस्थस्य षोडश ।

द्वात्रिंशभुग्गृहस्थस्यापरिमितं ब्रह्मचारिणः ॥

वसिष्ठः ६-२०

यस्य त्रैवार्षिकं भक्तं पर्य्याप्तं भृत्यवृत्तये ।

अधिकं वापि विद्येत स सोमं पातुमर्हति ॥

मनुः ११-७ महाभा, शा, १६५-५

(२) भोजनकालः ।

तथैव सप्तमे भक्ते भक्तानि षड़नश्नता ।

अश्वस्तनविधानेन हर्त्तव्यं हीनकर्मणः ॥

मनुः ११-१६

(३) ओदनः ।

भात इत्यस्य अपभ्रंशः ।

अवशिष्टं भक्तं रन्धयति ॥ मानवगृ २-६-७

भक्तम् अन्नमिति हरदत्तः ।

भक्तं तेभ्यो दद्यात् इति गौतमः २-१-३४

भक्त इति भाषायाम् ॥

भक्तः— सेवकः ।

भक्तदासः— सर्वकालं भक्तार्थमेव दासत्वमभ्युपगम्य यः प्रसिद्ध इति विज्ञानेश्वरः २-१८२

भक्तशरणम्— पाकशाला इति कल्पतरुः राजधर्म-७८

समवस्रवे भक्तशरणं कारयेत् आश्वलायन गृ,-२-७

भक्तिः— (१) सेवा ।

(२) अथातो भक्तिजिज्ञासा सा परानुरक्तिरीश्वरे ॥

इति शाण्डिल्यसूत्रम्

श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् ।

अर्च्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ७-५-२३

इति पुंसार्पिता विष्णौ भक्तिश्चेन्नव लक्षण ॥

क्रियते भगवत्यद्ध तन्मत्येऽधीतमुत्तमम् ॥

इति श्रीमद्भागवते ।

पुनरस्या वैधीरागनुगादिभेदाः तत्तद्ग्रन्थेषु मृग्याः ।

**भक्ष्यम्**— धानाशष्कुल्यादि ।

येतुकाठिन्यातिशयात् दन्तैः प्रयन्तेन खण्डयित्वा भक्ष्येते तद् भक्ष्यान् यथा मोदकादि ॥ इति नन्दपण्डितः श्राद्धकल्पलतायाम् ६१

**भगम्**— श्रीप्रभृति ।

भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्त्तिषु ।
माहात्म्यैश्वर्ययत्नेषु धर्ममोक्षेऽथनारवौ ॥

इति मेदिनी माहिषिकशब्दे योन्यर्थो द्रष्टव्यः ।

**भगः** — ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥
विष्णुपु, ६-५-७४

मन्वर्थमुक्तावल्यां तु—

एश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥

इत्येवं पाठो लभ्यते १-२

(२) भगः आदित्यविशेषः द्वादशादित्यशब्दे द्रष्टव्यः ।

**भगक्षमा**— भगक्षमा शिग्रु इति शान्तिमयूखे ।

भगक्षमा सुभद्रा च गुडुची सेन्द्रवारुणी ॥ इति तत्र शौनकः ॥

**भगालः**— कपालः ।

भगालमिति कपालम् पारस्कर. २-७-१३

**भङ्गः**— पल्लवः- मृदमानीय कुम्भेषु प्रक्षिपेच्चत्वरां तथा ।
रोचनं चैव सिद्धार्थान् गन्धान् गुग्गुलमेव च ॥
स्नपनं तस्या कर्त्तव्यं पञ्चभङ्गं समन्वितैः ।

इति भविष्ये अत्र भङ्गाः पल्लवाः इति उत्सर्गमयूखे-८

भङ्गः पल्लवः इति शान्तिमयूखे-५०

**भङ्गा**— पया इति या अभिधीयते उत्कलेषु काउंरिबा इति या उच्यते सा इति सम्भाव्यते ॥ शाणविशेष इति पतञ्जलेरभिप्रायः ।

**भटः**— जातिविशेषः । पुष्करशब्दो द्रष्टव्यः ।

**भण्डः**— असमीचीनो जनः । पाषण्ड भण्डचाण्डालवृषली-पतिवीक्षितम् । बृद्धहारीतः ६-२६८

**भण्डी**— मञ्जिष्ठा । इति हेमाद्रौ श्राद्धकल्पे-६८४

**भद्रम्**— मङ्गलम् ।

**भद्रः**— (१) भद्राः राष्ट्रकण्टकविशेषाः ।

कल्याणाकार प्रच्छन्नपाप धनग्राहिणो भद्रा इति कुल्लूकः

भद्राः शान्तिनियुक्ताः शान्तिमकृत्वैवार्थहराः इति रत्नाकरः विवादरत्नाकरश्च ॥

सरूपतामात्मनो निधाय स्त्र्यादिव्यामोहका इति सर्वज्ञः

उत्कोचकाश्चौपधिका वञ्चकाः कितवास्तथा ।
मङ्गलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह ॥
मनुः ९-२५८

(२) धार्मिकः ।

दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ।

आगामि भद्रनृपतिपरिज्ञानाय पार्थिवः ॥

याज्ञ १-३१८

भद्रः धार्मिक इति नीलकण्ठः ।

(३) मङ्गलम् ।

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।

स्थिरैरङ्गैस्तुष्टुवांस स्तनूभि र्व्यशेमहि देवहितं यदायुः

शु, यजुः २५-२१

**भद्रपीठम्**— भद्रपीठः मृद्वासनमिति हरिहरः मृदुपीठ इति गदाधरः पारस्क, गृ, १-१५-४

पादचतुष्टययुक्तो भद्रपीठ इति देवपालः ॥

काठकगृ, २ ५-१

**भद्रा**—(१) द्वितीया सप्तमी द्वादशी तिथयः ।

भद्रातिथौ पापवारे त्रिपादर्क्षे यदा मृतिः ।

तदा चितौ शवारोपे कृते कुर्यादिमं विधिम् ॥

इति कालसारे

(२) विष्टिः यस्मिन् दिने भवेद् भद्रा तस्मिन्नहनि भारत ।

उपवासस्य नियमं कुर्यान्नारी नरोपि वा

इति कालसारोद्धृतभविष्योत्तरे-४३०

**भद्रासनम्**— विशिष्टम् आसनम ।

भद्रं मनोरमम् आसनं श्रीपर्णीनिर्मितमिति विज्ञानेश्वरः

याज्ञः-२८०

श्रीपर्णीपीठं संस्थाप्य सितेन वाससा संछादयेत् ॥

एतत् भद्रासनमिति शान्तिमयूखे-नीलकण्ठः

हैमं च राजतं ताम्रं क्षीरिवृक्षमयं च वा ।

भद्रासनं च कर्त्तव्यं सार्द्धहस्तसमुच्छ्रितम् ।

सापादहस्तमानं च राज्ञो माण्डलिकान्वरात् ॥

इति नीतिमयूखे देवीपुराणम्

**भयवर्जिता सीमा**— परस्परसम्प्रतिपत्तिनिर्मिता सीमा ।

ध्वजिनी मत्सिनी चैव नैधानी भयवर्जिता ।

राजशासननीता च सीमा पञ्चविधा स्मृता ॥ इति

**भरतः**— नटः याज्ञ ३-१६२

यथा हि भरतोवर्णैर्वर्णयित्वात्मनस्तनुम् ।

नानारूपाणि कुर्वाणस्तथात्मा कर्मजास्तनूः ॥ इति

**भरद्वाजः**— (१) मन्त्रद्रष्टा ऋषिविशेषः ।

स च कृशो दीर्घः पलितशिरा इत्यादिरूपः ।

गोत्रप्रवर्त्तकेष्वन्यतमश्च ।

(२) पक्षिविशेषश्च भदभदलिया इति उत्कलेषु ख्यातः

भारद्वाज्यामांसेन वाक्प्रसारकामस्य ॥

पारस्कर गृ, १-१६-५

**भरुजः**— भरुजाधा ॥ इति लक्ष्मीधरः ।

नियतकालकाण्डे-२६१

(१) भरुजा भृष्टा यवा इति हरदत्तः ।

फाणित पृथुकतण्डुल करम्भ भरुज सक्तुशाक

इत्यादि आपस्त ध, १-५-१७-१६

उत्कलेषु प्रसिद्धः भुजा इति शब्दः अस्यैवापभ्रंश

इति मन्ये ।

भूजाचूडासुभातश्च लङ्कामारीचमर्दनः ।
विशार्द्धकदली नित्यं करोतु तव मङ्गलम् ॥
इति संस्कृतोत्कलभाषयोः श्लोकभुजाप्रयोगसूचकः ।
(२) भरुजः क्षुद्रशृगाल इति वैद्यकशब्दसिन्धौ-
हेमचन्द्रः ॥

**भरुण्डः—** भरुण्डाः काश्मीरदेशे प्रसिद्धा इति हेमाद्रिः ।
भरुण्डं जलजं यरबाणा इति श्राद्धमञ्जर्यामिति
निर्णयसिन्धौ ॥
जलप्रभवः कन्दविशेष इति मञ्जरीकार इति श्राद्धदीपे ।
भारुण्ड इति पाठभेदोप्यस्य ।

**भर्म—** (१) सुवर्णम् भृत्यवेतनम् अमरः २-१०-३८
(२) पोषणम् भरणमिति श्रीमूला अन्यत्रकुटुम्बभरण-
नियुक्त इति स एव ।
बदात्मपुत्रस्नुषा भर्मणि कौ १-२

**भर्मण्या—** गृहभरणनियुक्ता स्त्री ।
भर्मण्यायामनिर्दिष्टकालायां ग्रासाच्छादनं वाधिकं यथा
पुरुषपरिवापं सविशेषं दद्यात् ॥ कौट-३-२

**भल्लः—** अस्त्रविशेषः लोके भालि इति प्रसिद्धः ।
अशीणाक्षत्रवर्माणं षड्विंशतमा सुदक्षिणम् ॥
क्षत्रदेवं तु भल्लेन रथनीडा दपायत ॥ इति
भल्ललक्षणं यथा वीरसर्वस्वे-१८१
भल्लदण्डः सप्तहस्तः पञ्चहस्तमितोऽपिवा ।
दृढवंशमयः शुद्धो विव्रणः सरलः क्रमात् ॥
मुखे फलं विधातव्यं तीक्ष्णलोहमुखं दृढम् ।
सार्द्धद्विहस्तप्रमितं सार्द्धहस्तमितं तु वा ॥
मध्ये शिरामयं तत्र मूलेऽष्टाङ्गुलविस्तृतम् ।
क्रमात् कृशं च शिखरं तीक्ष्णमिक्षुदलं यथा ॥ इति

**भल्लुः—** भल्लुकः भालु इति भाषायाम् ।

**भवः—** धनपुत्रादिसम्पत्तिः इति कल्पतरौ मोक्षकाण्डे-१३

**भव्यः—** कर्मरङ्गा इति लक्ष्मीधरः । उआउ इति
वैद्यशास्त्रम् इति दिव्यसिंहमहापात्राः ।
पराशरमाधवे तु चव्यमिति पाठः । चविका इति
तस्यार्थः कृतः ॥
आम्रान् पालेवतानिक्षून् मृद्वीकाभव्यदाडिमान् इति
श्राद्धदेये शंखः ११-२२
चीणाकं लकुचं जम्बु भव्यं तथारुकमिति
ब्रह्मपुराणेऽपि ॥

**भषणम्—** कुक्कुरशब्दः ।

**भषत्—** स्त्रीयोनिः । करदिति भषदभिमृशति
वराहगृ, १८-१६

**भस्त्रा—** चर्मपुटिका भाति इति प्रसिद्धा ।
भस्त्रा ध्वानद्धतिरिति श्रीमूला कौ ४-४
माता भस्त्रा पितुः पुत्रः येन जातः स एव सः इति
कालसारोद्धृते महाभारते ।

**भाक्तिकः—** भाक्तिकाः भक्तार्हाः (पोष्या) दासकर्म
करादयः ।

ये नित्या भाक्तिकास्तेषामनुपरोधेन सम्विभागे विहितः ॥ आपस्त २-४-९-१०

भक्तमन्नं तद् येषां ते भाक्तिका इति स्मृतिचन्द्रिका-५९६

भाक्तिकाः भक्तार्हा कर्मकरादय इति हरदत्तः ।

**भागधेयः—** भाग्यम् प्राशस्त्यम् धर्मसुखभागित्वम् इति काठकगृह्यभाष्ये ।

**भागभोग—**भागभोगोपभोक्तारः उपलब्धस्य फलस्यैतावान्

भागो देय इति संविदा भोक्तार इति श्रीमूला ३-६

**भागलेख्यम्—** विभागपत्रम् ।

विभक्ता ये च भ्रात्राद्याः स्वरुच्या च परस्परम् ।

विभागपत्रं कुर्वन्ति भागलेख्यं तदुच्यते ॥

इतिशुक्रनीतौ ।

**भागिनेयः—** भगिनीपुत्रः ।

दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः ।

ब्राह्मणादित्रयेनास्ति भागिनेयः सुतः क्वचित् ॥ इति शौनकः दत्तकमीमांसायाम्-८५

**भागिनेयी—** भगिन्याः कन्या ।

मातामही भागिनेयी भागिनेयस्तथैव च ।

इति विष्णुधर्मोत्तरे

**भाग्यम् —** (१) पूर्वफल्गुन्य इति हेमाद्रिः २६७

सौभाग्यं भाग्ये इति श्राद्धप्रकरणे विष्णुः ।

(२) महत्त्वम् ।

महाभाग्यं पुरा राज्ञां कीर्त्यमानं मया शृणु ।

गच्छावधानं नृपते ततो दुःखं प्रहास्यसि ॥

महाभा, शा २९-१९

भाग्यं कर्म—

दक्षिणा वित्तसारेण पुनाति नरकार्णवात् ।

युगभाग्यप्रभावेण प्रयच्छति फलं हरिः ॥

अत्र भाग्यस्य कर्मणः प्रभावेण इति लक्ष्मीधरः कल्पतरौ व्रतकाण्डे-१५१

**भाजनम्—**(१) आढकस्य नामान्तरं खारी शब्दे द्रष्टव्यम् ।

(२) पात्रम् ।

अपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा ।

मनुः ११-१४७

**भाजनीयम्—** पञ्चसप्ततिपलशतं भाजनीयमिति

कौटलीये २-१९

**भाटम्—** भाटकम् ।

यो भाटयित्वा शकटं नीत्वा चान्यत्र गच्छति ।

भाटं न दद्याद् दाप्यः स्यारूढस्यापि भाटकम् ॥

इति स्मृतिचन्द्रिकायां मनुः

उपलब्धमनुस्मृतौ तु नास्ति—

**भाटकम्—** भड़ा, भाडा इति प्रसिद्धम् ।

गृहवार्यापणादीनि गृहीत्वा भाटकेन यः ।

स्वामिनो नार्पयेद् यावत्तावद्दाप्यः सः भाटकम् ॥

इतिवरदराजीये कात्यायनः ।

अत्र भाटकशब्देन दक्षिणोच्यते इति वरदराजः-पृ-३२०

**भाटिः**— भाटकम् अवक्रयस्य पर्यायः।

**भाण्डम्**— क्रय्यविक्रय्यसमूहः।

(१) भाण्डम्, क्रेयविक्रेयसमूह इति विवादरत्नाकरे।
भाण्डं साधारणद्रव्येणगृहीतं द्रव्यमिति नारदभाष्ये
भाण्डपिण्डव्ययोद्धार भारसारान्ववेक्षणम्॥
ना, सं, ४-३

भाडं विक्रेयद्रव्यमिति कुल्लूकः।
व्यवहारकल्पतरौ अपि-३५६
राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च।
तानि निर्हरतो लोभात् सर्वहारं हरेन्नृपः॥
मनुः ८-३९९

(२) भाण्डं युद्धोपकरणमिति नीलकण्ठः।
द्वितीयं प्रेषयामास वलस्कन्धं युधिष्ठिरः।
भाण्डं समारोपयतां चरतां सम्प्रधावताम्॥
महाभा, उद्, १९९-१०

(३) पात्रम्।
वेणुवैदलभाण्डानां लवणानां तथैव च॥
मृण्मयानां च हरणे मृदोभस्मन एव च।
मनुः ८-३२७

नपस्करं गृहोपयोगि भाण्डं कुण्डघाटिकादि इति मेधातिथिः।
वा सुराभाजनस्था मद्यभाण्डस्थितास्तथा॥
इति मनुः ११-१४७

अनयन् भाटयित्वा तु भाण्डं च यानवाहने।
दाप्यो भृतिचतुर्भागं सर्वामर्द्धपथे त्यजन्॥
इति व्यवहारमयूखे नारदः

(४) द्रव्यम्।
सारासारं च भाण्डानामित्यस्य व्याख्याने।
भाण्डानां द्रव्याणामिति कुल्लूकः मनुः ९-३११

**भाण्डागारम्**— कोषगृहम्।

हिरण्यं व्यापृतानीतं भाण्डागारेषु निक्षिपेत्।
याज्ञ-१-३२८

**भाण्डिकः**— तुर्यादिस्वनैः राज्ञां प्रवोधयिता बन्दिव्यतिरिक्तः। इति विज्ञानेश्वरः ३-२८८

**भाण्डी**—मञ्जिष्ठा।

जवादिकुसुमं भाण्डी इति ब्रह्माण्डे॥

**भानुमत्**— कृष्णा द्वादशी दिनमात्रम्। कालमाधवः-२

**भानुलङ्घितः**— अधिमासः।

राजाभिषेकं काम्यं च न कुर्याद् भानुलंघिते इत्यादि।

**भारः**— (१) परिमाणविशेषः।

भारः पलसहस्रद्वयमिति कल्पतरौ दानकाण्डे। ८४
दानमयूखे च १८९

विंशतितौलिको भार इति कौटलीये-२-१९
सुवर्णः स एव कर्षः चतुः कर्षः पलम्।
पलानां शतेन तुला विंशत्या तुलाभिभरि इति

(२) नेमानि हि त्वदीयानि सोढुं शक्ष्यन्ति मे बलम्।
भारं चापि गुरुं वोढुं कुञ्जर वा प्रमर्दितुम्॥
महाभा, विरा-४०-२

भारतम्—
भारतवर्षम्— तत्रोत्तरे हिमवान् । ७० तस्य दक्षिणे नवसाहस्रो भूः । ७१ तत्र दाक्षिणात्यो भारतः खण्डः । ७२ तत्र साक्षात् धर्मधर्मफलाः सिद्धान्ति ।। ७३
सहस्रयोजना वदरिकादिसेत्वन्ता ।।७६
द्वारकादि-पुरुषोत्तमशालग्रामान्ता
सप्तशतयोजना ।। ८०
बार्हस्पत्यार्थशास्त्रे ३ अध्यायः
उत्तरं यत् समुद्रस्य हिमवद्दक्षिणं च यत् ।
वर्षं तद् भारत नाम यत्रेयं भारती प्रजा ।। ६
भरणाच्च प्रजानां वै मनु भरत उच्यते ।
निरुक्त वचनाच्चैवं वर्षं तद् भारतं स्मृतम् ।।
ब्रह्माण्ड पु-१-२- ६-७

भारतसावित्री—मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि यान्ति यास्यति चापरे ।।
हर्षस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशान्ति न पण्डितम् ।। ६१
ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ।। ६२
न जातु कामान्नभयान्न लोभाद्
धर्मं त्यजेज्जीवितस्यापि हेतोः ।
नित्यो धर्मः सुखदुःखे त्वनित्ये
जीवो नित्यो हेतुरस्य त्वनित्यः ।। ६३
इमां भारतसावित्रीं प्रातरुत्थाय य पठेत् ।
स भारतफलं प्राप्य परंब्रह्माधिगच्छति ।। ६४
महा भा, १८-५-६४

भारदण्डानि सामविशेषाः ।
भारदण्डानि सामानि गायत्रं रैवतं तथा ।
इतिमिताक्षरायाम् याज्ञ-३-३०८
भारदण्डानि सामानि अग्न आयाहि
इत्यादीनि इति निर्णयसागरप्रकाशितयाज्ञवल्क्य टिप्पण्याम् ।।

भारद्वाजी— चिठीका इति प्रसिद्धा इति गदाधरः ।
भारद्वाज्या मांसेन वाक्प्रसारकामस्य ।।
पारस्क गृ, १-१६-५

भारिकः— भारवाही ।
स्थविरबालातुर भारिकस्त्रीचक्रवतां पन्थाः
समागमे परस्मै परस्मै देयः ।

भारुण्डः— (१) जलप्रभवः कन्दविशेषः इति मञ्जरीकार श्राद्धदीपे । तत्र
आम्रान् पालेवतानिक्षून् मृद्वीका भव्यदाड़िमान् ।
विदार्यांश्चैव भारुण्डान् श्राद्धकालेऽपि दापयेत् ।।
इति शङ्खः
उपलब्धशङ्खस्मृतौ तु—
विदार्यश्चैव रम्भाद्या दद्याच्छ्राद्धे प्रयत्नत इति
द्वितीयार्द्धपाठ उपलभ्यते ।। शंखस्मृतिः ११-२२

(२) गृध्र इति नीलकण्ठः ।

एतेभ्यश्चाप्रमत्तः स्यात् सदा शत्रोर्युधिष्ठिर ।
भारुण्ड सदृशा एते निपतन्ति प्रमादतः ॥

महाभा, शान्ति, ८६-२२

**भारुण्डानि—** यत्ते कृष्णः शकुन आतुतोद इत्यादीनि ।

एकविंशति समानि राणायनादीनां प्रसिद्धानि
इति कल्पतरुः नियत-६३ ऋ-१०-१६-६

भारुण्डानि च सामानि गायत्री चौशनं सदा ॥
इति शंखस्मृतिः ११-२

भारुण्डसामानि इमस्तोम इयाद्यृषु गीतानि ।
इति उत्सर्गमयूखे-१४

अ ज्यदोहानि सामानि शान्तिकाध्याय एव च ।
भारुडानि च सामानि पश्चि मेद्वारपालकौ ॥ इति

**भाल्लविनः—** छन्दोगाचार्यविशेषाः ।

भाल्लविनो निदाने गाथामुदाहरन्ति ॥ वसिष्ठः-१-१४

**भावः—** (१) चित्तम् ।

दानधर्मं निषेवेत नित्यमैष्टिकं पौर्त्तिकम् ॥
परितुष्टेन भावेन पात्रमासाद्य भक्तितः ॥

मनुः ४-२२७

त्रहृयैर्विभावयेल्लिङ्गै र्भावमन्तर्गतं नृणाम् ।
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च ॥

मनुः ८-२५

सर्वस्वमपि यो दद्यात् कलुषेणान्तरात्मना ।
न तेन धर्मभाक् स स्याद् भाव एवात्रकारणम् ॥

वायु पु, १-१८-८३

(२) विषयः ।

यदा भावेन भवति सर्वभावेषु निष्पृहः ।
तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम् ॥

मनुः ६-८०

सर्वभावेषु सर्वविषयेषु ।

(३) मान्यजनः मान्योभावः समीरितः ॥
इति विष्णुधर्मोत्तरे ३-१७-४४

**भावदुष्टम्—** अशुचित्वेन शङ्कितं तथा अभक्ष्यपदार्थसदृशत्वेन बुद्धिस्थीकृतम् ।

यत्र मनोविचिकित्सति तद् भावदष्टम् ॥
इति कुल्लूक ४-६५

भावदुष्टं न भुञ्जीत पराशरः ६-३८

अन्नं पर्युषितं भावदुष्टं सहृल्लेखं
पुनः सिद्धमाममांसं पक्वं च ॥ वसिष्ठः १४-२८

**भावदुष्टः—** दूषितचित्तः ।

गङ्गातोयेन सर्वेण मृद्भारैः पर्वतोपमैः ।
आमृत्याराचरेच्छौचं भावदुष्टो न शुद्ध्यति ॥

शिवपु, ५-२३-१८

**भावना—** प्रमाणम् ।

तस्य च भावनास्तिस्रो भवन्ति ॥ विष्णुः ६-२३
भाव्यते साध्यते विप्रतिपन्नाऽर्थोऽनयेति भावना ॥

**भावितः—** अङ्गीकारितः इति विज्ञानेश्वरः ।

निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् ।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं हरेत् ॥

याज्ञ-२-११

भावुकः— भगिनीपतिः ।

भ भुको भगिनीपतिरिति श्राद्धमयूखे ।

हलायुधकोशेऽपि का आचारमयूखे च-७५

यदि भावुक तुष्टोऽसि वरमेनं ददस्व मे ।

मद्भगिन्या सहाऽद्य त्वं मद्गृहे सगणो वस ॥

स्कन्द, वै, कार्त्तिक १६-२१

भाषा— (१) अर्थिना राजनि अर्पितमावेदनपत्रम्

प्रतिज्ञा पक्षश्चास्याः पर्यायः ।

सत्या न भाषा भवति यद्यपि स्यात् प्रतिष्ठिता ।

बहिश्चेद् भाष्यते धर्मान्नियताद् व्यावहारिकात ॥

मनुः ६-१६४

भाषालक्षणमुक्तं मिताक्षरायाम् २-६

अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम् ।

साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च ॥

प्रसिद्धमविरुद्धं च निश्चितं साधनक्षमम् ।

संक्षिप्तं निखिलार्थं च देशकालाविरोधि च ॥

वर्षर्त्तुमासपक्षाहो बेलादेशप्रदेशवत् ।

स्थानावसथसाध्याख्या जात्याकारवयोयुतम् ॥

साध्यप्रमाण संख्यावदात्मप्रत्यर्थिनामवत् ।

परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥

क्षमालिङ्गात्मपीडावत् कथिताहर्त्तृदायकम् ।

यदा वेदयते राज्ञे तद्भाषेत्यभिधीयते ॥ इति

(२) वाणी ।

भृत्यानां च भृतिं विद्याद् भाषाश्च विविधा नृणाम् ।

द्रव्याणां स्थानयोगांश्च क्रयविक्रयमेव च ॥

मनुः ६-३३२

भाषिका— सन्तापकारिणी वाणी ।

सोपि निष्कामतां प्राप्य निर्भर्त्स्यं च मुहुर्मुहुः ।

भाषिकाभिरनेकाभिस्तापयित्वा च भामिनीम् ।

स्कन्द नागर, १५६-१४

भासम्— अग्ने व्रतपत इत्यादि, शुक्लयजुः २-२८

पुरुषव्रतं च भासं च तथा देवव्रतानि च ।

अब्लिगं बार्हस्पत्यं तु वाक्सूक्तं मध्वृचस्तथा ॥

वसिष्ठः २८-१५

पुरुषव्रतं च भासं चेति शङ्खः ११-३

प्रक्षस्य वृष्णो अरूषस्य नूमह इत्यस्यामृचि गीयमानं

साम भासमिति चन्द्रकान्तभाष्ये ॥ छन्दोगस-

न्ध्यासूत्रम् ॥ १८

प्रक्षस्येति मन्त्रस्य भरद्वाज बार्हस्पत्य ऋषिः

जगती छन्दः वैश्वानरो देवता ।

प्रक्षस्य वृष्णो अरुषस्य नूमह प्रनो वचो विदथा

जातवेदसे ॥

वैश्वानराय मतिर्नव्यसे शुचिः सोम इव पवते चारु

रग्नये ॥ सा पू, ६-३-१२

भासः— पक्षिविशेषः ।

भासः पक्षिविशेषः श्येनाकृतिः पीनतुण्ड इति हरदत्तः ।

तद्भचरो गृध्रविशेषः इति कल्पतरुः नियत ३०१

भल्लचर इति पाठभेदः ।

भासः गृध्रविशेष इति अन्यत्र हरदत्तः ।

भासः वनकुक्कुट इति शूलपाणिः प्रायश्चित्तविवेके ॥

भासः गोष्ठकुक्कुट इति प्रसिद्ध मित्रमिश्रः

शुद्धिप्रकाशे-१५०

भासः गोष्ठकुक्कुट इति कल्पतरौ गार्हस्थ्य-१६०

**भास्करक्षेत्रम्**— भास्करक्षेत्रं प्रयाग इति शब्दकल्पद्रुमो-द्धृत प्रायश्चित्ततत्त्वे ।

गंगायां भास्करक्षेत्रे मातापित्रोर्मृतेऽहनि ।

आधाने सोमपाने च वपनं सप्तसु स्मृतम् ॥

**भिक्षणम्**— याचनम् ।

इन्द्रियप्रीत्यर्थस्य तु भिक्षणनिमित्तम् ॥

इति उज्ज्वलावृत्तौ आपस्त २-५-१०-३

**भिक्षा**— भिक्षितमन्नं भिक्षा इति अपरार्कः ।

सा च ग्रासप्रमाणा ग्रासप्रमाण भिक्षा स्यात इत्याचारसारे ।

**भिक्षुः**— सन्यासी ।

यस्त्वात्मरतिरेवस्यान्नित्यतृप्तो महामुनिः ।

सम्यग् दर्शनसंपन्नः स योगी भिक्षुरुच्यते ॥

कूर्म पु, ७ अध्याये

**भिक्षाचरणवाक्यम्**— भवत्पूर्वं चरेद् भैक्षमुपनीती द्विजोत्तमः ।

भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ।

मनुः २-४९

ब्राह्मणस्य—भवति ! भिक्षां देहिः

क्षत्रियस्य—भिक्षां भवति ! देहि ॥

वैश्यस्य—भिक्षां देहि भवति !

**भिक्षापरिमाणम्**—ग्रासमात्रा भवेद् भिक्षा पुष्कलं तच्चतुर्गुणम् ।

पुष्कलानि तु चत्वारि हन्तकारं विदुर्बुधा ॥

इति पराशरः

शातातपस्तु—

ग्रासमात्रा भवेद्भिक्षा पुष्कलं तच्चतुर्गुणम् ।

हन्तस्तु तैश्चतुर्भिः स्यादग्रं तत्त्रिगुणं भवेत् ॥

मिताक्षरा-१-१०८

**भिक्षुः**— / **भिक्षुकः**— } सन्यासी ।

तस्याश्रमविकल्पमेके ब्रुवते ॥ १-३-१

ब्रह्मचारी गृहस्थो भिक्षु वैखानसः

गौतमः १-३-२

चतुर्विधा भिक्षुकाः स्युः कुटीचकबहूदकौ ।

हंसः परमहंसश्च पश्चाद्योयः स उत्तमः ॥

लघुविष्णुः ४-११

**भिन्दिपालः**— आयुधविशेषः ।

महाराष्ट्राणां गोफण इति प्रसिद्ध इति महाभारत-व्याख्याने नीलकण्ठः ।

गदाभिर्मुसलैश्चैव भिन्दिपालैः सतोमरैः ।

आयसैः परिघैश्चैव निस्त्रिंशैर्विमलैः शितैः ।।

महाभा, भीष्म-४६-१४

भिन्दिपालः पञ्चहस्तस्त्रिहस्तो मुद्‌गराकृतिः ।

अष्टास्त्रिषु तीक्ष्णाग्रैरायसैः कण्टकैश्चितः ।।

इतिवीरसर्वस्वे-१८१

**भिन्नम्** – (१)स्फुटितम् ।

भाषायां तु फुटा इति फटा इति उच्यते ।

वर्ज्यं भिन्नं तथासनम् इति

न कार्ष्णायसे न मृत्पात्रे न भिन्ने नावकीर्णे ।।

इति हारीतः आचारादर्शे ६१

(२) न्यूनम् ।

न भिन्नकार्षापणमसि युक्तं नशिल्पवृत्तौ नशिशौनद्रुते ।

न भैक्षलब्धे न हृतावशेषे न श्रोत्रिये प्रव्रजिते न यज्ञे ।। वसिष्ठः १६-३७

**भिन्नवृत्तः**— दुराचारः इत्यपरार्कः २-७१

मिथ्यादृष्टिरित्यपरार्कभाष्ये ६६

**भिन्नवृत्तिः**— पात्रं ग्रीवायामासज्य धान्यवञ्चनपात्राद् भिन्नाद् विशीर्णादि भूमौ पतितधान्यं तस्मादनामिका हृतःभ्यामेकेकं धान्यमादाय पात्रे करोति तेन जीवनं भिन्नवृत्तिरिति नित्याचारप्रदीपे हारीतः ।

**भिल्लः**— जातिविशेष ।

गण्डवार इति प्रायश्चित्तविवेके शूलप णिः ३७५

रजकश्चर्मकारश्च नटो वरुड़ एव च ।

कैवर्त्तो मेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः ।।

**भिषक्** — (१) जातिविशेषः ।

नृपायां विप्रतश्चौर्यात् संजातो यो भिषक्स्मृतः ।

अभिषिक्तनृपस्याज्ञां परिपालयेत्तु वैद्यकम् । २७

इति औशनसस्मृतौ ।

(२) वैद्यः वैद्यशब्दो द्रष्टव्यः ।

**भिषङ्मिथ्याप्रचरः**— अयथा शास्त्रं चिकित्सनम् ।

अयथा शास्त्रं चिकित्सनं भिषङ्मिथ्याप्रचार इति माधवाचार्यः पराशरमाधवे-६-४६

**भिषक्सिद्धिः**— औषधफलावाप्तिः मिताक्षरा-१-२६७

**भिस्सटाः**— दग्धान्नम् ।

भिस्सटाः दग्धान्नमिति आचारेन्दुः ।

भिस्सटा दग्धिका इति अमरः २-९-४६

वार्त्ताक कत कालिङ्ग बिल्वौदुम्बर भिस्सटाः ।

एतांस्तु सेवते यस्तु तस्य दूरतराः श्रियः ।।

इति आचारेन्दौ विष्णुः ।

वृन्ताकं च कलिङ्गं च बिल्वोदुम्मरभिः सटाः ।

उदरे यस्य जीर्यन्ति तस्य दूरतरो हरिः ।।

इति निर्णयसिन्धौ

**भिस्सा**— सिद्धान्नम् । अमरः २-९-४८

भिस्सा स्त्री भक्तमन्धोन्नमोदनोऽस्त्री सदीदिविः ।

इति

**भीःसटम्**— श्लेष्मान्तकम् ।

धीःसटं श्लेष्मान्तकमिति धनवन्तरिनिघण्टुरिति निर्णयसिन्धुव्याख्याने कृष्णभट्टः ॥

**भीष्मपञ्चकम्**— व्रतविशेष यथा अग्निपुराणे ।

भीष्मपञ्चकमाख्यास्ये व्रतराजं तु सर्वदम् ।
कार्तिकस्यामलेपक्षे एकादश्यां समाचरेत् ॥
दिनानिपञ्चत्रिःस्नायी पञ्चव्रीहितिलैस्तथा ।
तर्पयेदेनपित्रादीन् मौनी संपूजयेद्धरिम् ॥ २
पञ्चगव्येन संस्नाप्य देवं पञ्चामृतेन च ।
चन्दनाद्यैः समालिप्य गुग्गुलुं सघृतं दहेत् ॥ ३
दीपं दद्याद्दिवारात्रौ नैवेद्यं परमान्नकम् ।
ॐ नमो वासुदेवाय जपेदष्टोत्तरं शतम् ॥ ४
जुहुयाच्च घृताभ्यक्तांस्तिलव्रीहींस्ततो व्रती ।
षडक्षरेण मन्त्रेण स्वाहाकारान्वितेन च ॥ ५
कमलैः पूजयेत्पादौ द्वितीये विल्वपत्रकैः ।
जानुसक्थि तृतीयेऽथ नाभिङ्गन्धेनतु ॥ ६
वाणविल्व जवाभिस्तु चतुर्थे पञ्चमेऽहनि ।
मालत्या भूमिशायीस्यादेकादश्यां तु गोमयम् ॥ ७
गोमूत्रं दधि दुग्धं च पञ्चमे पञ्चगव्यकम् ।
पौर्णमास्यां चरेन्मुक्तिं भुक्ति मुक्ति लभेद्व्रती ॥ ८
भीष्मः कृत्व हरिं प्राप्तस्तेनैव भीष्मपञ्चकम् ।
ब्राह्मणः पूजनाद्यैश्च उपवासादिकं व्रतम् ।

अग्निपु-२०५-६

**भीष्माष्टमी**— भीष्मश्राद्धतिथिः । माघशुक्लाष्टमी ।

**भुक्तानुभुक्तम्**— निरन्तरभुक्तम् इति विवादरत्नाकरे २०८

तत्र भुक्तानुभुक्तं दशवर्षम् वसिष्ठः १६-१७

**भुक्तिः**— भूम्यादेरुपभोगः । दखल् इति भाषायाम् ।

स्मार्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते ॥

इति मिताक्षरायां २-२७

अस्मार्तेनुगमाभावात् क्रमात्त्रिपुरुषागता ॥

कात्यायनः ३२१

**भुजिः**— भोजनम् ।

अपराह्णे न मध्याह्ने मध्याह्ने न तु संगवे ।
भुञ्जीत सङ्गवे चेत्स्यान्नपूर्वे भुजिमाचरेत् ॥
इति कालसारोद्धृते मात्स्ये

**भुजिष्या**— नियतपुरुषपरिग्रहा (स्त्री) इति नारदभाष्ये १३-७६

अन्येनावरुद्धय भुज्यमाना इति विवादरत्नाकरे ॥
पुरुषनियतपरिग्रहा दास्य एव भुजिष्या इति विज्ञानेश्वरः ।

अवरुद्धासु दासीषु भुजिष्यासु तथैव च ।
गम्यास्वपि पुमान् दाप्यः पञ्चाशत्पणिकं दमम् ।

याज्ञ २-२९०

**भुवः**— (१) कृष्णपक्षरात्रि पञ्चदशमुहूर्तं इति कालमाधवे-३

(२) यजुर्वेदः भुव इति यजुस्तथा ॥

वृद्धहारीतः-६-८६

भुवर्लोकः— भूमिसूर्यान्तरं यत्तु सिद्धादिमुनिसेवितम् ।
भुवर्लोकस्तु सोऽप्युक्तो द्वितीयो मुनिसत्तमाः ॥

ब्रह्मपु, २३-१७

भुषण्डी— आयुधविशेषः ।
भुषण्डी मुण्डलोहोत्था पुंप्रमाणसमन्विता ।
नारिकेलफलाकारा हस्तमात्रमिताग्रका ॥
मध्येहस्तमिता प्रौढहस्तद्वयमितोदरा ।
मूलेवितस्तिमात्रेण खड्गवन्मुष्टिसंयुता ॥

वीरसर्वस्वम्-१८०

भूः— ऋग्वेदः । भूरित्येव हि ऋग्वेदः वृद्धहारीतः ६-८६

भूतम्— (१) फलविशेषः ।
बहिः केसरावृतं फलं कर्णाटदेशे प्रसिद्धमिति ।

हेमाद्रिः परि-५५१

आम्रमाम्रातकं बिल्वं दाडिमं बीजपूरकम् ।
चीणाकं लकुचं जम्बु भव्यं भूतं तथारुकम् ॥
इति तत्रत्य ब्रह्मपुराणे ।
उत्कलेषु लेखनकोलि इति प्रसिद्धं बहिः केसरावृतम् ।
अम्लरसात्मकं वृष्टिकाललभ्यं फलमेतत्त्ववेति तर्क्यम् ।
(२) तत्त्वार्थयुक्तं वचनम् सत्यमिति यावत् ।
भूतं तत्त्वार्थसंयुक्तं प्रमादाभिहितं जलमिति मिताक्षरायाम् ।
छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥ याज्ञ २-१९
(३) आकाशादिपञ्चकम् ।
प्रवृत्तं कर्मसंसेव्य देवानामेति साम्यताम् ।
निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै ॥

मनुः १२-९०

पञ्चधा सम्भृतः कायः इत्यत्र पञ्चधा पृथिव्यादिपञ्चभूतात्मकतया इति मिताक्षरा-३-९
(४) भूतं स्थावरजङ्गमात्मकम् ।
नित्यमस्मिन्निरालम्बेकाले सततयायिनि ।
न तद् भूतं प्रपश्यामि स्थितिर्यस्य भवेद्ध्रुवा ।

विष्णु धर्मपु, २-७८-२

भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सुनराः श्रेष्ठा नरेषु ब्राह्मणा स्मृताः ॥

मनुः १-९६

(५) शुक्लचतुर्दशी दिवसभागः ।
तैत्तिरीयाणां सावित्रचयने संज्ञानं विज्ञानमित्यनुवाको द्रष्टव्यः कालमाधवः-२

भूतः— (१) चतुर्दशीतिथिः ।
नागो द्वादशनाडीभिर्दूषयत्युत्तरां तिथिम् ।
इति सावित्रीव्रतनिरूपणे
(२) शुक्लपक्षरात्रिपञ्चदशोमुहूर्त्तः कालमाधवे-३

भूतदाहीयाः— क्रोधादयः दोषाः ।
भूतानां दाहः भूतदाहः तस्मै हिता भूतदाहीयाः क्रोधादयो दोषाः ।
निर्हृत्य भूतदाहीयान् क्षेमं गच्छति पण्डितः ॥

आपस्त-ध-१-८-२३-३

**भूतप्रवाचनम्** — सिद्धेऽन्ने सिद्धमन्नमिति स्वामिना पत्न्या वाचनम् कल्पतरौ नियत १५४

भूतप्रवाचने पत्नी यद्यसंनिहिता भवेत् ।
रजोरोगादिना तत्र कथं कुर्वन्ति याज्ञिकाः ।।

इति छन्दोगपरिशिष्टे कात्यायनः २-१५३

**भूतात्मा**— (१) शरीरम् ।

योऽस्यात्मनः कारयिता तं क्षत्रज्ञं प्रचक्षते ।
यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ।।

मनुः १२-१२

(२) जीवात्मा ।

अद्भिर्गात्राणि शुद्ध्यन्ति मनः सत्येन शुद्ध्यति ।
विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यति ।।

मनुः ५-१०९

**भूतावासः**— शरीरम् ।

जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ।।

मनुः ६-७७

**भूतिः**— (१) अभ्युदयः ।

श्रोत्रियः श्रोत्रियं साधुं भूतिकृत्येष्वभोजनम् ।
तदन्नं द्विगुणं दाप्यो हिरण्यं चैव माषकम् ।।

मनुः ८-३९३

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्द्धरः ।
तत्र श्रीर्विजयो भूति ध्रुवा नीतिर्मतिर्मम ।।

भ. गीता, १८-७८

**भूतिकृत्यम्**— विवाहादिः, मनुः ८-३९३

भूतिशब्दो द्रष्टव्यः

**भूतृणम्**— भूतृणः भूणकसंज्ञकशाकविशेषः । स च काश्मीरेषु प्रसिद्धः इत्येके इति हेमाद्रिः परि-

शेः

स्मृतिचन्द्रिकाकारेण त्वेवमुपलक्षितः यस्यनाले ग्रन्थिस्थाने परिमण्डलावयवा भवन्ति स भूतृण इति

भूस्तृणः अभक्ष्यद्रव्यविशेषः ।

भूस्तृणः शिग्रुकं चैव खुखण्डं कवनानि च ।

इति बृहद्यमः

भूतृणं सुरसं शिग्रुं पालकं सिन्धुकं तथा ।।

इति श्राद्धवर्ज्ये शंखः १४-१६

**भूमिच्छिद्रविधानम्**— अकृष्याया अपि भूमेः सदुपयोगः

यस्याः भूमेः येन प्रकारेण उपयोगो भवति ।
तथा विधानमिति सारः कौटल्यः १-१-२

भूमिच्छिद्रं कृष्ययोग्या इति यादवः ।।

**भूमिदाहः**— वृषान्ते मिथुनस्यादावग्निदाहो दिनत्रयम् ।
अम्बुधीन् सहतान् भानुः पन्नगानपि तापयेत् ।।
रवौ रौद्राद्यपादस्थे भूमेः संजायते रजः ।
तस्माद्दिन त्रयं तत्र शस्य वापं परित्यजेत् ।।

कृत्यरत्नाकरे-१९३

**भूमिदेवः**— ब्राह्मणः ।

शिष्ट्वा वा भूमिदेवानां नरदेवसमागमे ।
स्वेनोऽवभृथस्नातो हयमेधे विमुच्यते ॥

मनुः ११-८२

भूमिपरीक्षा— महाकपिलपञ्चरात्रे यथा ।

स्फुटिता च सशल्या च वल्मीका रोहिणी तथा ।
दूरतः परिवर्ज्या भूः कर्त्तुरायुर्धनापहा ॥ २२
स्फुटिता मरणं कुर्य्याद्दुःखदा धनहारिणी ।
सशल्या क्लेशदा नित्यं वल्मीका शत्रुतो भयम् ॥ २३
ब्राह्मणी घृतगन्धा स्यात् क्षत्रिया मांसगन्धिनी ।
क्षारगन्धा तु वैश्या याच्छूद्रा विड्गन्धिनी क्षितः ॥
२४
मधुरा ब्राह्मणी भूमिः कषाय क्षत्रिया तथा ।
वैश्या तिक्ताथ विज्ञेया शूद्रा यात्कटुका मही ॥ २५
ईशकोणप्लवा सा च कर्त्तुःश्रेदा सुनिश्चितम् ।
पूर्वप्लवावृद्धिकरा वरदा तूत्तरप्लवा ॥
विद्वेषं मारणं व्याधिं कुर्य्यादग्निप्लवा सती ॥ २६

केशवपद्धतौ—

कुशकाशवती ब्राह्मी क्षात्री दूर्वावनावृता ।
फलपुष्पावृता वैश्या शूद्रा बहुतृणा मही ॥ २७

तथा—

श्वेता रक्ता तथा पीता कृष्णवर्णा भुवः क्रमात् ।
वर्णानां स्व स्व जातीया यदीच्छेच्छुभमात्मनः ॥
२८ इति

राजधर्मकौस्तुभे वास्तुप्रकरणे ।

भूरि— सुवर्णम् ।

ततस्तस्मिन् निपतिते रामे भूरि सहस्रदे ।
आवव्रुर्जलदो व्योम क्षरन्तो रुधिरं बहु ॥

महाभा, उद्,१८२-२१

भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि ।
नपुंसकं सुवर्णे च प्राज्ये स्याद् वाच्यलिंगकम् ।

इति मेदिनी

भूर्जकण्टकः— व्रात्यात् विप्रात् सवर्णायां जातः ।

भूर्लोकः— पादगम्यं तु यत् किंचिद् वस्त्वस्ति पृथिवीमयम्।
स भूर्लोकः समख्यातो विस्तारोस्य मयोदितः ॥

ब्राह्मपु-२३-१६

भूस्तृणः— भूस्तृणः भूतिकसंज्ञकः शाकविशेषः ।

स च काश्मीरेषु प्रसिद्धः इत्येके इति हेमाद्रिः

परि-५५६

कलम्बिकेत्यपरे भूतिकाख्यशाक इति श्राद्धमयूखे ॥
रामकर्पूर इति श्राद्धदीपकारः ।
मालवदेशप्रसिद्धः शाक इति कुल्लूकः मनुः ६-१४
स्मृतिचन्द्रिकाकरेण त्वेवमुपलक्षितः यस्य नाले ग्रन्थिस्थाने परिमण्डलावयवा भवन्ति स भूतृण इति अस्य च मालातृणकभूस्तृणौ इत्यभिधानकोशे प्रयोगः ॥
स्मृतिषु तु भूतृण भूस्तृणयो द्वयोरपि प्रयोगो दृश्यते ।
भूतृणं सुरसं शिग्रुं पालकं तिन्धुकं तथा ।

कूष्माण्डालाबुव र्त्ताककों वदारांश्च वर्जयेत ॥
शंखस्मृतिः १४-१९

वर्जयेन्मधुमांसं च भौमानि कवकानि च ।
भूस्तृणं शिग्रुकं चैव श्लेष्मातकफलानि च ॥
मनुः ६-१४

**भृगुः**— पर्वतकटक इति हेमाद्रिः ।
भृग्वग्न्यनाशकाम्बुसंग्रामविद्युन्नृपहतानां नाशौचम् ॥
विष्णुः २२-४७

**भृगुतुङ्गः**— श्राद्धक्षेत्रविशेषः ।
वाराणस्यां कुरुक्षेत्रे भृगुतुङ्गे हालये ।
सप्तवेण्यृषिकूपे च दत्तमक्षय्यमुच्यते ॥
शंखस्मृतिः १४-२६

भृगुतुङ्गः अरकण्टक सीपस्थः विन्ध्यपादः ॥
इति नन्दपण्डितः विष्णुमृतिः ८५-१६
ततः स नृपशार्दूल पुरुं राज्येऽभिषिच्य च ।
ततः सुचरितं कृत्वा भृगुतुङ्गे हातपाः ।
महाभा, आदि-७५-५७

**भृगुपातः** —पर्वतशिखराद्युच्चैः स्थानादवपातेनात्मनाशनम् ।
वृद्धः शौचमृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः
आत्मानं घातयेद् यतु मृग्वग्निपतनादिभिः ॥ इत्यादि
मिताक्षरायाम -३-६

**भृङ्गराजः**— धूम्राटः । धनछुआ इति प्रसिद्धः पक्षिविशेष
इति कल्पतरुः नियत ३००
धूम्याटः धनच्छाया इति प्रसिद्ध इति इत्याचारसारे
गदाधरः ।

भृङ्गराजतु विषं दृष्ट्वा कूजति—
भृङ्गराजतु कूजति इति मात्स्ये ॥ २१८-२०
कोकिलशब्दो द्रष्टव्यः

**भृङ्गारः**— सुवर्णनिर्मित पानपात्रविशेषः ।
भृङ्गारः कनकालुका इत्यरः २-८-३२

**भृतकः**— कर्मकरः ।
मूल्येन यः कर्म करोति स भृतकः स त्रिविधः ।
उत्तमस्त्वायुधीयोऽत्र मध्यस्तु कृषीवलः ।
अधमो भारवाही यादित्येवं त्रिविधो भृतः ।

**भृतिः**— कर्मकरवृत्तिः इति असहायभाष्ये ।
प्रेष्यभावेन वेतनग्रहणमिति कुल्लूकः १०-१७

**भेदः**— (१) कार्यसाधनोपायविशेषः ।
परस्परं तु ये दुष्टाः क्रुद्धा गीतावानिताः ।
आत्मीयां दर्शयेदाशां परात्दर्शयेद् भयम् ।
एवं हि भेदं द् भिन्नान् यथावद् वशानयेत ।
मत्स्यपु, २२२-३

(२) जलाशयादिभ्यः यत् स्थाने सेतुं निर्भिद्य जलं
बहिर्गच्छति तत् सेतुभंगस्थानं भेदः लोके घ इ इति
प्रसिद्धः ।
चत्वारि हस्तशतानि त्रिंशदुत्तराण्यायतेन एतावन्तेव
विस्तीर्णेन पञ्चसप्ततिहस्तानवगाढेन भेदेन
निःसृतसर्वतोयम इति रुद्रदशिलालेखे ॥
(३) भेदः फटा इति उड्रभाषायाम ।
नष्टः विकृतिगतः ताम्रकटाहादिशिद्रभेदन। दिना ।

पूर्ववत्कृत्वा देयः ।। इति विज्ञानेश्वरः याज्ञ २-५६

भेरी — भेर्यो वृहत्यो ढ़क्का इति महाभारतव्याख्याने

नीलकण्ठः ।

ततो भेर्यश्च पेशयश्च क्रकचा गोविषाणिकाः ।

सहसैवाभ्यहन्यन्त ततः शब्दो महानभूत् ।।

भीष्मे-४३-८

भैक्षम् — भिक्षाणां समूहः ।

भैक्षं भिक्षाकदम्बकम् इत्यमरः २-७-४६

समाहृत्य तु तद्भैक्षं यावदन्नममायया ।

निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ।।

मनुः २-५१

माधुकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम् ।

तात्कालिकं चोपपन्नं भैक्षं पञ्चविधं स्मृतम् ।

अग्निपु-१६१-६

भोक्ता— पालकः ।

भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।

प्रायेणोत्कलेषु श्राद्धिकादयः भूस्वामिनं भोक्तृपदेन

निर्दिशन्ति यथा भोगता इति

भोगः— (१) भागभोगः (संज्ञा)

(२) उपभोगः ।

सागमो दीर्घकालश्च निश्छिद्रोऽन्यरवोज्झितः ।

प्रत्यर्थिसन्निधानश्च पञ्चाङ्गो भोग इष्यते ।।

इति नारदः

भोगदेहः—येन देहेन सुखदुःखादि भोगमात्रं कर्त्तुं शक्यते ।

स च आतिवाहिकाख्यप्रेतदेहात् परं मानवादिस्थूल

शरीरग्रहणात् पूर्वं भवति ।

प्रेतपिण्डैस्ततो दत्तैर्देहमाप्नोति भार्गव ।

भोगदेहमिति प्रोक्तं क्रमादेव न संशयः ।। १६

पूर्णे सम्वत्सरे देहमतोन्यं प्रतिपद्यते ।

ततः स नरके याति स्वर्गे वा स्वेन कर्मणा ।।

इति प्रायश्चित्तविवेके-१३

भोगपतिः— यस्य भोगग्रहणे अधिकारः न भूम्याम् ।

विष्णुधर्मोत्तरपु-२११३-१७

अनेन भूपतेरेव भूमिदाने निबन्धदाने

वाधिकारो न भोगपतेरिति दर्शितम् ।।

मिताक्षरा १-३१८

भोगपत्रम्— भोगपत्रं तु करदीकृतं चोपायनीकृतम् इति

शुक्रनीतौ ।

भोगपदम्— भोगावस्थानम् ।

तथारूढविवादस्य प्रेतस्य व्यवहारिणः ।

पुत्रेण सोऽर्थः संशोध्यो न तं भोगपदं नयेत् ।

भोगलाभः— गृहक्षेत्रादिभ्यो यः लाभ स भोगलाभः ।

गृहात् स्तोमः शदः क्षेत्राद् भोगलाभः प्रकीर्त्तितः ।।

इति वृहस्पतिः

स्तोमः गृहभाटकम् क्षेत्रात धान्यादिशस्यप्राप्तिश्च

भोगलाभः गोगेन यत् लक्ष्यते ।

गृहक्षेत्राद्युत्पन्नलाभः बृद्धिरूपेणात्र गृह्यते ।

अत एव गृहक्षेत्रादिभोग्याधिरेवायम् ।
स्मृतिचन्द्रिकायां तु बृहस्पति वचनेन गृहात्तोपःशब्दः
क्षेत्राद् इति विशेषः ॥ व्यवहार-१५६

**भोगारूढः**— भोगावस्थितः ।

**भोगिनी**— भार्यापुत्रयो सत्त्वे कामाद् विवाहिता द्वितीया स्त्री ।
सति चेत्तनये तल्पे पुनः कामाद् विवाहिता ॥
द्वितीया भोगिनी नारी धर्मपत्नी न सोच्यते ॥
इति पूर्वाङ्गिरसे ४४९

**भोज्यम्**— घृतपूपादि ।
अनायासेन चर्वणीयं भोज्यम् इति नन्दपण्डितः
श्राद्धकल्पलक्षणयाम्-६१

**भोजङ्गीतिथिः**— पञ्चमी ।
भोजङ्गीतिथिमासाद्य यावच्चन्द्रार्कसङ्गमम् ।
तत्रापि महती पूजा कर्त्तव्या पितृदैवते ॥
श्राद्धप्रकाश-५

**भौमः**— (१) भूमिपुत्रः मङ्गलग्रहः ।
ज्येष्ठशुक्लादशम्यां तु भवेद् भौमदिनं यदि ।
ज्ञेया हस्तर्क्षसंयुक्ता सर्वपापहरा तिथिः ॥
इति कालसारे
(२) दिव्यमङ्ग भोजकाख्या ब्राह्मणविशेषास्ते चोत्तरापथे प्रसिद्धाः तदन्ये भौमा इति हेमाद्रिः ।
पञ्चभि र्ब्राह्मणैर्देव दिव्यैर्भौगैश्च सुव्रत ।
दिव्यमङ्गैस्तत्र देवं ब्राह्मणैः परिकल्पयेत् ॥
इति हेमाद्रिपरिशिष्टोद्धृतभविष्यपुराणे

**भौमब्रह्म**— वेदा ब्राह्मणा यज्ञाश्च इति भारतभावदीपे नीलकण्ठः ।
यं देवं देवकीदेवी वसुदेवादजीजनत् ।
भौमस्य ब्राह्मणो गुप्त्यै दीप्तमग्निमिवारणिः ॥
महाशान्ति-४७ २१

**भौमस्नानम्**— गङ्गामृत्तिकादिना सर्वाङ्गलेपनमिति नित्याचारे नरसिंहवाजपेयी ।

**भ्रमः**— जलनिर्गमः इति मयूखे नीलकण्ठः ।
मेखलाभ्रमनिष्कासगवाक्षान् नोपरोधयेत् ॥
इति कात्यायनः ।

**भ्रातृव्यः**— (१) शत्रुः ।
श्येनेनाभिचरन् यजेत् भ्रातृव्यस्य वधाय ।
भागवतेऽपि—
भ्रातृव्यमेनं तददभ्रवीर्यमुपेक्षयाध्येधितमप्रमत्तः ।
इति ५-११-१७
(२) भ्रातृपुत्रः ।
भ्रातृव्यस्याकृतस्यापि पुत्रत्वे पुत्रत्वाभावात् ।
अपुत्रधनाधिकारे पञ्चमस्थाने भ्रातृव्यपरिगणनं भ्रातृव्य परिगणनं विरुद्धम् ॥ इति दत्तकमीमांसायाम्
भ्राता पितृव्यो भ्रातृव्यः स्वसृपुत्रः स्वयं पचेत् ।
पित्रन्नं च सुतः शिष्यो दौहित्रः दुहितुः पतिः ॥
प्रजापतिस्मृति-६२
दृष्ट्वा त्रिनेत्रो धनदस्य पुत्रं पार्श्वे समभ्येत्य वचोबभाषे ।

भातुज्य वक्ष्याणि वचो यदत्र तत्त्वं कुरुष्वामितविक्र-
माऽसि ॥ वामनपु ६-४६

भ्रमरी— अपस्मारी इति कल्पतरुः ।

भ्रामरी गण्डमाली च श्वित्र्यथ पिशुनस्तथा ।

उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक एव च ॥

मनुः ३-१६१

भ्राष्ट्रः— (१) भर्जनपात्रम् (अम्बरीषः)

भ्राष्ट्रगृहादम्बरीषाद् वा इति पारस्करगृह्यव्याख्याने-
हरिहरः ।

भ्राष्ट्राद् वा उखामङ्गारेषु निधाय मुंजतृणादिकमाधाय

यो जन्यते इति देवपालः ॥ काठकगृ-३-१-८

भ्रूणः — ब्राह्मणविशेषः ।

मात्रश्च ब्राह्मणश्चैव मंत्रेयश्च तपःपरः ।

अनूचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः ॥

अनूचानगुणोपेतो यज्ञस्वाध्याययन्त्रितः ।

भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः ॥

इति देवलः

स्कान्देऽपि एवमेवपाठः स्कन्द-माहे २-५-२१६

बौधायनगृह्ये सूत्रप्रवचनाध्यायी भ्रूण इति ।

षडङ्गस्य वेदस्याध्येता तदर्थवित् प्रयोगशास्त्रस्य च

सव्याख्यानस्य चार्थवित् कर्मणामनुष्ठातानुष्ठापयिता

च ब्राह्मणो भ्रूण इति हरदत्तः ॥

आपस्त, ध, १-१०-२८-२१

भ्रूणहत्यादिपापानां प्रोक्ता निष्कृतिरुत्तमैः ।

दम्भस्य निन्दकस्यापि भ्रूणेऽनसा न निष्कृतिः ॥

बृहन्नारदीयपु ७-६६

नपुंसकलिङ्गेऽप्यस्य पाठः ।

यावच्च कन्यामृतवः स्पृशन्ति तुल्यैः सकामामभियाच्यमानाम् ।

भ्रूणानि तावन्ति हतानि ताभ्यां माता पितृभ्यामिति

धर्मवादः ॥ वसिष्ठः १७-७१

उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम् ।

निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत् ॥

इति प्रायश्चित्तविवेके ।

(२) गर्भः ।

भ्रूणहत्या— ब्रह्महत्या ।

भ्रूणहा— ब्रह्महा ।

भ्रेषः = नाशः । भ्रेषो नाश इति विज्ञानेश्वरः ।

नदाप्योऽपहृतं तत्तु राजदैविकतस्करैः ।

भ्रेषश्चेन्मार्गितेऽदत्ते दाप्यो दण्डं च तत्समम् ।

याज्ञ-२-२६

(२) भ्रेषो इत्यादिदुष्टसत्त्वजनितं भयं व्यालकृत-

उपप्लवोऽपि श्रीमूला ।

अन्यत्रश्लेषोपनिपाताभ्यां नष्टं विनष्टं वाभ्यावहेयुरिति ।

कौटल्य ३-१२

श्रेषो भ्रंशो यथोचितात् इत्यमरः ३-८-२३

# ( म )

**मः** — जीवः ।

मकारस्तु भवेज्जीवस्तयोर्दास उदाहृतः वृद्धहारीतः ६-६२

तयोर्लक्ष्मीनारायणयोः ।

**मकुष्टकः**— वनमुद्गः ।

मकुष्टकः वनमुद्ग इति मित्रमिश्रः पूजाप्रकाशे-१५५

स च मोट इत्युच्यते इत्यमरव्याख्यासुधायाम् ।

मुद्गमाषमसूराश्च गोधूमचणकानि च ।
मकुष्टकः कपालश्च सप्तधान्यो बलिः स्मृतः ॥
इति विष्णुधर्मोत्तरे ।

**मखः**— यज्ञः ।

अग्न्याधेयं पाकयज्ञाग्निष्टोमादिकान् मखान् ।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ॥
मनुः २-१४३

**मगः**—शाकद्वीपीयो ब्राह्मणः इति पूजाप्रकाशे मित्रमिश्रः ।

सूर्याय निवेदितं मगाय ब्राह्मणाय देयम् ॥ इति विष्णुः

**मंखः**— कपटजीवी इति असहायभाष्ये ।

नारदसंहिताभाष्ये च

वधकश्चित्रकन्मंखः पतितः कूटकारकः ।
कुहकः प्रव्रवसितस्तस्करो राजपुरुषः ॥ नार-सं २-१६४

देवतां गृहीत्वा याचक इति स्मृतिचंद्रिकायाम्-७८

व्यवहारकल्पतरौ तु शंख इति पाठः ।

**मंगलम्**— प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् ।
स तद्धि मगलं प्रोक्तमृषिभिर्धर्मदर्शिभिः ॥
अत्रिसंहिता-३४

प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् ।
सतद्धिमंगलं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ॥
इति गौतमविवृतौ १-८-२४

**मंगलादेशावृत्ताः**— राष्ट्रकंटकविशेषाः ।

धनपुत्रादिलाभ मंगलमादिश्यये वर्तन्ते ते इति कुल्लूकः मनुः-९-२५८

**मङ्गल्यकः**— मसूरः मसूरशब्दो द्रष्टव्यः ।

**मंगाः**— दिव्यामंगा भोजकाख्य ब्राह्मणविशेषास्तेचोत्तरा-पथे प्रसिद्धा इति हेमाद्रिपरिशिष्टे ।

दिव्यमंगैस्तत्र देवं ब्राह्मणैः परिकल्पयेत् इति तत्र भविष्यत्पुराणे ॥

**मज्जा**—शिरोमध्ये पिंड़ितस्नैह इति कुल्लूकः
मनुः ५-१३१

लज्जावद्राजवन्मज्जामांससाराऽस्थि साश्योरिति भागुरिः
सारौमज्जानरि इत्यमरः-२-४-१२

**मज्जुका**—वपानिर्मितो यूष इति देवपालः यथाकामं मज्जुका । इति काठकगृ-२-४-१२

**मञ्चकम्**— खट्वा मञ्चकं तूलिकायुक्तं निर्मितं दारुभिः

शुभे । इति विष्णुधर्मोत्तरे

चतुरशीति पर्वाणि दैर्घ्येण परिकल्पयेत् ।

षष्ट्यङ्गुलानि विस्तारं मञ्चकं हस्तसम्मितम् ॥

आचारभूषणे-३३६

**मठः**— निवासस्थानम् ।

तत्र मठं कृत्वा प्रवेशः अन्यकृते मठे वा ॥

इति नित्याचारे ३०७ बौधायनः

मठो बहुस्थूणं गृहं कुटी एकस्थूणमस्थूणं वेति

गोविन्दस्वामी तत्र मठं कुटीं वा करोति बौधा-३-१-१४

**मणिकः**—बहुलजलभाण्ड मणिक इत्याचारेंदौ ।

अलिंजरः स्यान्मणिकः इत्यमरः २-९-३१

महाकुंभ इति व्याख्यासुधायाम् ॥

**मणिका**— अग्निगृहकार्यार्थं जलपात्रमिति गदाधर-

राजगुरुः ।

**मणिकारः**— जातिविशेषः ।

वैमनसस्मृतौ—

नृपाज्जातोऽथगुह्यायां वैश्यायां विधिना सुतः ।

वैश्यवृत्त्या तु जीवेत न क्षात्रं धर्ममाचरेत् ।

तस्यां तस्यैव चौर्य्येण मणिकारः प्रजायते ॥ ३९

मणीनां राजतां कुर्यान्मुक्तानां वेधनक्रियाम् ।

प्रवलानां सूत्रत्वं शङ्खानां वलनक्रियाम् ॥ ४०

**मणिबंधनम्**— मणिबंधः ।

मणिबन्धनं करबाहुसन्धिदेशः इति स्मृतिचन्द्रिका ।

आह्निकः-२४३

वापीकूपतटाकेषु वाह्यतो नाहरेज्जलम् ।

आहरेज्जलमध्यात्तु परतो मणिबन्धनात् ॥ इति यम

**मणिबंधः**— प्रकोष्ठः करस्य संधिस्थलम् ।

करस्य यस्मिन्नंशे मणिर्बध्यते सः प्रकोष्ठ इति यावत्

आमणिबंधात्पाणी प्रक्षाल्य गौत-१-१-३५

मणिबंध पाणिमूलमिति लक्षणप्रकाशे ।

ब्राह्मतीर्थमूलमित्यपरार्कः ।

करबाहुसंधिरितिकल्पतरुः इत्याह्निकप्रकाशे ॥

करबाहुसन्धिदेश इति स्मृतिचन्द्रिका-२५१

**मण्ठः**—
**मण्डः**— } (१) वक्रजंघ इति हेमाद्रिः परिशिष्ट-४६०

तत्र सुमन्तुः ।

काणाः कुण्डाश्च मण्डाश्चाप्यचर्माणः कचैर्विना ।

सर्वे श्राद्धे नियोक्तव्या मिश्रिता वेदपारगैः ॥

मंठ इति मयूखोद्धृत ब्रह्मपुराण पाठः

(२) वतकविशेषः माण्डा इति हिन्दिभाषा इति

शब्दकल्पद्रुमे ।

उत्कलदेशे तु पिष्टकविशेषः मण्डा शब्देन उच्यते ।

(३) सक्तवः सर्पिषाभ्यक्ता शीतवारि परिप्लुताः ।

नातिद्रवा नातिसान्द्रा मण्ड इत्यभिधीयते ॥

इति कल्पतरौ चरकः नियतकाल-२४४

**मण्डनम्**— विवाहः ।

मुण्डनान्मण्डनं कार्यमण्डनान्न तु मुण्डनम् ॥

**मण्डपः**— (१) सेतुः मण्डम् उदकं पिबति इति मण्डपः

सेतुः नद्यादित णोपायः इति देवपालेनदर्शितं परमतम् ।

सेतु प्रतिष्ठाय मित्यादिरयदर्शनभाष्यम् प्रवादं सीति

मण्डपानाम् ॥ काठकगृ-५-१७-१४

मण्डपं सेतुप्रासादिकमिति ब्राह्मणवलः ।

**मण्डलम्**— वृत्तम् ।

**मण्डलाग्रः**— मण्डलाग्रः खड्ग इति नीलकण्ठः

नीतीमयूखे-५७

गोजिह्वासंस्थानो नीलवंशसदृशश्चक खीरपत्रसदृशश्च-

ण्डकरोमण्डलाग्रः प्रशस्तश्च ।

**मण्डूपिका**— मण्डूकत्वक् वामवा वा इति आपस्तम्बगृह्य

सूत्रव्याख्यायाम् ।

वचनं तु मित्रशद्वे मृग्यम् ॥

**मतंगवापी**— गयाक्षेत्रस्था ।

गया दक्षिणभागस्था इति वैजयन्त्यां नन्दपण्डितः ।

सा विशिष्टश्राद्धदेश इति विष्णुः ८५-४२

**मत्कुणः**— (१) दन्तहीनः गजः मत्कुणो दन्तवर्जितः इति

केशमत्रे दयलक्षणप्रकाशोद्धृत विष्णुधर्मोत्तरे ।

(२) कीटविशेषः ओड़श इति भाषा ।

**मत्तः**— मद्यादिपरतंत्रः ।

ध्वस्तपुंस्त्वे च मत्ते च शयनस्थे निरिद्रिये ।

मूकोन्मत्तेषु सर्वेषु न दोषः परिवेदने ॥

स्मृत्यर्थसा ।-।।

**मत्सरी**— परद्रोहकर्त्ता नासूयकोऽन्चार्पषु नाभिमानी

न मत्सरी ॥ महाभा-विरा-१-२८-१७

कीटोभवति मत्सरी ॥ मनुः

**मत्स्यः**— पुच्छवन्नक्षत्रम् ।

सूर्याचंद्रमसोः परिवेष इंद्रधनुः प्रसिद्धसूर्यमत्स्यश्च ।

आप १-३-११-३१

**मत्स्यंडिका**— शुक्लवर्णो गुड़विकारो मत्स्याण्डसदृशः।

खण्डसितादयोऽद्भेद इति हेमाद्रिः परि-५३८

**मत्स्यण्डी**— चिनि इति प्रसिद्धं वस्तु ।

शर्करागुडमत्स्यण्डी तथा मृष्टफलानि च ॥ इति

श्राद्धदेये प्रजापतः-१२४

उत्कृष्टः शर्कराभेदः मत्स्यण्डीति हेमाद्रिः । परि ६०

गुड़ शर्करमत्स्यड़ी देयं पाणित मूर्मुरम् ॥

गव्यं पयोदधिघृतं च लवणं सारसं तथा ।

निवेदयेच्छुचीन् गन्धांश्चन्दनागुरुकुङ्कुमान् ॥ १६०

ब्रह्मपु-२२०-१६०

गवांक्षीरंदधिघृतं क्षौद्रमिक्षुरसं तथा ।

शर्करा गुडमत्स्येण्ड़ी तथामृष्टफलानि च ॥

इति प्रजापतिस्मृतिः १२५

**मत्स्यबन्धकः**— जातिविशेषः ।

नृपायामेव तस्यैव जातो यो मत्स्यबन्धकः ।

औशनसस्मृतिः ४४ तस्य तक्षकस्य ।

मत्स्यिनी — (सीमा) सलिलवती सीमा मत्स्यशब्दश्चात्र मत्स्याधारजललक्षकः

ध्वजिनी मत्स्यिनी चैव नैधानी भयवर्जिता ।
राजशासननीता च सीमापञ्चविधा स्मृता ॥
इति नारदः मत्स्यिनी तु चला इत्युच्यते ।
स्वच्छन्दगा बहुजला झषकूर्मसमन्विता ।
नित्यप्रवाहिणी यत्र सीमा सा मत्स्यिनी स्मृता ।
निम्नोन्नता च ध्वजिनी नैधानी राजकारिता ॥
स्थिता पञ्चविधा सीमा मत्स्यिनी तु चला स्मृता ।
इति व्यास विवादरत्नाकरे ॥ २१५

मथितम् — अल्पं यस्य दध्नो हस्तादिना मथनमात्रं न जलेन मिश्रणं तन्मथितमिति हरदत्तः आपस्त २-८-१८-१

आलोड़ितं दधि इति हेमाद्रिः ।
तक्रं ह्युदश्विन्मथितं पादम्बर्धाम्बुनिर्जलम् ।
इति नैघण्डुकाः

मदः— (१) गर्वः मदोरेतसिकस्तूर्यागर्वे हर्षेभदानयोः ।
इति विश्वः

(२) मद्यम्-मनुः ७-४७

(३) रेतः- रागेण यद्रजः स्त्रीणामत्यर्थं हि प्रवर्तते ।
अशुद्धास्ता,स्तु नैवेह तासां वैरागिको मदः ॥
आपस्तम्बस्मृतिः ७-२

(४) मदः- मद्यपानजन्योऽवस्था विशेषः ।
मिताक्षरा-२-२१४

मदनद्वादशी — चैत्रशुक्लद्वादश्यां मदनद्वादशीव्रतम् । मत्स्यपुराण सप्तमाध्यायो द्रष्टव्यः ।

मदन्ती— यूथिका इति शान्तिमयूखे । वनमल्लिका इति रत्नमाला ॥

मदिर— मद्यन् स्पृष्ट्वा दत्त्वा च मदिरां विधिवत् प्रतिगृह्य च । मनुः ११-१०८

मद्गु— (१) निमज्जन्मत्स्यादः पक्षिविशेषः इति लक्ष्मीधरः ।

अन्यत्र जलकाक इति च सः नियतकाल-३०६
जलवायस इति हेमाद्रि हरदत्तौ ।
जलकाक इति गदाधरः ।

(२) ब्राह्मणेन वैदेह्यामुत्पन्न इति कुल्लूकः ॥
मेदांध्रचुंचुमद्गूनामारण्यपशुहिंसनमिति मनुः १०-४८

मद्यम्—मद्यनाम्ना प्रसिद्धं मदजननशक्तियुतं द्रवद्रव्यम् ।

पानसं द्राक्षमाध्वीकं खार्जरं तालमैक्षवम् ।
माध्वीकं टांकमाद्वींकं मैरेयं नारिकेलधम् ॥
सामान्यानि द्विजातीनां मद्यान्येकादशैव च ।
द्वादशंतु सुरामद्यं सर्वेषामधमं स्मृतम् ॥ इति मन्वर्थमुक्तावल्यां पुलस्त्यः ॥ मनुः ११-६५

माधूकमैक्षवं टाङ्कं कौलं खार्जुरपानसे ।
मृद्वीकारसमाध्वीके मैरेयं नारिकेलजम् ॥ ८३
अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य च ॥
विष्णुः २२-८४

मद्रकम्— संगीतशास्त्रप्रसिद्धः गीतविशेषः ।
संगीतरत्नाकरः ५-५-५

**मद्रदेशः**— याज्ञ १-११३

**मधुः**— (१) वसन्तर्त्तुः ।
(२) चैत्रीमासः मधुश्च माधवश्च वासन्तिकावृतु
यजुः । १४-१५

**मधुपर्कः**— कांस्यपात्राभ्यां संपुटीकृतम् उपरिद्विगुणित-
सूत्रवेष्टितं मधुमिश्रितं दधि मधुपर्क इत्युच्यते ।
साक्षातं सुमनो युक्तमुदकं दधिसंयुतम् ।
अर्घ्यं दधिमधुभ्यां च मधुपर्को विधीयते ॥
इति धर्मशास्त्रसंग्रहे कात्यायनः २९-१८
मधुनाज्येन वा युक्तं मधुपर्कामिधं दधि ।
दध्यलाभे पयो ग्राह्यं मध्यलाभे तु वै गुडः ॥ १५-५
निदध्याच्चं नवे कांस्ये तस्योपरि पिधाय च ।
वेष्टयेद् विष्टरेणैव मधूपर्कं तदुच्यते ॥ १५-६ इति
लघ्वाश्वलायनः ।
दधिमधुसंसृष्टं मधुपर्कः पयो वा मधुसंसृष्टम् ।
आपस्त २-४-८-८
मधुपर्कः दधिघृतजल मधुसितासमूहः कांस्यपात्रस्थः ।
कांस्यपात्रेण पिहितः ॥
दधिसर्पिर्जलं क्षौद्रं सितेताभिश्च पञ्चभिः ।
प्रोच्यते मधुपर्कस्तु सर्वदेवौघतुष्टये ॥
इति पूजाप्रकाश भास्करे-१४

**मधुपिंगललोचना**— मधुवदीषत्पिंगललोचना इति
गार्हस्थ्यकाण्डे लक्ष्मीधरः ।

**मधुब्राह्मणम्**— इयं पृथिवीत्यादि इति श्राद्धमयूखे ।

**मधुमती**— उपास्मैगायतइत्यादयाः मधुमत्यः इति के चन्
मधुवाता इत्यादया इति हेमाद्रिः ॥
मधुमतीभिर्वाप्रत्यृचम् मधुवाता इति तिसृभिर्गृ[illegible]
प्रतिमन्त्रं वा इति हरिहरः १-३-२२

**मधुसाह्वयम्**— ज्येष्टिमधु इति हेमाद्रिः ।

**मधूकः**— गुडपुष्पः (वृक्षः) महुल इति प्रसिद्धः ।

**मधूका**— मधुमक्षिका यदि गृहे मधूका मधु कुर्वन्ति उपोष्य
औदुम्बरोः समिधोऽष्टशतं दधिमधुताक्ताः ।
मानस्तोक इति द्वाभ्यां जुहुयात् शन्न इन्द्रोग्नी इति
च सूक्तं जपेत् शांखायन गृ-५-१०-१

**मधूच्छिष्टम्**— सिक्थकम् इति विज्ञानेश्वरः या ३-३७

**मधूनि**— मधुशब्दयुक्तानि यजूंषि ब्रह्ममेतुमामित्यादिनि
इति गौतमीयवृत्तौ हरदत्तः ।

**मधूलिका**— यावनालविशेष इति लक्ष्मीधरः ।
सा कृष्णाश्वेता लोहिता च ।
मधूलिका यावनालविशेष इति मदन पारिजाते-११९
मधूलिका च नालविशेषः यो नाल भेदो देवधान्यमिति
गौडाः इति दिव्यसिंह ।
धान्यविशेष इति तत्र पाठान्तरम् अस्यैव विशेषं
कृष्णा श्वेता लोहिताश्चेति ॥

महायवा व्रीहियवा तथैव च मधूलिकाः ।
कृष्णः श्वेता लोहिताश्च ग्राह्याः स्युः श्राद्धकर्मणि ॥ इति
मधूलिका भाषायां खर्बुजा इति प्रसिद्धा इति नन्द-
पण्डितः श्राद्धकल्पलतायाम् ५४ श्राद्धदीपे

मध्यदेश— हिमवद्विंध्ययोर्मध्यं यत्प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तित ॥ इति मनुः २-२१

मध्यममार्गः— आर्षभी वीथी गोवीथी जारद्गवीवीथी
चेतितिस्रः मध्यममार्गः देवी-भाग-८-१५

मध्यमलोकः— (१) पृथ्वी (२) भारतस्यमध्यदेशो वा
मध्यदेशलक्षणं तु मध्यदेशशब्दे द्रष्टव्यम् ।
लोकोऽयं भरतं वर्षमित्युपक्रम्य मध्यदेशस्तु मध्यमइत्युक्तेः
मध्यमलोको मध्यदेशस्य पर्यायः ।

मध्यमसाहसः—चत्वारिंशदधिकपञ्चशतपणात्मको दंडः ।
साशीतिपतीसाहस्रो दण्ड उत्तम साहसः ।
तदर्द्धं मध्यमः प्रोक्तस्तदर्द्धमधः स्मृताः याज्ञ-१-३६६
पञ्चशतपणात्मक इति मनुविष्णु । मनु ८-१३८

मध्याह्नः— त्रिधाविभागपक्षे पष्ठादिदशममुहूर्त्तान्तिः पञ्चधा-
विभागपक्षे पष्ठ दिदशममुहूर्त्तान्तिः पञ्चधाविभागपक्षे
सप्तमाष्टमनवममुहूर्त्तात्मकः कालः ॥

मध्वालु — दीर्घशामामधुरैकरसः कंदविशेषः मोहालुरिति
प्रसिद्ध इति हेमाद्रिः ।
मोहलकन्द इति कमलाकरभट्टः तमालं शतकन्दं च
मध्वालुः शीतकंदली इति कूर्मपुराणे ॥
माउआलु इति वैद्यकशब्दसिन्धुः ।

मध्वृचः— मधुवाता ऋतायते इति ऋचः ।
कल्पतरौ नियत-६३

मनः— अन्तःकरणम् । संकल्पविकल्पात्मकं मनः
निश्चयात्मिका बुद्धिरिति मनोबुध्यो भेदः ।

मनसा — आस्तिकमाता जरत्कारोः पत्नी ।
जाग्रद्गौरीति यावत् इति देवी भागवते ॥
कन्यका मनसा देवी कमलांशसमुद्भवा ।
तपस्विनीनां प्रवरा महातेजस्विनी शुभा १४२
यत पतिश्च जरत्कारुर्नारायण कुलोद्भवः ।
आस्तीकस्तनयो यस्या विष्णुतुल्यश्च तेजसा ॥
ब्रह्मवैवर्त ६-४३

मनीषी— वशीकृतचित्तवृत्तिः । पण्डित इत्यमरः
मेधावीति सायणः ।
यन्मर्त्यवयवाः सूक्ष्मास्तस्येकान्याश्रयन्तिषट् ।
तस्माच्छरीरमित्याहुस्तस्य मूर्त्तिं मनीषिणः ॥
मनुः १-१७

मनुः— (१) मन्त्रः पञ्चामृतं पञ्चगव्यमथोश्च तथा मनुः ।
एतैः प्रतिष्ठा रुद्राक्षे धारयेच्च जपेच्चमान ॥
नित्याचारप्रदीपः १-५०
सार्थं समुद्रं सन्यासं सर्पिश्छन्दोधिदैवतम् ।

अष्टाक्षरं मनुं जप्त्वा विष्णुसायुज्यमाप्नुयात् ॥

बृद्धहारीतः-६५६

(२) स्वायंम्भुवादयश्च मनवश्चतुर्दश ।

स्वायंभुवस्याऽस्य मनोः षट् वंश्यामनवोऽपरे ॥

मनुः १-६१

स्वायम्भुवशब्द द्रष्टव्यः ।

स्वाराचिषश्चोत्तमश्च तामसो रैवतस्तथा ।

चाक्षुषश्च न वेजा विवस्वत् सुतसव च ॥ १-६२

बृहन्नारदीयपुराणे—

स्वायम्भुवो मनुः पूर्वस्ततः स्वारोचिषस्तथा ।

उत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥ ८६

वैवस्वतो मनुश्चैव सूर्य्यासावर्णिरष्टमः ।

नवमोदक्षसावर्णिः सर्ववर्णहितेरतः ॥ ९०

दशमो ब्रह्मसावर्णिर्धिर्मसावर्णिकस्ततः ।

ततस्तुरुद्रसावर्णि रोचमानस्ततः स्मृतः ॥९१

भौत्यश्चतुर्दशः प्रोक्त एते च मानवः स्मृताः ३७-९१

नरसिंह पुराणे त्रयोदशोरुचिर्नाम मनुः २३-३२

भौमश्चतुर्द्दशमनुर्भविता २३-३४

स्कन्दपुराणे तु—

सायंम्भुवो मनुः पूर्वं मनुःस्वारोचिषस्ततः ।

औतमस्तामसश्चैव रैवत श्चाक्षुषस्ततः ॥ ३९

वैवस्वतोर्कसावर्णि ब्रह्मसार्णिरेव च ।

धर्मसावर्णि नामा च रौच्योभूत्यस्तथैव ॥ ४०

चतुर्दशैते मनवः संख्यातास्ते यथाक्रमम् ॥

स्कन्दपु, प्रभा, १०५-४१

(३) धर्मशास्त्रकर्त्ता स्वायम्भुवमनुः—

तद्धैतद् ब्रह्मा पजापतये उवाच ।

प्रजापतिर्मनवे ॥ मनुः प्रजाभ्यः इति छान्दो

८-१५-१

**मनुष्यः—** मनोरपत्यं पुमान् मनुष्यः इति विद्वांसः।

मनोर्नियमाधीनत्वेन तत्प्रजाएव मनुष्या

मानवा इति मन्मतम् यथा नाहुषीः प्रजाः।

**मनुष्ययज्ञः—** अतिथिपूजा इति नरसिंहवाजपेयी।

यात्रादिनिमित्तं ग्रामभोजनमिति हेमाद्रिपरिशिष्टे

नृयज्ञोऽतिथि पूजनम् ।। इति

**मनुष्यशिशः—** (मत्स्यः) मनुष्यशिश्सो जलमनुष्याख्या-

जलहस्यादयश्चेति उज्वलावृत्तौ हरदत्तः।

आप-१-६-१८-१३

**मनुष्याः—** सनकश्च सनन्दश्च तृतीयश्च सनातनः।

कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ।

एते ब्रह्मसुताः सप्त मनुष्याः परिकीर्त्तिताः ।

इति देवपालभाष्ये लौगाक्षिगृह्यसूत्रम् ॥ ६३

**मनोदण्डः—** प्राणायामः ।

वाग्दण्डो मौनता प्रोक्ता कर्मदंडस्त्वनीहता।

मानसस्य तु दंण्स्य प्राणायामो विधीयते ॥

इति पराशरमाधवे दक्षः ।

**मनोरथतृतीया—** चैत्रशुक्लातृतीया ।

मनोरथतृतीयायां यस्ते भक्तिं विधास्यति ।

तन्मनोरथसंसिद्धिर्भवित्री मदनुग्रहात ॥

इति काशीखण्डे-८०-८

मन्त्रः—(१) मन्त्राश्च कर्मकरणा इति सूत्रात् यैः कर्म क्रियते ते मन्त्रपदवाच्याः । मन्त्रा न वविधा

स्तुतिर्निन्दाप्रशंसा च आक्रोशः प्रेष्य एव च ॥

प्रश्नोऽनुज्ञा तथाख्यानमाशास्तिर्विषयामताः ।

विष्णुधर्मोत्तरपु-३-४-१०५

(२) यस्य मन्त्रं न जानन्ति समागम्य पृथग्जनाः ।

सकृत्स्नां पृथिवीं भुंक्ते कोशहीनोऽपि पार्थिवः ॥

अत्र मन्त्रो मन्त्रिभिः सहनिभृतचिन्तनम् ।

मन्त्रः राजकार्य्यविचारः इति सरस्वतीविलासे ३५

मन्त्रकारः— पुरोहितः दातुरुत्तरतः प्रत्यङ्मुखीकन्या दक्षिणत उदङ्मुखी मन्त्रकारः वाराह गृ, १३-४

मन्त्रस्नानम्— आपोहिष्ठादिभिः मार्जनम् ।

आपोहिष्ठादिभिर्मन्त्रम् इति हेमाद्रौ योगियाज्ञवल्क्यः ।

मन्थः— दधिदुग्धजलानामन्यतमेन मिश्रितः सक्थुः ।

मन्थस्य सक्थुविकारत्वात् सक्थुग्रहणेन ग्रहणमित्याचारे

गदाधरः तथा च चरके-

सक्तवो घृतसंमिश्राः शीतवारिपरिप्लुताः ।

नातिसान्द्रा न चात्यच्छामन्थमित्यभिधीयते ॥

एतेन लिंगद्वयेऽप्यस्य व्यवहारः ॥

आममेवापिष्टं मन्थमिति श्रीशंकराचार्याः ।

सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य इति

छांदोग्यव्याख्याने २-४

दधिदुग्धजलानामन्यतममिश्राः सक्तवो मन्थशब्देनाभिधीयन्ते इति पारस्करसूत्रभाष्ये

गदाधरः १३-१५-२५

माषकणमन्थेन इत्यस्य व्याख्याने उदकमिश्रमाषचूर्ण सम्पादितेनेति देवपालः काठकगृ-४-५-५

मन्थानः— (१) जीवविशेषः इति देवीभागवतटीकायाम्

(२) मन्थनदण्डः ।

ततो देवासुराः सर्वे ममन्थ रघुनन्दन ।

प्रविवेशाथ पातालं मन्थानः पर्वतोत्तमः ॥

इति रामायणे १-४५-२७

पुरामृतार्थं दैतेयदानवैः सह देवताः ।

मन्थानं मन्दरं कृत्वा ममन्थुः क्षीरसागरम् ॥

कर्म पु, ३१-१

मन्थिपात्रम्— औदुम्बरं चतुः स्रक्ति यत्तद्दधिग्रहपात्रमुच्यते

रास्नाचिह्नितं पात्र मैंद्रवायवम् पिलकाचिह्नितं-

मैत्रावरुणम् द्विकोणं पात्रमाश्विनम् ॥

वैल्वंशुकपात्रम् वोक्तं श्लक्ष्णं मन्थिपात्रमित्युच्यते ।

मन्दः— (१) मंदः मंदारवृक्ष इत्याचारेंदो-१६३

(२) शनैश्चरः ।

मन्दे चार्के गुरौ कपिवारेऽवेठेषु चैत्रिकी ।

अत्राश्वमेधिकं पुण्यं स्नानतश्च लभेन्नरः ॥

इति ब्राह्मे कल्पतरौ नियत-१७१

**मन्दारः—** निम्बः इति आचारेन्दुः १५९

**मन्मथवृक्ष—** आम्र इति शान्तिमयूखे ।

**मन्युः—** (१) क्रोधः । गूढो द्वेष इति उज्ज्वलावृत्तौ हरदत्तः । आप १-८२३-५

नाततायिवधे दोषो हन्तुर्भवति कश्चन ।
प्रकाशं वाप्रकाशं वा मन्युस्तं मन्युमृच्छति ॥

मनुः-८-३५१

मन्युप्रहरणा विप्रा न विप्राशस्त्रयोधिनः ।
निहन्युर्मन्युना विप्रा वज्रपाणिरिवासुरान् ।
मन्युप्रहरणा विप्राश्चक्रप्रहरणो हरिः ॥
चक्रात्तीव्रतरो मन्युस्तस्माद् विप्रं न कोपयेत् ॥

बृहस्पतिः-४६

**मन्वन्तरकालः—** मन्वन्तरं तु दिव्यानां युगानामेकसप्तति इत्यमरः सिद्धान्तदर्पणे तु—

मन्वन्तरं चन्द्रमहीध्र (७१) संख्यैर्महायुगैः सत्य-युगप्रमाणः (१७२८०००)
सन्धिस्तदन्ते जलसंप्लवाख्य सर्वावमः स्यात् खलु सधिरेकः ॥ प्र १-३६

**मन्वादिः—** अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिके तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्याप्यमावास्या पुष्यस्यैकादशी सिता ।
आषाढस्यापि दशमी माघमास य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा आषाढस्यापि पूर्णिमा ।
कार्त्तिकी फाल्गुनी ज्यैष्ठी चैत्रीपंचदशी सिता ॥
मन्वन्तरादयश्चैता दत्तस्याक्षयहेतवः ॥

स्कन्द, माहे-२-५-१२५

मात्स्येऽप्येवं पाठः १८-७३

कल्पभेदेनमतांतरं यथा—

अश्वयुक् शुक्लनवमी कार्त्तिके द्वादशी सिता ।
तृतीयाचैत्रमासस्य ज्येष्ठे पञ्चदशी सिता ॥
सप्तमी माघमासस्य पुष्यस्यामा तथापरा ।
वृश्चिकेचाष्टमी कृष्णा मकरेकादशी सिता ।
गोविन्दद्वादशी कुम्भे मेषे पञ्चदशी सिता ।
कार्त्तिकी फाल्गुन्याषाढ़ी पूर्णिमा द्वादशी सिता ॥
मन्वन्तरादयश्चैता मुनिभिः परिकीर्त्तिताः ।
अश्वयुक् शुक्लनवमी कार्त्तिके द्वादशी सिता ॥
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ।
आषाढ़ शुक्लदशमी सिता माघस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा तथाषाढ़ी च पूर्णिमा ।
फाल्गुनस्याप्यमावास्या पौषस्यैकादशी सिता ।
कार्त्तिकी फाल्गुनी चैत्री जैष्ठी पञ्चदशी सिता ॥
मन्वादयः समाख्याता दत्तस्याक्षयकारका ॥

बृहन्नारदीयपु. २३-५६

**मयूरचूलिका—** मयूरचुलिआ इति नाम्ना ख्यातः कन्दविशेषः यस्य पत्राणि मूलकपत्रसदृशानि भूमौ सुप्तानीव लक्ष्यते ।

मरकः— मारीनामा महाव्याधिः इति श्रीमूला ।

तेन मरको व्याख्यातः कौ ४-३

दूर्वाकाण्डायुतं हुत्वा काण्डात् काण्डेति मन्त्रतः ।

ग्रामे जनपदेवापि मरकं तु शमंनयेत् ॥

विष्णुधर्म २-१२५५-८६

मरीचिमत— कृष्णत्रयोदशीदिनभागः ।

कालमाधवः-२

मरुः— निर्जलो देशः ।

दुरवातोदको मरुः इति कात्यायनः २६-७

मरुतः— देवताविशेषः । षटदिव्ये-

वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते ।

पवनः स्पर्शनो वायुरनिलो मरुतस्तथा ।

प्राणः प्राणेशजीवौ च मरुतोष्टौ प्रकीर्त्तिताः ॥

ते च एकोनपञ्चाशद्भेदभिन्नाः ।

मितश्च सम्मितश्चैव अमितश्च महाबलः ॥

ऋतजित् सत्यजिच्चैव सुषेणः सेनजित्तथा ।

अतिमित्रोऽनुमित्रश्च पुरुमित्रोऽपराजितः ॥

ऋतश्च ऋतवाग्धाता विधाता धारणो ध्रुवः ।

विधारणो महातेजा वासवस्य परः सखा ॥

ईदृक्षश्चान्यदृक्षश्च एतादृशमिताशनः ।

क्रीडितश्च सदृक्षश्च सरभश्च महातपाः ।

भर्त्ता धुर्यो धुरिर्भीम अभिमुक्तः —

क्षमासह (क्षपासह) ॥

धृतिर्वसुमना धृष्यो रामः कामो जयो विराट् ।

देवा एकोनपञ्चाशन्मरुतस्त्वामवन्तु ते ॥

अग्निपु. १०६-२६-३४

मरुवकः— खनामख्याततुलसीजातीयसुगन्धवृक्ष ।

मरुआ इति ख्यात पुष्पवृक्षे नागदमनीक्षुपे इति

वैद्यकशब्दसिंधौ ।

विष्णुकान्तां मरुवकं केशाम्बुददलं तथा ॥

इति विष्णुदेये वृद्धहारीतः ७-४-४

मर्कटः— (१) लोहितमुख शाखामृग इति हेमाद्रिः ।

(२) अन्ननाभः मांकडसा इति भाषायाम् ।

मर्कटकः—(१) लंका इति हेमाद्रिः । परि-५४७

लंकामरिच इत्युत्कलभाषाप्रसिद्धः ॥

लाका इति कमलाकारः । निर्णयसिन्धुः २६४

वर्ज्यामर्कटकाः श्राद्धे इति षट्त्रिंशन्मते ।

राजमाषांश्च चणकान् मसूरान्कोरदूषकान् ।

विप्रुषान् मर्कटांश्चैव कोद्रवांश्चैव वर्जयेत् ॥

ब्रह्मपु-२२०-१६८

परि-५३७

(२) मर्कटकः तृणधान्यविशेषः इति हेमाद्रिः ।

कुरुविन्दामर्कटकास्तथा वेणुयवाश्चये इति मार्कण्डेय-

पुराणवचनात् ।

औषधिवर्गपाठात् मर्कटको मका इति नाम्नाप्रसिद्धः

शस्यविशेषो भवितुमर्हति ॥ मार्कण्डेयपुराणे

विष्णुपुराणस्य अं. १-६-२५

श्लोके च औषधिवर्गे पठितोऽयं शब्दः ओषधीशब्दे

द्रष्टव्यः ॥

**मर्जिका**— रसाला लोके शिखरिणीतप्रसिद्धा इति व्रत-
कल्पतरौ-६८

श्रावणे वर्जयेत् क्षीरं दधि भाद्रपदे तथा ।
घृतमाश्वयुजे तद्वदूर्जे वर्ज्याय मर्जिका ॥
इति तत्रमात्स्ये

**मम**— प्राणायतनस्थानम् ।
नाभिरोजो गुदं शुक्रं शोणितं शंखकौ तथा ।
मूर्द्धांसकण्ठहृदयं प्राणस्यायतनानितु ॥ याज्ञ ३-९३
विस्तारोऽपि तत्र द्रष्टव्य

**मर्मकालः**— भोजननिधुवन क्षौराभ्यंगस्वापकालाः
पंचमर्माणि ।
तेषु न प्रमदितव्यमिति सरस्वतीविलासे गौतमं
सरस्वती-४४

**मर्यादा**— (१) सीमा ।
अवीजविक्रयी चैव वीजोत्कृष्टं तथैव च ।
मर्यादाभेदकश्चैव विकृतं प्राप्नुयाद् वधम् ॥
मनुः ९-२९१
(२) अनेकक्षेत्रव्यवच्छेदिका साधारणी भूः मर्यादायाः-
प्रभेदे च ॥ याज्ञ २-१५-५
(३) स्थितिः दण्डो रक्षति मर्यादाम् इति मानसोल्लासे ।
स्थापितां चैव मर्यादां ये भिन्द्युः पापकर्मिणः ।
सर्वे पृथग् दण्डनीया राज्ञा प्रथमसाहसम् ॥
मत्स्यपु-२२६-६६
व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः ।
त्रय्या च रक्षितो लोकः प्रसिदति न सीदति ॥
इति कौटलीये ।

**मलः**— (१) पापम् मलोऽस्त्रियामित्यमरः ।
(२) विड्मूत्रादिः ।
पूर्वां सन्ध्यां जपस्तिष्ठन्नैशमेनो व्यपोहति ।
पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम् ॥
मनुः २-१०२
पाप्मा च मलमुच्यते मनुः-११-९३
वसाशुक्रमसृङ् मज्जामूत्रविड् घ्राणकर्णविट् ।
श्लेष्माश्रुदूषिकास्वेदो द्वादशैते नृणां मलाः ॥
मनुः ५-१३५

**मलज्ञुः**— मलिनजानुरिति देवपालभाष्ये काठकगृ-१-२
यो ब्रह्मचर्य्यं चरति मलज्ञुरवलः कृशः सर्वं सहते
इति ।

**मलमासः**— असंक्रान्तमासः ।
चान्द्रो मासो ह्यसंक्रान्तोमलमासः ।
प्रकीर्त्तितः इति ब्रह्मसिद्धान्ते ।
यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा ।
मलमासः स विज्ञेयो मासे त्रिंशत्तमे भवेत् ॥
इति कालमाधवे ।
तत्र असंक्रान्तमासः तृतीये वर्षे आगच्छति ।
तदुक्तं विष्णुधर्मोत्तरे ।
सौरेणाब्दस्तुमानेव यदा भवति भार्गव ॥ ३६
सावनेन तु मानेन दिनषट्कं न पूर्य्यते ।

ऊनरात्राश्च तेराम प्रोक्ताः सम्वत्सरेण षट् ।। २०
सौरसम्वत्सरस्यान्ते मानेन शशिजेन तु ।
एकादश'तिरिच्यन्ते दिनानि भृगुनन्दन ।।२१
मासद्वये साष्टमासे तस्मान्मासोतिरिच्यते ।
स चाधिमासकः प्रोक्तः सर्वकर्मसु गर्हितः ।
विष्णुधर्मोत्तरेषु-१-७२-२२

**मलवद्वासाः** — रजस्वला ।
ब्रह्माध्येष्यमाणो मलवद्वाससेच्छन् संभाषितुं ब्राह्मणेन संभाष्य तथा संभाषेत आप १-३-९-१३
(२) श्वपचादिः देवपालः मलवद्वाससा सहसंभाषा रजोवाससा सहशाय्या १५ काठकगृ १-३-१४-१५

**मलिनाभूमिः**— अंगारतुषकेशास्थिभस्माद्यै र्मलिना भवेत् इति देवलः भूमिरिति शेषः । मिताक्षरा १-१८८

**मलिनीकरणम्**— पापप्रकारभेदः ।
कृमिकीटवयोहत्यामद्यानुगतभोजनम् ।
फलैधः कुसुमस्तेयमधैर्यं च मलावहम् ।।
मनुः १ -२२

**मल्लः**— व्रात्यक्षत्रियात् सवर्णायां जातः । मनुः १०-२२
मल्लावाहुयाधिन इति कुल्लूकः १२-४५
माल इति भाषायाम् ।

**मल्लिका**— मल्लिनाम्ना प्रसिद्धं पुष्पम् ।
मुद्गराख्य पुष्पमिति हेमाद्रिः ।

**मसारः**— मरकतमणिः । मसारगल्वर्कमयैर्विभङ्गै र्विभूषितं होमनिबद्धचक्रम् महाभा, शा, ४६-३३

**मसूरः**— मंगल्यकाख्यश्चिपिटाकृतिः शिम्बधान्यविशेष इति हेमाद्रिः ।
मसूरं निम्बपत्राभ्यां पिबेन्मेषगते रवौ ।
विषं न क्रमते तस्य यावदब्दो न पूर्यते ।।
इति कृत्यरत्नाकरे-१४५

**मसूरिका**—(१) मशकनिवारकं वस्त्रम् । मशारि इति भाष
दंशांश्च मशकांश्चैव वर्षाकाले निवारयेत् ।
मसूरिकाभिः प्रावृत्य मंचशायिनमच्युतम् ।। इति शब्दकल्पद्रुमोद्धृता ।
अत्र मशकशब्ददृष्ट्या तालव्यशकारः युज्यते ।
पाद्मे क्रियायोगसारे । १२ अध्याये
उपर्य्यासनम् उपरिखट्वादौ आसनम् उपवेशनम् ।
आसनस्योपरि मसूरिकाद्यासनं वा इति हरिहरः
पारस्करः २-५-१२
(२) मसूरः ।
गोच्छागीमहिषीदुग्धादन्यद्दुग्धादिचामिषम् धान्यं मसूरिकाः प्रोक्ताः अन्नं पर्युषितं तथा इत्यादि पाद्मे कार्तिकमाहात्म्ये ।।

**मस्तु**— द्विगुणवारियुतं दधिमस्तु इति वैद्यकशब्दसिन्धौ ।
दधिक्षीरयोर्ग्रहणं मस्तुपिण्डकिलाटकूर्चिकादिजां तद् विकाराणामुपलक्षणम् मिताक्षरा याज्ञ ३-३६
मस्तु दध्युद्भवं जलमिति पर्यायमुक्तावली ।

कर्पूं च पाणिं च प्रक्षाल्यै तद वः पितरः पात्रमित्र -
कर्षुमुदके न पूरयित्वा । अन्तरुपातील्य स्तुना
नवनीतेन वा प्रतिनीय दक्षिणं चोद्वास्य कौशिकसूत्र
८७-८-१८

**महती**— (१) श्राद्धयोगविशेषः ।

भरणी पितृपक्षस्य महती परिकीर्तिता इति कालसारे
तस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत् ।

(२) अलभ्यस्नानयोगविशेषः ।

मासतंज्ञे यदा ऋक्षे चन्द्रः मस्पूर्णमण्डलः ।
गुरुणा याति संयोगं सातिथिर्महती स्मृता ।।

इति कालसारे गर्गः

एकगतौ स्यातां यदा गुरु निशाकरौ ।
सा पूर्णिमा स्यान्महती सर्वपापहरा स्मृता ।।

इति तत्र शंकरगीतायाम् ।

महामाघी प्रयागे तु नैमिषे फाल्गुनी तथा ।
शालग्रामे महाचैत्री कथाः पुण्यस्य हेतवः ।
वदर्यां च प्रोष्ठपदी कुब्जादौ च महाश्विनी ।।
पुष्करे कार्त्तिकी कान्यकुब्जे मार्गशीर्षी तथा ।
अयोध्यायां महापौषी कथाः स्युः सुमहा फलाः ।।

इति कालसारे-४४५

आग्नेयं तु यदा साक्षं कार्त्तिकां भवति क्वचित् ।
महती सातिथिः प्रोक्ता स्नानदानेषु चोत्तमा ।।
यदा याम्यं तु भवति ऋक्षं तस्यां तिथौ क्वचित् ।
तिथिः सापिमहापुण्या मुनिभिः परिकीर्त्तिता ।।
प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप ।
सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा ।।

इति ब्रह्मपुराणवचनं वर्षकियाकौमुद्याम्-२३१

**महाकच्छः**— समुद्रः कौट-४-३

**महाकच्छवर्द्धनम्**— समुद्रपूजनमिति श्रीमूला ।

तीर्थाभिषेचनं महाकच्छवर्द्धनं गवां श्मशानाय
कौटल्यः ४-३

दोहनंकवन्धदहनं देवरात्रिं चकाश्येदिति

**महागंगा** — अलकनन्दा इति नन्दपण्डितः ।
विष्णु-२५-२३

**महागमस्थानम्**— महाद्रुमस्थानम् इत्याह्निके
मित्रमिश्रः-४४३

समेत्यन्यायतोनिवर्तेत वेद्युद्यानारामसभाप्रपातडाग
देवगृहमहाग्मस्थाननदीना मन्यतमस्मिस्तंप्रदक्षिणं
कुर्य्यादिति अतिथिप्रकरणे शंखलिखितौ ।

**महागुरुः** — पितामाता च ।

महागुरुनिपातेतु आर्द्रवस्त्रोपवासिना ।
अतीतेऽब्दे पिकर्त्तव्यं प्रेतकार्य्यं यथाविधि इति दक्षः ।।

**महाङ्गधूपः**— कर्पूरं चन्दनं पुष्पमगुरुं तगरं तथा ।
गुञ्जन शर्कराकृष्ण महाङ्गसिहलकं तथा ।
महाङ्गोयं स्मृतो धूपः प्रियोदेवस्य सर्वदा ।।

इति कल्पकल्पतरौ व्रतकाण्डे-१७२

महाजनः— वेदार्थज्ञ इति नित्याचारप्रदीपे ।

नात्मनः प्रतिकूलं महाजनविरोध कुर्यात् ॥

इति शंखलिखितौ ।

महाजयासप्तमी—शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः

महाजया तदास्याद् वै सप्तमी भास्करप्रिया ।

स्नानं दानं जपो होमः पितृदेवाभिपूजनम् ।

सर्वं कोटिगुणं प्रोक्तं तपनेन महौजसा ॥

इत्यादि कल्पतरौ व्रतकाण्डे-१३५

महाज्यैष्ठी— ऐन्द्रे गुरुः शशीचैव प्राजापत्यगते रवौ ।

पौर्णमासीगुरौज्यैष्ठी महाज्यैष्ठीति सम्मृता ।

महाज्येष्ठायां तु यो गच्छेत् क्षेत्रं श्रीपुरुषोत्तमम् ॥

व्रजेत् पदानि यावन्ति क्रतु तुल्यानितानि तु ।

तत्रगत्वाहरेर्धाम्नि दृष्ट्वा श्रीपुरुषोत्तमम् ॥

विश्रम्य विधिवत्स्नाथात्प्रतितीथेषु वैक्रमात् ।

इति कालदीपे

हेमाद्रौ ज्योतिषे च ।

ऐन्द्रे गुरुः शशीचैव प्राजापत्ये रविस्तथा ।

पूर्णिमाज्येष्ठमासस्य महाज्येष्ठो प्रकीर्त्तिता ॥ इति

अग्निपु-१२१-६३

मतान्तरेण च—

वृषे च मिथुने भानौ जीवे चद्रे न्द्रदैवते ।

पौर्णमासी गुरोर्वारे महाज्यैष्ठी प्रकीर्त्तिता ॥

अग्निपु-१२१-६२

महादानानि— कनकाश्वतिलानागा दासीरथमहागृहाः ।

कन्या च कपिला धेनुः महादानानि वै दश ।

नित्याचारप्रदीपे २-२८५

महादिवाकीर्त्यम्— विभ्राड्बृहत्पिवतु इत्यास्यां गीतं ।

साम इति हरदत्तः गौत-३-१-१२

विभ्राड्सूर्य्यपुत्रऋषिः जगतीच्छदंः सूर्य्यो देवता

सा, पु-६-३-१४

विभ्राड् बृहत्पिवतुमोम्यमध्वायुर्दधद् यज्ञपतावविह्रुतम्

वातजूतो यो अभिरक्षतित्मनां प्रजाः पिपर्त्ति बहुधा

विराजति साम-६२८ . . .

महाद्वादशी— कार्त्तिक शुक्लद्वादशीति संस्कारमयूखे-५२८

महानवम्यां द्वादश्यां भरण्यामपि चैव हि ।

तथाक्षय तृतीयायां शिष्यंनाध्यापयेद् बुधः ॥

इति नृसिंहपुराणे

महानदी—(१) भागिरथी च कालिन्दी नर्मदा च सरस्वती

विशोका च वितस्ता च गौतमी कृष्णवेणिका ।

तुङ्गभद्राभीमरथीतापी चैव पयोष्णिका ।

द्वादशैते महानद्यः पापिनः पावयन्ति याः ।

इत्याचारसारे कात्यायनः ॥

(२) तन्नाम्नी नदी पार्वतीनर्मदाचैव यमुना च महानदी

उत्कलदेशेप्रवव्हमाना सरस्वती विशोका च वितस्ता च

तथा पुनः ।

दक्षिणायनकालेतु संप्राप्ते चावगाहनम् ।
परं त्रिदिनपर्यन्तं भवेयुस्ता रजस्वलाः ॥
नदी तत्र महापुण्या विन्ध्यपादविनिर्गता ।
चित्रोत्पलेति विख्याता सर्वपापहरा शिवा ॥
गङ्गातुल्या महास्रोता दक्षिणार्णवगामिनी ।
महानदीति नाम्ना सा पुण्यतोया सरिद्वरा ॥
दक्षिणस्योदधेर्गर्भंगता गतासावर्त्तशोभिता
उभयोस्तटयोर्यस्या ग्रामाश्च नगराणि च ॥

५-ब्रह्म, पु, ७-६

(३) याः स्वनाम्नैव समुद्रं गच्छन्ति सा महानदी इति गोविन्दस्वामी

षड्योजेनवहा कुल्या नद्योल्पद्वादशैव च ।
चतुर्विंशतिगा नद्यो महानद्यस्ततोऽधिकाः ॥

स्कन्द, आवन्त्य, खो २२७-६७

**महानवमी**— आश्विनशुक्लनवमी ।

प्रावृट्काले विशेषेण आश्विने हयष्टमीषु च ।
महाशब्दो नवम्यां च लोके ख्याति गमिष्यति ॥

इति कालदीपे

महानवम्यां द्वादश्यां भरण्यामपि पर्वसु तथाक्षय ।
तृतीयायां शिष्यान्नध्यापयोद्विजः इति हारितस्मृतिः ॥

**महानसम्**—पाकशाला फलनां चैव शाकानां छेदनार्थ-नियानितु ।

महानसेऽपिशास्त्राणां तेषामेवतु सन्निधः ॥
इति निर्णयसिन्धूद्धृतवायुपुराणे ।

वटुयाजिनो ब्राह्मणस्य गृहाद् इहत्रपाकाद् ब्राह्मण महानसाद्वेति हरिहरभाष्ये पारस्करः १-२

**महानाम्नी**— (१) ब्रह्मचारिणः वेदव्रतविशेषः ।

(२) महानाम्नी व्रतं कुर्यात पूर्णाब्दे चोत्तरायणे ।
शुक्लपक्षे शुभेऽह्निस्यादुपनवच्च हि ॥

लघ्वाश्वलायनः ११-१

(२) महानाम्नी अनमिकाङ्गुलिः ।

महानाम्नी उपकनिष्ठिका इति संस्काररत्नमालायाम्-५६ तस्मात् सुवर्णरजतताम्रशकलेन व्रीहिभिर्यवैवा दर्भैरङ्गुष्ठेन च महानाम्न्या चोपसंगृह्यतस्यमध्यमं प्राचीनं सन्ततमृजुमुल्लिखेत् इति तत्र बौधायनगृह्ये ।

**महानाम्न्यः**— विदामघवतइत्याद्या ऋचः ।

महामाम्नी अध्ययनविशेषा इति चन्द्रकान्तः ।

गौभिलः ३-२-४

महानाम्न्योनामार्चः न च ताश्चर्यन्ते ।
व्रतं चासांचर्यते महानाम्नी सह चरितं व्रतं महानाम्न्यो व्रतमिति पातंजलमहाभाष्ये ५-१-२

**महानिशा**— रात्रेर्मध्यमयाम द्वयम् ।

महानिशा तु विज्ञेया मध्यमप्रहरद्वयम् ।
प्रदोषपश्चिमौ यामौ दिनवत् स्नानमाचरेत् ॥

पराशरः १२-२४

**महान्**— महत्तत्त्वम् ।

तावुभौ भूतसंपृक्तौ महान् क्षेत्रज्ञ एव च ।
उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः ॥
मनुः १२-१४

**महापक्षः**— पुत्रादिबहुपरिजनयुक्तः ।
महापक्षे बहुबंधौ इति मन्वर्थविवृतिः ।
महापक्षः सुहृत्स्वजनराजामात्याद्यनुगृहीतमहिमा इति मेधातिथिः ।
महापक्षे धनिन्यार्ये निक्षेपं निक्षिपेद्बुधः ॥
मनुः ८-१७९

**महापथः**—श्मशानम् । राजमार्गः महापथं च गत्वा उपस्पृशेत् आपस्त-१-५-१६-१४

**महापथिकः**— (१) दीर्घाध्वनिक इति कल्पतरुः ।
व्यव-१११
सुमूर्षुतया प्रस्थित इति हेमाद्रिः ।
महापथिकः महापथगामीति व्यवहारप्रकाशे-११८
(२) समुद्रपारगामी ।
आह्वायका देवलका नाक्षत्रा ग्रामयाजकाः ।
एते ब्राह्मणचण्डाला महापथिकपञ्चमाः ॥
महाभा शान्ति ७६-६
महापथिकः समुद्रयात्री महापथे शुल्कग्राहको वा इति भारतप्रदीपे
समुद्रपथचारी इति हेमाद्रिः परि-४८८

**महापातकम्**— ब्रह्महत्या ।
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥
स्तेयपदेनात्र ब्राह्मणसुवर्णहरणं विवक्षितम् ।

**महापुरुषविद्या**— महापुरुषविद्या ।
जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
सुब्रह्मण्य नमस्तेस्तु महापुरुषपूर्वज ॥
इति मित्रमिश्रः भक्तिप्रकाशे ६७
स्वर्णघर्मानुवाकेन महापुरुषविद्यया ।
पौरुषेणापि सूक्तेन सामभिराजवादिभिः ।
इति पूजाप्रकाशे विष्णुपूजायाम्-पृ-११६

**महाप्रस्थानम्**— मरणार्थो नियमपूर्विका यात्रा ।
महाप्रस्थानमातिष्ठन् मुच्यते सर्वकिल्बिषैः ॥
महाभा, शा, ३५-१७

**महाभरणी**— महाद्वादशी द्रष्टव्या ।

**महाभाग्यम्**— महात्म्यम् । महत्त्वं वा भाग्यशब्दे द्रष्टव्यः ।

**महाभूतम्**— आकाशादि तानि पंच ।
तस्माद्वा एतस्मादाकाशः सम्भूतः ।
आकाशाद्वायुर्वायोरग्निरग्ने रापोऽद्भ्यः ॥
पृथिवी इति श्रुतौ ।

**महामहः**— महोत्सवः ।
महामहयोस्त्वनन्त्ययः स्यादभयं च ।
वसिष्ठ १९-२०
महामहयोः महोत्सवयोः राज्ञः पुत्रजन्मादीन्द्रमहादिरूपयोः विवादरत्नाकरे ।

**महामात्रः**— (१) हस्तिशिक्षाजीवी ।

महामात्रः हस्तिशिक्षाजीवीति कुल्लूकः ।

स च माहुन्त इति देशभाषायाम् ।

असम्यक्कारिणश्चैव महामात्राश्चिकित्सका ॥

इति कण्टकनिरूपणे मनुः ९-२५९

गजः कुवलयापीडो महामात्रप्रचोदितः ।

स वा हनिष्यते पापौ वसुदेवात्मजौ शिशू ॥

इति विष्णुपुराणे ५-१५-१७

(२) महामात्रा मन्त्रिपुरोहितादय इति मेधातिथिः ।

महामात्रः समृद्धे चामात्ये हस्तिपकाधिपे ॥

इति मेदिनी

(३) प्रधानम् ।

अजातशत्रुं कुशलं स्म पृच्छेः पुनः पुनः प्रीतियुक्तं वदेस्त्वम् ।

जनार्दनं चापि समेत्य तात महामात्रं वीर्यवतामुदारम् ॥ महा भा, उद् २२-३७

सर्वायुधमहामात्रं शत्रुसम्बाधकारकम्

महाभा, विरा, ४०-७

महामात्राः प्रधानानि इत्यमरः २-८-५

मठाधीशानां महन्तशब्दः अस्य शब्दस्यापभ्रंशो नवेति विचार्यम् ।

**महायवः**— वेणुयव इति श्राद्धदीपे ।

महायवा वण्ड़यवा इति लक्ष्मीधरः ।

**महारजनम्**— कुसुम्भम इति कमलाकरः ।

तैलेन वर्त्तिर्दातव्या महारजनरञ्जिता ॥

मञ्जिष्ठम् इति नन्दपण्डितः ।

दक्षिणपार्श्वे महारजनरक्तेन समग्रेण वाससा ।

घृततुलामष्टाधिकां दत्त्वा विष्णुः ९०-२१

महारजनरक्तेन समग्रेण तु वाससा ।

पलाष्टकयुता तैलतुला अष्टोत्तरं शतम् ॥

इति पूजाप्रकाशे-७१

**महारात्रिः**— कार्त्तिककृष्णा चतुर्दशीरात्रिः ।

महारात्रिः समुत्पन्ना चतुर्दश्यां मुनीश्वराः ।

अतस्तदुत्सवः कार्यः शक्तिपूजापरायणैः ॥ इति

स्कन्दे-वै, वदरिका-९-५८

**महारुद्रः**— रुद्रशब्दो द्रष्टव्य ।

**महारौरवम्**— नरकविशेषः ।

मनुस्मृतौ ४-८८ पुंसि विष्णुस्मृतौ ४३-५,

क्लीवे निर्दिष्टोऽयं शब्दः ।

रुरुरिति सर्पविान्तरजातिः तत्प्रचुरस्थानम् ।

महत्त्वयोगितदेव इति नन्दपण्डितः वैजयन्त्याम् ॥

**महालयः**— (१) कन्यागतापरपक्षः ।

येय दीपान्विता राजन् ख्याता पञ्चदशी भुवि ।

तस्यां दद्यान्नचेद्दत्तं पितृणां वै महालये ॥

नभस्यापरः पक्षो यत्र कन्यां व्रजेद्रविः ।

स महालयसञ्ज्ञः स्याद्गजच्छायाह्वयस्तथा ॥

इति पराशरमाधवेवृद्धमनुः आचारकाण्डे-६६६

(२) पुण्यक्षेत्रविशेषः यत्र श्राद्धकरणेन पितृणां तृप्तिः

वाराणस्यां कुरुक्षेत्रे भृगुतुङ्गे महालये ।
सप्तवेण्यृषिकूपे च दत्तमक्षय्यमुच्यते ॥

शंख-१४-२६

महालयः पर्वतविशेषः इति विष्णुस्मृतिव्याख्यायां नन्दपण्डितः ८५-१८

**महावारुणी—** अलभ्ययोगविशेषः ।

चैत्रकृष्णत्रयोदश्यां शनिवार शतभिषानक्षत्रयोगे भवति

वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ।
गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैः समा ॥
शनिवारसमायुक्ता सा महावारुणी स्मृता ।

**महावैराजम्** —पिबा सोममित्यस्यामृचि गीयमानं साम ।

**महावैशाखी** — श्रीपुरुषोत्तमक्षेत्रे समुद्रस्नानयोगविशेषः ।

मेषेऽर्के कर्कटेजीवे मकरस्थेऽथवा द्विजे ।
पूर्णिमा रविवारेण तुलास्थे च शनैश्चरे ॥
वरीयोयोगयुक्ते च विशाखर्क्षे यदा शशी ।
महाशब्दा तदा ज्ञेया कोटिसूर्यग्रहाधिका ॥
कोटिजन्मकृतं पापं दृष्ट्वा श्रीपुरुषोत्तमम् ।
महावैशाख्यां मुञ्चन्ति स्नानं कृत्वा महोदधौ ॥

इति कालदीपे

**महाव्याहृतिः—** (क) भूः भुवः स्वः इति त्रयम् ।

महाव्याहृतिभिः भूर्भुवःस्वरेताभिरिति कुल्लूकः ।

महाव्याहृतयश्च भूरादिसत्यान्ताः सप्त पञ्च वा गौतमाभिप्रायेण इति ज्ञानेश्वरः ।

उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ॥
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥

याज्ञ १-१५

महाव्याहृतिभिर्होमः कर्त्तव्यः स्वयमन्वहम् ।
अहिंसासत्यमक्रोधमार्जवं च समाचरेत् ॥

मनुः ११-२२२

(ख) गौतममतेन भूः भुवः स्वः, तपः, सत्यम् इति पञ्च ।

**महाव्रतम्—**(१) राजतं सामेति मित्रमिश्रः ।

साम राजानं वरुणमग्निमन्वारभामहे इति साम ।
आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ।

शंखस्मृतौ ११-४

(२) मरणवैकल्पिकं चतुर्विंशतिवर्षात्मकव्रतं च ।

**महाशल्कः—** सशल्का मत्स्यः शल्यक इति मेधातिथिः ।

कालशाकं महाशल्काः खड्गलोहामिषं मधु ॥
आनन्त्यायैव कल्प्यन्ते मुन्यन्नानि च सर्वशः ।

मनुः ३-२७२

**महाष्टमी—** आश्विनशुक्लाष्टमी ।

प्रावृट्काले विशेषेण आश्विने ह्यष्टमीषु च ।
महाशब्दो नवम्यां च लोके ख्यातिं गमिष्यति ॥

इति कालदीपे ।

**महासांतपनः—** व्रतविशेषः ।

पृथक्सान्तपनद्रव्यैः षड्हः सोपवासकः ।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥

इति याज्ञवल्क्यः-३-३१५

त्र्यहं पिबेत् गोमूत्रं त्र्यहं वै गोमयं पिबेत् ।
त्र्यहं दधि त्र्यहं क्षीरं त्र्यहं सर्पिस्ततः शुचिः ।
महासांतपनं ह्येतत् सर्वपाप प्रणाशनमिति यमः ॥

**महिषिका—** देवताविशेषः ।
कन्यायाः रजस्वलाहेतुकदोषवारणायक्रियमाण-
हविष्यकल्पे अर्चनीयासु देवतासु एका ।
काठकगृ २-७-१६
कालीं षष्ठीं भद्रकालीं पूषणं त्वष्टारंमहिषिकां चेत्यन्तम् ।

**महिषी—**(१) राज्ञः उत्तमजातीया स्त्रीति सायणाचार्याः ।
(२) गोसदृशपशुस्त्रीविशेषः याज्ञ २-१५६ मनुः ६-४८
(३) व्यभिचारिणो महिषी सोच्यते भार्य्या भगेनार्जति
या धनम् इति लघ्वश्वलायनः ।
(४) लक्षणवती स्त्री ।
विनीतक्रोधः महर्षः महिषी भार्य्यां विन्देत ।
अनन्यपूर्वां यवीयसीम् वाराह गृ, १०-१

**महीदुर्गम्—** पाषाणेनेष्टकेनवाविस्तारादद्वैगुण्योच्छ्रायेण-
द्वादशहस्तोच्छ्रितेन युद्धार्थमुपरि भ्रमणयोग्येन सावरण-
गवाक्षादियुक्तेन प्राकारेण वेष्टितमिति कुल्लूकः
मनुः ७-७०

**महोक्षः—** महावृषभः याज्ञ १-१०६

**महोत्सवः—** विवाहादिः आरब्धयज्ञेषु महोत्सवेषु तथैव
दोषा न विकल्पनीयाः अत्रिसंहिता-२३२

**महोदयः—** देशविशेषः कान्यकुब्जामहोदया इति हला-
का २ महोदये उज्जयिन्यमिति गोबिन्दनन्दः
वर्षक्रियाकौमुद्याम्-३४०
महोदये तु तत्स्नानं तत स्नानम्- अर्द्धोदयस्नानम्

**मागधः—** वैश्यात्क्षत्रियायां जातः ।
वैश्यान्मागधवैदेही राजविप्राङ्गनासुतौ ॥
मनुः १०-११
ब्राह्मण्यां वैश्यसंसर्गाज्जातो मागध उच्यते ॥
औशनसस्मृतिः-

**मागधी—** पिप्पली इति हेमाद्रिः श्राद्धमयूखे नीलकण्ठश्च ।

**माघमा—** कर्कटी गृहस्नेहावबद्धानां नराणामल्पमेधसाम्
कुस्त्री खादति मांसानि माघमा सेगवा इव ॥
महाभा, शान्ति आप ११६-८

**माध्यम्—**कुन्दपुष्पम् बिल्वपत्रं च माध्यं च तुलस्यतसि
दले ।
कह्लारं तुलसीं चैव पद्मं च मुनिपुष्पकम् ।
एतत्पर्युषितं न स्यात् कुशाश्च कलिकास्तथा ॥
इति निर्णयसिन्धौ ।

**मांगः—** मेदजायुवतिसंगाच्चांडालो जनयेत्सुतम् ।
स मांगः श्वपचो लोके इत्याचारेन्दौ ॥

**माणवः—**मन्त्राविकारशून्यो मनुष्यः ।
अनूचो माणवो ज्ञेयः इति इति कात्यायनः २७-११
माणवाः चोरणारदारिकादिकुपुरुषा इत्यर्थशास्त्र
व्याख्याने श्रीमूला ।

सिद्धव्यं जनैमणिवप्रकाशनम् इति कौट-४-४

माणवकः= ह्रस्वो माणवो माणवकः।
अनुपनीतो बालकः॥

माणवविद्या— प्रस्थापनान्तर्धानादिरूपा इति श्रीमूला।
माणवा माणवविद्याभिः प्रलोभयेयुः वौ ४-५

माण्डलिकः—सामन्तः स नृपः प्रोक्तो यावल्लक्षत्रयावधि।
तदूर्द्धं दशलक्षान्तो नृपो माण्डलिकः स्मृतिः॥
क्रनितिः ५१-१८४

मातङ्गः= शूद्रात् ब्राह्मण्यां जातः व्यवहारकल्पतरुः-८१८

मातरः— ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा।
वाराही चैव माहेन्द्री चामुण्डागण संयुता इति
अन्यथापि—
गौरी पद्मा शची मेधा सावित्री विजया जया।
देवसेना स्वधा स्वाहा मातरो लोकमातरः।
धृतिः पुष्टि तथा तुष्टिरात्मदेवतया सह इति।
गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दश॥
कात्यायनः-१-११-१३
गदाधरभाष्ये कात्यायनः पारस्करः १-२

माता— जननी।
गुरुपत्नी गर्भधात्री स्तनदात्री पितुः स्वसा।
स्वसा मातुः सपत्नी च पुत्रभार्याऽन्नदायिका॥ ४८
इति मातरो विविधाः स्मृता इत्युक्त्वा उक्तं ब्रह्मवैवर्त्ते
गणेश-८-४८

मातुलः— (१) मातुर्भ्राता मनुः-४-१७६
(२) मातृमुख्यश्च।
तथा मातुः तुल्य लक्षणं यस्येति निरुक्त्या।
मातुलशब्देन मातृमुखो गृह्यते पितृष्वसाशब्देन स
स्वसा सु असस्वेषु सीदति इति वेति
च निरुक्त्या पितुः स्वेरूसीदनिति पितृष्वसेति
पितृसदृशमुखीत्यर्थो निर्णयः॥
(३) गणकप्रसिद्धया अक्षरसंख्यया मातुलशब्दः।
पञ्चषष्ट्यधिकशतत्रयमाचष्टे इति कालमाधवे-२
प्रमाणमतुलशब्दे द्रष्टव्यम्॥ माधवाचार्याः

मातुलिङ्गम्— }
मातुलुंगः— } मातुलुंगः बीजपूर इति लक्ष्मीधरः
नियतकाल-२८१
मातुलिंग इति मिताक्षरायां पाठः।
मातुलिङ्गं नारिकेलं रम्भाखर्जूरपूगकम्॥
शस्तानि स्युरथान्यानि नारङ्गादीनि वापि च॥
लघ्वाश्वलायनः-२-६

मातुलेयः— मातुःपुत्रे भ्राता अतयोर्मातुलेयं च कृष्णं
मां विद्धिते रिपुम् महाभा, सभा, २३-२५

मातृबन्धुः— मातुः पितृष्वसृमातृष्वसृमातुलपुत्राः।
मातुः पितुः ष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः॥

मातृमूलम्— मायिण मूलमिति प्रसिद्धमिति आचारेन्दौ

मूलकं मातृमूलं च श्वेतरक्तौ च सूरणौ ।
चत्वार्य भोज्यमूलानि इति चतुर्विंशतिमते ॥

**मात्र** — अनुपनीतः क्रियाहीनो ब्राह्मणः ।
ब्राह्मणानां कुलेजातो जातिमात्रो यदा भवेत् ।
अनुपेतः क्रियाहीनो मात्र इत्यभिधीयते ।।
मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च तपः परः ।
अनचानस्तथा भ्रूण ऋषिकल्पऋषिर्मुनिः ॥
इत्येतेऽष्टौ समुद्दिष्टाः ब्राह्मणाः प्रथमंश्रुतौ
इति देवलः स्कांदे-माहे-२-५-११०
इत्यत्र ततः परमितिपाठः ।
ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत् ।
अनुपेतः क्रियाहीनो मात्र इत्यभिधीयते-२-५-११२

**मात्रा** — (१) परिच्छदः प्राणयात्रिकमात्रः स्यान्मात्रा संगाद्विनिर्गतः इति वसिष्ठः १०-२२
मात्रा परिच्छदो वस्त्रादिरिति लक्ष्मीधरः नियत-३६९
(२) लघ्वक्षरोच्चारणकाल इति नरसिंहवाजपेयी ।
लघ्वक्षर समामात्रा निमेषः परिकीर्त्तितः ॥
अतः सूक्ष्मतरः कालो नोपलभ्यो भृगूत्तम ।
नोपलभ्य यथाद्रव्य सुसूक्ष्मं परमाणुतः ॥
इति विष्णु धर्मपु, १-७२-२
प्राणायामास्त्रयः पञ्चदशमात्राः इति ।
जान्वग्रभ्रमणेन च्छोटिकादानकालो मात्रा ॥
संभ्राम्यच्छोतिकां दद्यात्कराग्रं जानुमंडले ।
मात्राभिः पञ्चदशभिः प्राणायामोऽधम स्मृतः ॥

इति मिताक्षरा याज्ञ-३-२०१
हस्तेन जानुप्रादक्षिण्येन यच्छोटिकादानं तत् परिमितः कालो मात्रा इति लक्षणप्रकशे मित्रमिश्रः ॥
(३) परिमाणः । प्राणयात्रिकमात्रः स्यात् वसिष्ठः १०-२२
गोर्वरत्वं मात्राहीनत्वात् गोस्तु मात्रा न विद्यते इति श्रुतेः संस्कारप्रकाशः-५६६
(४) धनम्- पतितसंप्रयोगे च ब्राह्मेण वा यौनेन वा यास्तेभ्यः सकाशान्मात्रा उपलब्धास्तासां परित्यागस्तैश्च न संवसेत् वसिष्ठः २०-४५
(५) मात्रा- अंशः लेशः इति हेमाद्रिः ।
पिण्डेभ्य स्त्वल्पिकां मात्रां समादायानुपूर्वशः ॥
तेनैव विप्रानासीनान् विधिवत् पूर्वमाशयेत ॥
मनुः-३-२१९
ततो गृहीत्वा पिंडेभ्यो मात्राः सर्वाः क्रमेण तु इति हेमाद्रौ ।
यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः ॥
मनुः-७-५
मात्स्यपद्मयोः
(६) मात्रा विषया इति श्रीधरस्वामी ।
एतद्व्यातुरचित्तानां मात्रास्पर्शेच्छया मुहुरिति श्री म, भाः १-६-३५
मात्राकर्णविभूषायां वित्ते माने परिच्छदे ।
अक्षरावयवे स्वल्पे क्लीवं कार्त्स्न्येऽवधारणे ॥ इति मेदिनी
(७) इन्द्रियाणि मात्रास्पर्शास्तु कौन्तेयशीतोष्ण सुख-

दुःखदाः इति भगवद् गीतायां शंकराचार्य्याः २-१४
मात्रा आभिः मीयन्ते शब्दादयः इति श्रोत्रादीनि
इन्द्रियाणि शब्दादीनि उच्यन्ते ॥
लक्षणया तद्ग्राहकाणि इन्द्रियाणि श्रोत्रादीनि लक्ष्यन्ते।
(८) आदर्शः ।
चामारं व्यजनं मात्रां छत्रं यानासने तथा ।
सावित्रेणैव तत्सर्वं देवायविनिवेदयेत् ॥ विष्णुः ६५-१४
मात्रा आदर्श इति नन्दपण्डितः ।

**माधवः**—वैशाखीमासः शु. यजुः १४–२५
मधुश्च माधवश्च वासन्तिकावृतू इति

**माधुकरी**— मधुकरः भ्रमरः तस्य वृत्तिरिव या वृत्तिः ।
चरेन्माधुकरीं वृत्तिमपिम्लेच्छकुलादपि ।
एकान्नं नैव भोक्तव्यं बृहस्पतिसमो यदि ॥
अत्रिसंहिता-१६२

**माधुपर्किकम्**— मधुपर्कदानकाले पूज्यतया यल्लब्धमिति-
कुल्लूकः ।
आर्त्त्विज्यधनमिति मेधातिथि गोविंदराजौ ।

**माधुर्यम्**— परप्रीतिकरवेशभाषणचेष्टावत्त्वमिति वेमाद्रिः ।
ब्रह्मचर्यं दयाक्षान्तिर्ध्यानं सत्यमकल्कता ।
अहिंसाऽस्तेयमाधुर्ये दमश्चेति यमाः स्मृताः ॥
याज्ञ-३-३१२

**माधूक** – वैदेहकादायोगव्यां जातः मैत्रीयकापरपर्य्यायः
माट इति प्रसिद्ध ।
मैत्रेयकं तु वैदेहो माधूकं सम्प्रसूयते ।
नृन् प्रशंसत्यजस्रं यो घण्टाताडोऽरुणोदये ॥
मनुः १०-३३

**माध्यावर्षम्**—मध्ये वर्षासु भवं माध्यावर्षम् ।
महालये सप्तम्यादिषु त्रिदिनेषु माध्य वर्षाख्यं श्राद्धमिति
श्राद्धमयूखे । एतेन माध्यावर्षं प्रौष्ठपद्या अपरपक्षे ।
हरदत्तस्तु माध्यावर्षमिति पठित्वा ।
तन्मते मघायुक्तं वर्षासु भवमिति ॥

**माध्वी** – मधूकवृक्षपुष्पैः कृता सुरा इति कुल्लूकः ।
मनुः ११-९४

**माध्वीकम्**— मधुकपुष्पसम्भवं मद्यम् ।
मधूकवृक्षस्तु महुल इति प्रसिद्धः
माधूकमैक्षवं सैरंतालं खार्जूरपानसम् मधूत्थं चैव
माध्वीकं मैरेयं नारिकेलजम् इति मिताक्षरायां वृ
जाज्ञवल्क्यः ३-२५३

**मानम्**— (१) सेर्ष्यं आत्मना अकृष्टज्ञानं माननिति
नरसिंहवाजपेयी नित्याचारप्रदीपे २-४६६
(२) पूजा इति गोविन्दस्वामी ।
अग्निरिव कक्षं दहति ब्रह्मपृष्टमनादृतम् ।
तस्माद्वैशक्यं न ब्रूयाद् ब्रह्ममानमकुर्वताम
इति बोधा-१-२-१६
(३) परिमाणम् ।
माननरक्षते धान्यमश्वान् रक्षत्यनुक्रम इति
विदुरनीतौ ।
(४) धान्यादि परिमापकपात्र द्रोणप्रस्थादिमानोन्माने ।

रक्षितेस्याताम वसिष्ठ: १६-१३ मानं प्रस्थ द्रोणादि इति विज्ञानेश्वरः ।

(५) मानपात्रविशेषश्च यत् माण इत्युच्यते उत्कलेषु ।

(६) धिष्ण्यम् वेदिका इति हरदत्तः श्राद्धे ।

मानं च कुर्यात् प्रतिच्छन्नमित्यापस्तम्बः ॥
२-८-१८-१४

(७) मीयते अनेनेति मानं कालः ।

मानग्निहोत्रमुतमानमौनं मानेनाधीतमुतमानयज्ञः ।
एतानि चत्वार्य्यभयंकराणि भयं प्रयच्छन्त्य-
यथाकृतानि इति महाभा, उद् ३३-७३

उपलब्धमहाभारतपुस्तके पादयोः वैपरीत्येनपाठः दृश्यते ।

स्व स्व काले कृतान्येतानि अभयं कराणि इति राजनीतौ मित्रमिश्रः । ४८४

**मानः**—(१) कदल्यां ब्राह्मणीं दाडिमे रक्तदंतिकां धान्येलक्ष्मी हरिद्रायां दुर्गा माने चामुण्डान् इत्यादिनिर्णयसिंधौ द्वितीयपरिच्छेदे ।

तत्र टिप्पण्यां मान इति वंगदेशे मानमाम्ना प्रसिद्धः कन्द इति उत्कलेषु तु बृहत्पत्रः कन्दविशेषो माणसारु नाम्ना व्यपदिश्यते ।

मानस्य पत्रप्रधान्यं च यस्य पत्रे वसेद् देवी मानवृक्ष शचीप्रिय इति प्रार्थना वाक्यादुपलभ्यते अत एवायं मान इति ज्ञायते ॥

(२) आत्माभिमानिता ।

मोहो धर्मविमूढत्वं मानस्त्वात्मभिमानिता इति व्यासः प्रायश्चित्तविवेके-२०

**मानकूटः**— कूटमानव्यवहारी ।

**मानकृत्**— धान्यभूम्यादिमानव्यवसायेन यो जीवति इति हेमाद्रिः ।

दुष्टस्तुदारकाचार्यो मानकृत्तैलिकस्तथा इति तत्र यमः ।

**मानमौनम्**— समयोचितमौनव्रतम् ।

चत्वारिकर्माण्यभयंकराणि भयंप्रच्छन्त्य यथा कृतानि ।
मानाग्निहोत्रमुतमानमौनं मानेनाधीतमुतमान
यज्ञः महाभा, उद् प्रजा ३३-७३

**मानयज्ञः**— यज्ञकाले विहितो यज्ञः ।

उदाहरणं तु मानमौनशब्दे मृग्यम् महाभा,
उद् ३३-७३

**मानवाकः**— नारिकेलफलम् ।

खर्जूरान् पनसांश्चैव मानवाकपरूषकान् ।
इति नित्याचारप्रदीपोद्धृते वाराहे ॥ ६७२

**मानव्यः**— आग्निरुक्येपुरोहितइत्यारभ्याध्याय ।
परिसमाप्तेमानव्य ऋच एकोनषष्टिर्मनुना ॥
दृष्टा इति हरदत्तः गौत १-५-२८

**मानसपापम्**— परद्रव्येष्वभिध्यानं मनसानिष्टचिंतनम् ॥
मनुः १२-५

**मानसस्नानम्**— विष्णुचिंता ।

मानसं विष्णुचिंतनम् इति हेमाद्रौ

योगिय ज्ञवल्क्यः ।

मानाग्निहोत्रम्— यथाकालकृतः अग्निहोत्रहोमः

महाभा, उद् ३३-७३

उदाहरणं मानमौनशब्दे द्रष्टव्यम् ।

मानाधीतम्— यथाकालाध्ययनम् महाभा, द् ३३-७३

मानाग्निहोत्रमुतमानमौनं मानेनाधीत मुतमान यज्ञः ।

एतानि चत्वार्य्यभयं कराणि भयं प्रयच्छन्त्यायथा-

कृतानि । महाभा, उद्-३३-७३

मानिका— अष्टपलानि । अष्टपलं शरावश्च तस्यापर्यायः ।

(खारीं पश्यन्तु)

मानी— परिमाणविशेषः । द्रोणचतुष्टया इति स्मृतिचन्द्रि-

कायाम् कुडवश्च तथा प्रस्थ आढको द्रोण एव च ।

मानी खारी च विज्ञेया. संख्यायाश्चतुरुत्तराः ॥ इति

मानुषविवाहः— पणित्वाधनक्रीतां स मानुषः इति

वसिष्ठः १-३५

अयं चासुर इति मन्वादिभिरुक्तः मनुः ३-३१

मानुषतीर्थम्— अंगुल्यग्रेषु मानुषम् वसिष्ठः ३-६६

एतत्, देवतीर्थमिति मनुयाज्ञवल्क्यौ ॥ मनुः २-५९

याज्ञ १-१९

मानुषाहुतिः— प्राणाग्निहोत्रम् प्राणाय स्वाहेत्यादि ।

अहुता वा एतस्य मानुष्या इति भवति य ।

औपवसथिकं नाश्नाति गोभिलः १-६-१

मान्धालः— वागगुद इति लक्ष्मीधरः स च वादुरा इति

प्रसिद्धः रात्रिचरः पक्षिविशेष ।

मायकः— धान्यादिमानकर्त्ता ।

तुलामानान्तरमर्घवर्णान्तरं वा धरकस्य ।

मायकस्य वा पण्यमूल्यादष्टभागं हस्तदोषेणाचरतो

द्विशतो दण्डः कौट ४-२-२०

मायापुरी— हरिद्वारम् ।

केचिदाहुर्हरिद्वारं मोक्षद्वारं जगुः परे ।

गङ्गाद्वारं च केप्याहुः केचिन्मायापुरी पुने ॥

इति वैजयन्त्युद्धृते स्कान्दे ।

मारिषः— जं बशाकसंज्ञकः तण्डुलीयक सदृशस्तदपेक्षया-

स्थूलतरः शाकविशेषः श्राद्धवर्जं हेमाद्रिः ।

श्राद्ध-५५९

मारिषं नालिका चैव रक्ता या च कलम्बिक तत्र

असुरान्नामिदं सर्वं पितृणां नोपतिष्ठति ॥ इति तत्र

शाट्यायनः ।

मारिषं मध्यदेशे मरुसा इति महाराष्ट्रेषु शजगिरा

इति च प्रसिद्धमिति निर्णयसिन्धौ ॥

मारुकः— मरणशीलः यास्नाति तस्या अप्सु मारुको

तैत्ति.संहिता ।

मार्गः— (१) मार्गशीर्षमासः ।

एकभक्तेन यो देवि मासं मार्गं क्षिपेन्नरः ।

इति कालसारोद्धृते स्कान्दे ।

(२) पन्था मार्गो दशकरः प्रोक्तो ग्रामेषु नगरेषु च इति शुकनीतौ ॥ १-२६२ विशेषो राजमार्गशब्दे द्रष्टव्यः

**मार्गक्षेत्रम्**— मार्गसमीपस्थं क्षेत्रम् ।

मार्गक्षेत्रेभ्यो विसर्गस्तथापरिवर्त्तनम् वशिष्ठः १६-११

**मार्गपालः**— मार्गरक्षकः ।

**मार्गपालीदिवसः**— मार्गशिरकृष्णप्रतिपत् ।

ततोपराह्णसमये पूर्वस्यां दिशि भारत ।
मार्गपालीं प्रबध्नीयात् तुंगस्तम्बेऽथपादपे ।। इति

गोभिलभाष्ये ३-६-१५

**मार्गवः**—निषादादायोगव्याजातो कैवर्त्तापरपर्यायः ।

निषादो मार्गवं सूते दासं नौकर्मजीविनम् ।
कैवर्त्तमिति यं प्राहुरार्यावर्त्तनिवासिनः ॥

मनुः १०-३४

**मार्जनम्**— (१) मार्जन्या पांसुतृणादीनां प्रोत्सारणं मार्जनमिति विज्ञानेश्वरः गृहं मार्जनलेपनात्

याज्ञ १-१८८

(२) मन्त्रैःशिरः प्रभृतिषु जलसेकः ।

आपोहिष्ठेतीति सृभिर्मार्जनं तु ततश्चरेत् ।
भूमौ शिरसि चाकारो आकारो भुवि मस्तके ॥
मस्तके च तथाकारो भूमौ च नवधा क्षिपेत् ।
भूमिशब्देन चरणावाकाशो हृदयं स्मृतम् ॥
शिरस्येव शिरःशब्दो मार्जनज्ञैरुद हृतः ।
वारुणादपि चाग्नेयाद्वायव्यादपि चैन्द्रतः ॥
मन्त्रस्नानादपि परंब्रह्मस्नानमिदं स्मृतम् ।

मार्जनं तु कुशैः तदभावे देवतीर्थेन मार्जनं कुर्यात् ॥ मार्जनार्चनबलिकर्मभोजनानि देवतीर्थेन कुर्यादिति हारीतवचनात् वीरमित्रोदय आह्निक २०१

**मार्जनी**— सम्मार्जनी ।

प्रयोगो मार्जनीरेणुशब्दे द्रष्टव्यः पराशरः ७४

**मार्जनीरेणु**— मार्जनीचालनावसरे प्रक्षिप्ता उत्क्षिप्ता विक्षिप्ता च रेणुः ।

शूर्पवातं नखाग्राम्बु स्नानवस्त्रं पदोदकम् ।
मार्जनीरेणुकेशाम्बु हन्ति पुण्यं दिवाकृतम् ॥

इति अत्रिः

**मार्जारः**— दाम्भिकः ।

दंभार्थंजपते नित्यं तप्य ते च तपस्तथा ।
न परत्रार्थमित्युक्तं स मार्जारः प्रकीर्त्तितः ॥
इति स्मृति मुक्ताफले यमः ।

**मार्जारलिंगी**— विडालव्रती तल्लक्षणम् मनुः ४-१९५

येवकव्रतिनो विप्रा ये च मार्जारलिङ्गिनः ।
ते पतन्त्यन्धतामिस्रे तेन पापेन कर्मणा ॥

मनुः ४-१९७

**मार्जालीयः** – (१) सौमिकवेदेर्दक्षिणभागेऽवस्थित-स्थानविशेषः ।

सर्वेष्वेव सोमभक्ष्येषु आदिभरेव मार्जालीये प्राक्षालनम्

बोधा १-५-११

महावेद्या दक्षिणतो निर्मितं गृहं मार्जालीय इति श्रौतपदार्थनिर्वचने ।

(२) यज्ञपात्रविशेषः ।

मार्जालीयाद्भिः प्रक्षालनं चमसानामुच्छिष्टलिप्तानामिति हरदत्तः गौत १-१-४८

माद्वीकम्—मृद्वीकाभवं मद्यम् मृद्वीका द्राक्षा ।

मार्ष—हे भो इत्यादिशब्दवत् सम्बोधनसूचकं पदम् । नैव भो इत्याह न मार्षेति ॥ काठकगृ २-१२-६

मार्ष्टिः—तैलमल्पं यदगेषु न च स्याद्वाहुतर्पणम् । सा मार्ष्टिः पृथगभ्यंगो मस्तकादौ प्रकीर्त्तितः ॥ इति प्रायश्चितविवेके-४३६

मालम्—उन्नताभूमिः । पशुप्रचरणार्थं त्रिवीतमालवतेनोपजीवेयुः कौट-३-१०-२१

मालती—शुक्लवर्णसुगन्ध वर्षर्तुपुष्पविशेषः । जातीति लक्ष्मीधरः नियतकालकाण्डे ॥

मालाकारः=जातिविशेषः । कंसकारशब्दं पश्यन्तु ।

माली—मालावान् । आपस्त १-२-८-२

माषः—(१) शस्यविशेषः माषकौ द्रवगौरांश्च सर्वालाभेऽपि वर्जयेत् ।

(२) पञ्चकृष्णलपरिमितस्वर्णादिः पणस्याविंशतितमोभागः दंडविवेके एवं च सौवर्णिको माषः पञ्चरत्तिकः राजतोद्विरत्तिकः ।

तथा पुराणस्य विंशतिभागो माषः । पणस्य विंशतितमो भागः तथा कार्षापणस्य चतुर्थो भागः तथा कार्षापणपादः चतुः काकिनीकः इति पृ २८-२९

विवादरत्नाकरे तु माषो विंशतिभागस्तु पलस्य परिकीर्तितः इति वृद्धितरंगे ॥

षोड्शपणाः पुराणं विंशतिमाषाः फलम् ॥ पलं कर्षचतुष्टयम् वर्षे तु सुवर्णमानपरिमिति ग्रन्थभेदेनमानभेदो बहुधा ।

मासः—मास्येते परिमीयते येन चन्द्रार्द्धं संक्षयौ ।
सूर्यराशिगतिर्यत्र मास्यतेऽह्नां च यत्र हि ॥ २०
मास्यते त्रिंशतः संख्या तथाह्नां मम्रमोद्यताम् ।
मासः स उच्यते चान्द्रः सौरसावननाक्षत्रजः ॥
इति सिद्धान्तदर्पणे-२२-२१

दर्शावधि चान्द्रमुशन्ति मासं सौरं तथा भास्कर राशि भोगात् ॥
त्रिंशद्दिनं सावनसंज्ञमाहुर्नाक्षत्रमिन्दोर्भगणभ्रमाच्च ॥
इति रत्नमालायामितिवर्षक्रियाकौमुद्याम्-२५

मासिकान्नम्—मासिकश्राद्धान्नम् ।

माथ्यालः—वाग्वद इति गौतमवृत्तो हरदत्तः ।
मांधालस्यायं पाठान्तरम् ।

माहित्रम्—महित्र णामवोऽस्तु इत्येतत्सूक्तम् ।
माहित्रं यन्महि त्रीणामिति बृ, देवता ८-८६
वसिष्ठः २६-५

माहिषः—व्यभिचारिणीभार्यादोषमर्षकः ।

महिषीत्युच्यते नारी या चैव व्यभिचारिणी ।
तद्दोषं क्षमते यस्तु सर्वे माहिष उच्यते ॥
अंगिरस्मृतिः १२५

**माहिषिकः**— (१) यः महिषैर्जीवतीति शूलपाणिः ।
अजाविके माहिषिके कूटे च वृषलीपतौ ।
एतेषां भोजनं कृत्वा द्वादशाहं पयः पिबेदिति ॥
प्रायश्चित्तविवेके यमः
(२) व्यभिचारिण्याः भर्त्ता ।
महिषीत्युच्यते नारी या च स्याद्व्यभिचारिणी ।
तां दृष्ट्वा कामयेद् यस्तु सर्वे माहिषिकः स्मृतः ॥
स्कन्द काशी-४०-९२

**माहिषेयः**— व्यभिचारिण्यां भार्य्यां भगेनार्जति या धनम् ।
तस्यां यो जायते पुत्रो माहिषेयः सुत स्मृतः ॥
इति लघ्वाश्वलायनः २१-४

**माहिष्यः**—वैश्यायां क्षत्रियाज्जातो माहिष्यस्त्वनुलोमतः ।
अष्टाधिकारनिरतश्चतुः षष्ट्यंगकोविदः ।
व्रतबंधादिकास्तस्य क्रियाः स्युः सकलाविराः ।
ज्योतिषं शाकुनं शास्त्रं स्वरशास्त्रं च जीविका ।

**माहेयम्**— मृण्मयं घटादि ।

**मितिः**—युद्धम् । एककालं यदा हन्याद् गपन्नरसूत्तम ।
निमित्तमेकमाश्रित्य होतिनैकेनवामितौ ।
इति प्रायश्चित्तविवेकोद्धृतभविष्ये प्राय-८२

**मित्रम्**— मनोवाक्कायैरनुकूलैकप्रवृत्तिर्मित्रमिति हेमाद्रिः परिशिष्ट-४६१

**मित्रविन्दा**— इष्टिविशेषः मिताक्षरा ३-२८९
परिवेष्ट्याविशुद्ध्यन्ति सर्वे घोराः प्रतिग्रहाः ।
ऐन्दवेन मृगारेष्ट्या कदाचिन्मित्रविन्दया ॥ इति षट्त्रिंशन्मतम् ॥

**मित्रा**— बहूनां पुरुषाणां मित्रभूता कन्या ।
दत्तां गुप्तां द्योतामृषभां शरभां विनतां विकटां मुण्डां मण्डूषिकां सांकारिकां रातां पालीं मित्रां स्वनुजां वर्षकारीं च वर्जयेत् ॥ आप, गृह्यम् १-२-१२

**मिथुनम्**— (१) द्विदलः इति गदाधरराजगुरुः ।
कलायाश्चणकामुद्गा मिथुनानां हवींषि च ।
एतेभ्योन्या निनाश्नीयात् मिथुनानामनापदि ॥ इति कालसोद्धृते मात्स्ये ।
(१) एको भिक्षुर्यथोक्तस्तु द्वौ चैव मिथुनं स्मृतम् ।
त्रयो ग्रामस्तथा ख्यात ऊर्ध्वं तु नगरायते । दक्षः-७-३१

**मिथुया**— मिथ्या । तस्माद्दुहितृमतेऽधिरथं शतं देयम् ।
न तन्मिथुया कुर्यादित्यापस्तम्बधृतश्रुतिः ।

**मिथ्या**— (१) असत्यम् ।
(२)उत्तरविशेषश्च । यथा रूप्यकशतमनेन गृहीतमित्यभियोगेन गृहीतमित्युत्तरम् ।
सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा ॥
पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधम् ॥
इति मिताक्षरायां कात्यायनः मिता २-७

मिथ्याधीतम् — नियमातिक्रमेणाधीतमिति हरदत्तः

आप १-९-२७-१०

मीढम् (१) मूत्रितम् । अमरः ३-१-९६

(२) जलसेचनम् ।

सुप्रतिविहितप्रणालीपरिवाह मीढविधानमिति

रुद्रद मशिलालेखे ।

मीमांसा — वेदवाक्यविचारः मिताक्षरा-१-३

मुकुन्दकः— फलविशेषः । कुन्दुरुः बिम्बफलमिति

यावदितिकेशव वैजयन्ति विष्णुः ७९-१७

मुकुरः— } मल्लिपुष्पम् ।

मुकुरकः — } विचिकिल इति पूजाप्रकाशे मित्रमिश्रः ।

कदलीकदम्बवृक्षैश्च मुकुरैरावृतं तथा ।

(आरामं) इति भविष्ये ।

माघे तु कुन्दकुसुमैर्मुकुरेण च फाल्गुने ॥

शतपत्रैस्तथा चैत्रे यः कुर्य्याद् ग्रहसत्तम ।

इति भविष्ये इति कृत्य रत्नाकरे-१४६

नानाविधैर्मुकुरकैः क्षिप्रं रोगात् प्रमुच्यते ।

इति मुकुरे मल्लिका इति तत्र चण्डेश्वरः १४७

मुक्तकम्— (१) मुखोद्गार इति संस्कारमयूखे ।

न भुक्तमात्रे नाजीर्णे न वमित्वा न मुक्तके ।

प्रकाशितमनुस्मृतौ तु शुक्तक इति पाठः ॥

मनुः ४-२१

(२) लेखरहितमृणम् ।

लिखितं मुक्तकं वापि यत्तु प्रतिश्रुतम् ।

परपूर्वास्त्रियैतत्तु विद्यात् कामकृतम् ऋणम् ॥

इति कात्यायनः विवादरत्नाकरे-५८

मुक्तकं लेखरहितम् इति स्मृतिचन्द्रिकायाम् ॥

व्यवहार-३९६

मुक्तभाव्यः—मुक्तभाव्याः आगामिनृपतिभिरग्राह्यकराः ।

इति स्मृतिचन्द्रिका ।

त्यक्तराजदेया इति विवादरत्नाकरे ।

मुक्तमुत्सृष्टं भाव्यं भूम्यादिफलं यासां ताः इत्यर्थः ।

अनावेदयकरास्तेभ्यः प्रदद्याद्गृहभूमयः ॥

मुक्तभोव्याश्च नृपतिर्लेखयित्वा सुशासने इत्यपरार्के

तेभ्यः वेदविदेभ्यः ।

मुक्ताः करादिनिर्मुक्ताः भव्याः परिपालनीयाः इति

राजनीतिप्रकाशे-२२५

अनाच्छेद्यकरा इति विवादरत्नाकरपाठः ।

भाव्यं राज्ञ आयविशेष इति व्यवहारकल्पतरौ-४२१

मुखेभगः— नपुंसकविशेषः । यस्य मुखे एव

पुंस्त्वशक्तिर्न योनौ स मुखेभग इति मित्रमिश्राः ॥

संस्कारप्रकाशः-७५८

मुंजः— दर्भविशेषः इति हरदत्तः गौत १-१-१५

मुंजः शरस्तन्मयीमौंजीमेखला ब्राह्मणस्येति गदाधरः

पारस्करः २-५-२१

मुञ्जस्तु मुञ्जो बाणाख्यो युग्मस्तेजनकः शर इति

अमरव्याख्याने ।

अमरकोषे च गुन्द्रस्तेजनकः शर इति २-४-१६२

**मुंजातम्** — } गौडदेशप्रसिद्धं फलमिति हेमाद्रिः।
**मुञ्जातकम्**— } मुञ्जातः (पुं) स्वनामप्रसिद्धं उत्तरापथिककन्दविशेषे। ह्रस्वमुञ्जतृणे इति वैद्यकशब्दसिन्धौ ॥

मुञ्जातकः पुष्पशाकभेद इति शब्दकल्पद्रुमे।

मुञ्जातकैः पद्मफलैर्भक्ष्यभोज्यैश्च संस्कृतैः
इति निर्णयसिन्धौ श्राद्धदेये मार्कण्डेयः ॥

**मुण्डः**— खण्डितकेशः।

मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः ॥
मनुः-२-२१६

**मुण्डकम्** — मुंडा इति भाषायाम्।

सुसमायां पृथिव्यां च दिग्भागे पूर्वदक्षिणे।
यज्ञियस्य च वृक्षस्य स्थाप्यं स्यान्मुण्डकद्वयम् ॥
मुण्डकोपरिकाष्ठं च दृढं कुर्याद्विचक्षणः।
चतुर्हस्तं तुलाकाष्ठमव्रणं कारयेत् स्थिरम् ॥
स्कन्दपुराणकौमारिकाखण्डे अ ४३

**मुण्डनम्**— (१) सकलकेशकर्त्तनम् तदुपलक्षिततया।
(२) उपनयनम्, अपि मुण्डनम् ॥

**मुण्डपृष्ठम्**— गयायां वर्त्तमानः क्षेत्रविशेषः।

एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते।
मुण्डपृष्ठनगाद्याश्च सारात्सारमथान्तरम् ॥
अग्नि पु ११५-२६

**मुण्डा** — केशरहिता कन्या।

मुण्डा अपनीतकेशा इति आपस्तम्बगृह्यसूत्रव्याख्याने। १-३-१२ मित्रशवेदा द्रष्टव्यः ॥

**मुद्गम्** — पिधानम्।

मुद्गं पिधानम् मुद्गेन सह वर्त्तते इति समुद्गं करण्डकमिति मिताक्षरा।

समुद्गपरिवर्त्तं च सारभाण्डं च कृत्रिमम्।
आधानं विक्रयं वापि नयतो दण्डकल्पना ॥
याज्ञ २-२४७

**मुद्गकः**— जलकाक इति आह्निके मित्रमिश्रः।

सः अभक्ष्यवर्गे देवलेन प्रदर्शितः।

चकोरः कोकिलो रज्जुदालाकश्चाषमुद्गकौ ॥
कंकः सावरणो भासः शतपत्रप्लवंगमाः। इत्यादि

**मुद्गान्नम्**— तण्डुलस्य त्रिभागैकमुद्गखण्डेन मिश्रि

पक्वं यदेतद्मुद्गान्नमाख्यातं च चतुर्भुज।
विनाशुद्धान्नमन्येषां प्रदद्याल्लवणं बुधः।
कसरगुडौदनानन्तरमुदधान्यस्य लक्षणमुक्तम् ॥
आचारेन्दु १२८

**मुद्गरः**— मुशलतुल्यो दंडः इति नीलकण्ठः।
महाभा उद् १५५-

मुद्गरः सार्द्धहस्ताढ्यो दण्डकारः सुमुष्टियुक्।
तीक्ष्णलोहमयैः कर्णैस्तीक्ष्णधारैस्तथाष्टभिः।
उपरिष्टात् कृतः शीर्षः पद्मकोरकसन्निभः।

मध्ये वलयचिह्नाढ्यो गुरुर्वीर्य्यानुरूपतः ॥

वीरसर्वस्वम्-१७६

मुद्रा—तर्जन्यंगुष्ठसं योगविशेष इति लक्ष्मीधरः

नियत-१३२

हेमाद्रिश्च मुक्तहस्तं तु दातव्यं न मुद्रां तत्र दर्शयेत्

इति मरीचिः ।

(२) असाधारणं चिह्नम् ।

पट्टे वा ताम्रपट्टे वा समुद्रोपरिचिह्नितम् ।

अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ॥

याज्ञ-१-३१९

मुद्रिता—व्यवहारनिर्णयार्थं राज्ञा स्थापिता अध्यक्ष-सहिता सभा ।

प्रतिष्ठिता शब्दोद्रष्टव्यः ।

मुनिः—(१) ब्राह्मणविशेषः ।

मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च तपःपरः ।

अनूचानस्तता भ्रूणऋषिकल्पऋषिर्मुनिः ॥

निवृत्तः सर्वतत्त्वज्ञः कामक्रोधविवर्जितः ।

ध्यानस्थो निष्क्रियो दाता त्रिशुक्लश्च स्मृतो मुनिरिति देवलः ॥

स्कान्दे तु निष्क्रियोदान्तस्तुल्यमृत्कांचनो मुनिरिति पाठः ।

तपःपर इत्यत्र ततः पर इति पाठश्च ॥ स्कन्द, माहे, २-५-११६

अत्र निष्क्रियः अर्थार्जनादिक्रियारहित इति हेमाद्रिः ।

वेदाः प्रमाणं स्मृतयः प्रमाणं नैको मुनिर्यस्य वचः प्रमाणम् ।

धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥

इति कुलोचितधर्मशिक्षायाम् -२

(२) मौनवान् ।

अगारादभिनिष्क्रान्तः पवित्रोपचितो मनुः ।

समुपोढेषु कामेषु निरपेक्षः परिव्रजेत् ॥ मनुः ६-४१

(३) मननशीलः मनुः-६-४३

अनग्निनिकेतः स्याद् ग्राममन्नार्थमाश्रयेत् ।

उपेयकोऽसंकुसुको मुनिभाव समाहितः ॥ इति

मुनिद्रुमः—अगस्तिवृक्षः ।

मुनिपुष्पम्—अगस्तिपुष्पम् ।

बिल्वपत्रं च माध्यं च तमालमलकीदले ।

कह्लारं तुलसीं चैव पद्मं च मुनिपुष्पकम् ॥

एतदपर्य्युषितपुष्पप्रकरणे मात्स्ये निर्णयसिन्धौ-२५४

मुनिव्रतम्—मौनम् उभयं मुनिव्रतः स्यात ।

काठकगृ १-४-१४

उभयमहोरात्रं वाक्संयमं कुर्य्यात् मुनिनां व्रतमेतत इति देवपालः ।

मुमूर्षुश्रावितः—साक्षिविशेषः ।

यत्र साक्षी दिशं गच्छन् मुमूर्षुर्वा यथाश्रुतम ।

अन्यं संश्रवयेत्तं तु विद्यादुत्तरसाक्षिणम् ॥

मुरजः—वाद्यविशेषः । मुरजाः क्षुद्रमर्दला इति नीलकण्ठः

महाभ, भीष्मवधप-४४-४

**मुर्मुरः**— गुडमरिचैलामिश्रो गोधूमस्थलचूर्णविकारो मुर्मुर इति हेमाद्रिः परि-६०१ श्राद्धप्रकाशे तु मुर्मुरु इति पाठः।

उत्कलेषु प्रायेणास्य संज्ञा मगजलड्डु इति।

**मुमुरः**— गुडमरिचैलामिश्रो गोधूमस्तकचूर्णविकाट इति

श्राद्धप्रकाशे-५५

**मुषा**— ताम्रद्यावर्त्तनी कोई इति प्रसिद्धा मुषत्वावर्त्तनी- मुषी इति शब्दार्णवे इति व्याख्यासुधायाम्।

**मुषिता**— नग्ना इति देवपालादयः न मुषितां प्रेक्षेत

काठकगृ-१-१-१८

**मष्टिः**— (१) हस्तस्यांगुलिविच्छेदः केशादिग्रहणोस्त्रिया।

दाहये त्तप्तवैलेन हस्तमुष्ट्या च ताडनम्॥ इति वृद्धहारीतः

(२) मुष्टिः पलस्य नामान्तरं खारीशब्दे द्रष्टव्यम्।

**मुष्टिकः**— (१) मल्लः।

कुलत्वमानिनः शावाव्याधामुष्टिकलंघनाः।

कुकर्मसंश्रितास्त्वेते कुपथाः परिकीर्त्तिताः इति

वायुपुराणवचनम् कल्पतरौ श्राद्ध-१४०

(२) म्लेच्छः इति कल्पतरौ शुद्धिकाण्डे-१२७

श्वपचमुष्टिकप्रेतहारकशवानि संस्पृश्य देवीरापइत्ये- ताभिरन्तर्जले स्नातः पूतो भवतीतिहारीतः॥

**मुष्टिका**— कर्मारोपकरणविशेषः (हातुडि इति प्रसिद्धा)

कौटल्यः ४-४

**मुसलम्**— (१) उलूखलार्द्ध त्रिगुणायामं खदिरकाष्ठ- निर्मितं कंडनोपयोगिमुसलमिति श्रौतपदार्थनिर्वचने वरुणमेवयथेच्छमानमिति नरसिंहवाजपेयी।

तत्तु धान्यादियवहननसाधनम्।

विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने॥

वृत्ते शरावसंपाते भिक्षां नित्यं यतिश्चरेत्॥

मनुः-६-५६

खादिरो मुसलः कार्य्यः पालाशं स्यादुलूखलम्।

यद् वोभौ वारणौ कार्य्यौ इति परिभाषाप्रकाशे-

(२) आयुधविशेषः।

गदाभिर्मुसलैश्चैव भिन्दिपालैः सतोमरैः।

आयसैः परिघेश्चैव निस्त्रिंशैर्विमलैः शितैः॥

इति महाभा, भीष्म, ४६-१४

मुसललक्षणं यथा वीरसर्वस्वे-१८०

मुसलं त क्ष्णशिखरं तदग्रात् क्रमतः पृथु।

मूले मुष्टियुगं लौहं दृढ हस्ते त्रयान्वितम्।

सार्द्धहस्तद्वयमितं केचित् कुर्वन्तियेधिनः॥ इति

**मुस्तम्**— नलिकोशीरमुस्तं च ग्रन्थिपर्णी च सुन्दरी

पुनरप्येवमादीनि गन्धयोग्यानि चक्षते॥

ब्रह्मपु, २२०-१६६

**मुहुं**— मुहुः। अत्रानुस्वारोदीर्घो छांदसो इति हरदत्तः

आप १-२-८-

मुहूंश्चाचार्यकुलं दर्शनार्थी गच्छेत॥

**मुहूर्त्तः**— दंडद्वयात्मकः कालः।

स च अहोरात्रस्य त्रिंशत्तमोभागः।

दिवसस्य क्षये वृद्धौ च तदाश्रितमुहूर्त्तानां ।
क्षयोवृद्धिर्वा विज्ञेयः तथा रात्र्या अपि ।
उत्तरां तु यदा काष्ठां क्रमादाक्रमते रविः ।
तदा तथा भवेद् वृद्धिर्दिवसस्य महाभुज ॥ ५
दिवसस्य यथा राम वृद्धिं समधिगच्छति ।
तदाश्रितमुहूर्त्तानां ज्ञेया वृद्धस्तदा तथा ॥
दक्षिणां च यदा काष्ठां क्रमादाक्रमते रविः ।
दिवसस्य तदा हानिर्ज्ञातव्या नित्यमेव तु ॥ ७
क्षीयन्ते दिनहानौ तु तन्मुहुर्त्तास्तथैव च ।
रात्र्याश्रिताश्च वर्द्धन्ते रात्रिवृद्धौ तथा तथा ॥

विष्णुधर्मोत्तरपु १-७३-८

निमेषादशचाष्टौ च काष्ठा त्रिंशत्तु ताः कलाः ।
त्रिंशत्कलामुहूर्त्तः स्यादहोरात्रं तु तावतः ॥

मनुः १-६४

दिवामुहूर्त्ताः ।
रौद्रः श्वेतश्च मैत्रश्च तथा सारभटःस्मृतः ।
सावित्री वैश्वदेवश्च गान्धर्वः कुतपस्तथा ।
रौहिणस्तिलकश्चैव विभवो निर्ऋतस्तथा ।
शम्बरीविजयश्चैव भेदाः पञ्चदश स्मृताः ॥
शंखेन—

रौद्रश्चैत्रश्च मैत्रश्च तथा शालकटः स्मृतः ।
सावित्रश्च जयन्तश्च गांधर्वः कुतपस्तथा ॥
रौहिणश्च विरिंचश्च विजयो नैर्ऋतस्तथा ।
माहेन्द्रो वरुणश्चैव भेदाः पञ्चदशस्मृताः ॥
रात्रिमुहुर्त्ताः—

शंकरश्चाजपादश्च तथाहिर्बुध्न्यमैत्रकौ ।
आश्विनोयाम्यवाह्नेयौ वैधात्रश्चन्द्र एव च ॥
आदितेयोऽथ जैवश्च वैष्णवः सौर एव च ।
ब्राह्मो नभस्वतश्चैव मुहूर्त्ताः क्रमशो निशि ॥
इति आह्निकप्रकाशे
मुहूर्त्तस्य पञ्चदशभागः सूक्ष्ममुहूर्त्त उच्यते ।
इदानीं तदानीमेतर्हि क्षिप्रम्. अजिरं आशुर्निमेषः ।
कणोद्रवन् अतिद्रवन्त्वरंस्त्वरमाण आशुरोयान् ।
जवः इति मन्त्रकाण्डे इति कालमाधवे ॥
सर्वत्रदिवामुहुर्त्तानां चतुर्दशसंख्यत्वेपि पञ्चदश इति कथं लिखितमिति न विद्महे पुरुषार्थचिन्तामणौ तु शङ्खवचने प्रथमश्लोकस्य द्वितीयपादे सारभटः स्मृतः इति द्वितीयश्लोकस्य द्वितीयपादे स्वथास्थाने स्तपा इति पाठो वर्त्तने मन्ये स एव पाठः साधीयान् ॥ पुरुषार्थचिन्ता पृ ३४

**मूकः**— वर्णानुच्चारको मूक इति दायभागे जीमूतवाहनः ।
वेदग्रहणासमर्थो जड़ इति तयोर्भेदः ॥

**मूढकटः**— समंजसमुलाग्रतृणनिर्मिताकारो मूढकटः इति देवपालः काठकगृ ४-५-६
तत्र मृतकट इति पाठभेदः तत्राथस्तु मृते ग्रथिते कटे इति ।

**मूढगर्भः**— अन्तर्मृतगर्भ इति शूलपाणिः ।
यंत्रणे गोचिकित्सार्थे मूढगर्भविमोचने ।
यत्ने कृते विपत्तिः स्यान्न स पापेन लिप्यते ।
इति मिताक्षरायां सम्वर्त्तः ३-२६४

मुद्रितसम्वर्तस्मृतौ तु यत्नेकृते स्थाने यदि तत्र इति पाठ दृश्यते परन्तुमर्वनिबन्धकारगृहीतत्वात् । पूर्वोक्तपाठः साधीयान् सम्वर्तस्मृतिः १३७

**मृढस्वस्तरः**— पलालादिसंहतिः ।

मृढस्वस्तरे चासंस्पृशनन्यानप्रयतान प्रयतो मन्येत आपस्त १-५-१५-१३

यत्रातिश्लक्ष्णतयापलादेर्मूलाग्रविभागो न ज्ञायते । स मृढः । मृढश्चासौस्वस्तरश्चेति मृढस्वस्तरः तस्मिन् ॥ पतितादिषु अप्रयतेषु आसीनेषु यदि कश्चित् प्रयत उपविशेत न च तान् स्पृशेत्तदा स प्रयत इति उज्वलावृत्तिः ।

**मूर्वा**— तृणविशेषः । क्षत्रियस्य तु मौर्वी ज्या

मनुः २-४२

मूर्वामयी ज्या इति कुल्लूकः मुरुरितितृणविशेषः तन्मयी मौर्वी इति गदाधरः पारस्करगृ-२-५-२३

**मूलकर्म**— परहिंसार्थं जपहोमादि कर्म ।

मन्त्रौषधिबलात्किंचित्संभ्रान्ति दर्शयन्ति ये ।
मूलकर्म च कुर्वन्ति निर्वास्यास्ते महीभृजा इति व्यवहारकल्पतरौ बृहस्पतिः ॥

मन्त्रौषधिप्रभृतिभिः वशीकरणमिति कुल्लूकः

मनुः ९-२९०

परहिंसार्थं जपहोमादिक्रिया अभिचारः । वृक्षोत्पाटनादिक्रियामूलकर्म इति तयोर्भेदः ॥

नारीकृत्वा पतिं वश्यं सततं मूलकर्मणा ।
लभतेऽन्ते तु दौर्भाग्यं भूतैर्वा भक्ष्यते ध्रुवम् ।

विष्णुधर्मोत्तरपु-२-३४-१४

मंत्रौषधिबलात् किंचित् सम्भ्रान्ति दर्शयन्ति ये ।
मूलकर्म च कुर्वन्ति निर्वास्यास्ते महीभुजा ॥
इति बृहस्पतिः स्मृतिचन्द्रिकायाम्-७५८

तत्र मूलकर्म वशीक्रियाविशेषः मूलाद्यौषधसाध्य इति देवताभट्टः ॥

मूलीकर्मेति पाठः शुद्धः सर्वत्र तथा दर्शनात् ।

**मूलकर्मक्रिया**— मूलकर्मक्रिया कोषवृद्धिकराणि कृष्यादीनि कर्माणि इति नीलकण्ठः ।

मूलकर्मक्रिया चात्र मायायोगश्च वर्णितः ॥

महाभा, शा ५९-७३

**मूलकषष्ठी** – आरण्यषष्ठी पश्यन्तु ।

**मूलकृच्छ्रः**— यदा बिल्वादिमूलानिक्वथितानिमसंपीयन्ते यदा मूलकृच्छ्रः मिता ३-३१६

उदकसक्तूनां मासाभ्यवहारेणोदककृच्छ्रः ११४
बिसाभ्यवहारेण मूलकृच्छ्रः विष्णुस्मृतिः ४६-१५

**मूलखानकः**— मूलोत्पाटनजीवीति कुल्लूकः ।

व्याधान् शाकुनिकान् गोधान् कैवर्त्तान् मूलखानकान् ॥

मनुः ८-२६०

**मूलमन्त्रः**— प्रणवादिनमोन्तं च चतुर्थ्यन्तं च सत्तम ।
देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्त्तितः ।

नित्याचारप्रदीपे-१-१९०

**मूलिकः**— मूलद्रव्यविक्रेता मूलादिना वशीकर्त्ता ।

मूलद्रव्यविक्रयजीवन इति असहायभाष्ये ॥ ६६

मन्त्रौषधादिभिर्वशीरणकारी मूलं विप्रलंभरस्तत्कारी-
तिकल्पतरुः ।

मूलैवप्रलंभक इति नारदीय मनुभाष्ये ॥

क्रान्त साहसिक शान्त मिथू तान्त्यावसायिनः ।
भिन्नवृत्तासमावृत्तजड़तैलिकमूलिकाः ॥

नारदसहिता २-१६१

**मूल्यम्**— (१) अर्घः ।
(२) शिल्पिष्वयिहिधर्मोऽयं मूल्यादूयच्चाधिकं भवेत्
इति कात्यायनस्मृतिसारोद्धार श्लो-८७०

**मूल्यकर्मकरः**— ये मूल्यग्रहणेन कर्म कुर्वन्ति ते मूल्यकर्मकराः ।

**मूषकला**— मूषिकाविष्ठेति कल्पतरुः नियत-२-७
मूषकस्य पुरीषमिति हरदत्तः मूषकलांगंवा ॥
आप-१-५-५६-१७

**मूषा**— ताम्रदतावर्त्तनीति श्रीमूला कौट-४-४-२० कइ)
मूषायामपिपश्येतान् ध्मायमानानुयमानुगैः ।
पुरुषैः पुरुष व्याघ्ररदाशवमर्षिणः ॥
इति मार्कण्डेये १४-७६

मूषात्वावर्त्तनी सुषी इति शब्दर्णवः ॥

**मृगः**— (१) आरण्यपशुः ।
आरण्यानां च सर्वेषां मृगाणां माहिषं विना ।
मनुः ५-६

मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः ।
अन्वेषणायां याच्ञायां मृगं तु वनितान्तरे ।
इति विश्वमेदिन्यौ ।
मृगे कुरङ्गवात युद्दारिणाजिनयोनयः इत्यमरः २-५-८

(२) आरण्यपशुविशेषः हरिणाख्यः ।

**मृगनेत्राराश्रयः**— मृगनेत्राराश्रयस्तुसूर्येज्येष्ठापरार्द्धगे
इति कालसारे ज्योतिः शास्त्रवचनाम् ।
ज्येष्ठाशेषार्द्धगे सूर्ये मृगनेत्राशारम्भके ।
नवान्नै जनभाद्धं जन्मचंद्रतिथौ न च ॥
इति निर्णयसिंधौ ३-२

**मृगभारम्**— श्रावणिकापुष्यमिति हेमाद्रिः । परि-६८३
कुब्जगं तगरं चैव मृगभारं च केतकेम् ।
प्रकाशितब्रह्मपुराणे तु मृगमारण्ये केतकीमिति पाठः
ब्राह्मे ब्रह्मपु-२२०-१६३

**मृगया**— मृगादिवन्यपशुमारणम् । आखेटकस्य नामान्तरम्
मृगयाक्षो दिवस्वप्नः परिवादः स्त्रियो मदः ।
तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥
मनुः-७-४७

**मृगयुः**— व्याधः मृगदिववजीवोत्यर्थः ।
ययानन्यसृकपातो मृगस्य मृगयुः पदम् ।
नटेतल नुपनेन धर्मस्य नृपतः पदम् ॥
मनुः ८-४४

**मृगवीथी**— श्रवणं च धनिष्ठा च मार्गीशतभिषक् तथा ।
देवी भा, ८-१५

**मृगव्यम्**— आखेटक इति कल्पतरुः ।

क्षत्रियस्तु मृगव्येन विधिना समुपार्जितम्।
इति हारीतशातातपौ मांसमिति भावः ॥

**मृगारः—** क्षापवित्रं सहस्राक्षो मृगारोऽहो मुचौ गणौ।
मृगारो मृगाशया इष्टेर्याज्यानुवाक्या द्वाविंशतिः ऋचः ॥

अग्नेर्मन्व इत्यनुवाकः बौधा ४-७-५

**मृचुकं—** जलजः शाकं इति श्राद्धवर्ज्ये कमलाकरः।
ससुकमिति पाठेखदिरशाकः इति हेमाद्रिः॥
भूस्तृणंसुरसाशिग्रुपालंकीमृचुकं तथा इति तत्र शंखः।
संस्कृति संस्थानप्रकाशितशङ्खस्मृतौ तु मृचुकमिति स्थाने सिन्धुकमिति पाठो दृश्यते ॥
शंखस्मृतिः १४-१६

**मृजा—** (१) शरीरकान्तिः छायेति यावदिति लक्षण-प्रकाशे।
मृजालंकाररहितादर्भसंस्तरशायिनी।
क्षैरेयपावकं स्तोकं कोष्ठशोधनकर्षणम् ॥
इति रजस्वलाप्रकरणे वाग्भटः।
(२) मार्जनम्।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते।
राजनीतिप्रकाशोद्धृतमहाभारते ॥ राजनीति-४८०

**मृतम्—** भिक्षावृत्तिः मृतं तु याचितं भैक्षम्।
मनुः-४-५

**मृतकर्पटम्—** उसरीतन्तु निर्मितं वासः उच्छिष्टं शिवनिर्माल्यं वान्तं च मृतकर्पटम्।

श्राद्धे सप्त पवित्राणि दौहित्रः कुतपस्तिला।
इति हेमाद्रौ श्राद्धकल्पलता च ६५

**मृतान्तरः—** असाक्षिविशेषः।
मृतांतरोऽर्थिनि प्रेते मुमूर्षु श्राविताद्दते।
नारदसंहिता २-१३६

**मृदङ्गः—** मृदंगा मर्दला इति नीलकण्ठः महाभा, भीष्मवधप ४४-४
क्ष्वेडाः किलकिलाशब्दाः क्रकचा गोविषाणिकाः।
भेरीमृदङ्गामुरजा हयकुञ्जरनिःस्वनाः॥
नाडीं तूणवं मृदंगं पणवं सर्वाणि च।
वादित्राणि इत्यादि काठकगृ २-५-२

**मृदुः—** कृतापराधेऽपि सहकः नित्यमहिंस्रो मृदुरित्यादि गौत १-६-७१
मृदुः क्षमावानिति हरदत्तः आपस्त १-२-५-११

**मृदुता—** अकठिनहृदयत्वम्। हेमाद्रिः परि ३६३

**मृदुरः—** मकर इति लक्ष्मीधरः नियतकालकाण्डः-३०८
हरदत्तश्च आपस्त १-६-१७-३६

**मृद्वीका—** द्राक्षा।

**मृष्टम्—** स्वादु सुसंस्कृतम्।
अनीर्षुर्गुप्तदारः स्याच्चोक्षः स्यादघृणी नृपः।
स्त्रियः सेवेतनात्यर्थं मृष्टं भुञ्जीत नाहितम्॥
महाभा, शान्ति-७०-८

शलाकम्— उज्ज्वलपञ्जीरम् ।
दिव्यं मृष्टशलाकं तु सौवर्णं परिमर्द्धि तत् ।
दत्त्वा देवमृषौ दत्त्वा सराष्ट्रोऽभ्यपतद्दिवम् ॥
इति महाभारते कल्पकल्पतरौ दानकाण्डे-२७२

मृष्टिः— अन्नादीनां स्वादुत्वसम्पादनम् इति लक्ष्मीधरः ।
अन्नादेः संस्कारविशेष इति कुल्लूकः ।
मृष्टिम् ऋद्धिनाश गाथया. श्राद्धकर्मसु सम्पदः ॥
मनुः ३-२५५

मेकलाः=अमरकण्टकपर्वतः विन्ध्यपादः ।
उत्कला मेकलाः पौण्ड्राः कलिङ्गान्ध्रश्च संयुगे ।
निषादाश्च त्रिगर्त्ताश्च वाह्लीकाश्च जितावस्त्वया ॥

मेक्षणम्—चटु इति भाषायां प्रसिद्धम् ।
विभीतकादि वर्जं खादिरपालाशादिदारुनिर्मितं ।
प्रादेशप्रमाणं वर्तुलदण्डं स्थूलाग्रं मेक्षाणमिति
मित्रमिश्रः ।
यज्ञीयकाष्ठनिर्मितमरत्निपरिमितम् अग्रभागे
चतुरङ्गुलचतुरस्रफलकयुतं भर्जनपात्र्यां समुप्तस्य
पिष्टस्य मदन्तीभिरद्भिः सम्मेलनवरणादौ करणतया
विहितं फलकाविशिष्टभागदण्डयुतं मेक्षणपदवाच्य
मितिश्रौतपदार्थनिर्वचने ।
इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत् ।
वृत्तं च त्वक्सहितं प्रादेशमात्रं क्रियाक्षमम् ॥
कात्यायनस्मृतिः गोभिलस्मृतिः-२-१३-१५-१४

मेखला
(१) ब्रह्मचारीणां कटिसूत्रम् ।
मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वीज्या वैश्यस्य शणतान्तवी ॥
मनुः २-४२
मेहनसम्बन्धिनः स्वस्य माला मेखलेति निर्वचनं ।
कुर्वन्ति मयूरव्यंसकादित्वात् साधुः किल मिहसेचने ।
मिहयते सिच्यते वीर्यादिकमनेनेति मेहनमानन्दे-
न्द्रियम् ।
तस्योपरि नाभेरधोभागे यत् खं तस्य माला इति
देवपालः ॥ लौगाक्षिगृ १-६
(२) कटिबन्धनालंकारः ।
(३) भित्तिमूलबन्धः ।
मेखलाभ्रमानिष्कासगवाक्षान् नोपरोधयेत् ।
प्रणालीं गृहवास्तु च पीडयन् दण्डभाग् भवेत् ॥
इति व्यवहार कल्पतरुः ७-५२

मेचकरातनी— काकमाची ।
मेचकारातनी काकमाचिका इति कल्पतरुः ।
काकादन्याः मेचकारातन्याः कोशातक्या बृहत्याः ।
काकातकस्य मूलानि पेषयित्वा उपलेपयेद् देशं
यस्मिन् जायेत रक्षसामपहत्यै ॥
इति सांख्यायनगृह्ये

मेढिः— खलमध्यस्तम्भः यत्रधान्यादिमर्दनार्थं बलीवर्दा-
बद्धा भवन्ति ।
भूमिं भित्त्वौषधीश्छित्त्वा हत्वा कीटपिपीलिकाः ।
पुनन्ति खलयज्ञेन कर्षका नात्र संशयः ॥ १४
यूपोऽयं निहितो मध्ये मेढिर्नाम हि कर्षकैः ।

सुशलाकम् — उज्जलपञ्जीरम् ।
हिरण्यं मृष्टशलाकं तु सौवर्णं परिमर्द्धि ततः ।
अत्र देवमृषो दत्वा सराष्ट्रोऽभ्यपतद्दिवम् ॥
इति महाभारते कल्पकल्पतरौ दानकाण्डे-२७२

मृष्टिः -- अन्नादीनां स्वादुत्वसम्पादनम् इति लक्ष्मीधरः ।
अन्नादेः संस्कारविशेष इति कुल्लूकः ।
मृष्टिम् वृद्धिनाश नाग्र्या. श्राद्धकर्मसु सम्पदः ॥
मनुः ३-२५५

मेकलः = अमरकण्टकपर्वतः विन्ध्यपादः ।
उत्कला मेकलाः गौण्ड्राः कलिङ्गान्ध्रश्च संयुगे ।
निषादाश्च त्रिगर्त्ताश्च वाह्लीकाश्च जितावस्त्वया ॥

मेक्षणम् — चटु इति भाषायां प्रसिद्धम् ।
विभीतकादि वर्जं खादिरपालाशादिदारुनिर्मितं ।
प्रादेशप्रमाणं वर्त्तुलदण्डं स्थूलाग्रं मेक्षणमिति
मित्रमिश्रः ।
अश्वत्थकाष्ठनिर्मितम् रत्निपरिमितम् अग्रभागे
चतुरङ्गुलचतुरस्रफलकयुतं भर्जनगत्र्या समुप्तस्य
पिष्टस्य मदन्तीभिरद्भिः सम्मेलनवरणादौ करणतया
वहितं फलकाविशिष्टभागदण्डयुतं मेक्षणपदवाच्य
मितिश्रौतपदार्थनिर्वचने ।
इध्मजातीयमिध्मार्द्ध प्रमाणं मेक्षणं भवेत् ।
वृत्तं च ह्यङ्गुष्ठ प्रवदा क्रियाक्षमम् ॥
कात्यायनस्मृतिः गोभिलस्मृतिः-२-१३-१५-१४

मेखला
(१) ब्रह्मचारीणां कटिसूत्रम् ।
मौञ्जी त्रिवृत्समाश्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वीज्या वैश्यस्य शणतान्तवी ॥
मनुः २-४२
मेहनसम्बन्धिनः स्वस्य माला मेखलेति निर्वचनं ।
कुर्वन्ति मयूरव्यंसकादित्वात् साधुः किल मिहसेचने ।
मिहयते सिच्यते वीर्यादिकमनेनेति मेहनमानन्दे-
न्द्रियम् ।
तस्योपरि नाभेरधोभागे यत् खं तस्य माला इति
देवपालः ॥ लौगाक्षिगृ १-६
(२) कटिबन्धनालंकारः ।
(३) भित्तिमूलबन्धः ।
मेखलाभ्रमानिष्कासगवाक्षान् नोपरोधयेत् ।
प्राणालीं गृहवास्तु च पीडन् दण्डभाग् भवेत् ॥
इति व्यवहार कल्पतरुः ७-५२

मेचकरातनी— काकमाची ।
मेचकारातनी काकमाचिका इति कल्पतरुः ।
काकाद्न्याः मेचकारातन्याः कोशातक्या बृहत्याः ।
काकातकस्य मलानि पेषयित्वा उपलेपयेद् देशं
यस्मिन् जायेत रक्षसामपहत्यै ॥
इति सांख्यायनगृह्ये

मेढिः— खलमध्यस्तम्भः यत्रधान्यादिमर्दनार्थं बलीवर्दा-
बद्धा भवन्ति ।
भूमिं भित्त्वौषधीश्छित्त्वा हत्वा कीटपिपीलिकाः ।
पुनन्ति खलयज्ञेन कर्षका नात्र संशयः ॥ २४
यूपोऽयं निहितो मध्ये मेढिर्नाम हि कर्षकैः ।

तस्मादतन्द्रितो दद्यात्तत्र धान्यार्थदक्षिणाम् ॥

हारीत, स्मृ ५-१५

मेढिभूतः कौरवाणां त्वमद्य त्वय्याधीनं कुरुकुलमाज-

मीढ ॥ महाभा, उद् ३६-७३

मेढिस्तम्भे यथा युक्ता पशवः कर्षणार्थकाः ।

मण्डलानि क्रमन्तीमे समस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः ।

इति ब्रह्मपु -२३-१०

ध्रुवणाधिष्ठिताः सर्वे ध्रुवमेव प्रदक्षिणम् ।

प्रयान्तीह वरं श्रेष्ठमेधीभूतं ध्रुवं दिवि ॥

वायुपु. १-५२-६७

अमरकोषे तु मेधिरिति पाठः ।

पुंसि मेधिः खले दारुन्यस्तं यत् पशुबन्धने ॥

इति २-६-१५

अस्मिन् अर्थे उत्कलेषु मेढ़ि इति लोकव्यवहारो-

ऽप्यस्ति ॥

**मेढ्रम्**— पुंजननेन्द्रियम् ।

न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति ।

मेढ्रश्चोन्मादशुक्राभ्यां हीनः क्लीवः स उच्यते ।

इति दायभागे कात्यायनः ।

मातृष्वसृगमे चैवमात्ममेढ्रनिकर्त्तनम् ॥ पराशरः १०-९

**मेदः**— कोहः इति प्रसिद्धः जातिविशेषः ।

मेदयुवतिः कोलिणी इत्याचारेन्द्रौ ।

मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुहिंसनम् ॥

मनुः १०-४८

स चान्त्यजातिविशेषः रजकशब्दे द्रष्टव्यः ।

(२) वसा ।

मेदस्तु वपावसा इत्यमरः २-६-६४

मेदः मांसस्नेहः इति मिताक्षरा १-६४

मेदसा तर्पयेद्देवानथर्वाङ्गिरसः पठम् ॥ १-४४

**मेदिनी**— भूमिः ।

जघान दानवौ विष्णुः पूर्वं तु मधुकैटभौ ।

वृत्रं महेन्द्रश्च ततः पृथ्वी तन्मेदसाकृता ।

अतोऽर्थे मेदिनी सा च जनै लोकेषु गीयते ।

इति श्राद्धप्रकरणे कालसारोद्धृते ब्राह्मे ॥

कलौ दशसहस्रान्ते विष्णुस्त्यक्ष्यति मेदिनीम् ।

तदर्धं जाह्नवी तोयं तदर्द्धं देवतागणाः स्कन्दे-

वैष्णवदः ४-१:

**मेधः**— (१) यज्ञः । यथा अश्वमेध पुरुषमेध इत्यादिः ।

मैवं मेधमुपागात् इति श्रुतिः कल्पतरौ नियत-३५२

(२) वीर्यम् इति नरसिंहवाजपेयी ।

वर्णाश्रमाः श्रुतिवित्तवृत्तसुखमेधसो जन्म प्रतिपद्यन्ते ।

इति गौतमः ।

**मेधा**— (१) ग्रहणशक्तिः ।

मेधाग्रन्थग्रहणशक्तिः प्रज्ञा अर्थग्रहणशक्तिरिति

हरदत्तः आपस्त २-२-३

(२)धारणशक्तिः धीर्धारणवती मेधा इत्यमरः १-५-१

**मेयम्**— गोण्यादिना मानयोग्यं पण्यं व्रीह्यादि ।

मिताक्षरा-२-२५४

मेयं व्रीह्यादि व्यवहारकल्पतरौ-१२४

तुलाधरिममेयानामिति नारदसंहिता ॥ १६-८४

**मेरुप्रासादः**— पञ्चाशद्धस्तविस्तृतः शतहस्तोच्छ्रितः ।
मत्स्यपुराणे २६८ अध्याये द्रष्टव्य ॥

**मेलकः** – (१) मृगवधजीवी इति कल्पतरुः ।
हेमाद्रिश्च श्राद्ध-८०
(२) समूहः समूहकारकश्च मिथ्यादूषिणां मेलकानां जिह्वांछिन्द्यात इति हारीतः विवादरत्नाकरे-२५८

**मेषोर्णा**— मेषलोम लवो मेषोर्णा चामरीकेशादिः इति विज्ञानेश्वरः ॥ २-३६

**मेहनम्**— मूत्रोत्सर्जनम् ।
मेहने मृत्तिकाः पञ्चलिङ्गे द्वे परिकीर्त्तिते ।
एकस्मिन् विंशतिर्हस्ते द्वयोर्ज्ञेयाश्चतुर्दश ॥
विष्णुधर्मपुराणे २-७६-२१
एतद् वचनं शंखस्य इत्याचारमयूखे-१३

**मैत्रम्**– (१) पुरीषोत्सर्गः ।
मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम् ।
मनुः ४-१५२
ततः कल्यं समुत्थाय कुर्यान्मैत्रं नरेश्वर ।
नैरृत्यामिषुविक्षेपमतीत्याभ्यार्धिकं भुव इति नित्याचारप्रदीपोद्धृत विष्णुपुराणे विष्णुपु ३-११-८
मैत्रं पुरीषोत्सर्गं इति कल्पतरौ नियत-२५
(२) अनुराधानक्षत्रम् हेमाद्रि श्राद्ध-२६७

**मैत्रः**— व्रात्यवैश्यात सवर्णायां जातः । मनुः १०-८३
(२) मित्रम् जप्येनैव तु संसिद्धेद् ब्राह्मणोयत्र संशयः ।
कुर्यादन्यन्नवाकुर्यान् मैत्रो ब्राह्मणो उच्यते ॥
मनुः-२ ८७
(३) मित्रकर्मप्रधानः प्रियहितभाषीति मेधातिथिः ।
स्वध्याये नित्ययुक्तः स्याद् दान्तो मैत्रः समाहितः ।
दाता नित्यमनादाता सर्वभूतानुकम्पकः ॥
मनुः ६८

**मैत्रता** — प्रसन्नमनस्कता । शीलशब्दे द्रष्टव्यः

**मैत्रावरुणम्**— औदुम्बरं चतुःसक्ति यत्तद् दधिग्रहणात्र-मुच्यते । पिलकाचिह्नितं मैत्रावरुणमित्युच्यते ॥
इति श्रौतपदार्थनिर्वचने ।

**मैत्रावरुणः**—ऋत्विग्विशेषः ।

**मैत्रावरुणपात्रम्**— मैत्रावरुणमेव मैत्रावरुणपात्रम् ।

**मैत्रेयः**— } वैदेहादायोगव्यां जातः । भाट इति
**मैत्रेयकः**— } भाषायां प्रसिद्धः ।
मैत्रेयकं तु वैदेही माधूकं सम्प्रसूयते ।
नृन् प्रशंसत्यजस्रं यो घण्टाताडोऽरुणोदये ॥
मनुः १०-३३

**मैत्रयम्**— मित्रद्वारेण लब्धं धनम् ।
मौत्रामैद्वाहिकं चैव माधुपर्किकमेव च ॥
मनुः ६-२०६

**मैथुनम्**— स्त्रीसम्भोगः ।
पुनर्भोजनमध्वनं माराध्वायनमैथुनम् ।
दानं प्रतिग्रहं होमं श्राद्धभुक्त्वष्ट वर्जतेत् ॥

इति मिताक्षरायाम् याज्ञ १-२४६

**मैथुनः**— शालकः।

मिथुनस्य एकदेशलक्षणया मैथुनशब्दवाच्यायाः

भार्यायाः भ्राता शाल इत्यर्थः इति हरिहरः।

संयुक्तं मैथुनं वोदकं याचेरम् ॥ पारस्करः ३-१०-१३

**मैरेयम्**— मद्यविशेषः।

धातुपुष्पं गुडधान्याम्बुसहितमिति शब्दार्णवे वाच-

स्पतिरिति कल्पतरुः।

मैरेयमासवो धात्री धातकेगुडवारिभिः इति

वैजयन्ती इति रामायण भूषणे।

शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत्।

मैरेयं धातकीपुष्पगुडधानाम्बुसंहितम् ॥

इति अमरकोषव्याख्यासुधायाम् २-१०-४१

**मोघम्**— निष्फलम्।

मोघं स्कन्दितमार्षभम् वसिष्ठः १७-८

मनुः ९-५०

**मोघवीजः**— नपुंसकविशेषः।

गर्भाधानासमर्थरेता मोघवीजः इति मित्रमिश्रः

संस्कारप्रकाशे-७५८

**मोचम्**— कदलीफलम्।

एतत् श्राद्धदेयमिति आरुकशब्दे द्रष्टव्यम्।

मोचः शोभाञ्जने पुंसि मोचा शाल्मलिरम्भयोः ॥

इति कोषात् शोभाञ्जनफलमपि मोचम्।

तत्त श्राद्धे न देयम् आचाराभावात्।

**मोचकः**— चर्मकारः इति गोविन्दराजः।

**मोचकी**— शाल्मली इति नित्याचारप्रदीपे नरसिंहवाज-

पेयी।

वहुभार्य्या नारिकेली द्राक्षा सर्वाङ्ग सुन्दरी।

रतिप्रदा तथाकेलीमोचकी शत्रुनाशिनी।

इति तत्र पाद्मे कृत्यकल्पतरौ च दान-३०८

(२) कृष्णपक्षरात्रिचतुर्थमुहूर्त्तः।

**मोचा**— कदली आचारमयूखे-२८

**मोदः**— शुक्लपक्षगतरात्रि चतुर्थमुहूर्त्तश्चेति कालमाधवे

**मोदकः**— मोदकाः लड्डुका इति विज्ञानेश्वरः १-२५७

प्रयोगः पूरिकाशब्दे द्रष्टव्यः हेमाद्रौ च परि-६०३

**मोषः**— चौरः।

ग्रामघाते हिताभङ्गे पथि मोषाभिदर्शने।

शक्तितो नाभिधावन्तो निर्वास्याः सपरिच्छदाः ॥

मनुः ९-२७४

**मोहः**—मोहचित्तवैकल्पमिति विज्ञानेश्वरः-२-२१४

महो विवेकशून्यता इति गौतमसूत्रवृत्तौ हरदत्तः।

मोहो विपरीतज्ञानमिति सरस्वतीविलासे पृ ६६

मोहशब्देन देवेन्द्र बुद्धिपूर्वो व्यतिक्रमः

उच्यते पण्डितै नित्यं पुराणे शांमपायन

इति प्रायश्चित्तविवेकोद्धृतभविष्ये-१६

जातुवद्धिपूर्वो व्यतिक्रम मोह इति जिवनः।

आत्मबुद्धिपूर्वो व्यतिक्रमो मोह इति जिघनः ।
धर्मबुद्धौ सत्यामपि अकर्त्तव्ये रागात् कर्त्तव्यत भ्रमः ।
मोह इति शूलपाणिः ।

यथा तत्र व्याः :—
मोहो धर्मविमूढत्वं मानस्त्व स्मा।भिमानिता इति

प्राय-२०

मोहः कार्य्याकार्ययोरविवेक इति आपस्तम्ब व्याख्याने
हरदत्तः १-८-२३-५

**मौञ्जिबन्धनम्**— उपनयनम् ।
इयापोर्बहुलम् ६-३-६३ इति सूत्रेण मैञ्जीशब्दस्य
ह्रस्वः । दीर्घपाठोप्यस्ति ।

**मौञ्जी**— मुञ्जा तृणनिर्मिता मेखला ।
क्षत्रियस्य तु मौर्वीज्या वैश्यस्य शणतान्तवी ॥

मनुः २-४२

**मौर्वी**— मूर्वामयी क्षत्रियस्य मेखला ।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी

मनुः २-४२

**मौलः**— (१) पितृपरम्परया वर्त्तमानमौलाः ।
मौलाञ्छास्त्रविदः शूरान् लब्धलक्ष्यान् कुलोद्भवान् ।
सचिवान् सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान् ॥

मनुः ७-५४

(२) क्षेत्रस्य सर्वसामन्ताः पश्चाद्देशान्तरं गताः ।
तन्मूलत्वात्तु ते मौला ऋषिभिः सम्प्रकीर्त्तिताः ॥

इति कात्यायनः

**म्लेच्छदेश**— कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः ॥

मनुः २-२३

## ( य )

**यक्त**— कालिका ।

**यक्षकर्दमः**— धूपविशेषः ।
कर्पूरागुरुकक्कोलदर्पकुङ्कुमचन्दनैः ।
यक्षकर्दम इत्युक्तो गन्धः स्वर्गेऽपि दुर्लभः ॥ इति
हेमाद्रिधृतविष्णुधर्मोत्तरे हेमाद्रि परि-६७६
कर्पूरमगुरुश्चैव कस्तुरी चन्दनं तथा ।
कंकोलं च भवेदेभिः पञ्चभिर्यक्षकर्दमः ॥
इति निर्णयसिन्धूद्धृतगारुडे
कस्तूरिकाया द्वौ भागौ द्वौभागौ कुङ्कुमस्य च ।
चन्दनस्य त्रयो भागः शशिनस्त्वेक एव हि ।
यक्षकर्दम इत्येष समस्तसुखलाभदः ॥

स्कन्दः काशी-८०-४४

प्रतिष्ठामयूखेत्स्यैव पाठः-१२
कर्पूरमगुरुश्चैव कस्तूरी चन्दनं तथा ।
कङ्कोलं च भवेदेभिः पञ्चभिर्यक्षकर्द्दमः ॥
इति वृद्धगर्गः परिभाषाप्रकाशे-११४

**यक्षकर्दमलेपः**— निर्णयसिन्धौ ।
धनञ्जयोपि धर्मात्मा मातृभक्तिपरायणः ।
आदायास्थीन्यथो मातुर्गङ्गामार्गस्थितोऽभवत् ।
पञ्चगव्येन संस्नाप्य तथा पञ्चमृतेन वै ॥

यक्षकर्दमलेपेन क्षिप्ता पुष्पैः प्रपूज्य च ।
आवेष्ट्य नेत्रवस्त्रेण ततः पट्टाम्बरेण च ।
ततः सुरसवस्त्रेण ततो माञ्जिष्ठवाससा ।।
नेपालकम्बलेनाथ मृदा चाथविशुद्धया ।
ताम्रसंपुटके कृत्वा मातुरङ्गान्यथो वहन् ॥
इति दिवोदासीये काशीखण्डे ।

**यक्षचन्दनम्**— कर्पूरं चन्दनं कुष्ठमुशीरं सिह्लकं तथा ।
सग्रन्थिवृषणं भीमं कुङ्कुमं गृञ्जनं तथा
हरीतकी तथा भीम एष यक्षाङ्ग उच्यते ॥
कृतिरत्नाकरे-४५७

**यजमानः**— स्वर्थकर्मानुष्ठान कर्त्ता ।
यजतेऽसौ यजमान इति कर्मजन्यफलभोक्ताः ।
इति यावत्

**यजुष्पवित्रम्**— आपो अस्मान् मातरः शुन्धन्तु ।
इति हरदत्तः आपस्त १-१-२

**यज्ञवाटः**— यज्ञक्षेत्रम् ।
तस्माद् यादव गच्छामि यज्ञवाटं पितुर्मम ।
अनुज्ञां देहि मे नाथ देवदेव जगत्पते ॥
स्कन्द माहे-२-६२

**यज्ञवाटिः**— यज्ञार्थं परिवृता भूमिः ।

**यज्ञसूत्रम्**— यज्ञोपवीतम् ।
यज्ञसूत्रविहीनः स्यादनर्हः सर्वकर्मसु ।
पृ आङ्गिरसस्मृतिः ५४

**यज्ञियदेशः**— कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परम् ॥
मनुः २-२३

**यज्ञियवृक्षः**— शमीपलाशन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।
अश्वत्थोदुम्बरौ विल्वश्चन्दनः सरलस्तथा ।
शाल्वश्चशिदेवदारुश्च खदिरश्चेति यज्ञियाः ।
इति ब्रह्मे इति परिभाषाप्रकाशे-४३५

**यज्ञोपवीतम्**— उपवीतम् ।
देवागारेऽथवागोष्ठे नद्यां वान्यत्र वा शुचौ ।
सावित्र्यांत्रिगुणं कुर्यान्नवसूत्रं तु तद् भवेत् ।।
विल्वाश्वत्थादि यज्ञार्थवृक्षस्यान्यतमस्य तु ।
वध्नीयात्तत् सजीवं तु पितृभ्यो नम इत्यथ ॥
भूमदावेक्षितव्यं स्यात् पितृणां तृप्तिदं हि तत् ।
सव्येऽमुतं गृहीत्वास्मिन् स्थापयेद् भूरिति ब्रुवन् ॥
पत्रं पुष्पं फलं वापि व्याहृतिभिः प्रतिक्षिपेत् ।
अभिमन्त्र्याथ भूरग्निश्चेति वृत्तत्रयं त्रिभिः ॥
इति संग्रहकारः

तत्रमन्त्राः भूरग्नये च पृथिव्यै च महते च स्वाहा ।
भुवो वायवे चान्तरिक्षाय च महते च स्वाहा ॥
सुवरादित्याय दिवे च महते च स्वाहा इति
तत्र पतितन्तु देवताः ।
ॐकारः प्रथमस्तन्तु द्वितीयोग्निस्तथैव च ।
तृतीयो भगदैवत्यश्चतुर्थः सोमदैवतः ।।
पञ्चमः पितृदैवत्यः षष्ठश्चैव प्रजापतिः ।

सप्तमो वसुदैवत्यो धर्मश्चाष्टम एव च ।।
नवमः सर्वदैवत्य इत्येषा नवदेवताः ।
इति संस्कारप्रकाशे-४१८

यज्ञोपवीतमन्त्रः—ओं यज्ञोपवीतं परमं पवित्रमित्यादि ब्रह्मोपनिषदुक्तो मन्त्रः नित्याचारप्रदीपे १-४५७
सामवेदे तु—
ओं यज्ञोपवीतमसि यज्ञस्य त्वत्वापपीतेनोपनह्यामि इति मन्त्रः ।

यज्ञोपवीती— दक्षिणस्कन्धधृतयज्ञसूत्रः ।
दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽसे प्रतिष्ठापयति ।
दक्षिणं कक्षमन्ववलम्बं भवत्येवं यज्ञोपवीती भवति इति गोभिलः १-२-२

यतिः— सन्यासी ।
विधूमे सन्नमुसले व्यङ्गारे भुक्तभजने ।
वृत्ते शरावसंपाते भिक्षां नित्यं यतिश्चरेत् ॥
मनुः ११-२१८

यतिसान्तपनम्— चान्द्रायणव्रतभेदः ।
अष्टावष्टौ समश्नीयात् पिण्डान् मध्यंदिने स्थिते ।
नियमात्मा हविष्याशी यतिचान्द्रायणं चरन् ॥
मनुः ११-२१८

यतिचान्द्रायणम्— यदात्वेतदेव मिश्रितं पञ्चगव्यं त्रिरात्रमभ्यस्यते ,तदा यतिसान्तपनसंज्ञां लभते ।
एतदेव त्र्यहाभ्यस्तं यतिसान्तपनं स्मृतम् ॥
इति शंख इति मिताक्षरायाम् ३-३१४

यथाकथा—येन केन प्रकारेण ।
यथाकथा च परपरिग्रहमभिमन्यते स्तेनोह भवति ।
आपस्त १-१०-२८-१

यन्ता— सारथिः ।
इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमे यत्नमातिष्ठेद् विद्वान् यन्तेव वाजिनाम् ॥

यन्त्रम्— अनुष्ठानम् ।
निवृत्तः पापकर्मभ्यः प्रवृत्तः पुण्यकर्मसु ॥
यो विप्रस्तस्य सिद्धयन्ति विना यन्त्रैरपि क्रियाः ।
बौधायन श्र, ४-३-७-१

(२) बृहत् शिल्पादिकम् ।
सर्वाकरेष्वधीकारो महायन्त्रप्रवर्त्तनमिति उपपातकप्रकरणे मनुः ११-६३
महतां प्रवाहप्रतिबन्धहेतूनां सेतुबन्धादीनां प्रवर्त्तनम् ।
इति कुल्लूकः ।

यन्त्रणम्— यन्त्रणं व्याध्यादिनियातनार्थं सन्दशाङ्कुशादिप्रवेशनम् इति विज्ञानेश्वरः ३-२६४
यन्त्रणे गोचिकित्सायां मूढगर्भविमोचने ॥
इति सम्वर्त्तः १३७
यन्त्रिता गौरिति पराशरः ६-४५
तत्र व्रणरोगादौ दाहच्छेदादिचिकित्सार्थं रज्वादिना-यन्त्रिता गौरिति माधवः एतेनमतेन यन्त्रण-शब्दस्यार्थः बन्धनमित्यायाति ।

यमः— (१) ब्रह्मचर्यादयो दश यमाः ।

ब्रह्मचर्यं दया क्षान्तिर्ध्यानं सत्यमकल्कता ।
अहिंसाऽस्तेयमाधुर्ये दमश्चेति यमा दश ॥

याज्ञ-३-३१२

आनृशंस्यादयोऽपि दश ।
आनृशंस्यं क्षमा सत्यमहिंसा दानमार्जवम् ।
प्रीतिः प्रसादो माधुर्यं मार्दवं च यमा दश ॥

अत्रिः ४८

(२) व्रतम् ।
स्नातस्य यमान् वक्ष्याम इति पारस्कर सूत्रव्याख्याने यमान् व्रतानि इति हरिहरः २-७-१

(३) प्रसक्तिप्रतिषेधात्मका यमा अमांसभक्षणादय इति देवपालः ॥ लौगाक्षिगृ, सू. १-१

**यमदीपः**— कार्त्तिककृष्णत्रयोदश्यां दीयमानः अपमृत्युनाशको दीपः निर्णयसिन्धौ द्रष्टव्यः ।

**यमद्वितीया**— कार्त्तिकशुक्लद्वितीया ।
अत्र श्रीलिङ्गराजदेवस्य यात्रा भवति ।
भगिनीभिश्च भ्रातरो भोज्यन्ते ।
उक्तं च भविष्योत्तरे

प्रथमाश्रावणे मासि तथा भाद्रपदे परा ।
तृतीयाश्वयुजे मासि चतुर्थी कार्त्तिकी भवेत् ।
इति चतस्रः यमद्वितीयाः उक्ताः तासु ॥
पितृव्यभगिनीहस्तात् प्रथमायां युधिष्ठिर ।
मातुलस्य सुता हस्ताद्द्वितीयायां तथा नृप ॥
पितुर्मातुः स्वसुः कन्ये तृतीयायां तयोः करात् ।
भोक्तव्यं सहजायाश्च भगिन्या हस्ततः परम् ॥
सर्वा भगिनीः संपूज्याः अभावे प्रतिपन्नकाः ।

संस्कारप्रकाशे-७१

**यमलपुष्पम्**— जातीनीलोत्पलं, यमलपुष्पमिति नरसिंहवा जपेयी ।

**यमलोत्पत्तिः**— द्वयोस्तदधिकानां वा शिशूनामेकस्मात् कोषादुत्पत्तिः अत्र शान्तिविधिः शास्त्रेभ्यो ग्रहणीयः यमलोत्पत्तौ अग्रजस्यैव ज्येष्ठत्वम् ।
ये तु अवरजस्य ज्येष्ठ्यमिच्छन्ति तत्र चास्य प्रथमहितत्वं परिकल्पयन्ति तन्न युक्तम् श्रुतिविरोधात्
गर्भाधानं च सकृदेव भवति न तु क्रमेणेति वैद्यशास्त्र
मनुश्च साक्षात् जन्मनैव ज्येष्ठत्वमुपदिशति ।
जन्मज्येष्ठेन चाह्वानं सु ब्रह्मण्यास्वपि स्मृतम् ।
यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता ॥

मनुः ९-१२६

**यमुना**— तीर्थविशेषः ।
सरस्वती त्रिभिः स्नानैः पञ्चभिर्यमुनाऽऽह्वत ।
जाह्नवी स्नानमात्रेण दर्शने नैव नर्मदा ॥
अभिलषितार्थचिन्तामणिः १-१-१३०

**यवनः**— (१) क्षत्रियात् शूद्रायां जातः यवनः यस्य हा इति नामान्तरम् गौत, ध, १-४-१७
क्षत्रियात् वैश्यापुत्रास्तथा चाप्ययवना योगवा अपि
प्रातिलोम्येन तत्रैको द्वौ ज्ञेयावनुलोमकौ ॥

नारदः १४-१०८

(२) क्रियालोपात् शूद्रत्वं गतः क्षत्रियः ।

मनुः १०-४४

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥ ४४
पौंड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः ।
पारदाः पह्लवाश्चीनाः किराता दरदाः खसाः ॥ ४४

(३) परस्परं संकीर्णाश्चत्वार वर्णाः ।

ससंकराश्चतुर्वर्णा एकत्वेकयावनाः इति शुक्र-नीतिसारे ।

(४) वेश्यापुत्रास्तथाम्बष्ठयवनायोगवा अपि ।
प्रातिलम्येन तत्रैको द्वौ ज्ञेयावनुलोमकौ ॥

इति व्यवहारकल्पतरुः ८१६

**यवपाकः**— वसन्तः ।

व्रीहिपाके च कर्त्तव्यं यवपाके च पार्थिव ।
न तावाद्यो महाराज विना श्राद्धं कथंचन ॥

इति श्राद्धदीपे ।

**यवमध्यचान्द्रायणम्**— यच्चान्द्रायणव्रतं दर्शान्तमासे अनुष्ठीयते तत् ।

विधिश्चास्य चान्द्रायणशब्दे द्रष्टव्यः ।

**यवसम्** – घासः ।

यात्वाऽध्वानं विमुच्य रथं यवसोदके दापयेदेष उह वाहनस्य अपह्नव इति श्रुतेः ॥

पारस्करः-२-१४-१५

ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च ॥ इति

मनुः ७ ७५

**यवागुः**— (स्त्री लि) अनवस्रावितो विरलद्रव ओदनः यवागुरिति हेमाद्रिः ।

यवागुरपासित तुषयवमम्पया पेयप्रायासिद्धा इति देवपालः ॥ काठकगृ १-६-४

यवाकोऽपि तद्वत् स तु भक्तप्रायः कठिन इति

**यवारकम्**— चिकसा इति प्रसिद्धमिति कमलाकरः ।

कण्डनददलन यवारकमण्डप मृद्वेदिवर्णकाद्यभि-लेख्यादि ।

**यव्यः**— मासः ।

यव्यद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः । इति
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥

इति कात्यायनः १०-१

यस्मिन्नब्दे द्वादशैकश्च यव्यास्तस्मिंस्तृतीया
परिदृश्यो नोपजायते एवं चारं चन्द्रमसो विदित्वा
क्षीणे तस्मिन्नपराह्णे च दद्यात् । कात्यायनः १६-५

**यष्टिः**— वंशदण्डिका इति कुल्लूकः-५-९९

विप्रः शुद्ध्यत्यपः स्पृष्ट्वा क्षत्रियो वहनायुधम् ।
वैश्यः प्रतोदं रश्मीन् वा यष्टिं शूद्रः कृतक्रियः ॥ इति

**याचितम्**— प्रीतिदत्तम् वृद्धिं विना यद्दणं लब्धमित्यर्थः ।

**याचितम्**— विवाहाद्युत्सवेषु याचित्वाऽऽनीतं वस्त्रालंकारादि ॥

इति विज्ञानेश्वरः २-६७

ततस्यादायुधसम्पन्नं धनधान्येन वाहनैः ।
याचितान्याहितन्यासनिक्षेपादिष्वयं विधिः ।

याज्ञ २-४१

**याचितकम्**— वृद्धिं विना गृहीतम् ऋणम् ।
देशभाषायां यत् उद्धार इत्युच्यते ।
यो याचितकमादाय तददत्त्व दिशं व्रजेत् ।
ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात् ।। इति

**याज्ञवल्क्यः**— यज्ञस्य वक्त्रो वक्ता यज्ञवल्कः ।
तस्यापत्यं याज्ञवल्क्यः इति श्रीशङ्कराचार्याः ।।
बृहदारण्य १-४-३

**याज्यः**— यजमानपदवाच्यः ।
ऋत्विजं यस्त्यजेद् याज्यो याज्यं चर्त्विक्त्यजेद् यदि ।
शक्तं कर्मण्यदुष्टं च त्रयोर्दण्डः शतं शतम् ।।

मनुः-८-३८८

**याज्या**—आगूः पूर्विका वषट्कारान्ता प्रायशो अर्द्धर्चाव-साना बहुस्थानेषु एकैव ऋक् क्वचिदनृगपि याज्यापदे-नोच्यते इति श्रौतपदार्थनिर्वचने ।

**यातयामम्**— (१) पर्युषितमयम् द्रव्यम् ।
यामः प्रहरः यातः अतीतः यस्य द्रव्यस्य तत् यातयाम् ।
रात्र्यन्तरितं पर्युषितम् अनम्लमपि कालवशात् उषगतत्वादिगुणहीनं यातयामम् ।
यातयामं गतरसं पूति पर्युषितं च यत् । इत्यादि
यातयामं जीर्णमिति मित्रमिश्रः ।
योह वा अविदितार्षं छन्दोदैवतब्राह्मणेन मन्त्रेण-याजयति ।
अध्यापयति वा स्थाणुं वर्च्छति गर्भं वापद्यति प्रवामीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति इति सामब्राह्मणम् ।। परिभाषाप्रकाशे-८८
(२) पुरातनमपि ।
छत्रवेष्ठनमौशीरमुपानद्व्यजनानि च
यातयामानि देयानि शूद्राय परिचारिणे ।

महाभा, शा, ६०-३०

(३) यातयामं मन्दपक्वमिति श्रीशङ्कराचार्याः ।।

भ, गीता १७-१०

**यात्रा**— (१) जीविका ।
यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः ।
अक्लेशेन शरीरस्य कुर्वीत धनसंचयम् ।।

मनुः ४-३

यात्रा प्राणवृत्तिरिति कल्पतरुः गार्हस्थ्य-१७०
(२) लोकव्यवहारः ।
साम्वत्सरिकादौ निमन्त्रणादिरूपो लोकव्यवहारः ।।
इति कुल्लूकः ।। मनुः २१-१८४
निवर्त्तेरंश्च तस्मात्तु सम्भाषणसहासने ।
दायाद्यस्य प्रदानं च यात्रा कैव हि लौकिकी इति
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ।।

मनुः ९-२७

(३) गमनम् तदुपलक्षित उत्सवोऽपि।

यथा श्रीपुरुषोत्तमदेवादीनां गुण्डिचामण्डपादि-
गमनहेतुका उत्सवविशेषा यात्रापदेनोच्यन्ते।

स्वल्पा वा महती यात्रा सर्वा मुक्तिप्रदायिका।
तस्मिन् तस्मिन् दिने दृष्टो भगवान् मुक्तिदो ध्रुवम्।
विश्वासहेतोर्मूर्खाणां यात्रा एता कृपावता।
विष्णुना कीर्त्तिता विप्र : पाविनां कल्मषापहा ॥

इति कालसोद्धृतस्कान्दे

श्रीजगन्नाथदेवस्य द्वादशयात्राः यथा—

मज्जस्नानं रथवरगतिः शायनं चायने द्वे।
पार्श्वावृत्तिः शयपरिहृतिः प्रावृतिः पुष्यपूजा ॥
दोलाकेलिर्दमनकमहोऽक्षय्यपुण्यतृतीया।
यात्रा स्कान्दे हरिप्रतिमया द्वादशेतिप्रणिताः ॥

श्रीभुवनेश्वरदेवस्य चतुर्दशयात्रा यथा।

यात्राद्या प्रथमाष्टमी निगदिता प्रावारषष्ठी तथा
पुष्यस्नानमथाज्यकम्बलविधिर्माघे सिता सप्तमी।
तद्वत्स्याच्छिवरात्रिका रथगतिः स्वाद्दमानं भञ्जनं
पुण्याक्षय्यतृतीयिका परशुरामीयाष्टमी शायनम् ॥
उक्ते तत्र पवित्ररोपणयमद्वितीयिके चेत्थितिः
क्षेत्रे श्रीभुवनेश्वरस्य बिहिता यात्राश्चतस्रोदश।
शैवे स्पष्टतयोदिता दशविधास्तन्त्रादिना संग्रहा
देकाम्रात् प्रथमाष्टमीप्रभृतयो यात्राश्चतस्रोधृताः ॥

इति कालसारे

**यात्रिकम्**— प्राणधारणोचितम्

तापसेष्वेव विप्रेषु यात्रिकं भैक्षमाचरेत् ॥

मनुः ६-२७

**यानम्**— (१) राजधर्मगुणविशेषः। युद्धयात्रा इति यावत्

यानं द्विविधम्।

एकाकिनश्चात्ययिके कार्य्ये प्राप्ते यदृच्छया।
संहतस्य च मित्रेण द्विविधं यानमुच्यते ॥

मनुः ७-१६५

(२) गमनसाधनं शकटादि।

गोऽश्वोष्ट्रयानप्रासादसस्तरेषु करेषु च।
आसीत गुरुणा सार्द्धं शिलाफलकनौषु च ॥

मनुः २-२

**याप्यः**— निन्द्यः।

अथ खल्वयं पुरुषो याप्येन कर्मणा लिप्यते।

गौतमः-३

याप्यं कुत्सितमिति हरदत्तः।

**यामः**— प्रहरः। अहोरात्रस्य अष्टमभागात्मकः।

निशा नक्तं तु तत्प्रोक्तं यामार्द्धं प्रथमे सदा।

इति कालमाधवे-३

सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम् ॥ इ

**याम्यम्**— द्विजानक्षत्रम्।

जीवितं याम्ये इति विष्णुः।

हेमन्ते प्रथमे मासे त्रयोदश्यां सिते गुरौ
प्रवृत्तं भारतं युद्धं नक्षत्रे यमदैवते ॥

इति भारतसा ...रोद्धे।

**याम्यतिथिः**— त्रयोदशी ।

**याम्यायनम्**— दक्षिणायनम् ।
गुर्वादित्ये गुरौ सिंहे नष्टे शुक्रे मलीम्लुचे ।
याम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेत् ॥
इति कालसारे शिष्टवाक्यम् ।

**यायावरः**— सर्वदाऽटनशीलः साग्निगृहिस्थः ।
इति कल्पतरौ नियत-२३५
वृत्त्या वरया याति इति यायावर इति बौधायनः
२-१०-३

दश दश रात्रीर्वा वसन् यातीति यायावरः ।
वरासु वा वृत्तिषु यापयत्यात्मानमिति यायावरः ।
इति हारीतः कल्पतरौ गार्हस्थ्य-१७३

**यावकम्**— यज्ञोपयुक्त चमसादि इति चण्डेश्वरः ४३४
तत्र हारीतः नाप्रक्षालितपाणिर्यावकोत्पवनगोरसदधि गृह्णीयात् ॥
यावकं यवौदन इति मित्रमिश्रः संस्कारप्रकाशे-४८५
तत्र शाकभक्ष्याः पयोभक्ष्याः ये चान्ये यावकाशिनः ।
सर्वे ते कृतभैक्षस्य कलां नार्हन्ति षोडशीम ॥ इत्यत्रिः

**यावकः**—यवविकारो यावकः यवागूर्वा इति बौधायन-विवरणे गोविन्दनन्दः ।
यावको भक्तप्रायः कठिन इति देवपालः काठकगृ
१-६-४

तत्रापि यावकः प्रसिद्धः यवमुद्गमिश्रः प्रसृतियावकादन्य इत्यादिलदर्शनः ॥

यवागूयावकयोर्भेदः यवागुशब्दे द्रष्टव्यः ।

**यावनालः**— यावनालाः जोन्धलाः हेमाद्रिपरिशेष-५१६
ते च मधूलिकाख्य जोन्धलव्यतिरिक्ताः एव वज्या इति हेमाद्रिः योन्धला इति निर्णयसिन्धौ ।
यावनालानपि तथा वर्जयन्ति विपश्चितः ।
मधूलिकाशब्दं शालिभेदवचनं वा वर्णयन्ति ॥
तन्मते सर्व एव यावनाला वर्जनीयाः ।
यावनालाः विन्ध्यदक्षिणतो महाराष्ट्रादिदेशे योन्हलापर पर्यायप्रसिद्धा इति स्मृतिचन्द्रिका श्राद्ध-३१३

**यावन्तिः**— विष्णुदेयपुष्पविशेषः ।
पाटला करवीरं च जपा यावन्ति रेव च । इति पूजाप्रकाशोद्धृताग्नेये ।

**युक्तः**— (१) कर्मणि नियुक्तः शास्त्रतत्परो वा ।
ये तत् ब्राह्मणा सम्मार्शिनो युक्ता आयुक्ता ।
अरूक्षा धर्मकामाः स्युः यथा ते तत्र वर्त्तेरन् तथा तत्र वर्त्तिथाः इति तैत्ति उ, १-११ कालमाधवे तुसम्दर्शिन इति पाठो गृहीतः कर्मादौ युक्ता इति शंकराचार्याः ।
युक्तिकुशलाः शास्त्रतत्परा इति माधवाचार्याः कालमाधवे-३
प्रणष्टाधिगतं द्रव्यं तिष्ठेद् युक्तैरधिष्ठितम् ॥
मनुः ८-३४

अत्र युक्ताः कर्मनियुक्ताः गृहीतवेतनाः पुरुषः ।
रामायणेऽपि—

तच्छ्रुत्वा भूमिपालस्य वसिष्ठो मुनिसत्तमः ।

आदिदेशाग्रतो राज्ञः स्थितान् युक्तान् कृताञ्जलीन् ॥

अयोध्या, ३-८

कौटलीयेऽपि मत्स्या यथान्तःसलिले चरन्ते ज्ञातुं

न शक्याःसलिलं पिबन्तः ।

युक्तास्तथाकार्य्यविधौ नियुक्ता ज्ञातुं न शक्या धनमाद-

दान २-६

युक्तान् नियोगिपुरुषान् इति राजनीतौ मित्रमिश्रः ४६

(२)युक्तः यत्नवान् इति कुल्लूकः ।

आचारः परमो धर्मः श्रुत्युक्तः स्मार्त्त एव च ।

तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् द्विजः ॥

मनुः १ १०८

यदि स्त्री यद्यवरजः श्रेयः किंचित् समाचरेत् ।

तत्सर्वमाचरेद् युक्तो यत्र वास्य रमेन्मनः ॥

मनुः २-२२३

अत्र युक्तः यत्नवान्, साग्रहः समनस्को वा ।

समाहितः एकमनाः इति यावत् ।

युक्तः समाहित इति उज्वलावृत्तिः आपस्त, ध,

१-८-२२-८

दुर्दर्श निपुणं युक्तो यः पश्येत् स मोदेत विष्टपे ॥ इति

(३) संयोगं प्राप्तः ।

प्रायश्चित्तमकुर्वाणो युक्तः स्यान्महतैनसा ॥

मनुः २-२२१

युक्तिः— कारणप्रयोजनपर्यालोचना इति विज्ञानेश्वरः ।

अत्रासाक्षिकइते चिह्नैर्युक्तिभिश्चागमेन च । याज्ञ २-२१२

लिङ्गोद्देशस्तु युक्तिः स्यादिति कात्यायनः ।

लिङ्गस्य अग्निदत्व यर्व्यभिचारेण उल्काहस्तत्वादेः ।

उद्देशो निश्चयः तेन अग्निदत्वाद्यनुमानम् ॥

इति व्यवहारप्रकाशे मित्रमिश्रः पृ-१६७

युक्तिकर्त्ता — अनुष्ठाता ।

युक्तिकर्त्ता अनुष्ठाता इति नित्याचारप्रदीपे ।

ज्ञानविलोकनवान् शुभाशुभयोः कर्मणोः युक्तिकर्त्ता

भवति इति तत्र हारीतः ॥

युगम्— (१) कृतत्रेतादि ।

कृतं त्रेतायुगं चैव द्वापरं कलिरेव च ।

राज्ञो वृत्तानि सर्वाणि राजा हि युगमुच्यते ॥

मनुः ९-३०१

कृतं त्रेताद्वापरं च कलिश्च भरतर्षभ ।

राजवृत्तानि सर्वाणि राजैवयुगमुच्यते ॥

महाभा, शा ६१-६

(२) चतुर्थी तिथिः ।

युगं मध्यंदिने यत्र तत्रोपोष्य फणीश्वरान् इत्यादि

(३) षड्शीत्यङ्गुलम् ।

कृत्तिकारोहिणीपुष्याचित्राख्यात्योर्यदन्तरम् ।

एतत्मान्चश दिशोरूपं युगमात्रोदितेम्बरे इति

स्मृत्यन्तरे इति नरसिंहवाजपेयी नित्या-१-१४१

(४) परिमाणविशेषः । तच्चपरिमाणं शकटाङ्गयुगपरि-

मितं मन्ये ।

युगं युगद्वयं चैव त्रियुगं च चतुर्युगम् ।

चण्डालसूतिकोदक्यापतितानामधः क्रमात् ॥

अधः क्रमः विपरीतक्रम इति माधवः पराशर १२-४१

(५) पुरुषायुः, जन्म वा ।
जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा ।
याज्ञ-१-६६
(६) लङ्गलादौ बलीवर्दादेः बन्धनाधारः काष्ठविशेषः ।
युआलि इति भाषाप्रसिद्धः

**युगादिः—** सत्ययुगादीनामुत्पत्तिदिवसाः ।
वैशाखमासस्य सिता तृतीया नवम्यसौ कार्त्तिक-शुक्लपक्षे ।
नभस्य मासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे ।
एता युगाद्याः कथिताः पुराणे अनन्तपुण्यास्तिथय-श्चतस्रः ।
पानीयमप्यत्रतिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतो मनुष्यः ॥
श्राद्धं कृतं येन समाः सहस्रं रहस्यमेतत् पितरो वदन्ति ।
इति भविष्ये चतस्र इत्यन्तं विष्णुपुराणेऽपि-३-१४-१२
माघे पञ्चदशी अमावास्या इति श्राद्धमयूखे ।
द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः ।
शुक्ले पूर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके
इति वचनात् ॥
किन्तु माघस्य पूर्णिमायां तु घोरः कलियुगः स्मृति
इति वचनात् माघपूर्णिमैव ।

**युगान्ताः—** हेमाद्रयुद्धृतब्रह्मपुराणे ।
सूर्यस्य सिंहसंक्रान्त्यामन्तःकृतयुगस्य तु ।
अथ वृश्चिकसंक्रान्त्यामन्तस्त्रेता युगस्य तु ॥
ज्ञेयस्तु वृषसंक्रान्त्यां द्वापरान्तश्च संज्ञया ।
तथा च कुम्भसंक्रान्त्यामंतः कलियुगस्य तु ॥
युगादिषु युगान्तेषु श्राद्धमक्षय्यमुच्यते । इति
हेमाद्रौ परि-२१४
ग्रहणे विषुवे चैव सौम्ये वा मिहिरो यदि ।
सप्तमी शुक्लकृष्णा वा युगान्त दिवसं विदुः ॥
इत्यादित्यपुराणे समयप्रकाश-१८१

**युग्मम्—** द्वितीया ।
युग्माग्नियुगभूतानामिति युग्मवाक्यमत्रप्रमाणम् ।

**युग्यः—** युग्यः बलीबर्दादिः ।
युगं वहतीति युग्यो बलीबर्दः इति हरदत्तः ॥
आपस्त १-६-१८

**युग्यघासः—** युग्यस्य बलीवर्दादेः घासः भोज्यः तृणादि ।
शक्योषा युग्यघासो न स्वामिनः प्रतिषेधयन्ति ॥
आपस्त १-१०-२८-३

**युवमारी—** युवान एव म्रियन्ते इति युवमारिणः ।
त्रयोदशे युवमारिणस्तु भवन्ति ॥

**यूका—** केशकीटविशेषः उकुणी इति भाषायां प्रसिद्धः ।
तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ।
बहुपादाश्च सूक्ष्माश्च यूकालिक्षाश्च नामतः ॥
इति वैद्यकशब्दसिन्धौ माधवनिदानम् ।
नाकर्षेच्च शिरो यूकां न मृषावादमाचरेत् ॥
परस्यानिष्ठकथनमितिशोकं च वर्जयेत् इति स्मृती

व्रतप्रकरणे यूका तु कोणकुणी इति चण्डेश्वरः।

कृत्यरत्नाकरः १७५

यूकाण्डः— लिक्षा।

यूतिः— संघ इति देवपालः।

आयूतिके कोते भयार्त्ते इत्यादि ५-२-१

यूतिः संघः तद्विपरीतः अयूतिः अयूतौ।

भवः अयूतिकः असहाय इत्यर्थः इत्यादित्यदर्शनः ॥

काठकगृ

यूथिका— जुई इति प्रसिद्धपुष्पस्य लता।

यूथिकापुष्पं विष्णुप्रियमिति शेफालीशब्दे द्रष्टव्यम्।

यूथी— कुब्जक शब्दो द्रष्टव्यः।

यूनबद्धः— मिश्रवेणुवीरणकाण्डादिनिबद्धं वासविशेषं न प्रविशेत् इति देवपालः।

निलयार्थी यूनबद्धं न प्रविशेत ॥

यूपः— पशुबन्धनशङ्कुः।

यूपचितिश्मशानरजस्वलासूतिकाशुचीन् ॥

वसिष्ठः ४-३८

योक्त्रमयूप— रश्मिविशेषः युगादौ बलीवर्दादेः बन्धने व्यवह्रियमाणः योत इति भाषाप्रसिद्धः।

योक्त्रं पशुग्रीवा रज्जुरिति कुल्लूकः ॥

मनुः ८-२६१

योक्त्रनीशाबन्धनरज्जुरिति महाभारतव्याख्याने नीलकण्ठः भीष्म ८९-३८

उपस्करः उपकरणं लाङ्गलादीनां प्रग्रहयोक्त्रादिकम्। इति मिताक्षरा-२-१९३

योक्त्रदामकडोरैश्च इत्यादि पराशरः ९-६

योक्त्रपाशं विपाय वाससोऽन्ते बध्नाति ॥ इति मैत्रायणीयमानवगृ १-११-२०

योक्त्रं त्रिगुणं दामेति काठकगृ भाष्ये ३-१-४

योगः (१) अलब्धस्य लाभः।

लब्धलाभो योग इति विज्ञानेश्वरः १-१००

(२) उपधिः।

योगाधमनविक्रीतं योगदानप्रतिग्रहम्।

यत्र वाप्युपधिं पश्येत् तत्सर्वं विनिवर्त्तयेत ॥

मनुः ८-१६५

अत्र योगशब्दश्छलवाची इति कुल्लूकः।

योग उपाधिरिति विज्ञानेश्वरः याज्ञ-२-१६७

योग उपाधिः येनागामिनोपाधिविशेषेणाधिविक्रय-दानप्रतिग्रहाः कृतास्तदुपाधिगिमे तान् क्रयादीन् विनिवर्त्तयेदित्यस्यार्थः।

(३) ज्योतिः शास्त्रप्रसिद्धविष्कुम्भादियोगः।

शुभयोगसमायुक्ता शानौशतभिषा यदि।

महे महेति विख्याता त्रिकोटिकुलमुद्धरेव ॥

महामहा वारुणीयोगस्यादरः।

(४) गोबिन्दद्वादशीवारुण्यादियोगाः।

(५) चित्तवृत्तिनिरोधः।

सूक्ष्मतां चान्ववेक्षेत योगेन परमात्मनः।

प्राणायामस्तथाध्यानं प्रत्याहारोऽथधारणा ॥

मनुः ६-६५

तर्कश्चैव समाधिश्च षड्ङ्गो योग उच्यते ।

दक्षस्मृतिः ७-२

अत्रिस्मृतौ प्राणायाम प्रत्याहारशब्दयोः स्थानविनिमयः ।

अत्रि-९-६

आहारनिर्हारविहारयोगाः सुसंवृताधर्मविदातुकार्याः ।

वाग्बुद्धिवीर्याणि तपस्तथैव धनायुषी गुप्ततमे तु कार्ये

वसिष्ठः ६-९

चित्तवृत्तेर्विषयान्तरतिरस्कारेण आत्मनि स्थैर्य योगः ।

इति विज्ञानेश्वरः याज्ञ ३-१०

(६) इष्टम् ।

क्षेमं पूर्त्तं योगमिष्टमित्याहुस्तत्त्वदर्शिनः ।

अविभाज्ये तु ते प्रोक्ते शयनासनमेव च ।

इति व्यवहारमयूखे लौगाक्षिः

तेन यागविप्र भोजनादि इष्टत्वेन योग इति नीलकण्ठः

(७) प्रयोगः ।

योगः प्रयोग इति परिभाषाप्रकाशे ।

सामादीनामुपायानां योगो व्याससमासतः ।

इति तत्र भविष्ये

(८) वचनम् ।

तत्र सोपधि यद्दत्तं यच्च योगवशेन वा ।

पित्रा भ्रात्राऽथवा पत्या न तत्स्त्रीधनमुच्यते ॥

इति व्यवहारप्रकाशे कात्यायनः अत्रयोगवचन

दायदानामिति मित्रमिश्रः व्यवहारप्र, ५४२

(९) योगो नाम मुख्यया वृत्त्या जीवपरमात्मनो-रेकीभावलक्षणः सम्बन्ध इति हेमाद्रौ परिशिष्टे-४१५

(१०) क्रोधादिवर्जन पूर्वकमक्रोधादीनां स्वीकारः ।

क्रोधो हर्षो रोषो लोभो मोहो दम्भो द्रोहो मृषोद्य-मत्याशपरीवादावसूया काममन्यू अनात्म्यमयोग स्तेषां योगमूलो निर्घातः ॥ आपस्तम्बः १-८-२३-११

**योजनम्**— (१) क्रोशचतुष्टयम् ।

हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् ।

तत् सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् ॥

इति मिताक्षरायाम् २-१०६

जपन् वान्यतमं वेदं योजनानां शतं व्रजेत् ॥

मनुः-७५

ब्रह्महत्यापनोदाय मितभुङ्नियतेन्द्रियः ।

सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम् ।

क्रोशो ग्रामेभ्यः आपस्त २-१०-२६

(२) सपिण्डीकरणम् ।

माङ्गल्यमुत्सवं चैव परपाके च भोजनम् ।

प्रथमेऽब्दे न कुर्वीत योजनेऽपिकृते सति ॥ इति श्राद्धदीपे

**योनिः**— (१) उत्पत्तिस्थानम् ।

तेषां गृहस्थोयोनिरप्रजनत्वादितरेषाम् ।

एषा धर्मस्य वो योनिः समासेन प्रकीर्त्तिता ॥

मनुः २-२५

इयं भूमिर्हि भूतानां शाश्वती योनिरुच्यते ॥

मनुः ९-५६

(२) स्त्रीजननेन्द्रियम् ।

एतद्वः सारफल्गुत्वं बीजयोन्योः प्रकीर्त्तितम् ।

मनुः ९-५६

(३) कुलम् ।

विद्यातपश्च योनिश्च त्रयं ब्राह्मणकारकम् ।

योनिमान्— कुलीनः ॥

स्वाध्योत्थं योनिमन्तं प्रशान्तम् ।

वैतानस्थं पापभीरुं बहुज्ञम् ।

स्त्रीषु क्षान्तं धार्मिकं गोशरण्यं ।

व्रतैः क्लान्तं तादृशं पात्रमाहुः ॥ वसिष्ठः ६-३०

योनिमान्— प्रशस्तकुलोद्भव इति कल्पतरौ दानकाण्डे-२६

तत्र स्वाध्यायाढ्यमिति पाठः ॥

योषा— स्त्री ।

दुर्वृत्त ब्रह्मक्षात्रविट्शूद्रयोषाः प्रमाप्य तु ।

दृतिं धनुर्वस्तमविं क्रमाद्दद्याद् विशुद्धये ॥

याज्ञ-३-२६८

यौतकम्— (१) यौतकम् पृथक्कृतं धनम् ।

यौतकैः पृथक्कृतैरिति विज्ञानेश्वरः २-१४९

यौतकं पृथक्धनमिति अपरार्कः ।

(२) परिणयनलब्धं धनमिति जीमूतवाहनः ।

मातुश्च यौतकं यत्स्यात्कुमारी भाग एव सः ।

दौहित्र एव च हरेदपुत्रस्याखिल धनम् ॥

मनुः ९-१३१

मातुश्च यौतकमित्यत्र यौतकं परिणयनलब्धं यु

मिश्रण इति धातोर्युत इति पदं मिश्रतावचनम् ।

मिश्रता च स्त्रीपुरुषयोरेकशरीरता विवाहाच्च ॥

तद् भवति अस्थिनि अस्थीनि इति श्रुतेः अतः

विवाहकाले लब्धं यौतकमिति दायभागे ४-२

यौतकं विवाहादिकाले पत्न्या सह एकासने

प्राप्तं युतयोर्यौतकमिति निघण्टुकृतेरितिमदनः ॥

यौतकं समानासनोपवेशन प्रत्यासन्नयोर्वधूवर-

योर्विवाहादौ येन केनचित् समर्पितं धनमिति

देवणभट्टः स्मृतिचन्द्रिकायाम् व्यवहार-६६२

यौनसम्बन्धः— वैवाहिकसम्बन्धः ॥ मनुः २-४०

नैतैरपूतैर्विधिवदापद्यपिहि कर्हिचित् ब्राह्मान्

यौनांश्चसम्बन्धानाचरेद्ब्राह्मणः सह ॥ इति

## (र)

रक्तब्रह्मचर्यम्— पर्ववर्जननियमो रक्तब्रह्मचर्यम् ।

पर्ववर्जननियमो रक्तमिति हारीतः विशेषब्रह्मचर्यशब्दे

मृग्यः ।

रक्षोघ्नाः— रक्षोघ्नांश्च जपेन्मन्त्रांस्तिलैश्च विकिरेन्महीम् ।

मार्कण्डेयपु ३१-५१

रक्षोघ्नाः कृणुष्वपाज इत्यादयो मन्त्राः ।

कदर्यबद्धचोराणां क्लीवरङ्गावतारिणाम् । इति

रजः— (१) आर्त्तवम् ।

रजस्तत्राशुचिज्ञेयं तच्च पुंसि न विद्यते ।

(२) सूतिकान्नम् ।

सूतिकान्नं रजः प्राहुः इति हारीतः ।

**रक्षोघ्नानि**— रक्षोघ्नसामानि यद् वा उ विश्वपति इत्यादिऋचि उत्पन्नानि सामानि इति कल्पतरुः ॥ श्राद्ध-१६३

**रक्षोघ्न्यः**— रक्षोघ्न्यः कुणुष्वपाज इत्याद्याऋच इति हेमाद्रिः १०७१

**रङ्गावतारः**— रङ्गावतारः पण्यस्त्रिय इति विवरणकारः। न तु चारणदारेषु न रङ्गावतारे बधः बौधा २-२-६०

**रङ्गावतारी**— रङ्गावतारो नटचारणमल्लादिरिति विज्ञानेश्वरः ॥ याज्ञः १-१६१

(३) पापम् आपस्तम्वः १-६-१६-६

यदि हि रजः स्थावरं पुरुषे भोक्तव्यम्।
अथचेचलं दानेन निर्दोषो भवति ॥ इति

(४) धूलिकणा।

मक्षिका विप्रुषश्छाया गौरश्वः सूर्यरश्मयः।
रजो भूर्वायुरग्निश्च स्पर्शे मेध्यानि निर्दिशेत् ॥
मनुः ५-१३३

**रजः**—(१) धूलिकणा मनुः ५-१३३ विप्रट शब्दो द्रष्टव्यः।

(२) पापम् यदिरहि रजः स्थावरं पुरुषे भोक्तव्यम्
आपस्त-१-१६-६

(३) स्त्री रजः प्राग्वधदीर्घतपसीं नारीणां यद्रजो न तेन तद्व्रतं तासामुपदन्येत कर्हिचित् ॥ २४
स्वभाव एष नारीणां ज्ञेयामूत्रपुरीषवत्।
अत उर्ध्वं न दुष्यन्ति चरेयुश्चैव तद्व्रतम् ॥
अङ्गिरस्मृतिः-२५

(४) रजोगुणः रागद्वेषो रजः स्मृतम् ॥ मनुः १२-२६

**रजकः**— जातिविशेषः।

वस्त्रधावक इति व्यवहारनिर्णये धोबा इति भाषायाम्।
पुल्कसाद् वैश्यकन्यायां जातो रजक उच्यते ॥
औशनसस्मृतिः १८

रजकश्चर्मकारश्च नटो वरुड़ एव च।
कैवर्त्तो मेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः।
इति यमः

मिताक्षरायामापस्तम्वश्च।

**रजकतीर्थम्**— रजकः यत्र वस्त्राणि परिष्करोति जलाशय तत् स्थानं रजकतीर्थम्।

स्नानं रजकतीर्थेषु भोजनं गणिकागृहे इत्यादि ॥

**रजनी**— हरिद्रा।

सावित्रीप्रतिदां कुर्यात् सौवर्णीं वापि मृण्मयीम्।
सार्द्धं सत्यवता साध्वीं फलनैवेद्यदीपकैः।
रजन्या कण्ठसूतैश्च शुभैः कुङ्कुमकेशरैः ॥ इति
निर्णयसिन्धूद्धृते भविष्ये।

**रजस्वलः**— मलिनगात्रः।

रजस्वलो रक्तदन् मलिनगात्रः स्यात् आपस्त
१-२-७-११

रजस्वलास्तु ये रक्तेन शरीरमवलिप्य भोजनादिक मुद्ग्राहयन्ति भूतवरप्रभृतय इति देवपालः ॥
काठकगृ १-४-११

**रजस्वला**— ऋतुकालस्य प्रथमदिनत्रये स्त्री रजस्वला इत्युच्यते ।

रजस्वलाशब्दस्य यद्यपि यौक्तिकोऽर्थः मलिना तथापि उक्तार्थे योगरूढः रजस्वलाधर्मास्तु—

त्रिरात्रं रजस्वलाऽशुचिर्भवति सा नाञ्ज्यान्नाभ्यञ्ज्यान्नाप्सु स्नायादधःशयीत न दिवा स्वप्यान्नाग्निं स्पृशेन्नरज्जुं सृजेन्न दन्तान् धावयेन्न मांसमश्नीयान्न ग्रहान्निरीक्षेत न हसेन्नकिंचिदाचरेन्न धावेदखर्वेण पात्रेण पिबेदञ्जलिना वा पिबेल्लोहतायसेन वा ॥ इति

वसिष्ठः ५-७

मासेनोपचितं रक्तं धमनीभ्यामृतौ पुनः ।
ईषत्कृष्णं विगन्धं च वायुर्योनि मुखान्नुदेत ॥
ततः पुष्पात् क्षणादेव कल्याणध्यायिनी त्र्यहम् ।
मृजालंकाररहिता दर्भसंस्तरशायिनी ।
क्षैरेययावकं स्तोकं कोष्ठशोधनकर्षणम् ॥
पर्णे शरावे हस्ते वा भुञ्जीत ब्रह्मचारिणी ।
इति वाग्भटशरीरस्थाने

**रज्जुदालः**—
**रज्जुदालकः**-
**रज्जुवालः**- } पक्षिविशेषः । काष्ठकुट्टक इति आचारसारे गदाधरः

वृक्षकुट्टक इति विज्ञानेश्वरः ।

कलविङ्कं सकाकोलं कुररं रज्जुदालकम् ॥

इति याज्ञ १-१७४

रज्जुवाल इति हेमाद्रौ पाठः तत्र रज्जुवालः रज्जसदृशदीर्घकेशः पक्षी रज्जुवाल इति पाठे वृक्षकुक्कुटको ज्ञेय इति परिशिष्ट ५८३

**रञ्जकः**— जातिविशेषः ।

नृपायां शूद्रश्चौर्याज्जातो रञ्जक उच्यते ॥
औशनसस्मृतिः १६

**रण्डा**— विधवा स्त्री ।

एकादश्यां विना रण्डा यतिश्च सुमहामते ।
पच्यते ह्यन्धतामिस्रे यावदाभूतसंप्लवम् ॥ इति
निर्णयसिन्धुव्याख्योद्धृतनारदीये

**रतिः**— (१) मनसः परितोषः इति मेधातिथिः ।

तपो वाचं रतिं चैव कामं च क्रोधमेव च ।
सृष्टिं ससर्ज चैवेमां स्रष्टुमिच्छन्निमाः प्रजाः ॥

मनुः १-२५

(२) शृङ्गारचेष्टा ।

दन्तधावनताम्बूलं स्निग्धस्नानमभोजनम् ।
रत्यौषधपरान्नानि श्राद्धकृत सप्त वर्जयेत् ॥

**रथकारः**— (१) जातिविशेषः ।

माहिष्येण करण्यां जातः ।
माहिष्येण करण्यां तु रथकारः प्रजायते ॥

याज्ञ १-९५

ब्राह्मण्यां क्षत्रियाच्चार्य्याद्रथकारः प्रकीर्त्तिः

औशनस्मृतिः-५

(२) रथकार इति वैणस्य नामान्तरम् ।

कर्मणा वेणौ रथकार इति कौटल्यः ३-७

**रथन्तरम्**— (साम) अभित्वा शूर नोनुमः इत्यस्याम् ऋचि रथन्तरमिति गौतमसूत्रवृत्तौ हरदत्तः ।
अभि त्वा नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥
इति मन्त्रः

**रथसप्तमी**— माघशुक्लसप्तमी ।
माघशुक्लसप्तमी रथसप्तमीत्युच्यते इति समयमयूखे ।
लोलार्के रथसप्तम्यां स्नात्वा गङ्गाभिसंगमे ।
सप्तजन्मकृतैः पापैर्मुक्तो भवति तत्क्षणात् ॥
इति काशीखण्डे ।
यस्यां मन्वन्तरस्यादौ रथमाप दिवाकरः ।
माघमासस्य सप्तम्यां सा तु स्याद्रथसप्तमी ॥
इति मात्स्यब्रह्मपुराणयो इतिहेमापरि-२५६
स्कान्दे तु रथारूढ इति पाठः प्रभास २०५-३५
यस्यां तिथौ रथं पूर्वं प्राप देवी दिवाकरः ।
सा तिथिः कथिता विप्रैर्माघे या रथसप्तमी ॥
स्कन्द, माहे, २-५-१२९
तत्र सप्तम्यन्ततिथिपञ्चके क्रमेण एकभक्तनक्ता-याचितोपवासपारणानिविहितानि इति कालमाधवे ।

**रथ्या**— ग्राममध्यम.र्गः, शकटादिगमनयोग्यः ।
रथ्या प्रतोली विशिखा इत्यमरः २-२-३
रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ।
मारुतेनैव शुद्ध्यन्ति पक्वेष्टकचितानि च ॥
याज्ञ १-१९७
दीपोच्छिष्टं तु यत्तैलं रात्रौ रथ्याहृतं च यत् ॥
इत्यभक्ष्यप्रकरणे
रथ्यास्थं पतितं धान्यं दृष्ट्वा यत्नेन वन्दयेत् ।
उद्धृत्य मूर्ध्नि चादद्यात् लक्ष्मीर्नश्यति चान्यथा ॥
मार्कण्डेयपु-३५-२३
रथ्याकर्दमतोयानि नावः शस्य तृणानि च ।
मारुतार्केण शुद्ध्यन्ति पक्वेष्टकचितानि च ॥
पराशरः ७-३६
रथ्यामार्ग इति मित्रमिश्र राजनीतिप्रकाशे-२२७

**रभसः**— अपृष्टवक्ता ।
रभसा अपृष्टवक्तारः भण्ड वन्दिप्रभृतयः इति देवपालः ।
रभसा भासका इति आदित्यदर्शन भाष्ये ।
स्त्रीशूद्रपतितरभसरखस्खलैर्वा न सम्भाषेत ॥
काठकगृ, १-४-१५
आत्र मामलकीमिक्षुं मृद्वीकादधि दाडिमान् ॥

**रम्भा**— कदलीफलम् विदार्यश्चैव रम्भाद्याच्छाद्य प्रयत्नतः ॥ शंखः १४-२२

**रम्भातृतीया**— ज्येष्ठशुक्लतृतीया मतान्तरे मार्गशिर-शुक्लतृतीया रम्भातृतीया ।

**रराटी**— रराटी रज्जुविशेष इति श्रौतपदार्थनिर्वचने ।

उरःस्थलं ज्योतिरनीकमस्य
ग्रीवामहर्वदनं वै जनोऽस्य ।
तपो रराटीं विदुरादिपुंसः
सत्यं तु शीर्षाणि सहस्रशीर्षः श्री ॥ भाग २-१-२८

रविकल्पः— अथातो रविकल्पं व्याख्यास्यामः ।
आयुष्कामस्य वा तेजस्कामस्य वा यशस्कामस्य वा
भूतिकामस्य वा पुत्रकामस्य वा रूपकामस्य वा भवति
इत्यादि अग्निवेश्यगृ, २-४-११

रश्मिः–(१) प्रहरणमिति कुल्लूकः ।
छेदने चैव यन्त्राणां योक्त्ररश्म्योस्तथैव च ।
आक्रन्दे चाप्यपैहीति न दण्डं मनुरब्रवीत् ॥
मनुः ८-२-९२
(२) रश्मिः अश्वबन्धनरज्जुरिति महाभारतव्याख्याने
नीलकण्ठः भीष्म ।
(३) किरणः ।
अष्टौ मासान् यथादित्यस्तोयं हरति रश्मिभिः
तथा हरेत् करं राष्ट्रान्नित्यमर्कव्रतं हि तत् ॥
मनुः ९-३०५

रसः— (१) विषम् ।
यं वा रसस्य वक्तारं विक्रेतारम् इत्यादि कौट ४-४
(२) धातुविशेषः ।
(३) क्षीरघृतादयः ।
आमपात्रे यथा न्यस्तं क्षीरं दधि घृतं मधु ।
विनश्येत् पात्रदौर्बल्यान्न च पात्रं रसा श्च ते ॥
वसिष्ठः ६-३१
रसारसै निमातव्या नत्वेवं लवणं रसैः ।
मनुः १०-९४
(४) मधुराम्लादयो रसाः ।
(५) सम्यक् परिणताहारस्य सारः ।
रसस्य नव विज्ञेया जलस्याञ्जलयो दश, ॥
याज्ञ ३-१०५

रसकल्य— रसकल्याणी व्रतम् ।
माघशुक्लतृतीयाविहितं व्रतं ।
कल्पतरौ व्रतकाण्डे द्रष्टव्यम् ॥ व्रत-६६

रसदुष्टम्— कालस्य दुष्टत्वात् तस्मिन् दिने यदि
द्रव्यान्तरायोगेन अम्लं भवति तदा रसदुष्टम् ।
पर्युषितप्रपानकादिकम् एवं शुक्तादिकं च
रसदुष्टमित्याचारे गदाधरः ।

रसवती— खाद्यविशेषः ।
अर्द्धाढकं सुचिरपर्युषितं च दुग्धं
खण्डस्य षोडशपलानि शशिप्रभस्य ।
सर्पिस्पलं मधुपलं मरिचं द्विकर्षं
शुण्ठ्याः पलार्द्धमथवार्धपलं चतुर्णाम् ॥ १२
श्लक्ष्णे पटे ललनया मृदुपाणिघृष्टां
कर्पूर धूलिधवलीकृत भाण्डसंस्थाम् ।
एतां शुभां रसवतीं प्रकरोति यो वै
कामान् ददामि सकलान् मनुजस्य तस्य ॥
स्कन्दे वै, मार्ग-६-३२

रसाला— शर्करा त्वगेला नागकेशर मधुमरिचमिश्र मनुद्धृत
स्नेहभागं वस्त्रे संघृष्य गालितं गोदधिरसाला ।

तदुक्तमायुर्वेदे ॥

सीता चतुर्जातमधूषणाय

दधिप्रघृष्टं सरसं रसाला ॥ हेमाद्रौ परि-६०२

शिखरिणी सा यथा—

अर्द्धाढ़कं क्वथितपर्य्युषितस्य दध्नः खण्डस्य षोड़श पलानि शशिप्रभस्य ।

सर्पिः पलं मधुपलं मरिचं द्विकर्षं शुण्ठ्याः पलार्द्धमपि-बार्द्धपलं चतुर्णाम् ।

सूक्ष्मे पटे ललनया मृदुपाणिघृष्टा कर्पूरधूलीधवलीकृत भाण्डसंस्था ।

एषा वृकोदरकृता सरसा रसाला आश्वादिता भगवता पुरुषोत्तमेन ॥ इति भविष्ये पूजाप्रकाशोद्धृते २६२

ब्राह्मे—

पूरिकां च रसालां च गोक्षीरं च नियोजयेत् ।

भविष्ये दुर्गापूजार्थम् ।

शाल्योदनं रसालां च पानं वदरजं तथा ।

यः प्रयच्छति दुर्गायै स गच्छति शिवालयम् ॥

पृ-३२०

नित्याचारप्रदीपे रसालेत्यकारान्तशब्दोऽपि दृश्यते । तत्र सूर्य्योदये रसालपानकादीनां भक्ष्याणां फलमिष्यते ॥ इत्यादि-१-५२६

ब्रह्मपुराणेऽपि श्राद्धप्रकरणे ।

पानकं च रसालं च गोक्षीरं च निवेदयेत् ।

यानि चान्यवहार्य्याणि स्वादुस्निग्धानि भो द्विजाः ॥

ब्रह्मपु, २२०-१८२

**रहस्यम्—** (१) उपनिषत् ।

उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः ।

सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥

(२) शास्त्रम् ।

तस्या भर्त्तुरतिचारे उक्तं प्रायश्चित्तं रहस्येषु ॥

वसिष्ठः ५-४

(३) गोपनीयम् ।

विख्यातदोषः कुर्वीत पर्षदोऽनुमतं व्रतम् ।

अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत् ॥

याज्ञ-३-३००

**राका—** पूर्णिमा ।

यदास्तमियात् सूर्यः पूर्णश्चेन्दुरुपागमत् ।

युगपत् सोत्तरा राका तदा भवति पूर्णिमा ॥

राका सम्पूर्णचन्द्रा स्यात् कलोनानुमतिः स्मृताः ।

या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राका ॥

कौशिक, गृ १-१-२१

**राक्षसविवाहः—** हत्वा छित्वा च भुक्त्वा च क्रोशन्तीं रुदतीं गृहात् ।

प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥

मनुः ३-३३

वसिष्ठस्मृतिमतेन अयं क्षात्रविवाहः ।

यां बलेन सहसा प्रमथ्य हरन्ति स क्षात्रः ॥

वसिष्ठः १-३४

रागः – (१) विषयेषु आसक्तिः ।

विद्वद्भि सेवी सद्भिर्नित्यमद्वेषरागिभिः ।

हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥

मनुः २-१

(२) खाद्यविशेषः ।

मुद्गाढक्यादीनि मांसानि वा मूलफलादीनि निष्पाच्य (निष्कास्य) गृहीता रसाः शर्करामध्वादि-द्रव्यसंगेन मधुरीकृता रागाः हेमाद्रिः परि-५८८

रागषाडवचोष्यैश्च त्रिजातकसमन्वितैः ।

दत्तैस्तु मासं प्रीयन्ते श्राद्धेषु पितरो नृणाम् ॥

इति मार्कण्डेययवचनम् हेमाद्रौ परि-५८८

रागाः मुद्गदाड़िममांसाद्या अंशुकगालिताः प्रलेहाः इति कल्पतरौ नियत २८६

रागखाडवः—
रागखाण्ड्वः—
रागपाड़वः— } रागखाड़वा पानविशेषा इति क्वचित्-पाठः

रागखाण्डव इति पाठान्तरम् ।

रागषाड़व इति अपि पाठान्तरं

पराशरमाधवे श्राद्ध-७०५

रागषडवाः पानविशेषा इति

रागखाड़वः चोष्यैश्च त्रिजातकसमन्वितैः ।

दत्तैस्तु मासं प्रीयन्ते श्राद्धेषु पितरौ नृणाम् ॥

इति मार्कण्डेये

तथाम्ललवणोक्त सैर्विविधैरागखाण्ड्वैः रामायण सन्दर-११-१८

पिप्पलीशुण्ठीयुक्तस्तु मुद्गयूपस्तु खाण्डवः ।

रागपाडवतां याति शर्करा सहितस्तु सः ॥

इति नित्याचारप्रदीपोद्धृतसूपकारशास्त्रे ।

रागषाड़वदानेन पौण्डरीकमवाप्नुयात इति तत्रैव विष्णुधर्मे खाण्ड़वषाड़वयोः उच्चारणभेदेन पाठभेद ऐव न तु शब्दभेद इति मन्मतम् प्रायेण उत्तरभारते षकारस्य खकारत्वेनोच्चारणं माध्यन्दिनशाखो-च्चारणानुरोधात ।

रागखाण्डवं शर्करामिश्रितं मधु इति पूजा प्रकाशे-१८

तेन खाण्ड़व षाड़व शब्दौ अभिन्नः एक एव शब्दः ।

खाण्डवोऽपि उच्चारणभेदेन लिपिभेदेन वा भिन्नतां प्राप्तः स एव शब्द इति सम्भाव्यते अपि वा तदर्शकः शब्द इति

रागखाण्ड़वस्वरूपमुक्तं महाभारतटीकायां द्रोण पर्वणि षोड़शराजकीयोपाख्याने चतुर्द्धरैः ।

नूतनाम्रफलक्वाथः सक्षीरधृतनागरः ।

खाण्ड़वः स्यादसौ रागसंयुक्तो रागखाण्ड़वः ॥

इति आचारभूषणे-२९५

वस्तुतस्तु षोड़शरजकीयं शान्तिपर्वणि न तु द्रोणपर्वणीति सुधीभिरवधेयम् ।

रागांशुकः – रागांशुका मुद्गदाड़िममाषाद्या अंशुक-गालिताः प्रलेह्या इत्याचारसारे गदाधरः ।

न पर्युषितमन्यत्र रागांशुक षाड़वदधिगुड़ेत्यादि-

सुमन्तुः ॥

राजजम्बुः— जम्बुविशेषः ।

**राजतरौहिणेसामनी—** इन्द्रं नरो नेमधिता इत्यस्यामृचि गीयते इति हरदत्तः गौतमसू. १-१-१२

मैत्रावरुणिर्वसिष्ठऋषिः इन्द्रो देवता त्रिष्टुप् छन्दः इन्द्रं नरो नेमधिता हवन्ते यत् पार्या युनजते धियस्ताः ।

शूरो नृषाता शवसश्चकान आ गोमतिव्रजे भजात्वं नः । ऋक् म. ७-२७-१

**राजफलम्—** क्षीरिका इति नित्याचारप्रदीपे पृ ६६४ क्षीरकोलि इति तस्य प्रसिद्धः ।

**राजमार्गः—** प्रशस्तमार्गः ।

सर्वेजना सदा येन प्रयान्ति स चतुष्पथः ।
अनिषिद्धा यथाकालं राजमार्गः स उच्यते ॥
इति कात्यायनः ।

अवेलायां यत्र मार्गे राजकीयैश्चंक्रमणं निषिध्यते स राजमार्ग इति स्मृतिचन्द्रिका ।

शुक्रनीतौ च १-२६०

उत्तमो राजमार्गस्तु त्रिशद्धस्तमितो भवेत्-२६०
मध्यमो विंशतिकरो दशपञ्चकरोधमः ।
पण्यमार्गास्तथा चैते पुरग्रामादिषु स्थिताः ॥ २६१
करत्रयात्मिका पद्या वीथिः पञ्चकरात्मिका ।
मार्गे दशकरः प्रोक्तः ग्रामेषु नगरेषु च ॥ २६२
प्राक्पश्चाद् दक्षिणोदक्काम् याममध्यात् प्रकल्पयेत् ।
पुरं दृष्ट्वा राजमार्गान् सुबहून् कल्पयेन् नृपः ॥ २६३
कूर्मपृष्ठा मार्गभूमिः कार्या ग्राम्यैः सुसेतुका ।
कुर्यान्मार्गान् पार्श्वखातान् निर्गमार्थं जलस्य च ।
राजमार्गमुखानि स्युर्गृहाणि सकलान्यपि ।
गृहपृष्ठे दासवीथीं मलनिर्हरणस्थलम् ॥ इति

धनूंषि दशविस्तीर्णः श्रीमान् राजपथः स्मृतः ।
नृवाजि रथनागानामसम्बाधः सुसञ्चरः ॥ इति
वायुपु १-८-११४

**राजमाषः—** झुड्ङ्ग इति प्रसिद्धः ।

राजमाषः झूड्ङ्ग इति दिव्यसिंहमहापात्राः

अयं श्राद्धवर्ज्यद्रव्यविशेषः कोरदूषकशब्दे द्रष्टव्यः । राजमाषा चवली इति प्रसिद्धा इति निर्णयसिन्धौ ।

राजमाषान् मसूरांश्च कोद्रवान् कोरदूषकान् ।
लोहितान् वृक्षनिर्यासान् श्राद्धकर्मणि वर्जयेत् ॥
शंखः १४-२१

राजमाषांश्च चणकान् मसूरान् कोरदूषकान् ।
विप्रुषान् मकटांश्चैव कोद्रवांश्चैव वर्जयेत् ॥
इति श्राद्धप्रकरणे ब्राह्मे-२३०-१६८

**राजवनम्** (१) राज्ञः वनम् ।

(२) श्रेष्ठ नम् ।

**राजवृक्षः—** सुनारिवृक्षः इति प्रसिद्धः यस्य पुष्पाणि सुवर्ण र्णानि फलं च दीर्घं यष्टिसदृशम् ।

राजवृक्षः करवाल इति कान्यकुब्जे प्रसिद्ध इति नरसिंहवाजपेयी ।

राजवृक्षः आरग्वधः मध्यदेशे धनवहेरा इति प्रसिद्ध इति मित्रमिश्रः परिभाषाप्रकाशे ११०

वैद्यकशब्दसिन्धौ तु आरग्वधवृक्षे इति पर्यायमुक्तावली, पियालवृक्ष इति मेदिनी लंकास्थायिवृक्षः (लंकासीजु) इति शब्दचन्द्रिका श्योणाकवृक्ष इति सारकौमुदी ।

गोभिलमते स समिदनर्हः गोभिल गृ-१-५-१५

**राजशाकम्**— पत्रशाकविशेषः ।

वास्तुकशाक इति वैद्यकशब्दसिन्धौ पर्यायमुक्तावली राजनिघण्टुश्च ।

राजशाकः कृष्णसर्षप इति माधवाचार्याः ।

सर्षपाराजशाकाभ्यामिङ्गुदे राजजम्बुभिः ॥

इति श्राद्धदेये मार्कण्डेयपुराणे ।

सर्षपेति दीर्घश्छान्दसः । इति माधवाचार्याः

**राजशासननीता**—(सीमा) राजेच्छया निर्मिता सीमा ।

ध्वजिनी मत्सिनी चैव नैधानी भयवर्जिता ।

राजशासननीता च सीमा पञ्चविधा स्मृता ॥

**राजसर्षपः**— (१) मुद्राविशेषः ।

जालसूर्यमरीचिस्थं त्रसरेणूरजः स्मृतम् ॥

तेऽष्टौ लिक्षा तु तास्तिस्त्रो राजसर्षप उच्यते ॥

याज्ञ १-३६२

(२) राजसर्षप राजिका इति विज्ञानेश्वरः ॥

**राजादनः**— वृक्षविशेषः । यस्य फलं क्षीरकोलि इति प्रसिद्धम् ।

दन्तकाष्ठप्राशस्त्ये तस्योल्लेखः शेलुशब्दे द्रष्टव्यः ॥

**राजिका** – कृष्णसर्षपः ।

राजसर्षपः मिता १-३६२

आसुरी राजिका चेति कथ्यते राजसर्षपः इति

हलायुधः २-५८१

क्षवः क्षुवाभिजननी राजिका कृष्णिकाऽऽसुरी

इत्यमर २-९-१६

पाठात् राजिका कृष्णसर्षप इति ज्ञायते ।

नमो हिरण्यबाहवे इत्यनुवाकसप्तकम् ।

राजिकां कटुतैलाक्तां जुहुयाच्छत्रुनाशनीम् ॥

अग्निपु २६०-५७

**राजीवः**— पद्मवर्णमत्स्यविशेष इति विज्ञानेश्वरः १-१७८

राजीवाः पद्मवर्णमत्स्या इति केचित् राजीभिः रेखाभिः युक्ता इत्यपरे इति हेमाद्रिः परि-५७८

पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः ।

राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्वशः ॥

इति मनुः ५-१६

**राढा**— शोभा इति श्रीमूला ।

राढा युक्तमुपधियुक्तं समुद्गपरिवर्त्तिमंवा विक्रयाधानं वा इति कौटलीये ॥ ९-२-१६

अत्र राढाशब्दस्य राधा इति पाठान्तरं प्रकाशनान्तरे ।

**राता**— कन्याविशेषः ।

राता रतिशीला कन्दुकादिक्रिडाप्रिया वा इति आपस्तम्बगृह्यव्याख्यायाम् । मित्रशब्दो द्रष्टव्यः

**रात्रिचराः** — वागुल्युलूक शरभक्रौञ्चाः शशककच्छपाः ।
लोमासिकाः पिङ्गलिकाः कथिता रात्रिगोचराः ॥

**रात्रिसूक्तम्**— रात्री व्यख्यदायती इत्यष्टौ मन्त्राः
उत्सर्गमयूखः-१४

**रामकः**— वैश्येन ब्राह्मण्यामुत्पन्नो रामको भवतीत्याहु
रिति वसिष्ठः १८-४

**रामठम्**— हिङ्गुः मधुकं रामठं चैव कर्पूरं मरिचं गुडम् ।
श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुषं तथा ।

**रामनवमी**—चैत्रशुक्लनवमी तत्र हि भगवान् दाशरथिः
श्रीरामः संजातः ।
ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ १-८
नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु ।
ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह १-९
प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् ।
कौसल्याऽजनयद्रामं दिव्यलक्षणसंयुतम् ॥
रामायण १-१८-१०

**राशिः**— (१) परिमाणविशेषः द्रोणपर्यायः खारीशब्दे
द्रष्टव्यः ।
(२) गणितविद्या ।
राशिः गणितम् इति शङ्कराचार्याः
छन्दोग्य.उ-७-१-२
ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं
चतुर्थमितिहासं पुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं
दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां
भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्या-
मेतद् भगवोऽध्येमि छा उ, ७ १-२

**राष्ट्रम्**— देशः यः एकस्य राज्ञः शासने वर्त्तते ।
स्वाम्यमात्यौ पुरं राष्ट्रं केशदण्डौ सुहृत्तथा ॥
सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते ॥
मनुः ९-२९४

**राष्ट्रभृत्**— ऋताषाडृतधामाग्निरित्यादयो द्वादशमन्त्राः ।
राष्ट्रभृत इच्छञ्जयाभ्यतानांश्च जानन् ॥
पारस्क गृ १-५-७
अभ्यातानहोमे तु चतुर्गृहीतं जुहोति राष्ट्रभृतस्तु
द्वादशगृहीतेन इति देवपालभाष्ये काठवगृ ३-१-१४

**राष्ट्रिकः**— ग्रामजन इति धर्मकोषे ।
गृहे वै मुषिते राजा चौरग्राहांस्तु दापयेत् ।
आरक्षकान् राष्ट्रिकांश्च यदि चौरो न लभ्यते ।
नारद सं-१६-७८

**रासभः**— खरः ।
अस्य प्रयोगः क्रमेलकशब्दे द्रष्टव्यः ।

**रिक्तातिथिः** — चतुर्थी नवमी चतुर्दशीतिथयः रिक्ताः

**रिक्थम्**— अन्यदीय द्रव्यमन्यस्य क्रयादिव्यतिरेकेण
यत् ।

स्त्रीयं भवति तद्रिक्थमिति विज्ञानेश्वरः २-५१

रिक्थमप्रतिबन्धो दाय इति स एव २-११४

पित्रादीनामभावे प्राप्तमिति हरदत्तः ॥

गौतमधः २-१-३६

स्वामी रिक्थ क्रयसंविभाग परिग्रहाधिगमेषु ॥ इति

**रिक्थी** पुत्रादिः ।

**रिष्टिः**— विघ्नः ।

रिष्टिः विघ्न इति गदाधरभाष्ये पारस्करः ३-१४-१४

तस्य न काचनार्त्तिर्नरिष्टि र्भवति ॥ इति

**रीतिः**— (१) पित्तलम् ।

विज्ञानेश्वरास्तु रीतिकापित्तलयोर्ग्रहणमेकयोनित्वात

इति लेखेन पित्तलात् रीतिं पृथक् मन्यन्ते ।

(२) रीतिः श्रेणिः ।

अनवेक्ष्यमाणाः ग्राममापान्ति रीतिभूताः ॥

पारस्करः ३०-१०-२३

**रीतीभूताः**— श्रेणीबद्धाः ।

रीतीभूता श्रेणीभूताः पङ्क्तिभूता

इति हरिहरः पारस्कर-३-१०-२३

**रुक्मम्**— सुवर्णम् ।

निक्षेपस्यापहरणं नराश्वरजतस्य च ।

भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतम् ॥

मनुः ११-५७

**रुचकम्**— सौवर्चलमिति हेमाद्रिः ।

**रुद्रः**—षडङ्गैकादशै रुद्रैः रुद्रः समभिधीयते ।

रुद्रैस्तथैकादशभिर्महरुद्रः प्रकीर्त्तितः ॥ ३७

एकादशभिरेतैस्तु अतिरुद्रश्च कथ्यते ॥

शङ्खस्मृतिः २-३८

**रुद्रसूक्तम्**— परिनो रुद्रस्य हेतिः इति षड्च इति बौधाः

गृ, प, १-१५-६

**रुद्राः**— एकादश रुद्राः ।

अजैकपादहिर्बुध्नो विरूपाक्षोऽथ रैवतः ।

हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ।

सावित्रश्च जयन्तश्च पिनाकी चापराजितः ॥

एते रुद्राः समाख्याताः एकादश सुरोत्तमा ॥ इति

हेमाद्रौ पैठीनसिः-६३६

अपराजित इत्यन्तं महाभारतमोक्षोपर्वणि २०६

अध्याये समः पाठः ।

आदिपर्वणि तु अजैकपादहिर्बुध्न्यः पिनाकी च

परन्तप ॥ ६८

दहनोऽथेश्वरश्चैव कपाली च विशांपते ।

स्थाणुर्भगश्च भगवान् रुद्रास्तत्रावतस्थिरे ॥

महाभा, आदि १२२-६६

मिताक्षरायां तु—

वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः ।

अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ॥

भुवनाधीश्वरश्चैव कपाली च विशांपतिः।
स्थाणुर्भवश्च भगवान् रुद्रास्त्वेकादश स्मृताः ॥

रुद्रैकादशिकाः— } नमस्ते रुद्र इत्याद्येकादशानुवाका
रुद्रैकादशिनी— } इति गोविन्दस्वामी बौधा ४-६-४

एकादशानां रुद्रानुवाकानां समूहो रुद्रैकादशिनी
इति गौतमधर्मसूत्रपरिशिष्टम् १-१६-१४
एकादशगुणान् वापि रुद्रानावृत्य धर्मवित्।
महद्भ्यः स तु पापेभ्यो मुच्यते नात्र संशयः ॥
२-१६-१६
इति पृथक्प्रदर्शनात् एकादशरुद्रावृत्तिः न रुद्रैका-
दशिनीति ज्ञायते अतिरुद्रशब्दो द्रष्टव्यः ॥

रुमा— लवणाकरः।
यथा रुमायां यत्किंचिद्द्रव्यं प्रविशति तत्सर्वं
लवणमात् सम्पद्यते इति मेधातिथिः ॥
मनुः २-६
रुमा च लवणाकर इति हलायुधः का-१

रुरुः— (१) मृगविशेषः।
रुरुः गौरमृग इति गोभिलस्मृतौ ३-१२२
रुरुर्गौरमृगः प्रोक्त इति।
रुरुः शम्बर इति प्रसिद्धः रुरुः शम्बर इति विज्ञानेश्वरः
बिन्दुमान् मृग इति गौतमीयवृत्तौ हरदत्तः।
गौतमः १-१-१६
बहुशृङ्गो मृग इति कल्पतरुः।
बहुशृङ्गो मृग इति हेमाद्रिः।
रुरुश्चित्रमृग इति प्रसिद्ध इति हरिहरभाष्ये।
पारस्करः २-५-१८
कुलचरमृगविशेष इति वैद्यकशब्दसिंधौ ॥
(२) रुरुः सर्पजातिविशेष इति रौरवाख्यनरकनाम-
व्याख्याने नन्दपण्डितः विष्णुः ४३-४

रुषिता— कुपिता।
अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात्।
सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसंनिधौ।
मनुः ९-८-३
रोषस्वरूपं तु रोषशब्दे द्रष्टव्यम्।

रुहिका— मांसी इति मित्रमिश्रः पूजाप्रकाशे-७३
रुहिकाख्यं कणो दारु भिल्लक चागुरु सितम्।
शंखे जातीफलं श्रीशे धूपानि स्युः प्रियाणि वै ॥
इति वामनपुराणे

रूक्षावाचः— अविद्यमाने दोषे दोषाख्यायिका वाचः
रूक्षावाच इति गोविन्दस्वामी बौधा ६-२०

रूपम्— (१) अर्जनार्थं शर रशोभाकरणमिति नरसिंह
वाजपेयी।
२) दण्डादुपरि नियतग्राह्य द्रव्यम् इति श्रीमूला,
दण्डकर्मसु सर्वेषु रूपमष्टपणं शतम्, कौटल्यः,
३-१७-१५

शातातपरेषु व्याजं च विद्यात्पञ्चपणंशतम् ॥

(१) स यद्येकपुत्रः स्याद् द्वौ भागावात्मनः कुर्याद्द्विपद-चतुष्पदेषु रूपमधिकम् । इतिशंखलिखितयोर्वचने रूपमधिकमिति वस्तु स्वरूपमधिकमिति विवाद-रत्नाकरे । ४.६

रूपदर्शकः— पणपरीक्षकः । कौटल्यः ४-१-४४

रूपदर्शकस्य स्थितां पणयात्रामकोप्यां कोपयतः कोप्यामकोपयतः द्वादशपणो दण्ड इति ॥

रूपाजीवा— गणिका ।

रूपाजीवामन्योपरुद्धां गच्छत इत्यादि, कौट ३-२०-१५

रूपिका —अर्कः इति मयूखे रूपिकायाः पाठभ्रमो नवेति चिन्त्यम् ।

रूप्यम्— रजतम् ।

रूप्यं प्रशस्तम् अमरः ३-३-१६०

रूषिका— अर्कपुष्पम् ।

जवादिकुसुमं माण्डी रूषिका च कुरूण्टकः

अत्र रूपिका इति मयूखे पाठः ।

रेणुः—धूलिकणा ।

न दुष्येत् सन्तता धारा वातोद्धूताश्च रेणवः ।

स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन, ॥

आपस्तम्बस्मृति २-३

अदृष्टाः सन्तता धारा वातोद्धूताश्च रेणवः ।

स्त्रियोवृद्धाश्च बालाश्च न दुष्यन्ति कदाचन ॥

पराशरः ७-३७

रेतस्या ऋक्— पुनर्मा इत्यादयो मन्त्राः ।

दिवा रेतः सिक्त्वा त्रिरपो हृदयंगमाः पिबेद्रेत-स्याभिः बौधा २-१-२८

रेतस्या ऋचः -अथर्व ७-६-६७

"पुनर्मा मैत्विन्द्रियं पुनरायुः पुनर्भगः ।

पुनर्ब्राह्मण मैतु मा पुनर्द्रविण मैतु मा ॥

यन्मेद्य रेतः पृथिवीमस्कान् यदोषधीरप्यद् यदापः:

इदं तत् पुनराददे दीर्घायुत्वाय वर्चसे ।

यन्मे रेतः प्रसिच्य यन्म आजायते पुनः ।

तेन माममृतं कुधि तेन सुप्रजसं कुधि ॥

रेतोधा— (१) ऋत्वादि षोडशाहात पश्चादेव या गर्भिणी सा रेतोधा । इति प्रायश्चित्तेन्दुशेखरे ॥

(२) या त्वादौ दशभिर्वर्षे जीवं तिष्ठति गर्भिणी ।

धारितं तु न रेतो वै रेतोधा सा तथोच्यते ॥

अङ्गिरः स्मृतिः ११२

(३) रेतोधाः कुण्डमाता ।

स्वैरिणी च पुनर्भूश्च रेतोधाः कामचारिणी ।

सर्वभक्ष्या च विज्ञेयाः पञ्चैताः शूद्रयोनयः ॥

इति हारीतः ६४६

इति विवादरत्नाकरेऽपि हारीतः ४५२

रेतोवसिक्तः— मृगमांसाशी सर्वारण्यकः-वानप्रस्थ-विशेषः बौधा ३-३-३-६

रेपः — पापम्, बौधायनः ७-५

रेफा — शोभा तस्मात् स्नातकस्य मुखं रेफायतीत
आपस्त २-६-१४-१३

इति काशीसंस्कृतग्रन्थमाला प्रकाशनपाठः
प्राचीनसंस्करणे तु रेभा इतिपाठः ।।

रेभा — शोभा ।
स्नातकस्य मुखं रेभायतीव ।। आपस्तः
२-६-१४-१३

इतिप्राचीनसंस्करण पाठः ।।
नूतन संस्करणे तु रेफायतीव ' इतिपाठः ।।

रेवा — नर्मदा ।
प्रयागं देविकारेवा संनिहत्या च वारणम् ।
सरस्वती चन्द्रभागा कौशिकी तापिकी तथा ।।
सिन्धुर्गण्डकिका चैव सरयूः कार्णिकादितः ।
एताः कार्मिकादौ स्नाने प्रशस्ता इति निर्णयसिन्धौ ।।

रैत्यम् — पित्तलमयं भाजनम् ।

रैवतम् — रेवतं नः सधमाद इत्यादि ।। ऋक् २-२-३०
भारदण्डानि सामानि गायत्रं रैवतं तथा ।
इति मिताक्षरायां वसिष्ठः ३-३०८

रैवतः — पञ्चमो मनुः ।
स्वारोचिषश्चान्तामश्च तामसो रैवतस्तथा ।
चाक्षुषश्च महातेजा विवस्वत् सुत एव च ।।
मनुः १-६२

रोचनम् — रोचनकर्मयन्त्रम् ।

रोचनः — शुक्लपक्षगत दिवसस्य एकादशमुहूर्तः ।
कृष्णपक्षगतदिवसस्य च एकादश मुहूर्तः
कालमाधवे ३

रोचना — (१) गोरोचना-मनुः ८-२३४
(२) विषम् महाभा, उद् ४०-१०
विषशब्देद्रष्टव्यम् ।।
(३) कुसुमादिना गात्रोज्वलीकरणमिति कल्पकौमुद्यां
बृहस्पतिः ।
अञ्जनं रोचनं वापि गन्धं सुमनसस्तथा ।
व्रतके चोपवासे च नित्यमेव विवर्जयेत् ।।
इति तत्र आदित्यपुराणे ।

रोचमानः — शुक्लपक्षगतदिवसस्य द्वादशमुहूर्तः ।
कृष्णपक्षगतदिवसस्य च द्वादशमुहूर्तः ।। कालमाधवे ।

रोध्रः — गालव इति हेमाद्रिः ।
जातीचम्पकरोध्रांश्च मल्लिका बाणबर्वरीः । ब्रह्मपु ।

रोविन्दम् — संगीतशास्त्रप्रसिद्धः गीतविशेषः ।
संगीतरत्नाकरः ५-५५
याज्ञ ३-११३

रोमबद्धः — कम्बलादिरिति विवादरत्नाकरे पृ ३-१३

रोमबन्धः — यत्र प्रावारादौ रोमाणि बन्धन्ते स रोमबन्धः
इति मिताक्षारायाम् । रोमबद्ध इति पठान्तरम् ।
मिताक्षरा २-१८०

त्रिंशांशो रोमबद्धस्य क्षयः कर्मकृतस्य च ।
रोमबद्धः कम्बलादिरिति विवादरत्नाकरे-३१३

रोषः — क्रोधस्येव कियानपि भेदः । मित्रादिषु प्रतिकूलेषु मनसो वैलोम्यमात्रकार्यकरः रोष इति हरदत्तः ॥
आपस्त १-८-२३-५

रोहिणी (१) गौरवर्णा स्त्री इति हरदत्तः ।
उपव्युषं यावता वा कृष्णां रोहिणीमिति ॥
आपस्त १-३-९-२२

नैव ह्रस्वा न महती न कृष्णा नाति रोहिणी ॥
नीलकुञ्चितकेशी च तया दीव्याम्यहं त्वया ॥ इति महाभारते द्रौपदीप्रस्तावे युधिष्ठिरः । सभा ६५-३२
रोहिणी रक्ता इति मित्रमिश्रः श्राद्धप्रकाशे १७६
प्रदाय रोहिणीं धेनुं सर्वैरेति दुष्कृतम् ॥ इति तत्रैव नारदीये ॥

(२) नववर्षीया कन्या
"अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी ।
सम्वर्त्तः ६६

(३) नक्षत्रविशेषः ।
दिवा वा यदि वा रात्रौ नास्ति चेद् रोहिणी कला ।
रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम् ॥
इतिकालसारे जयन्तिप्रकरणे ।

(४) गौः ।
ददामि ते रोहिणीनां सहस्रं प्रियो हि मे ब्राह्मणो याचमानः न मे मनः कुप्यति याचमाने दत्तं न शोचामि कदाचिदर्थम् ॥ महाभा, वन १९५-५

रोहिणीप्रतिपत् — अलभ्यस्नानयोगविशेषः ।
अनुमत्यामतीतायां प्रतिप द्रोहिणी शशी ।
यदा भवति संयोगः कार्तिके तु विशेषतः ॥
एवं ज्ञात्वा विशेषेण गत्वा श्रीपुरुषोत्तमम् ।
कोटिसंनिहितं पुण्यं स्नात्वा चैव महोदधौ ॥

रौद्रम् — आर्द्रानक्षत्रम् ।
अमावस्या यदा पुष्ये रौद्रऋक्षे पुनर्वसौ ।
द्वादशाब्दां तदा तृप्तिं प्रयान्ति पितरोऽर्चिताः ॥
हेमाद्रिः परिः १७५
प्रकाशितपुराणे तु द्वादशार्द्धमिति पाठः ।
विष्णु पु ३-१४-८

रौमाणम् — कम्बलादि इत्याचारसारे ।

रौरवम् — विष्णुस्मृतौ क्लीबे मनुस्मृतौ पुंसि रौरवस्य निर्देशः कृतः ।

रौरवः — रौरवः तप्तभूमिवर्त्मबहुलात्मकः ॥ इति शूलपाणिः तामिस्रमन्धतामिस्रं महारौरवरौरवौ" मनुः रूरुरिति सर्पावान्तरजातिः तत् प्रचुरं स्थानं रौरवमिति नन्दपण्डितः विष्णु ४३-४
(२) रौरवं शम्बरचर्म ।
कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः ।
वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥
मनुः २-४१

**रौरवयोधा**— सामविशेषः ।

पुनानः सोम धारयाऽपो वसानो अर्षति ।

आरत्नधा योनिमृतस्य सदित्युत्सो देवो हिरण्मयः ।

दुहान ऊधर्दिव्य मधुप्रियं प्रत्नं सधस्थमासदत् ।

आपृच्छ्य धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः ।।

**रौहिणमुहुर्त्तः**— दिवसस्य नवममुहूर्तः ।

आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः ।

विधिज्ञो विधिमास्थाय रौहिणं तु न लंघयेत् ।।

इति कालसारे श्लोकगौतमः ।

## ( ळ )

**लकुचः**— जेउठ इति प्रसिद्धः वृक्षविशेषः । यस्य फलं पक्वं गीतवर्णम्, पत्राणि कुटजपत्राकाराणि, वृक्षस्तु महान् भवति फलशरीरं तु उन्नतावनतप्रायम् । वृक्षात् फलाच्च क्षीरं स्रवति ।

लकुचं बड़हरमिति निर्णयसिन्धौ ।

अस्य फलं मामिकतृप्तिजनकमिति मार्कण्डेयः ।

लाचैः समोचैर्लकुचैस्तथा वै बीजपूरकैः ।। इति निर्णयसन्धौ ।।

**लकुटः**— काष्ठम् लकड़ी इति भाषायाम् ।

लकुट लोष्टसायकपाषाणोत्क्षेपणेन इति मिताक्षरायाम् २-२६८

**लक्षणी**— हस्तादिलक्षणवेदी इति देवपालः ।

लक्षणिना लक्षणानि परीक्षयेत काठकगृ २-२-३

**लक्ष्मणः**— पक्षिविशेषः ।

श्वेतो लोहितो वा येषां मुर्द्धा ते लक्ष्मणा इति हरदत्तः लक्ष्मणा सारसी इति तत्रैव ।

क्रुञ्च क्रौञ्च वाघ्रणिस लक्ष्मणवर्जमित्यापस्तम्बः । १-५-१७-३१

**लगुडः**— दण्ड ।

स्कन्धेनादाय मुसलं लगुड़ं वापि खादिरम् ।

शक्तिं चोभयतस्तीक्ष्णमायसं दण्ड़मेव वा ।।

मनुः ८-३१५

स्त्रीसहस्राण्यनेकानि ह्यनाथानि महामुने ।

यततो मम नीतानि दस्युभिर्लगुड़ायुधैः ।।

इति व्यासं प्रति अर्जुनवाक्यम् । ब्रह्म पु २१२-११

**लग्नकः**— प्रतिभूः ।

खादको वित्तहीनः स्याल्लग्नको वित्तवान् यदि ।

मूलं तस्य भवेद्देयं न वृद्धिं दातुमर्हति ।।

इति मिताक्षरायाम् । २-५४

दानोपस्थानविश्वासविवादशपथाय च ।

लग्नकं दापयेद्देयं यथायोगं विपर्यये ।।

इतिकात्यायनः विवादरत्नाकरे ४१ ।

**लघु**— (१) उच्छिष्टान्नवाष्पादि ।

रथ्यागतमविज्ञातं दासवर्गेण संस्कृतम् ।

वाक्प्रशस्तं चिरातीत मनेकान्तरितं लघुः ।।

ब्रह्मपु २२१-१२१

ब्रह्मपुराणे प्राक्प्रशस्तमिति पाठः ।

आचारासारदौ वाक्प्रशस्तमिति ।

एतदेव संगच्छते

त्रीणि देवाः पवित्राणि ब्रह्मणानामकल्पयन् ।

अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥

मनुः ५-१२७

लघु उच्छिष्टान्नबाष्पं तत्स्पृष्टमारुतास्पृश्याग्निधूमादि ।

लघु उच्छिष्टान्नमिति नित्याचारप्रदीपे-१३३८

(२) अगुरु इति हेमाद्रौ व्रतखण्डे । तच्च कृष्णागुरू

कृष्णागुरूणि शीघ्रे च लघु क्लीबेऽगुरौ त्रिषु ।

इति रभसनिर्देशात् ॥

(३) पञ्चहस्त रिमाणः ।

लघुः पञ्चकरात्मकः इति शुक्रनीतौ १-१६८

(४) त्वरितम्

इत्युक्त च्यवनेनाथ सुकन्या तावुवाच वै ।

एवं देवौ भवद्भ्यां यत् प्रोक्तं तत् क्रियतां लघु ॥

स्कन्द प्रभास २८१-१५

लङ्घनम्— (१) उपवासः ।

न जीर्यत्यौषधं यस्माज्ज्वरार्त्तस्य विनाग्निना ।

तस्मान्न दद्याद् भेषज्यं लंघनं तु प्रयोजयेत् ॥

अभिलषितार्थचिन्तामणिः १-१-१४७

(२) गमनम् ।

प्रसूतो यश्च शूद्रायां येनागम्याच लंघिता ।

सप्तपत्रात् प्रमुच्येतो विधिनैतेन तावुभौ ॥

बौधा ४-६-६-६-६

लता— लतादीर्घयायिन्यो द्राक्षातिमुक्तादय

इतिमिताक्षरायाम् । २-२२६

लता वल्य इति अपरार्कः ॥

लप्सिका— मोहनभोग इति वैद्यकशब्दसिन्धौ

वैद्यनिघण्टुः

लम्भनम्— उन्नयनम्, तर्कणमिति यावत् ।

अ वन्दं त्वतः सत्यं शपथेनापि लम्भयेत् ॥

मनुः ८-१०६

लवः— (१) लोम तज्जातवस्तु च ।

लवो मेषौर्णा चमरीकेशादिरिति विज्ञ नेश्वरः २-३६

धान्ये सदे लवे वाह्ये नातिक्रामति पञ्चताम् ।

मनुः ८-१५१

(२) कालावयवविशेषः ।

(३) धान्यादिच्छेदनम् ।

कुसीदवृद्धि द्वैगुण्यं नात्येति सकृदाहृता ।

धान्ये सदे लवे वाह्ये नातिक्रामति पञ्चताम् ।

मनुः ८-१५१

लवनम्— क्षेत्रम् ।

लूयते अस्मिन् इति व्युत्पत्या लवनं क्षेत्रमिति नरसिंह-

वाजपेयी ।

तत्र हारीतः ।

"अयोनि कण्डन गोस्थान धान्यकरणं

लवनम् इति पञ्च उच्छ्वस्थानानि ।"

**लवली**— नरकोलि इति प्रसिद्धमामलकी सदृशमम्लरसा-
त्मकं फलम् ।
कदली लवलीधात्रीफलान्यगुड़मैक्षवम् ।
अतैलपक्वं मुनयो हविष्याणि प्रचक्षते ॥
इति कालसारोद्धृतभविष्योत्तरे

**लाक्षा**— (१) लाख इति भाषाप्रसिद्धा ।
सद्यः पतति मांसेन लाक्षया लवणेन च ॥
वसिष्ठः २-२७ मनुः १०-९२
(२) अलक्तः ।
पुष्पलाक्षामञ्जिष्ठारक्तं गुरुपरिकर्मयत्नोपचार्यं जात्यं
वासः सप्तरात्रिकम् अत्र लाक्षा अलक्त इति श्रीमूला
कौट-४-१

**लाङ्गलयोजनम्**— हलप्रवर्त्तनम् इति गदाधरभाष्ये
पारस्करः २-१२-१

**लाङ्गली**— नारिकेलफलम् ।
लाङ्गली कलिहारीति प्रसिद्धा इति मयूखे नीलकण्ठः
नालिकेरस्तु लाङ्गली इत्यमरः २-४-१६८

**लाजाः**— भृष्टव्रीहयः लाजाः ।
भृष्टव्रीह्यो लाजा इति महीधरः ॥ शु, यजुः १९-१
भृष्टधान्यं लाजा हलायुधकोषे का-२
अक्षतास्तु यवाः प्रोक्ता भृष्टा धाना भवन्ति ते ।
भृष्टास्तु व्रीहयो लाजा घटः खाण्डिक उच्यते ॥
इति कात्यायनः २८-१
धर्मशास्त्रसंग्रहे-पृ-४९१

अकारान्तपुंलिङ्गबहुवचनोऽयं शब्दः लाजाः पुंभूम्नि
चाक्षताः अमरः २-९-४७
कुमार्या भ्राता शमीपलाशमिश्रांल्लाजानञ्जलिनाञ्जला
वावपति ॥ पारस्करः १-६-१
क्वचिदाकारान्तस्त्रीलिङ्गरूपेणाप्यस्य व्यवहारो लक्ष्यते
यथा धानलाजे मधुयुतेसक्तूं छर्करया सह ।
दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटविसकेवुकान् ॥
शंखस्मृतिः १४-११
लाजः स्यादार्द्रतण्डुले नपुंसकमुशीरेऽथ स्त्रियां
पुंभूम्नि चाक्षते ॥ इति मेदिनी

**लाजोल्लापिकाः**— उशीरपरिमलयुक्तः ।
तत्र च स्थूणभवनं सुधामृत्तिकलेपनम् ।
लाजोल्लापिका धूमाढ्यसुच्यप्राकारतोरणम् ॥
महाभा, उद् १९१-२१
उशीरे लाजामुद्दिष्टम् इति विश्वः ।

**लाभः**— (१) उदयवृद्धिकलादिपर्यायः सुध इति
भाषाप्रसिद्धः ।
न वृद्धिः स्त्रीधने लाभे निक्षेपे च तथा स्थिते ।
संदिग्धे प्रातिभाव्ये च यदि न स्यात् स्वयंकृता ॥
विवादरत्नाकरे सम्वर्त्तः ।
(२) क्रयविक्रयादिजन्यो लाभः वणिग् लाभं न चा-
प्नोति याज्ञ-१-२७६

**लाला**— मुखादिनिर्गतं लाल इति प्रसिद्धं जलम् ।
निजलालासमायोगात् कोशं वा कोशकारकः ॥
याज्ञ ३-१४७

लावकः— सजातीयैः सह कलहकारीपक्षिविशेषः इति स्मृतिचन्द्रिका २४८

लासिका— मुखस्रावः (लाला) इति वैद्यकशब्दसिन्धौ।

लिकुचः— लकुचशब्दस्य पाठभेदः।

लिकुचुः— जम्भीरफलतुल्यखर्वफलवान् गुल्मविशेष इति हेमाद्रिः।

अयं लिचु इति प्रसिद्धफलवृक्षो भवितुमर्हति।

लिक्षा— (१) अष्टौ त्रसरेणवः।

जालसूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम्।
तेष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते॥

याज्ञ १-३६२

(२) लिक्षा स्वेदजं यूकाण्डम् इति विज्ञानेश्वरः १-३६२

यूकाडिम्बमिति मन्वर्थविवृतौ ८-१३३

सा च क्षुद्रकेशकीट विशेषः लिख इति प्रसिद्धः।

अस्योदाहरणं तु यूकाशब्दे द्रष्टव्यम्॥

लिखितम्— व्यवहारसिद्धये यः क्रयविक्रयाद्यर्थं लेखः।

राजकीयं जानपदं लिखितं द्विविधं स्मृतम्।

इति सरस्वतीविलासे संग्रहकारः।

राजकीयं तु शासनादिभेदेन पञ्चविधम्।

लिङ्गस्थः—
लिङ्गी— } ब्रह्मचारी।

न साक्षी नृपतिः कार्यो न कारुककुशीलवौ।
न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः

मनुः ८-६५

अहिंसा सत्यवादश्च सत्यं शौचं दया क्षमा।
वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते॥

पुलस्त्यः ८२

लिमा—
लिमिका— } मुहूर्तार्द्धरूपस्य दण्डस्य षष्टितमो भागः।

लुक्— कुत्सितजीवविशेषः।

या ब्राह्मणी सुरापी सा अप्सु लुग् भवति शुक्तिका वा इति वसिष्ठः २१-४

लुञ्चनम्— बलादाकर्षणम्।

श्मश्रूणां लुञ्चनं कृतम् स्कन्दमाहे-५-२

लुण्ठनम्— बलादाकर्षणम्।

पादेकेशांशुककरलुण्ठने दशपणान् दण्ड्य इति विष्णुस्मृतिः ५-६५३

लुण्ठनं बलादाहरणमिति राजनीतिप्रकाशे-३०३

लुण्ठनं ग्रमघातश्च शस्यघातं तथैव च इति तत्र विष्णुधर्मोत्तरे।

लुण्ठनशुक्तिः— लुङ कुत्सितद्रव्यविशेषः।

लुण्ठनषष्ठी— आरण्यषष्ठी द्रष्टव्या।

लुप्तसम्वत्सरः— लुप्तसम्वत्सरस्वरूपं यथा।

अतिचारगतो जीवो नेति चेत्पूर्वमन्दिरम्।
लुप्तसम्वत्सरो ज्ञेयः सर्वकर्मसु गर्हितः॥

इति कालसारे शतानन्दः ।

मासान् दशैकादश वा प्रभुज्य राशेर्यदा राशिमुपैति जीवः भुङ्क्ते न पूर्वे न पुनस्तथापि न लुप्तसम्वत्तर माहुरार्य्याः ॥ इति संस्काररत्नमाला-१-४६६

**लूता**— ऊर्णनाभः ।

लूताहिसरनां च तिरश्चां चाम्बुचारिणाम् ।
हिंस्राणां च पिशाचानां स्तेनो विप्रः सहस्रशः ॥

मनुः १२-५७

**लेख्यम्**— देशाचारयुतं वर्षमासपक्षाहवृद्धिमत् ।

ऋणिसाक्षिलेखकानां हस्ताङ्कं लेख्यमुच्यते ।
इति व्यवहारमाधवे बृहस्पतिः ॥
भागदानक्रयाधान् सम्विद्दास ऋणादिभिः ।
सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम् ॥

**लेपः**—(१) हस्तादिषु पिच्छिलद्रव्यादेरंशतो योगः ।

यावन्नापैत्यमेध्याक्ताद् गन्धो लेपश्च तत्कृतः ।
तावन्मृद्वारि चादेयं सर्वासु द्रव्यशुद्धिषु ॥

मनुः ५-१२६

(२) पिण्डदानकाले पिण्डदानान्तरं दर्भमूले प्रमार्जनीयश्चान्नरसलेपः ।

**लेपभाजः**— वृद्धप्रपितामहाद्यास्त्रयः ।

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ॥
पिण्डदः सप्तमस्तेषां सपिण्ड्यं साप्तपौरुषम् ॥
इति मत्स्यपुराणे

**लेपिका**— पक्वान्नविशेषः इति कल्पतरौ ।

लेपिकाभिर्विचित्राभिः खजात्युक्तैश्च पानकैः ।
इति तत्र ब्रह्मपुराणे

**लेलिहानः**— पुण्यक्षेत्रविशेषः ।

**लेशः**— क्षुद्रकालावयवविशेषः मुहूर्त्तस्य पञ्चदशांशः ।
मुहूर्त्तशब्दे द्रष्टव्यः ।

**लेह्यम्**— रसनापरिस्पन्दनमात्ररसनीयं वस्तु इति श्राद्धकल्पलतायाम्-६१

**लोकयात्रा**— लोकाचारः लोकव्यवहारश्च ।

एषोदिता लोकयात्रा नित्यं स्त्रीपुंसयोः शुभा ॥

मनुः ९-२५

निवर्त्तेरंश्च तस्मात्तु सम्भाषण सहासने ।
दायाद्यस्य प्रदानं च यात्रा चैव हि लौकिकी ॥

मनुः ११-१८४

**लोकयात्रिकः**— लोकयात्रिकाः सुहृद इति हरिहरभाष्ये । पारस्करः ३-१०-३२

**लोकवृत्तम्**— अल्पसत्त्वः प्राकृतो जनः येन प्रकारेण त्वं विष्णुः त्वं ब्रह्मा, जय जीवेति तथाविचित्र परिहासकथाभिः वर्त्तते तत् लोकवृत्तमिति मेधातिथिः ।

**लोकायतम्**—न्यायशास्त्रम् । तच्च ब्रह्मगार्ग्योक्तम् श्रीमूला-१०१

लोचः— फलविशेषः आरू शब्दे द्रष्टव्यः

लोचिका—लुचि इति ख्याते खाद्यद्रव्ये इति वैद्यकशब्दसिन्धौ पाकराजेश्वरः।

लोठनी— अष्टाङ्गप्रणाम इति विधानपारिजाते ३-७५१
यानानि तु परित्यज्य भाव्यं पादचरैर्नरैः
लुठित्वा लोठनीं तत्र तीर्थे गच्छेत्ततो बुधः इति॥

लोतकम्— (१) लूतासम्पर्कजः स्फोटभेद इति निर्णयसिन्धुव्याख्याने कृष्णभट्टः।
लोतके च समुत्पन्ने ज्वरकर्माणि मैथुने।
धूमोद्गारे तथा वान्तौ नित्यकर्माणि संत्यजेत्॥
इति तत्र कालिकापुराणे।
(२) अश्रु।

लोपिका— खाद्यविशेषः।
तुन्दिलो मध्योन्नतः पुरोडाशाकृतिस्तण्डुलपिष्टादिपक्वः किलाटलोपिकादिर्वा इति तुण्डिलशब्दव्याख्याने
देवपालः ११५-१६-४
लोपिका अपमाल्व इति प्रसिद्धा इति
नित्याचारप्रदीपे वाजपेयिनः १-६६६
स्वस्तिका लोपिका दुग्धग्रीवेष्टक किलाटिका॥
इति भविष्ये देवदेये।
लोपिका पक्वान्नविशेषः इति कल्पतरुरत्नाकरे-४२३
लोपिका लाञ्चिकाशब्दौ पाठभेदेनागता पृथक्शब्दो वेति चिन्त्यम्।

लोप्त्रम्— चोरितं धनम्।
अपहृतद्रव्यमिति विश्वरूपः।
अपहृत द्रव्यैकदेश इति अपरार्कः।
होढा इति विज्ञानेश्वरः।
लुप्यते इति लोप्त्रं चौर्यधनमिति विद्वांसः॥
चौर्यप्राप्तं वस्तु इति व्यवहारप्रकाशे।
केशाकेशिग्रहणात् पारदारिकः उलकाहस्तोऽग्निदः
शस्त्रपाणिर्घातिकोलोप्त्रहस्तश्चोरः इति शंखलिखितौ
व्यवहारप्रकाशे-१६८

लोभः— अन्यायेन परद्रव्यादित्सा लोभ इति गौतमसूत्रव्याख्याने हरदत्तः।
दानं कर्त्तव्यम् २४ तदसहिष्णुता लोभ इति
बार्हस्पत्यार्थशास्त्रे १-२५
लोभः परद्रव्येप्सा इति श्रीशङ्कराचार्य्याः आपस्तम्बविवरणे।
धर्मव्ययस्यापि रोधमिति हरदत्तः। आपस्त १-८-२३-५

लोभनम्— आकुलीकरणम् वञ्चनम्।
सांप्रतं मद्गृहे सोऽथ लोभनायागमिष्यति।
स च कृत्रिमवेषेण निषेद्धव्यस्त्वया हि सः॥
स्कन्द नागर १५८-६

लोहम्— (१) सुवर्णादिधातु।
वस्तून्योषधयः स्नेहा रसलोहमृदो जलम्।
इति भागवतव्याख्याने तत्र लोहानि सुवर्णादीनि इति
श्रीधरस्वामी।
तथा ५ व्ययमद्रव्यनिरूपणे नारदश्च।

वासः कौशेयवर्जं च गोवर्जं पशवस्तथा ।

हिरण्यवर्जं लोहं च मध्यं व्रीहियवादपि

इति विवादव्यारे नारदः ॥

(२) लोहधातुः ।

अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।

तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥

मनुः ६-३२१

(३) ताम्रधातु ।

लोहेन ताम्रेण परिष्कृतमयोमयमेवक्षुरम् इति

गदाधरहरिहरौ पारस्करः २-१-११

**लोहः** लोहः कृष्णच्छागः सर्वरक्तश्चेति मेधातिथिः ।

रक्तच्छाग इति विज्ञानेश्वरः १-२५०

लोहितवर्णश्छागः लोहस्तु परो भवति अप्यत्र

तूपरः कृष्णसारङ्गो लोहितसारङ्गो वेति चमकेषु

श्यामं च मे लोहं च मे इति हरदत्तः ।

कृष्णश्छाग इति हेमाद्रिः ।

लोहपृष्ठनामा शकुनिरित्यन्ये इति मयूखकारः ॥

**लोहक्षुरः**— ताम्रपरिष्कृतः आयसः क्षुर इति हरिहर-

गदाधरौ पारस्कर २-१-११

**लोहाभिमारिकंकर्म**— शस्त्रास्त्रपूजा ।

जयाभिलाषो नृपतिः प्रतिपत्प्रभृति क्रमात् ।

लोहाभिसारिकं कर्म कारयेद् यावदष्टमीम् ॥

लोहाभिसारः शस्त्राणां नीराजनाकिम् इति

नीलकण्ठ महाभा, उद् १६०-६३

लोहाभिसारो निर्वृत्तः कुरुक्षेत्रमकर्दमम् ।

पुष्टास्तेऽश्वा भृता योधाः श्वो युध्यस्व सकेशवः ॥

इति दुर्योधनवाक्यम्

**लोहितायसम्**— ताम्रम् ।

नाञ्जलिना पिबेत् लोहितायसेन वा इति वसिष्ठः १-७

**लौकिकाग्निः**— आवसथ्याग्निः इति कल्पतरुः ।

**लौहचारकः**— नरकविशेषः नरकशब्दे द्रष्टव्यः चारक

इति कारागृहम् तच्च लौहनिर्मितम् ।

**लौहामिषम्**— लोहः कृष्णच्छागः तदामिषमिति

विज्ञानेश्वरः १-२६०

**लौहित्यः**— ब्रह्मपुत्रनदः ।

तत्र स्नानमन्त्रो यथा ।

ब्रह्मपुत्र महाभाग शन्तनोः कुलवर्द्धन ।

अमोघगर्भसम्भूतपापं लौहित्य मे हर ॥ इति

## ( व )

**वंशः**— (१) संघः ।

वंशः पुंसि कुले वेणौ पृष्ठावयववर्गयोः ॥ इति मेदिनी

(२) वंशः गृहमूर्द्धन्य दीर्घकाष्ठम् इति कल्पतरुः ॥

नियतकाल-३३०

**वंक्षणः**— जघनोरुसन्धिः ।

वंक्षणौ जघनोरुसन्धी इति मिताक्षरायाम्-१-८६

**वञ्चकः**— प्रतारकः मनुः ९-२५८

यः कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये ।
शपथैः स विशोध्यः स्यात् सर्ववादेष्वयं विधिः ॥
इति बृहस्पतिः व्यवहारमालायाम् ॥ ४५

**वज्रम्**— (१) क्षीरादिना वर्त्तनम् ।
शृङ्गदन्तास्थिभङ्गे वा चर्मनिर्मोचनेऽपि वा ।
दशरात्रं पिवेद् वज्रं स्वस्थाऽपि यदि गौर्भवेत् ।
इत्यङ्गिराः

अत्र वज्रं क्षीरादिवर्त्तनमिति विज्ञानेश्वरः-३-२६४
तत्तु —
गव्यस्य पयसोऽलाभे गव्यमेव भवेद्दधि ।
दध्यभावे भवेत्तक्रं तक्राभावे तु यावकम् ॥ ५
एषामन्यतमं यच्चाप्युपपद्येत तत् पिवेत् ।
गोमूत्रेण तु संयुक्तं यवकं तत् पिवेद् द्विजः ॥ ६
एतत्तु विहितं पुण्यं कृच्छ्रमङ्गिरसा स्वयम् ।
प्रणवात्तु समारम्भो नाम्ना वज्रमिति स्मृतम् ॥
आङ्गिरसस्मृतिः १२-७

गोमूत्रेण तु सम्मिश्रं यावकं घृतपाचितम् ।
एतद् वज्रमिति प्रोक्तं भगवानत्रिरब्रवीत् ॥
अत्रिस्मृतिः १६३

(२) हीरकम् मनुः ११-५७
कम्बलाजिनाश्वपण्यवर्जाः शङ्खवज्रमणिमुक्तासुवर्णपण्याश्च प्रभूततरा दक्षिणापथे इति कौट ७-१२
(३) स्फुयः ।

**वज्रकन्दः**— आरण्यसूरण इति श्राद्धमयूखे ।

**वज्रलेपः**— आमतिन्दुकमामं कपित्थकं पुष्पमपि च शाल्मल्याः ।
वीजानि शल्लकीनां धन्वनल्लो वचाचेति ॥ १
एतैः सलिलद्रोणः क्वाथयितव्योऽष्टभागशेषश्च ।
अवतार्य्योऽस्य च कल्को द्रव्यै रेतैः समनुयोजयः ॥ २
श्रीवासकरसगुग्गुलु भल्लातककुन्दुरुक सर्जरसैः ।
अतसीविल्वैश्च युतः कल्कोऽयं वज्रलेपाख्यः ॥ ३
प्रासाद हर्म्यवलभीलिङ्गप्रतिमासु कुड्यकूपेषु ।
संतप्तो दातव्यो वर्षसहस्रायुत स्थायी ॥ ४
लाक्षाकुन्दुरुगुग्गुलुगृहधूमकपित्थविल्वमध्यानि ।
नागवलाफलतिन्दुकमदनफलमधूकमञ्जिष्ठाः ॥ ५
सर्जरसरसामलकानि चेतिकल्कः कृतो द्वितीयोयम् ।
वज्राख्यः प्रथमगुणैरयमपि तेष्वेव कार्य्येषु ॥ ६
इत्यादि राजधर्मकौस्तुभे पृ-५३

**वञ्जुलः**— अशोकः हेमाद्रौ श्राद्धकल्पे-६८२

**वञ्जुली**— वैष्णवैकादशीविशेषः ।
द्वादश्येव विवर्द्धेत न चैवैकादशी यदा ।
वञ्जुलीति भृगुश्रेष्ठ कथिता पापनाशिनी ॥

**वटकः**— (१) माषपिष्टविकारः वडि इति भाषाप्रसिद्धः ।
वटकाः माषपिष्टमयास्तैलपक्वाः स्तोकतया कृताः प्रसिद्धा इति स्मृतिचन्द्रिका श्राद्ध २२५
(२) घृतादिपक्वाः वड़ा इति वरा इति प्रसिद्धाः ॥
अपूपाश्च करम्भाश्च धानावटकसक्तवः ।
शाकंमांसमपूपं च सूपं कसरमेव च ॥

इति यमः कल्पतरौ नियत-२६२

**वटपैतृकीः**— सावित्री अमावास्या।

अत्र वटपदेन व्रतं लक्ष्यते पैतृकी पदेन च अमावास्या।
तेन वटपैतृकीपदंसावित्रीव्रतं बोधयति।
कृष्णाष्टमी बृहत्तुल्या सावित्री वटपैतृकी ॥
अनङ्गत्रयोदशी रम्भा कर्त्तव्या पूर्वसंयुता।
वटमूले व्रतविधानमुक्तं निर्णयसिन्धौ भविष्ये ॥
अमायां च तथा ज्येष्ठे वटमूले महासती।
त्रिरात्रोपोषिता नारी विधिनानेन पूजयेत् ॥ इति
तेन वटपैतृकी इति पदं सावित्रीपदस्य विशेषणम्।
वटशब्देन व्रतं पैतृकीशब्देन अमावस्या तथा च ।
सावित्रीव्रतामावस्या इति कालादर्शे इति कालसारे ॥
१२३

**वड़वा**— (१) दासी ।

वड़वा गृहदासीति विज्ञानेश्वरः २-१८२
(२) वेश्या ।
व्याधिता सश्रमा व्यग्रा राजधर्मपरायणा।
आमन्त्रिता तु नागच्छेदवाच्या वड़वा स्मृता ॥
वड़वात्र पण्यस्त्री इति चण्डेश्वरः ॥ विवादरत्नाकरः-१६६

**वडवाहृतः** – दासविशेष.।

वड़वा गृहदासी तथा आहृतः तल्लोभेन तामुद्वाह्यः
दासत्वेन प्रविष्टो दासविशेषः मिताक्षरा २-१८२

**वड्रम्**— विस्तीर्णम्।

वड्रोरुपिणुलमित्यमरः ३-१-६१

अस्मात् शब्दात् वड़ वडे वड़ा, वड़ि, इत्यादयो
देशजशब्दाः अपभ्रष्टाः ज्ञातव्याः।

**वणिक्पथः**— वाणिज्यम्।

वाणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥
मनुः १-९०
पृथगायव्ययाधानं कुसीदं च परस्परम्।
वणिक्पथं च ये कुर्युर्विभक्तास्तेन संशयः ॥
इति व्यवहारमयूखे बृहस्पतिः

**वणिज्या**— (१) वाणिज्यम् ।

कृषिर्वणिज्या तद्वच्च तृतीयं पशुपालनम्।
विद्या ह्येका महाभागवार्त्ता वृत्तित्रयाश्रया ॥
विष्णुपु-५-१० २८
(२) वाणिज्यलाभः।
वणिज्या वाणिज्यलाभ इति विज्ञानेश्वरः १-२६२

**वणेटः**— विकलबालधिः छिन्नलाङ्गुल इत्यर्थः।

काणखोरकूटवणेटा मध्यमस्यानेकाश्चेत् ॥
गौतम ध, ३-१०-६

**वण्ठः**— जातिविशेषः। बाउरि इति प्रसिद्धः

वण्ठस्य वृक्षारोहणमारामरेवाच इति पण्डितसर्वस्वे।

**वण्डः**— विकृतलाङ्गुलः इति दायभागे जीमूतवाहनः।

वणेट इति वण्ठ इति च अन्यत्र पाठः।
काणखोरकूट वण्डा इति गौतम ध ३-१०-६
वण्डो भग्नपृष्ठ इति त्रिकाण्ड मण्डनव्याख्यायाम् ११५

कूट कर्णस्तथा काणः खण्डोवण्डस्त्वपन्नदन् ।
श्रोणःसप्तरायंश्चेति न स्यात् प्रतिनिधिः पशोः २-६१

वत्सकम्— कुटजफलमिति श्राद्धमयूखे नीलकण्ठः ।
एर्वारुशब्दोद्रष्टव्यः ।

वत्सद्वादशी— कार्त्तिककृष्णद्वादशी ।

वदान्यः— दानशीलः ।
बहुप्रदानशील इति हेमाद्रिः परि-७६८
श्रोत्रियस्य कदर्य्यस्य वदान्यस्य च वार्धुषेः ।
मीमांसित्वे भयं देवाः सममन्नमकल्पयन् ॥

वध्रः— (१) वध्रः चर्मपट्टिका इति मिताक्षरायां
विज्ञानेश्वरः २-१९९
अक्षवध्रशलाकाद्यैर्देवनं जिह्मकारितम् ॥
इति नारदः
काक्रिण्यो वध्रिकाश्चैव शलाका मौर्य एव च ।
अक्षाः सब जाः कुहकाः द्यूतोपकरणानि षट् ॥
इत्यपरार्के मनुः (उपलब्धमनुस्मृतो नास्ति)
वध्रश्चर्मादिवलयंवध इत्यपरार्कः ॥
(२) वध्रः नपुंसकविशेष इति नारदसंहितायाम् ॥
१३-१२
वध्रः छिन्नमुष्क इति मित्रमिश्रः ।
संस्कारप्रकाशे-७५८
वध्रः छिन्नमुष्कः नपुंसकविशेष इति माधवाचार्य्याः ॥
परा-२-१५
(३) वध्रः शारीरधातुः ।

तथा विष्णुर्बलिश्चापि सप्तवध्रेषु पुष्टये ।
प्रतिगर्भबलिः कार्यः सीमन्तश्च प्रशस्यते ॥ आश्वलायनः
अत्र सप्त वध्राः सप्तधातव इति संस्कारप्रकाशे-१७९

वध्रिका— चर्मपट्टिका ।

वध्री— चर्मरज्जुः ।

वनमाला— आपादलम्बिनी माला इति नीलकण्ठः ।
तस्य तैः पुरुषव्याघ्रैर्वनमालाधरैर्बलम् ।
अशोभत यथा मत्तैर्वनं प्रक्रीडितैर्गजैः ॥
महाभा, उद् १६-१८

वनस्पतिः— विनापुष्पं फलवान् वृक्षः ।
अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः ॥
पुष्पिताः फलिनश्चैव वृक्षास्तूभयतः स्मृताः ।
मनुः-१-४७

वदा — वृक्षे विजातीयप्ररोहः ।
लोके यत् मलांग इत्युच्यते तदेव भवितु मर्हति ॥

वन्दिः— स्तावकः (मागधः)

वन्दी— स्तावकः ।
वन्दिनः स्तावका इति मेधातिथिलक्ष्मीधरौ ॥
तृतीयायां तु वन्दिनः इति कल्पतरौ मनुः ॥
भिक्षुकावन्दिनश्चैव दीक्षिताः कारवस्तथा ।
सम्भाषणं सह स्त्रीभिः कुर्युरप्रतिवारिताः ॥
मनुः ८-३६०
वन्दीजातिविशेषः =

क्षत्रियेण कृष्णायां जातः इति व्यवहारकल्पतरौ ॥

८१९

कृष्णा-शूद्रा

**वन्दीकरणम्**= निरोधनम् ।

उपरागो वन्दीकरणमिति विष्णुस्मृतव्याख्यायां

नन्दपण्डितः विष्णुस्मृतिः ६८-४

**वपनम्**= (१) मुण्डनम् सर्वेषां शिरः केशानां कर्त्तनम् ।

श्मश्रूणां च ॥

वपनं मेखला दण्डो भैक्षाचर्याव्रतानि च ।

निवर्त्तन्ते द्विजातीनां पुनः संस्काररकर्मणि ॥

(२) केशादीनां कर्त्तनम् ।

केशश्मश्रुनखादीनां कृत्वा तु वपनं वने ।

ब्रह्मचर्यं चरन् विप्रो वर्षेणैकेन शुद्ध्यति ॥

इति मिताक्षरायां सुमन्तुः ३-२४३

(३ क्षेत्रेषु बीजानां प्ररोहार्थं प्रक्षेपश्च ।

वपनानुषङ्गाच्च पारस्करः २-१३-७

**वपा**— हृन्मेदः ।

सर्वोदरव्यापी पोलिकाकारोऽतिश्वेतवर्णो वपेति

श्रौतपदार्थ निर्वचने ।

वपा नाभिस्थ चर्मविशेषः इति पारस्करभाष्ये

गदाधरः-३-३-६

मेदस्तु वपा वसा इत्यमरः २-६-६४

वपा प्राणायतनविशेष इति योगीश्वरः ३-९४

**वपाप्रचारः**— वपायागः ।

**वरः**— (१) दक्षिणाविशेषः ।

वरमभिलषितं वस्तु इति विज्ञानेश्वरः ॥

याज्ञ-१५१

गौर्वा वरः इति श्रुतेः ।

गौर्ब्राह्मणस्य वर इति पारस्करः १-८-१५

वरं आचार्याभिलषितं द्रव्यमिति हरिहरः ॥

पारस्करः २-१-२१

अभिलषितद्रव्याभावे चतुःकार्षापणो वर इति

मूल्याध्यायोक्तद्रव्यदानमिति वृद्धा इति तत्रैव गदाधरः

दक्षिणात्वेन दीयमानं धेनुसुवर्णादिकं व्रियते

अनेनेति करणव्युत्पत्त्या वर इत्युच्यते इति श्रौत-

पदार्थनिर्वचने ।

अश्वं वरं बियाद् गामित्येके इति वाराहगृह्ये २१-१५

वरं कर्त्रे ददाति कांस्यं वसनं च ।

इति मानवगृह्ये पु-१-२२-१६

वरमभिलषितं तदसम्भवे गौर्वा गौर्वा वर

इति श्रुतेः ।

गौर्वरत्नं मात्राहीनत्वात् गोस्तुमात्रामविद्यते ॥

इति श्रुतेः संस्कारप्रकाशः ५६६

गौर्विशिष्टतमा विप्रे वेदेष्वपिनिगद्यते ।

नततोन्यद्वरं यस्मात्तस्माद्गौर्वर उच्यते ॥

कात्यायनः २७-१४

(२) कन्यायाः सम्प्रदानीभूतं पात्रम् ।

सकृत् प्रदीयते कन्या हरंस्तां चोरदण्डभाक् ।

दत्तामपि हरेत् पूर्वाच्छ्रेयांश्चेद् वर आव्रजेत् ॥

याज्ञ-१-६५

(३) देवादीनामनुग्रहविशेषः देवादिषु प्रार्थयितुरभिलाषो वा ।

वरान् अभिलषितार्थान् इति कुल्लूकः ॥

मनुः ३-२५८

यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ॥

याज्ञ २-८०१

अत्र भवतीनां कामविहन्ता पातकी स्यात् इति इन्द्रदत्तपरः ।

निश्चितार्थलाभो वर इति अभियुक्ताः ॥

वरं वृणीष्व पाञ्चालि मत्तो यदभिवाञ्छसि ।

वधूनां हि विशिष्टा मे त्वं धर्मपरमा सती ॥

महाभा, सभा,

**वरकः**—(१) वरका वनमुद्गा इति हेमाद्रिः परिशेष-५४६ माधवाचार्य्याश्च-पराशरमाधवे-७०७

कोद्रवो राजमाषाश्च कुलुत्था वरकास्तथा ।

इति चतुर्विंशतिमते ।

वरकः प्रियङ्गुनामतृणधान्यम् इति वैद्यकशब्दसिन्धुः ।

वरकः पीतलुत्थ इति वीरमित्रोदयपरिभाषाप्रकाशे-११०

(२) वरकं स्यूतवस्त्रम् इति अमरकोषव्याख्यासुधायाम् वरकमस्त्रि ।

**वरटः**— वरटः शौण्डिक इति असहायभाष्ये ।

नारदसहिता २-१८

**वरत्रम्**— चर्मरज्जुः ।

चर्मणि धर्मघण्टितवरत्रादौ इति कुल्लूकः ।

मनु ८-२८९

**वराङ्कः** वराङ्कशब्दः अक्षरसंख्याया गणकप्रसिद्धा चतुर्विंशत्यधिकशतत्रयमाह । इति कालमाधवे २

अतुलशब्दो द्रष्टव्यः ॥

**वराटः** जातिविशेषः पुष्करशब्दो द्रष्टव्यः ।

**वराटकः**—(१) वीजकोषः ।

कुमुदवीजकोषस्तु पूर्णावस्थो जनैः वेण्ट इत्युच्यते ।

वेण्टशब्दोऽयम् अस्मादेव वराटकशब्दादागतः एव ॥

(२) कपर्दकः ।

**वराहद्वादशी**—माघशुक्लाद्वादशी इति कालसारे-१२१

माघे तु शुक्लद्वादश्यां लग्ने कर्कटसंज्ञके ।

आविरासीद् ब्रह्मनासाविवरात् क्रोड़रूपधृक् ॥

यज्ञमूर्तिः स विज्ञेयो देवो नारायणः स्वयम् ।

इति वृहन्नन्दिकेश्वरपुराणे इति कालसारे ।

**वरूड़ः**— अन्त्यजजातिविशेषः ।

तत्प्रमाणं भिल्लशब्दे द्रष्टव्यम् ।

वरुड़ः कोठरा इति प्रसिद्ध इति गोविन्दानन्दः २७१

काष्ठभूरादिभेदः इति शूलपाणिः ॥ प्राय २७२

**वरुणपाशः**— सर्परज्जुजलोदरादिरिति कुल्लूकः ।

साक्ष्येऽनृतं वदन् पाशैर्बध्यते वारुणैर्भृशम् ॥

मनुः ८-८२

**वरुणप्रघासः**—चातुर्मास्यस्य द्वितीयं पर्व।
बहुदेवताकत्वेऽपि वरुणायघास प्रदानेन वरुणस्य मुख्यत्वात् वरुणप्रयास संज्ञा।

**वरुणसूक्तम्**— उदुत्तमं वरुण पाशम्। इति षड् ऋचः ॥
बौधा,गृ,शे,१-१४

**वर्करः**— तरुण इति हेमाद्रिः। परिशेष ६४३
वर्करः तरुणोऽज इति नागेशभट्ट ॥

**वरूथः**— रथगुप्तिः।
रथगुप्तिर्वरूथो ना इत्यमरः २-८-५७
सर्वेष्वेतेष्वनीकेषु सन्दिदेशनराधिपः।
सानुकर्षाः सतुणीराः सवरूथा सतोमराः ॥
महाभा, उद् १५५-३

**वर्गः**— गणपाषण्डपूगाश्च व्राताश्च श्रेणयस्तथा।
समूहस्थाश्च ये चान्ये वर्गाख्यास्ते बृहस्पतिः ॥
इति विवादरत्नाकरे कात्यायनः ६६६
गणपाषण्डादीनां स्वरूपंतत्तच्छब्दे द्रष्टव्यम्।
लिङ्गिनः श्रेणिपूगाश्च वणिग्व्रातास्तथापरे।
समूहस्थाश्च ये चान्ये वर्गास्तानब्रवीद्। भृगुरिति
व्यवहारप्रकाशे कात्यायनः पृ १११

**वर्गी**— वर्गमुख्यः।
प्रत्येकैकसमूहानां नायका वर्गिणः स्मृताः ॥
इति व्यवप्रकाशे कात्यायनः ११२

**वर्चः**— (१) पुरीषम्।
(२) तेजः तेजपुरीषयोः वर्चः इत्यमरः १-३-२३१

**वर्चःस्थानम्**— शौचस्थानमिति मयूखे नीलकण्ठः।
तत्र बृहस्पतिः-१९-४६
वर्चःस्थानं वह्निचयं गर्तोच्छिष्टाम्बुमेचनम्।
अत्यारात् परकुड्यस्य न कर्त्तव्यं कथंचन ॥ इति
कौटलीयार्थशास्त्रस्य धर्मस्थीयेऽष्टमाध्यायान्तश्लोके
वर्ज इति पाठः अशुद्ध इति मन्ये तत्र वर्च इति
समीचीनः प्रतिभाति।

**वर्चस्कम्**— पुरीषम्।
पुरीषस्य वर्चस्कस्य इति मिताक्षरायाम् ३-१०५

**वर्णः**— (१) वर्णशब्दः प्रकारवाची इति कुल्लूकः।
सार्ववर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा।
समुत्सृजेद् भुक्तवतामग्रतो विकिरन् भुवि ॥
मनुः ३-२२४
अत वर्णः व्यञ्जनम्।
खातप्रावृत्तिमनदीनिबन्धायतनतटाकफेदारारामषण्ड-
वायानां शस्य वर्ण भागोत्तरिकम् कौट ३-६
(२) ब्राह्मणादयश्च।
चत्वारोवर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः ॥ वसिष्ठः २-१
वर्णो द्विजादिशुक्लादि यशोगुणकथासु च।
स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेखने ॥
इति मेदिनी
(३) शुक्लादयश्चवर्णाः।

**वर्णकम्**— (१) चन्दनादिविलेपनद्रव्यम्।
वर्णकं सुगन्धिद्रव्यमितिकल्पतरुः नियत-३६

स्नातश्च वर्णकं ह्यं नित्यं कुर्य्याद् विशांपते ।
प्रियङ्गुचन्दनाभ्यां वा बिल्वेन तगरेण वा ॥
इति नित्याचारप्रदीपे १-४०
वर्णकोऽस्त्री विलेपनमित्यमरः ।
(२) चित्रसाधनं द्रवद्रव्यम् एवं स्वस्तिक पद्माद्यै-भूशोभां सूर्य्यमन्दिरे कृत्वा वर्णकपिष्टाद्यैर्लभेत् शतगुणं फलम् नित्याचार-१०५२१
(३) वर्णकं सुरुज इति भाषायाम् ।
तन्मध्ये मण्डलं कुर्यात् स्वस्तिकंवर्वकैः शुभैः ॥ ५७
तदन्तः स्थापयेत्खट्वां करिदन्तमयीं शुभाम् ।
पट्टतूलीं तदुपरि वासयेत् प्रुरुषोत्तम ॥
पुरुषोत्तमक्षेत्रमहात्म्यम्-३६-५८
वर्णकं चूर्णगैरिकचित्रलेखनादि इति संस्काररत्न-मालायाम्-१-५२७

**वर्णका**— आच्छादनविशेषः ।
वनउत इति लोकभाषायाम् ।
वर्णका प्रावरणविशे इति पातञ्जलमहाभाष्यप्रदीपकरः

**वर्त्तकः**— वृत्ताकृतिश्चित्रविन्दुलाञ्छितः तुलपुच्छः पक्षिविशेषः इति हेमाद्रिः परिशेष-५७७

**वर्त्तनम्** — ग्रासाच्छादनदानम् इति जीमूतवाहनमित्र-मिश्रौ ।

**वर्त्तः** — (१) वर्त्तिका वलिता इति भाषाप्रसिद्धा ।
वर्त्त्याधारस्नेहयोगाद् यथा दीपस्य संस्थितिः ।
विक्रियाणि च दृष्टैवमकाले प्राणसंशयः ।

(२) औषधविशेषः । याज्ञ-३-६५
अशीतिस्तिलपुष्पाणि षष्टिः पिप्पली तण्डुलाः ।
जातिपुष्पाणि पञ्चाशन्मरीचानि च षोड़श ॥
एषा कुसुमिकावर्त्तिगतं चक्षुर्निवर्त्तयेत् ॥
इति नित्याचारपद्धतौ-१५६

**वर्द्धनम्**— श्रेयोयोजनम् ।
वर्द्धनानि श्रेयोयोजनानि इति श्रीमूला । कौट ४-३
जनास्तु पुराणपारायणादिसमाप्तिदिवसं वर्द्धनशब्देन व्यवहरन्ति ॥

**वर्द्धनी** — वारिधानी इति हेमाद्रिः ।

**वर्द्धमानः**— मृत्पात्रविशेषः ।
वर्द्धमानः प्रश्नभेदे शरावैरण्डविष्णुषु इति व्याख्यासुधायाम् ।
उत्कलेषु वढ़ा इति ख्यातं मृत्पात्रं भवितुमर्हति ॥
मघासु तिलपूर्णानि वर्द्धमानानि मानवः ।
प्रदाय पुत्रपशुमान् इह प्रेत्य च मोदते ॥
इति महाभा, दान, ६४-१२

**वर्द्धमानकम्**— शिवस्तुतौ प्रयोज्यो गीतविशेष इति संगीतशास्त्रे

**वर्द्धमानतिलम्**— तिलवहुलम् इति कल्पतरुः श्राद्ध-१६
वर्द्धमानतिलैः श्राद्धमक्षय्यं मनुरब्रवीत् ॥ इति काल-सारोद्धृतमहाभारते ।

**वर्द्धापणम्**— वन्दापना इति भाषायां प्रसिद्धम् ।

चुक् वर्द्धापणं स्त्रिय इति हेमाद्रौ ॥

**वर्द्धितम्**— पूरितम् इति दिव्यसिंहमहापात्राः ।

पाणिभ्यां तूपसंगृह्य स्वयमन्नस्य वर्द्धितम् ।

विप्रान्तिके पितृन्ध्यायञ्छनकैरुपनिक्षिपेत् ॥

मनुः ३-२२४

अत्र अन्नस्य वर्द्धितम् अन्नेन पूर्णं परिवेषणपात्रमिति माधवाचार्याः ।

अन्नवर्द्धितमित्यस्य भाषायां भातवढ़ा इत्येवंरूपोऽर्थः ।

स्मृतिचन्द्रिकायां तु स्वयमन्नस्य वन्धुकमिति पाठः

प्रमादिकः श्राद्ध ३३६

**वर्द्धितकम्**— वर्द्धितम् ।

पाणिभ्यां तूपसंगृह्य स्वयमन्नस्य वर्द्धितम् ॥

मनुः ३-२२४

अन्नस्येति तृतीयार्थे षष्ठी वर्द्धितं पूर्णं पिठरादिपात्रम् इति कुल्लूकः ।

वर्द्धितकशब्देन मूले स्थूलमग्रे सूक्ष्मं विशिष्टसंस्थानयुक्तं भक्तमुच्यते इति पातञ्जमहाभाष्यव्याख्याने कैयटः ।

अनतश्च विवक्षावति तद् यथा समुद्रः कुण्डिका विन्ध्यो वर्द्धितमिति महाभाष्ये २-३-३

**वर्म**— (१) लौहकञ्चुकम् ।

(२) गौणीलक्षणया क्षत्रिया अपि वर्माण उच्यन्ते ।

शर्मदेवश्च विप्रस्य वर्म त्राता च भूभुजः ।

भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥

इति मन्वर्थमुक्तावल्यां यमः मनुः २-३२

**वर्मिकः**— स्वल्पसर्पसदृशो मत्स्यः इति लक्ष्मीधरः ॥

नियत-३०१

वमी तोड़ि इति उड्रभाषायाम्

**वर्वणा**— नीलमक्षिका गणगणा इति भाषायां ख्याता।

वर्वणा मक्षिका नीला अमरः २-५-२६

**वर्वरोगः**— रोगविशेषः ।

लोहहारी च पुरुषो जायते वर्वरोगवान् ॥

शंखस्मृतिः ४-१२

**वर्षम्**— प्रजानां सुखनिवासयोग्या भूमिः ।

यथा भारतवर्षम् ।

विशन्ति निवमन्त्य प्रजायस्माच्चतुर्विधाः ।

तस्माद्वर्षमिति प्रोक्तं प्रजानां सुखदं यतः ॥ १२६

ऋष इत्येष रमणे वृषशक्तिप्रबन्धने ।

रतिप्रबन्धनात् सिद्धं वर्षं तत्तेषु तेन वै ॥

ब्रह्माण्डपु १-२ १६-१३०

**वर्षकारी**—वयोज्योष्ठा कन्या मित्रशब्दो मृग्यः ।

**वर्षपर्वताः** वर्षविभाजकपर्वताः ।

हिमवान् हेमकूटश्च निषधो मेरुरेव च ।

नीलः श्वेतः शृङ्गवांश्च कीर्त्यन्ते वर्षपर्वताः ॥

वायुपु-१-७७

वर्षवृद्धिः— जाताहोत्सवः ।
वर्षवृद्धयभिषेकादि कर्त्तव्यमधिके न तु ।
अधिमासे तु पूर्वस्याच्छ्राद्धं सम्वत्सरादपि ॥
इति लिखितः ३५

वर्षाः— तृतीयऋतुः पक्षान्तरे द्वितीयऋतुः ।
ऋतुः संवत्सरो ग्रीष्मो वर्षा हेमन्तः ॥
वर्षासु श्रावणादिमासचतुष्टये इति विज्ञानेश्वरः ३-५२
वर्षाशब्दः स्त्रीलिंगाकारान्तनित्यबहुवचनान्तः ।

वर्ष्म— शरीरम् ।
इत्येतदस्थिरं वर्ष्म यस्य मोक्षाय कृत्यसौ ।
याज्ञ-३-१०७

वलयः— धान्यादीनां राशिः ।
वेश्मखलवलयगतानां धान्यानां भक्षणे हिंसाप्रतीकारं
कुर्यात् ॥ कौट ३-१०

वलिकः—कपित्थ इति श्रीदत्त उपाध्यायः ।
अन्यद् व्रतं प्रवक्ष्यामि कर्मसंसारमोक्षणम्
कदम्बकुटजैश्चैव वलिकर्जुनकैस्तथा ।
एभिरभ्यर्च्चनं कुर्य्याद् विधिदृष्टेन कर्मणा ॥
इति समयप्रदीपे-१५५

वलीकः- पटलप्रान्तभागः ।
चालस्य अधोभागः ओलि इति ख्यातः ।
वलीकनीध्रे पटलप्रान्ते इत्यमरः २-२-१४
अल्पक्षराः शब्दाः सन्ततवलीकप्रस्तावः ॥
इति काठकगृ, १-६-६

एके वलीकसन्तानम् गौतमधर्मसूत्रे २-७-१४

वल्गुली— (१) पक्षिविशेषः इति माधवाचार्यः ।
या भर्त्तारं परित्यज्य मिष्टमश्नाति केवलम् ।
ग्रामे सा शूकरी भूयाद् वल्गुली वाथ विड्भुजा ।
स्कन्द, ब्रह्म धर्मारण्य ७-४४

(२) रात्रिचारिणी ।
वल्गुल्युलूकः शशका शरभोत्क्रोशपिच्छलो ।
माषिका पिङ्गली काकः कथिता रात्रिचारिणः ॥
विष्णुधर्मपु-२-१६४-१७

वल्मीकः— पुत्तिकाकृतमृत्तिकासञ्चयः ।
कृमिविशेषकृत मृत्तिकासमूह इति मित्रमिश्रः आह्निक-
प्रकाशे-३३
कृमिकृत मृत्तिकाचय इति कुल्लूकः ।
न फालकृष्टे न जले न चित्यां न च पर्वते ।
न जीर्णदेवायतने न वल्मीके कदाचन ॥
मनुः ४-४६

वल्लः— परिमाणविशेषः गुञ्जात्रयपरिमितः ।
तुल्या यवाभ्यां कथितात्र गुञ्जा, वल्लस्त्रिगुञ्जो
धरणे च तेऽष्टौ इति लीलावत्याम् ।

वल्ला— निष्पावः वाइन इति उत्कलेषु प्रसिद्धः ।
निष्पावा वल्लाः शिम्बिसदृशा दक्षिणापथे प्रसिद्धा
इति श्राद्धकाण्डे कल्पतरुः ।

वल्लिका— वालुका वल्लीशब्दो द्रष्टव्यः ।

**वल्ली—** (१) गुडुच्यादिलता या भूमेर्वृक्षमारोहति

कुल्लूकः १-४८

वल्यः वृक्षादिकमावेष्ट्य प्रसरन्ति प्रतानास्तु पर्वोत्थ-

चरणैः वृक्षादिकं गृहीत्वा प्रसरन्ति इति तयोर्भेदः ॥

(२) वालुका ।

वल्ली वालुका इति तीर्थप्रकाशोद्धृतब्रह्मपुराणवचनाज्

ज्ञायते ।

ततः सा प्रतिमा देवि वल्लीभिर्गोपिता मया ।

यथा तत्र न पश्यन्ति मनुजाः स्वर्गकांक्षिणः ॥

प्रच्छाद्य वल्लिकैर्देवि जातरूपपरिच्छदैः ।

यमं प्रस्थापयामास स्वां पुरीं दक्षिणां दिशम् ॥ इति

तीर्थचिन्तामणौ अपि अयमेव पाठः ११-६३

प्रकाशितब्रह्मपुराणे तु प्रतिमा चेन्द्रनीलाख्या-

स्वयंदेवेन गोपिता न चात्र दृश्यते चन्या प्रतिमा

वैष्णवी शुभा ब्रह्मपु-४६-२७

अत्र ननान्तर्दृश्यते चापि वल्लीभि वैष्णवी शुभा इति

पाठान्तरम् ।

**वल्लूरम्—** शुष्कमांसम् । याज्ञ १-१७५

**वल्वजः—** तृणविशेषः ।

बल्वजाः तृणविशेषाः मध्यदेशे वगड् इति प्रसिद्धाः ।

उलपा वल्वजाः प्रोक्ता इति विश्वः ।

उलपाः जलसमीपे भवन्ति इति ज्ञायन्ते ।

नवोलपालंकृतसैकताभाः शुचीरपः शैवलिनीर्दधानम् ॥

४-८

इति माघकवेर्वर्णनात् ।

वल्वजः काशसदृशः तृणविशेषः यस्य रज्जुभिः

पामरैः खट्वा क्रियते इति हेमाद्रिः श्राद्ध-६४२

**वशा—** वन्ध्या इति कल्पतरुः गार्हस्थ्य-२०३

पुरुषवशाकुमारवत्तश्च नित्यम् गौतमः १-७-१४

अत्र वशा बन्ध्या गौः ।

वशाऽपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च ॥

पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ॥

मनुः ८-२८

अत्र वशा वन्ध्या नारी ॥

**वशी—** स्वतन्त्र इति विज्ञानेश्वरः ।

निमित्तमक्षरः कर्त्ता बोद्धा ब्रह्मगुणी वशी ।

अजः शरीरग्रहणात् स जात इति कीर्त्यते ॥

याज्ञ-३-६९

**वषट्कृतम्—** अग्नौहुतम् ।

अग्नौ तु हुतं त्रिषु वषट्कृतमित्यमरः २-७-२७

नैत्यके नास्त्यनध्यायो ब्रह्मसत्रं हि तत् स्मृतम् ॥

ब्रह्माहुतिहुतं पुण्य मनध्यायवषट्कृतम् ॥

मनुः २-१०६

**वष्टिका—** सूक्ष्मा रज्जुः ।

कुशकाशमयीं कुर्य्याद् वष्टिकां सुदृढां नवाम् ।

तामेकतो राजपुत्रा हीनवर्णा तथान्यतः ।

इत्याद्यादित्यपुराणे निर्णयसिन्धूद्धृते ॥

**वसतिः—** वासस्थानम् ।

गृहमिति महीधरः वसु च मे वसतिश्च मे ।

शु. यजुः १८-१५

**वसन्तपञ्चमी**— माघशुक्लपञ्चमी ।

अस्या निर्णयः श्रीपञ्चमीशब्दे द्रष्टव्यः ॥

**वसवः**— धरो ध्रुवस्तथा सोम आपश्चैवानिलोऽनलः ।

प्रत्युषश्च प्रभासश्च वसवोष्टौ प्रकीर्त्तिताः ।

इति मिताक्षरायाम्-२-१ २

हेमाद्रौ-६३६

**वसा**— मांसस्नेहः । मिताक्षरा ३-९४

मेदस्तु वपा वसा इत्यमरः २-६-६४

**वसीयसी**— पुण्यशीला (स्त्री)

वसीयसी हास्य प्रजा भवति गोभिलः १-६-२

**वसोर्द्धारा**— वसु द्रव्यं घृत व उत्तममृतं हविषकामिकम् ।

तस्य धारा सदादेया वसोर्द्धारा हिसा मता ।

वसुनापत्यकामेन दक्षेण च महात्मना ।

माया च विष्णुना शक्र रुद्रेण च सहोमया ।

आत्मानां च स्वरूपेण धारायां तु प्रपातितम् ।

देवी सान्निध्यमायाता सर्वकाम प्रदायिका ।

तस्मात्त्वमपि राजेन्द्र वसोर्द्धारां प्रदापय ॥

इति राजनीतिप्रकाशोद्धृतदेवीपुराणे

**वसुन्धरा**— पृथिवी ।

स्वदत्तां परदत्तां वा यो हरेत् वसुन्धराम् ।

श्वविष्ठायां कृमिभूर्त्वा पितृभिः सह पच्यते ॥

बृहस्पतिः-२८

**वस्तिः**— (१) मूत्राशयः ।

वसत्यस्मिन् मूत्रादिकमिति वस्ति ।

लिङ्गोपरितनो नाभेरधोभाग इति लक्षणप्रकाशे ॥

गुदमेढ्रयोरन्तरालमिति कात्यायन स्नानसूत्रव्याख्याने

हरिहरः कात्या स्ना, सू. १-६

क्षुद्रान्त्रं वृक्ककौ वस्तिः पुरीषाधानमेव च ॥

प्राणायतनविवरणे याज्ञवल्क्यः ३-९४

(२) योनिद्वारमिति संस्कारप्रकाशचन्द्रकान्त भाष्ययोः ।

प्रतिष्ठिति वस्तौ इति गोभिलः २-७-१४

उत्कलेषु तदर्थेऽपि वस्तुशब्दस्य व्यवहारः ॥

**वस्तिकर्म** – विरेचनकारकं कर्म ।

शूलादिरोगे गुदे चर्मपुटकं दत्त्वा तेनोदरमध्ये ।

तैलादीनां प्रवेशनरूपं वस्तिकर्म वैद्यकप्रसिद्धमिति

गोविन्दानन्दः ।

वस्तिकर्मनिरूहैश्च प्रच्छर्दनविरेचनैः ।

शिशुकृच्छ्रेण शुद्ध्येत तस्मात्पापान्न संशयः ॥

इति प्रायश्चित्तविवेके यमः ।

यथा वैद्यशास्त्रे—

वर्त्तिर्द्विधाऽनुवासाख्यो निरूहश्च ततः परः ।

यः स्नेहैर्दीयते स स्यादनुवासननामकः ।

कषायक्षीरतैलैर्यो निरूहः स निगद्यते ॥

शूलेऽम्लपित्तहृद्रोगे यो नयेदनुवासनम् ।

वातव्याधावुदावर्त्ते वातासृग्विषमज्वरे ॥

मूर्च्छातृष्णोदरानाह प्रमेहेषु निरू णम् ।
प्रायश्चित्तविवेकटीका पृ-४३५

**वह्निचयम्** — पाकशाला ।
वर्चःस्थानं वह्निचयं गर्त्तोच्छिष्टाम्बुसेचनम् ।
अत्याराात् परकुड्यस्य न कर्त्तव्यं कथचन ॥
इति बृहस्पतिः

**वह्न्युत्सवः**— माघपूर्णिमा, माघशुक्लद्वादशी वा ।

**वाकः** — कण्डिका मन्त्रविशेषो वा कर्मप्रकाशकमन्त्र इति नीलकण्ठः ।
यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु ॥
वक्तीति वाकः इति हरदत्तः गौतमः ३-४-३३

**वाकोवाक**— प्रश्नोत्तर रूपं वेदवाक्यम् ।

**वाकोवाक्यम्**— (१) प्रश्नोत्तररूपं वेदवाक्यम् ।
वेदशास्त्रोपयोगीनि तर्कोक्तिप्रयुक्तिरूपाणि वाक्यानि यथा महाभारते ।
कः स्विदेकाकी चरति सूर्यएकाकी चरति
इत्यादीनि वाकोवाक्यमिति हरदत्तः गौतम १-८-६
(२) वाकोवाक्यं तर्कशास्त्रमिति छन्दोग्यव्याख्याने श्रीशंकराचार्याः । छन्दो ७-१-२

**वाक्शस्तम्**— शुद्धमेतदस्तु इति ब्राह्मणवचसा शुद्धम् । कथेऽपि यथोक्तशौचमनसोऽविरितोपात् यत्र शुद्धि सन्देहो भवति तत् वाक्शस्तं शुचि इति मिताक्षरायाम् । १-१९१

त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥
मनुः ५-१२७

**वाक्सूक्तम्**— बृहस्पते प्रथमं वाचो (ऋ १०-७१-१) इत्यादि इति लक्ष्मीधरः । नियत-९३

**वागुरा**— जालम् (मनुः १०-३२)
कारासन्तानकूटस्य संसारवनवागुरा ।
स्वर्गमार्गमहागर्त्ता पुंसां स्त्री वेधसा कृता ॥
स्कन्द प्रभास-१५८-७१

**वागुरावृत्तिः**— पाशबन्धनेन मृगादिवधेन जीवनम् ।
सैरिन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे ॥
मनुः १०-३२

**वाग्गुदः**— वादुरा इति प्रसिद्धः पक्षी स रात्रिचरः स्वादुफलभोजी दिवा अधोमुखः वृक्षमाश्रयते ।

**वाग्दण्डः**— (१) मौनता ।
वाग्दण्डो मौनता प्रोक्ता इति पराशरमाधवे दक्षः ।
(२) न साधुकृतवानसि मैवं भूयः कार्षीरित्येवं वाङ्निर्भर्त्सनं वाग्दण्ड इति कुल्लूकः एवं प्रकारेण ते दण्डविधानं करिष्यामीति उक्तिमात्रं वाग्दण्ड इति केचित् ।
वाग्दण्डं प्रथमं कुर्याद् धिग्दण्डं तदनन्तरम् ।
तृतीयं धनदण्डं तु वधदण्डमतः परम् ॥
मनुः ८-१२९

**वाग्दुष्टम्**— वाचैव दूषितम् ।

भक्ष्यमपि वस्तु अभक्ष्याभिधायिशब्देन यदुच्यते ।

**वाग्दुष्टः**— परुषानृतभाषी । अभिशस्त इत्यन्ये इति मेधातिथिः ।
वाग्दुष्टः वाक्पारुष्यकर्त्ता इति विवादरत्नाकरे ।
दुष्टस्यैव तु यो दोषान् कीर्त्तयेद् क्रोधकारणात् ।
अन्यापदेशवादी च वागदुष्टं तं नरं विदुः ॥
इति व्यवहारकल्पतरौ कात्यायनः
विवादरत्नाकरे तु अन्यापदेशवादीति स्थाने अन्य-संज्ञानियोजी इति लिखितः ।
महता प्रणिधानेन वागदुष्टं साधयेन्नरम् ॥
इति तत्रैव
वागदुष्टा निन्दादिरूपया वाचा दूषिता इति हेमाद्रिः ।
श्राद्ध-६१०

**वाग्यज्ञः**— ब्रह्मयज्ञ इति आचारेन्दौ २५४
आचारमयूखेपि-६६
वमतामिकपाकेन विभक्तामपि प्रभुः ।
एकस्तु चतुरो यज्ञानकुर्याद् वाग्यज्ञपूर्वकान् ॥ इति आश्वलायनः ।

**वाङ्मयं पापम्**—पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः ।
असंवद्ध प्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥
मनुः १२-६

**वाचाटा**— बहुभाषिणी इति मित्रमिश्रः ।
बहुपुरुषभाषिणी इति कुल्लूकः मनुः ३-८

**वाजि**— केशपङ्क्तिः इति देवपालः निर्णयसिन्धावपि
अयमेवार्थः वाजमेके काठकगृ ३-१६-६

**वाजिनः**— छेनापाणि इति प्रसिद्धं वस्तु ।
आत्ततेजांसि तक्रवाजिनादीनि वर्जयेदिति उज्वलावृत्तिः
तप्ते पयसि दधिसंयोगेन यः घनीभूतोभागः
स आमिक्षा, जलरूपो भागः वाजिन इति

**वाजी**— अश्वः विष्णुः ७८-४५
इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमेयत्नमातिष्ठेद् विद्वान् यन्तेव वाजिनाम् ।
मनुः २-८८

**वाटम्**—(१) वृत्तिः वाड़ इति भाषायाम् ।
(२) वास्तु ।
छत्रं सदण्डं सजलं कमण्ड़लुं विवेश विभ्रद्धयमेध-वाटम् ॥ भागवते ८-१८-२३

**वाटः**— (१) वृत्तिः वाड इति भाषायाम् वाटभेदे द्विगुणः कौट ३-१०
वाट आवेष्टको वृत्तिरिति हलायुधः ।
(२) मार्गः वाटोमार्ग इति प्रायश्चित्तबिवेक-व्याख्याने गोबिन्दानन्दः । प्राय २०७
(३) गुण्डा इति प्रसिद्धः ।
बाट चौरभये बाधा सर्वसाधारणी स्मृता ।
तत्रोपशमनं कार्यं सर्वं लोकेन केनचित ॥
चाटघर पुअ चाट बाटघरपुअ वा इति लोकोक्तिः ।

**वाटधानः**— भूर्जकण्टकः ।

**वाटिः—** वाड़ि इति भाषायाम् वृत्यादिना संरक्षितं क्षेत्र-मित्यर्थः ।

अदेवबाटिजं पुष्पं देवनार्थं तथैव च ।।
आददानः परक्षेत्रात् न दण्डं दातुमर्हति ।।

मत्स्यपु-२२६-११५

क्षेत्रारामविवीतेषु गृहेषु पशुवाटिषु ।
ग्रहणं तत्प्रविष्टानां ताडनं च वृहस्पतिः ।।

इति विवादरत्नाकरे कात्यायनः पृ २४१

पशुवाटिः विकीर्णयवसंस्थानमिति चण्डेश्वरः ।

**वाड़वः—** ब्राह्मणः इति नीतिमयूखे-३

बलप्रधानं भूपालमभिसिञ्चेद् यथाविधि ।
पूर्वतो हेमकुम्भेन घृतपूर्णेन वाडव ।। इति रामायणे

वाड़वो ब्राह्मण इति मित्रमिश्रः राजनीति प्र, ५१

**वाणिजिकः—** वाणिज्यकारी मनुः ३-७८१

**वाणिज्यम्—** क्रयविक्रयफलम् ।

वाणिज्यक्रयविक्रयफलमिति नन्दपण्डितः विष्णुः ७८-४३

**वातरेताः—** नपुंसकविशेषः वातोपहतरेतस्कः संस्कार-प्रकाशे-७५८

एषां भेदाः षण्ढशब्दे द्रष्टव्याः ।।

**वातायनम्—** गवाक्षः इति चण्डेश्वरः विवादरत्नाकरे २१६

अत्र वातायनं प्रणालीश्चेत्यादिवृहस्पति वचनं निर्यूहशब्दे द्रष्टव्यम् ।

**वादः—** (१) वाद. शास्त्रार्थकथनमिति कुल्लूकः ।

नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ।।

इति मनुः ६-५०

(२) उद्ग्राहः इति शूलपाणिः स्वार्थाय प्रतिपक्षभङ्ग-नमितियावत् ।

(३) विवादः ।

प्रमाणहीने वादे तु पुरुषापेक्षया नृपः ।
समन्यूनाधिकत्वे च स्वयंकुर्याद् विनिर्णयम् ।

इति वृहस्पति व्यवहारप्रकाशे-२९६

**वादित्रम्—** मृदङ्गादि ।

नीहारे वादित्रशब्दे इति पास्करः २-११-६

न नृत्येदथवा गायेत न वादित्राणि वादयेत् ।
न स्फोटयेन्न च क्ष्वोडेन्न च रक्तो विरावयेत् ।।

मनुः ४-६४

वादित्राणामभावे तु पूजाकाले च सर्वदा ।
घण्टाशब्दो नरैः कार्य्यः सर्ववाद्यमयो यतः ।

इति स्कान्दे पूजाप्रकाशे ३६

गायद्भिश्चैव नृत्यद्भिर्गन्धर्वै रप्सरोगणैः ।
तुर्य्यवादित्रघोषैश्च सर्वं कोलाहलीकृतम् ।।

ब्रह्मपु. ३२-१०१

**वादी—** अभियोगकारी ।

वादी चेन्मार्गितं द्रव्यं साक्षिभिर्न विभावयेत् ।
दाप्यः स्याद्द्विगुणं दण्डं क्रेता तद् द्रव्यमर्हति ।।

इति व्यासः विवादरत्नाकरे १०७

**वानम्—** (१) शुष्कफलम् ।

वानप्रस्थः — तृतीयाश्रमी।

वने प्रकर्षेण नियमेन तिष्ठति चरति इति वनप्रस्थः।

वनप्रस्थ एव वानप्रस्थः संज्ञायां दैर्ध्यमिति विज्ञानेश्वरः

सुतविन्यस्तपत्नीकस्तया वानुगतो वनम्।

वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत्॥

याज्ञ ३-४५

वानलटी — गृहवरण्डक इति श्रीमूला कोट ३-८

वानस्पत्यः— पुष्पजातफलोपलक्षितवृक्षः।

वानस्पत्यः फलैः पुष्पात् इत्यमरः २-४-६

वनौषधिवर्गे

वानस्पत्यम्— वनस्पतिसम्बन्धि फलादि।

वानस्पत्यं मूलफलं दार्वग्न्यर्थं तथैव च।

तृणं च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत्॥

मनुः ८-३३६

वानिङ्गणम्— वाइगण इति भाषायां प्रसिद्धम्।

वानिङ्गणम् इति क्वचित्।

वानिङ्गफलं चैव गोमांसं कार्त्तिके स्मृतम्।

माघे च मूलकं चैत्र कलम्बी शयने तथा॥

ब्रह्मवै, ब्रह्म २७-२६

वान्तिः — वमनम्।

एवमुक्त्वा स चामन्त्र्य मन्त्रैराथर्वणैर्जलम्।

पानाय प्रददौ तस्मै वान्त्यर्थं स द्विजोत्तमः॥ ६३

याज्ञवल्क्योपि तत् पीत्वा जलं तेनाभिमन्त्रितम्।

वान्ति कृत्वा सहान्नेन तद्विद्यां तां परित्यजत्॥

स्कन्द-नागर-२७८-६४

वान्या—गृहस्थवृत्तिविशेषः श्यामाकाद्यैर्वन्यैर्या जीविका

वान्यापि वृक्षलतातन्यौषधीनां च तृणौषधीनां च

श्यामाकजर्त्तिलादीनां वन्याभिर्वर्त्तयतीति वान्या॥

बौधायनः ३-२-१५

वापः— वपनम् मुण्डनमित्यर्थ मनुः ११-१०८

वापिका— वापी।

द्वारहीनो भवेत् कूपो द्वारेणैकेन वापिका। ७०

नैकद्वारा पुष्करिणी दीर्घाकारा तु दीर्घिका।

कुल्या विस्तृततोयश्च तटाकः परिकीर्त्तितः॥

अभिलषितार्थ चिन्तामणिः १-१-७१

वापी —जलाशयविशेषः द्रोणाद्दशगुणः।

द्रोणाद्दशगुणा वापी इति जलाशयतत्त्वे इति हलायुध-

कोषव्याख्याने द्रोणशब्दो द्रष्टव्यः।

वापी पञ्चहस्तगभीरः सोपानयुक्तो जलाशयः कूपस्तु-

सोपानरहितः वापी तु सोपानयुक्त इति एतेषां परस्पर-

भेदः वापीलक्षणं दण्डशब्दे द्रष्टव्यम्।

वामः—कृष्णपक्षगतदिवसस्य पञ्चदशो भागः कालमाधवे-३

वामदेव्यम्— कयानश्चित्र आभुवत् इत्यादितृचम्।

म ४-३१-१

वामदेव ऋषिः सर्वे देवाः गायत्री साम उ १-१-१२

ऋ अ ३-६-२४

कयानश्चित्र आभुवदती सदावृधः सखा ।
कया शचिष्ठया वृता ।
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः ।
दृल्हा चिदारुजे वसु ।। २
अभिषु णः सखीनामविता जरितॄणाम् ।
शतं भवास्यूतिभिः ।। ३
अत्र गीयमानं साम वामदेव्यम् ।

**वायव्यस्नानम्**— गोरजसा स्नानम् ।
वायव्यं गोरजः स्मृतमिति योगयाज्ञवल्क्यः ।
स्नानभेदाः स्नानशब्दे द्रष्टव्याः

**वायुः**—(१) स्वातिनक्षत्रमिति हेमाद्रिः ।
तत्र वाणिज्यसिद्धि वायौ इति विष्णुः ।
(२) पवनः ।
सूर्य्याचन्द्रमसौ यावत् किरणैरेव भासतः ।
तावद् भूलोक आख्यातः पुराणे द्विजपुंगवाः ।। ३
यावत् प्रमाणो भूर्लोको विस्तरात् परिमण्डलात् ।
भुवर्लोकोपि तावत्स्यान्मण्डलाद् भास्करस्य तु ।। ४
ऊर्ध्वं यन्मण्डलं व्योम्नि ध्रुवो यावद्व्यवस्थितः ।
स्वर्गलोकः समाख्यातस्तत्र वायोस्तु नेमयः ।। ५
आवहः प्रवहश्चैव तत्रैव नुवहः पुनः ।
संवहो विवहश्चैव तदूर्ध्वं स्यात्परावहः ।
तथा परिवहश्चैव वायोर्वै सप्तनेमयः ।।
कूर्मपु-४१-७

**वारः**— क्रमः पालि इति उड्भाषायाम्
सेतुभ्यो मुञ्चतस्तोयमवारे षट्पणो दमः ।
वारे वा तोयमन्येषां प्रमादेनोपरुन्धतः ।।
कौटल्य ३-९

**वारिकः**— अभिभावकः उपदेष्टा वा ।
राजा क्षेत्रं दत्त्वा चातुर्वैद्य वणिग् वारिक सर्वग्रामीण
तन्महत्तरस्वामि पुरुषाधिष्ठितं परिच्छन्दयात् ।।
इति विश्वरूपनिबन्धे वृहस्पतिः २-१५-४

**वारिबन्धः**— बन्धद्वारा वारिरक्षणम् ।
अत्र बन्धेन वारिरक्षणं वारिबन्धः पर्वतादिसमीपे
बन्धनं कृत्वा जलस्थापनम् तच्च दीर्घिकापेक्षया
आधिकपरिमाणपर्यन्तमिति नरसिंहवाजपेयी ।
वारिबन्धः शिवोपेतः शक्तिवैनायकैर्युतिः ।
इत्यादिदेवीपुराणे
अत्र वारिबन्धः शिवाद्युपेतः पुष्करिणीबन्धो भवेदिति
मन्मतम् ।

**वारुकम्**— वारुकीफलमिति हेमाद्रिः । परि ५१२
वैकङ्कतं वत्सकं च एर्वारुकानि च इति तत्र ब्राह्मे ।

**वारुणम्**—शतभिषङ् नक्षत्रम् हेमाद्रौ परि १७५

**वारुणस्नानम्**— अवगाहनम् (स्नानभेदाः स्नाशब्दे द्रष्टव्याः । )

**वारुणी**—(१) सुरा ।
अज्ञानाद् वारुणीं पीत्वा संस्कारेणैव शुद्ध्यति ।
मतिपूर्वमनिर्द्देश्यं प्राणान्तिकमिति स्थितः ।।
मनुः ११-१४६

(२) अलभ्यस्नानयोगविशेषः स च योगभेदेन वारुणी महावारुणीति भिद्यते यथा।
वारुणेन समायुक्ता मधौ कृष्णत्रयोदशी।
गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैः समा॥
शनिवारसमायुक्ता सा महावारुणी स्मृता।
शुभयोगसमायुक्ता शनौ शतभिषा यदि।
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत्॥
इति निर्णयसिन्धूद्धृतस्कान्दे।

वारुण्यः— यत्किंचेदम् इमं मे वरुण तत्त्वायामि अवते हेड़ इति वारुण्य इति हरदत्तः गौतम ३-५-२८

वारेवृतम्—काममाविजनतोः सम्भवन्ति वारे वृतं ह्यासाम्॥ इति श्रुतिः मिता १-८१

वार्क्षदुर्गम्— बहिः सर्वत्र योजनमात्रं व्याप्य तिष्ठन्महावृक्षकण्टकिगुल्मलताद्याचितम् इति कुल्लूकः॥

मनुः ७-७०

वार्त्तम्– (१) फल्गु वार्त्तं फल्गुन्यरोगे च त्रिषु अमरः

३-३-७६

प्रयोगस्तु व्यवहारप्रकाशे ४६७ पृष्ठे।
(२) वार्त्तं नात्युत्कृष्टं नापकृष्टमित्यर्थः इति कृत्यकल्पतरौ राजधर्मकाण्डे-७८

वार्त्ता— कृषिवाणिज्यपशुपालनानि।
आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिस्तथापरा।
विद्या चतुष्टयं चैतद् वार्त्तामात्रं शृणुष्व मे॥ २७
कृषिर्वणिज्या तद्वच्च तृतीयं पशुपालनम्।
विद्या ह्येका महाभाग वार्त्ता वृत्तित्रयाश्रया॥ २८

विष्णुपु, ५-१०-२८

वार्त्ता वार्तिङ्गणे वृत्तौ इति विश्वः

वार्त्ताकम्— फलविशेषः बाइगण इति प्रसिद्धः।
श्राद्धे न देयाः पालङ्क्या निष्पावा सहकोद्रकाः।
मसूरक्षार वार्त्ताक कुलत्थ शणशिग्रवः॥
इति कात्यायनः हेमाद्रौ परिशिष्टे-५४७

वार्द्धकम्— वृद्धावस्था।
विद्याकर्मवयोवन्धु वित्तैर्मान्या यथाक्रमम्।
एतैः प्रभूतैः शूद्रोपि वार्द्धके मानमर्हति॥

याज्ञ-१-११६

वार्द्धुषिः— वार्द्धुषिकः वृद्धिजीवी।
सत्यन्यस्मिन् जीविकोपाये धान्यवृद्धिजीवनः।
वर्द्धुषिक इति श्राद्धकल्पे हेमाद्रिः-४७१
ब्रह्महत्यां च वृद्धिं च तुलया समतोलयत्।
अतिष्ठद्भ्रूणहा कोट्यां वार्द्धुषिः समकम्पत॥

वसिष्ठ २-४२

वार्द्धुषी— वृद्धिजीवी।
प्रतिषिद्धवृद्ध्युपजीवी इति विज्ञानेश्वरः याज्ञ-१-१३२
वृद्धिस्तु योक्ता धान्यानां वार्द्धुषं तदुदाहृतम्।

नारदस्मृतिः ४-३६

आपत्स्वपिहि कष्टासु ब्राह्मणः स्यान्न वार्धुषी।

नारदः ४-४०

वार्द्धुष्यम्— वृद्ध्या जीवनम्।

**वार्द्धुष्यः**— वृद्ध्युपजीवी इति विज्ञानेश्वरः ।
वैणाभिशस्त वार्द्धुष्यगणिका गणदीक्षिणाम् ॥
याज्ञ-१-१६१

**वार्ध्रम्**— चर्म आपस्त १-५-१७-३६

**वार्ध्राणसः**— वार्ध्रे चर्म तदाकारा नासिका येषां ते वार्ध्राणसाः लक्ष्मणपक्षिविशेषाः ।
श्वेतो लोहिता वा येषां मूर्द्धा ते लक्ष्मणाः त एव विशिष्यन्ते वार्ध्राणसा इति ।
क्रुञ्च क्रौंच वार्ध्राणस लक्ष्मणवर्जम् ॥
आपस्त १-५-१७-३६

**वार्ध्रीणसः**— वार्ध्रीणसो वृद्धः श्वेतच्छाग इति विज्ञानेश्वरः १-२६०
त्रिपीवं त्विन्द्रियक्षीणं वृद्धं श्वेतमजापतिम् ।
वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः पितृकर्मणि ॥
अपरं च
कृष्णग्रीवो रक्तशिशः श्वेतपक्षो विहङ्गमः ।
वार्ध्रीणसः बृहच्छाग इति हेम द्रिः ।
वार्ध्रीणसः गण्डक इति हलायुधः ॥
वाध्रीणसश्च खड्गी गण्डक इति कथ्यते सद्भिः ।
का-२

**वार्योकाः**– योक इति प्रसिद्धः रक्तपायी कीटविशेषः । जलौका इत्याख्यः
यथाल्पाल्पमदन्त्याद्यं वार्योकवत्सषट्पदाः ॥
मनुः ७-१२६

**वाल्मीकिः**— रामायणस्य कर्ता स रामायणाध्यात्म-रामायणयोः प्रचेतसः पुत्रत्वेन उक्तः । स्कान्दे तु शर्मीमुख पुत्रः विशाखः क्रूरकर्मा सप्तर्षि प्रसादात् वाल्मीकि मुनित्वं प्रापितः इति एकत्र उक्तः । अपरत्र कृष्णु मुनितः शैलूष्यामुत्पन्न इति वर्णितः यथा
असीत् पूर्वं द्विजो देवि नाम्ना ख्यातः शर्मीमुखः ।
गार्हस्थ्ये वर्त्तमानस्य तस्य पुत्रो व्यजायत ।
वैशाख इति नाम्नास्यै रौद्रकर्मा व्यजायत । ५
मुक्त्वैकां गुरुशुश्रूषां नान्यत् किंचिदसौ द्विजः ।
अकरोच्छोभनं कर्म दिवा प्रभृति नित्यशः ॥ ६
स नित्यपदवीं गत्वा मुष्ट्वालोकान् स्वशक्तितः ।
द्रव्यमादाय पितरौ भार्यां चापि पुपोष च ॥
कस्यचित्त्वथकालस्य तेन मार्गेण गच्छतः ।
सप्तर्षींश्च तदापश्यत्तीर्थयात्रा परायणान् ॥ ६
अङ्गिरा उवाच
गत्वा पृच्छस्व तान् सर्वान् पुष्टान् पापार्जितैर्धनैः ।
अहंकरोमि पापानि सर्वे यूयं तु भक्षकाः ॥ १५
तत् पापं भविता कस्य कथयन्त्विवति मे लघु ।
तथैव गत्वा प्रपच्छ पितरौ तावथोचतुः ॥ १६
पूर्वे वयसि पुत्र त्वमावाभ्यां पाल्य एव हि ।
उत्तरे तु वयं पाल्याः सम्यक् पुत्र त्वया पुनः ॥ २१
अवश्यं स्वयमश्नाति कृतं कर्म शुभाशुभम् ।
तस्मान्नरेण कर्त्तव्यं शुभं कर्म विपश्चिता ॥ २४
ताभ्यां तद्वचनं श्रुत्वा ततो भार्यामभाषत ।

तथैव वाक्यं सावोचद् यत प्रोक्तं गुरुभिः पुरा ।
ततो वैराग्यमापन्नो वैशाखो मुनिसत्तमः ॥ २६

× × ×

एवं विकल्पहृदयो गत्वा स ऋषिसन्निधौ ।
उवाच श्लक्ष्णया वाचा गम्यतामिति सादरम् ॥ २६
इतो प्रगृह्यतामेषा तथैव च कमण्ड़लुः ।
वल्कलानि च चीराणि मृगचर्माण्यशेषतः ॥ ३२

× × ×

येन युष्मत प्रसादेन पापात् मोक्षमहं व्रजे ।
उपासेथ मन्त्रो वा नियमो वाथ संयमः ॥ ३३
ऋषय चुः—
साधुपृष्टं त्वयावत्स तत्त्वमेकमनाः शृणु ।
संगृह्य कीर्त्तयिष्यामस्तस्त्वाख्येयं न कस्यचित ॥ ३४
येन जप्तेम पापात्मन् मोक्षं प्राप्स्यसि निश्चितम् ।
जाट घोटस्त्वया कीर्त्यो मन्त्रोयं चतुरः क्षरः ॥ ३५
सर्वं पापहरो नृणां स्वर्गमोक्षफलप्रदः
मन्त्रेतीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ ३९
आदिष्टो गुरुणा यश्च विकल्पं हृदिगच्छति ।
नासौ सिद्धिमवाप्नोति मन्दभाग्यो यथा निधिम् ॥ ४३
एवं वर्षसहस्राणि समतीतानि भूरिशः ।
तस्य जाप्यपरस्यैव अमृतत्व गतस्य च ॥ ४४
ततः कालक्रमेणैव वल्मीकेन स वेष्टितः ।
येनासौ सर्वतो व्याप्तो न चतं सवुबोध वै ॥ ४५
ऋषय उचुः × × ×

यस्मात्त्वं मन्त्रमेकाग्रो ध्यायन् वल्मीकमाश्रितः ।
तस्माद् वाल्मीकिनामात्त्वं भविष्यसि महीतले ॥ ५७
स्वच्छन्दा भारतीदेवी जिह्वाग्रे ते भविष्यति ।
कृत्वा रामायणं काव्यं तत मोक्षं गमिष्यसि ॥ ५८
स्कन्द प्रभास २७८ अध्याय

वैष्णवखण्डेतु अन्यथा वर्णितम्—

कृणुर्नाम मुनिः कश्चित्तस्मिन्नेव सरोवरे ।
तपो वै दुस्तरं तेपे वाह्य व्यापारवर्जितः ।
वल्मीकमभवद्देहे तस्य कालेन भूयसा ।
वल्मीक इति तं प्राहुरतो वै मुनि पुंगवम् ॥
पश्चात्तपोविरामान्ते कृणो स्मृतिपथं गते ।
स्त्रियोनुस्मरतो राजन् स्खलितं चेन्द्रियं मुनेः ॥
जग्राह शैलुषी काचित्तस्यां जज्ञे वनेचरः ।
वाल्मीकिरिति विख्यातो भुवनेषु महायशाः ॥
यो वै रामकथां दिव्यां स्वैः प्रबन्धैर्मनोहरैः ।
लोके प्रख्यापयामास कर्मबन्धनिवृन्तनम् ॥
स्कन्द, पु वैष्णव-वैशाख-२१ अध्याये

अध्यात्मरामायणे यथा तु—

प्रचेतसोहं दशमः पुत्रो रघुकुलोद्वह ॥ ३१
अनृतं न स्मराम्युक्तं तथेमौ तव पुत्रकौ ।
बहून् वर्षगणान् सम्यक् तपश्चर्या मया कृता ॥ ३२
नोपश्नीयां फलंतस्या दुष्टेयं यदि मैथिली ।
वाल्मीकि नैवमुक्तस्तु राघवः प्रत्यभाषत ॥
उत्तरकाण्डे-७-३१

रामायणेऽपि—

प्रचेतसोहं दशमः पुत्रो राघवनन्दन ।
न स्मराम्यनृतं वाक्यमिमौ तु तव पुत्रकौ ॥ १९
बहुवर्षसहस्राणि तपश्चर्या मया कृता ।
नोपाश्नीयां फलं तस्या दुष्टेयं यदि मैथिली ॥
रा, उत्त, ६६-२६

**वाव**— एव ।
वाव एव इति श्रीशङ्कराचार्याः केनोपनिषत् ४-७

**वावाता**— (१) राज्ञः मध्यमजातीया स्त्री इति सायणाचार्याः ।
(२) पुत्रे कलत्रे नप्तरि वा स्थिते विवाहिता स्त्री ।
मर्मणेयं यतः साध्या वनिता तेन सा स्मृता ।
सर्वस्वर्णपदैर्वाच्या वावातेति च भण्यते ॥
इति पूर्वाङ्गिरसे ।

**वाशी**— काष्ठप्रछन्नं शस्त्रम् तत् वारसी इति उत्कलेषु ख्यातम् ।
वास्येति वासीति वा पाठे स एवार्थ इति नीलकण्ठः ।
भारतभावदीपे महाभा, उद् १५५-८
चन्दनेन तु लिप्ताङ्गं वास्येव चैव तक्षतः ।
कल्याणमप्य कल्याणं तयोरेव न संश्रयेत् ॥
इति शंखस्मृतिः ७-८

**वाश्यमानः**— शब्दंकुर्वाणः ।
शकुनि वाश्यमान मभिमन्त्रयते ॥ पारस्कर ३-१५-२०

**वाश्रा**— नवप्रसूता धेनुरिति श्रीधरस्वामी ।
वाश्रेवत्सकमनुग्रहकातरोऽस्म न इत्यादि

**वासकः**— पुष्पविशेषः शेफालीशब्दे द्रष्टव्यः ।

**वासनम्**— पात्रम् पेटिकादि यस्य पिधानमस्ति ।
निक्षेपद्रव्यस्याधारभूतं द्रव्यान्तरवासनं करण्डादि इति विज्ञानेश्वरः याज्ञ-२-६५
वासनं निक्षिप्तद्रव्याधारः सम्पुटादि इति विवाररत्नाकरे-८४
उत्कलेषु अन्नव्यञ्जनादि भोजनपात्राणि जनैः वासन शब्देनोच्यते ।

**वासवम्**— धनिष्ठानक्षत्रम् ।
वासवं वसुदैवतं धनिष्ठानक्षत्रमिति हेमाद्रौ परि-१५५
वासवाजैकपादर्क्षे पितॄणां तृप्ति िच्छतम ।
वारुणेनाप्यसावास्या देवानामपि दुर्लभा विष्णुपु, ३-१४-६
गीताप्रेस प्रकाशितपुराणे नाप्यस्थानेवाप्य इति पाठः

**वासिः**— काष्ठतक्षणोपकरणविशेषः वासिं इति प्रसिद्धः ।
आपस्त-२-६-२२-१५
दारितच्छेदितोवास्या मोदेनैव तु चन्दनः ।
बृहन्नारदीयपु-८-१२८
सौरभं कुरुते सर्वं तथैव सुजनो जनः ॥

**वासिता**— हस्तिनी ।
वसन्ते वासिताहेतो र्बलवद्गजयोरिव ।
महाभा, विरा १-२२-५४

**वास्तुकम्**— पत्रशाकविशेषः बथुआ इति प्रसिद्धः ।

वाकवत इत्याचरेन्दुः

वास्तुसम्पादनम्— वास्तुनः विहितकर्मयोग्यतापादनम् ।
सुधादिना भित्तीनां गोमयेन भूमे रुपलेपनम् ।
दक्षिणाप्रवणता चोति श्राद्ध प्रकरणे मेधातिथिः ॥

वाहः— (१) दशकुम्भपरिमितधान्यादिः ।
कुम्भैस्तु दशभिर्वाहो धान्यसंख्या प्रकीर्त्तिता ।
इतिनित्याचारप्रदीपोद्धृत विष्णुधर्मोत्तरे ।
वाह द्रोणी पर्यायः स च कुम्भद्वयमिति
भावप्रकाशे उक्तः खारीशब्दे द्रष्टव्यः ।
(२) अश्वादयः जलयाने नाविकाश्च वसिष्ठः १६-१७

वाहिनी—(१) नदी ।
(२) नौकासंयाने दशवाहवाहिनी वसिष्ठः १६-१७
तत्र वाहिनी नौरिति चण्डेश्वरः विवादरत्नाकरः ।
पृ-६३६
(३) सैन्यादिसमष्टिविशेषः ।
८१ गजाः ८१ रथाः २४३ अश्वाः ४०५ पदातयाः
वाहिनीत्युच्यते प्रमाणमक्षौहिणीशब्दे द्रष्टव्यम् ।
रथेभाः सप्ततियुतं द्विशतं चाथवाजिनः ।
दशोत्तरं शतान्यष्टौ पदाताश्चत्रयोदश ।
शतान्येभिमिता धीरे वाहिनी सैन्यकाविदैः
वीरसर्वस्वम्-२८५

विकथा— विरुद्धा कथा व्यर्था कथा इति भावः ।
अध्ययने अनुपयुक्ता कथा विकथेति हरदत्तः
आपस्त-१-४-१३-७

विकटम्— तोलनयन्त्रस्य शिक्याधोभागपात्रमिति मिता-
क्षराव्याख्यायां सुबोधिनी ।

विकटा— विस्तीर्णजङ्घा विकटजङ्घा वा इति आपस्तम्ब-
गृह्यसूत्रव्याख्यायां मिताशब्दोमृग्यः ।

विकर्म— विकर्माणि यदाह दक्षः ३-१२
अनृतं पारदार्यं च तथाभक्ष्यस्य भक्षणम् ।
अगम्यागमनापेयापानं स्तेयं च हिंसनम् ॥
अश्रौतकर्माचरणं मित्रधर्मबहिष्कृतम् ।
नवैतानि विकर्माणि तानि सर्वाणि वर्जयेत् ।

विकर्मस्थः— विरुद्ध कर्मसु वर्त्तमानः ।
प्रतिषिद्धसेविनो विकर्मस्था इति विज्ञानेश्वरः ।
दक्षीकतविकर्मसु वर्त्तमान इति युज्यतेतराम् ॥

विकर्षः— विकर्षः विप्रकर्षः दूरता इति यावत् ।
यः परमो विकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी ॥

विकल्पः— (१) विभिन्नः कल्पः ।
तुल्यबलविरोधो विकल्प इति गौतमः-१-१-५
जैमिनिरपि-१२-३-१०
उदिते भानौ जुहुयात्, अनुदिते जुहुयात्, समयाध्युषिते
जुहुयात् इत्यादिरूपः षोडशीग्रहणाग्रहणवत् च ।
(२) विमर्शः इति कल्पतरुः गार्हस्थ्य-१८६
आपत्काले ब्राह्मणस्य मातापितृमतो बहुभृत्यस्यानन्तरि-
कावृत्ति विकल्पः इति तत्र शंखलिखितौ ।
(३) संशयः ।

न कश्चिज्जायते तत्र विकल्पः कस्यचित्क्वचित् ।
मम तस्याधमस्यापि सर्वकृत्येषु सर्वदा ॥

स्कन्द-नागर-१५७-३८

**विकल्पी**— (१) मीमांसकः ।

चातुर्विद्यो विकल्पी च अङ्गविद्धर्मपाठकः ।
आश्रमस्थास्त्रयो मुख्याः पर्षदेषां दशावरा ॥

वसिष्ठः ३-२०

(२) प्रमाणज्ञः ।

धर्मस्य पर्षदश्चैव प्रायश्चित्तक्रमस्य च ।
त्रयाणां यः प्रमाणज्ञः स विकल्पी भवेद्द्विजः ॥ इति
अङ्गिरसस्मृतौ ५-३

**विकालः**— सायंकालः इति नीलकण्ठः ।

न विश्वासाज्जातु परस्य गेहे गच्छेन्नरश्चेतयनो विकाले ।
न चत्वरे निशितिष्ठेन्निगूढो नराजकाम्यां योषितं प्रार्थयीत ॥ महाभा, उद् ३७-२८

नोद्यानादौ विकालेषु प्राज्ञस्तिष्ठेत् कथंचन ।
न चालयेज् जनं दुष्टं वीरहीनां न च स्त्रियम् ॥

मार्कण्डेयपु-३५-३०

विकालश्च सुकालश्च दुष्कालः कालनाशनः ।
मृत्युश्चैवाक्षयोऽनतश्च क्षमामायाकरोत्करः ॥

ब्रह्मपु ४०-६३

**विकिरः**= (१) विकीर्णः पिण्डः ।

असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ।
उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च यः ॥

मनुः ३-२४५

(२) पादाभ्यां ये विकीर्य कीट धान्यादि भक्षयन्ति ।
ते मयूरादयो विकिराः इति हरदत्तः ।
कुक्कुटो विकिराणाम् इत्यापस्तम्बः १-५-१७-३२

**विकीर्णः**— असंस्कृतप्रमीतादिभ्यः दर्भोपरि प्रक्षिप्तमन्नाद्यम् ॥

**विकुट्टनम्**— शोषणम् ।

मधुदोहं दुहेद्राष्ट्रं भ्रमरा इव पादपम् ।
वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत् ॥

इति महाभारते

अत्र विकुट्टयेत् शोषयेत् इति नीलकण्ठभट्टः ।

नीतिमयूखे-७४

**विक्रयः**— (१) अर्थविनिमयेन द्रव्यसमर्पणम् ।

(२) विक्रयस्थानम् । मनुः ८-२०१

**विकृतिः**— सपरिकराभिहिता प्रकृति विकृतिरन्या इति मीमांसकसिद्धान्तः ।

**विक्रियासम्पादनम्**— व्यवहारपदविशेषः ।

विक्रीयासम्प्रदानं तद् विवादपदमुच्यते ॥

इति नारदः

**विक्रोशः**— चोरादिभयाकुलैः कृतमाह्वानम् ।

स्वच्छन्दविधवागामी विक्रुष्टे नाभिधावकः ॥
अकारणे च विक्रोष्टा चण्डालश्चोत्तमान् स्पृशेत् ॥

याज्ञ २-२३४

**विक्लिधः—** विचर्चिकादियुत इति श्राद्धकाण्डे कल्पतरुः

तत्र द्विर्नग्नशुक्ल विक्लधश्‍-यावदन्तविद्धप्रजननव्याधि-

तव्यङ्गशिवत्रिकुष्ठिकुनखिवर्जम् इति

कात्यायनश्राद्धकल्पसूत्रम् १-११

गदाधरस्तु विक्लिन्ध इति पाठित्वा लिखति विकिन्धो

दन्तुरः तथोक्तं मनुना—

यस्य नेवाधरोष्ठाभ्यां छाद्यते दशनावलिः ।

विक्लिधः स तु विज्ञेयो ब्राह्मणः पंक्तिदूषणः ।।

विक्लिधः पूतिगन्धघोण इति गोभिलीयश्राद्धकल्पभाष्ये

इत्याह उपलब्धमनुस्मृतौ तु नायं श्लोक उपलभ्यते ।

**विगृह्यकथा—** अहोपुरुषिका ।

अभिनिवेशेन पणबन्धादिना कथा इत्यर्थः ।

अभिनिवेशेन कथा इति कुल्लूकः ।

न विगृह्य कथां कुर्यात ।। मनुः ४-७२

विगर्ह्य कथेति पाठान्तरम् ।

**विग्रहः—** (१) युद्धम् राजधर्म गुणविशेषः

विग्रहस्तु द्विविधः ।

स्वयंकृतश्च कार्यार्थमकाले काल एव वा ।

मित्रस्य चैवापकृते द्विविधो विग्रहः स्मृतः ।।

मनुः ७-१६४

(२) शरीरम् ।

तत क्षणादेवगृह्णाति शरीरमातिवाहिवम् ।

ऊर्ध्वं व्रजन्ति भूतानि त्रिण्यस्मात्तस्य विग्रहात ।।

इति प्रायश्चित्तविवेके विष्णुधर्मोत्तरे २-११६-१२

**विघसः—** (१) देवपित्रतिथिभुक्तशेषमन्नम् ।

विघसाशी भवेन्नित्यं नित्यं वामृतभोजनः ।

विघसो भुक्तशेषं तु यज्ञशेषं तथामृतम् ।।

मनुः ३-२८५

(२) भोजनम् ।

आत्मोदरकृतेऽप्राज्ञः करोति विघसं बहु महाभ, शा,

१७-६

**विघसाशी—** देवपित्रतिथि भुक्तशेषानं विघसं

तदशीतुं शीलमस्येति विघसाशी प्रमाणं विघसशब्दे

द्रष्टव्यम् ।

**विघोषः—** पश्वादीनामस्थिरता सम्पादनं पटहादिना

येन पशव इतस्ततो धावन्ति ।

विघुष्य तु हृतं चौरे र्नपालो दातुमर्हति ।।

यदि देशे च काले च स्वामिनः स्वस्य शंसति ।।

मनुः ८-२३३

**विचिकित्सा—** संशयः ।

**विजन्मा—** व्रात्याद् वैश्यात् सवर्णायां जातः ।।

मनुः १०-२३

**विजन्या—** गर्भिणी ।

गर्भिणीं विजन्येति ब्रूयात पारस्कारः २-७-११

**विजया—** वैष्णवैकादशीविशेषः ।

यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं स्पृशेत ।

तदा सा तु महापुण्या द्वादशी विजया स्मृता ॥
इति ब्राह्मे

**विजयादशमी—** आश्विनशुक्लदशमी ।

**विजयासप्तमी—** शुक्लपक्षस्य सप्तम्यां सूर्यवारो भवेद् यदि ।

सप्तमी विजया नाम तत्र दत्तं महाफलम् ।
स्नानं दानं जपो होम उपवासस्तथैव च ।
सर्वं विजयसप्तम्यां महापातकनाशनम् ।
इति समयप्रदीपोद्धृत भविष्ये ।

**विज्ञानम्—(१)** शुक्लद्वितीयादिनभागः कालमाधवः २
(२) शिल्पम् ।
विज्ञानमुच्यते शिल्पं हेमकुप्यादि संस्थितिः ।
नृत्यादिकं च तच्छिक्षन् कुर्यात्कर्म गुरोर्गृहे ॥
इति बृहस्पतिः विवादरत्नाकरे १४१
स्मृतिचन्द्रिका-व्यव ४५६

**विट्—** वैश्याजातिः ।

**विट्पतिः—** जामाता ।
विट्पतिर्जामाता प्रजावचनत्वात् विट्शब्दस्य ।
अतिथिमन्ये, स हि सर्वविशां पतिर्गृहाभ्यागतो लोकेऽपि विट्शब्देनोच्यते ॥ इति मेधातिथिः
विट्पतिरतिथिरित्यन्ये इति पराशरमाधवे देवस्वामी ।
विट्पतिः जामाता अतिथिर्वा अतिथिरित्यन्ये वदन्तीति देवस्वामिनाभिधानात् स्मृतिचन्द्रिका,
श्राद्ध-१६०

दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ।
मनुः ३-१४८
ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
एभिरेव हुतं यत्तु तद्धुतं स्वयमेव तु इति दक्षः ।
नित्याचारप्रदीपे-१-४२०

**विडम्बनम्—** मुण्डनगर्दभारोहणादि इति विवादरत्नाकरे-६५५

तत्र कात्यायनः ।
ताडनं बन्धनं चैव तथैव च विड़म्बनम् ।
एष दण्ड़ी हि दासस्य नार्थदण्ड़ो विधीयते ॥ इति

**विड्वराहः—** ग्राम्यवराहः ।
विड्भुक् वराह इति भावः ।

**वितण्डा—** परपक्षमस्थापयन्ती युक्तिः ।
वितण्ड़या परीवादो जल्पास्ते ते पृथग्विधाः ।
इति श्राद्धकाण्ड़े कल्पतरुः १२१
वितण्ड़ावचनाच्चैके निजघ्नुः प्रतिवादिनः ।
ऋषयस्तत्रविद्वांसः सांख्यार्थन्यायकोविदाः ॥
वायुपु १-२-३०

**वितथम्—** मिथ्या, मनुः ८-११८

**वितथाभिनिवेशः—** नास्ति परलोकः देह एवात्मा इत्येतद्ग्रहः ॥ इति कुल्लूकः १२-५

**वितपन्—** कृष्णपक्षगतदिवसस्य नवमो मुहूर्तः इति कालमाधवे-३

वितस्तिः — द्वादश अङ्गुलोः ।

तिर्यग् यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः ।

प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलाः ॥ ५१

इति मिताक्षरायाम् २-१०६

तिर्यग् यवोदराण्यष्टावूर्ध्वावूर्ध्वा वा व्रीहयस्त्रयः ।

प्रमाणमङ्गुलमाहुर्वितस्तिर्द्वादशाङ्गुला ॥ ५५

वितस्तिद्वितयं हस्तश्चतुर्हस्तं धनुः स्मृतम् ।

स एव दण्डो गदितो विशेषज्ञैर्युधिष्ठिर ॥

स्कन्द-आव-रेवा-२२७-५६

वितानः — (१) वितानः आहवनीयगार्हपत्यदक्षिणाग्नीनां

विस्तारः इति हरिहरभाष्ये ॥ पारस्करः ३-१०-३२

जन्महानौ वितानस्य कर्मलोपो न विद्यते ।

शालाग्नौ केवलो होमः कार्य्य एवान्य गात्रजैः ।

इति जवालः मन्वर्थमुक्तावल्याम् ५-८४

(२) उल्लोचनम् —

वितानो यज्ञे उल्लोचे विस्तारे पुंनपुंनवम् ।

क्लीवं वृत्तविशेषे स्यात् त्रिलिंगो मन्दतुच्छयोः ॥

इति मेदिनी ।

वित्तम् — धनम् ।

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।

यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥

स्कन्द-नागर-१६८-७८

विदलम् — वंशादिवल्कलम् ।

विदलं वल्कमिति लक्ष्मीधरः नित्याचारप्रदीपे अपि

२-१२

वंशकृतपात्रभेद अमरकोष व्याख्याने । ३-५-३२

विदलं वेणवादि इति विज्ञानेश्वरः १-२८२

विदलं वंशादिवल्कं येन पात्रादिनिर्माणं क्रियते

इति नि कर्षः उत्कलभाषायां तु पाति इत्युच्यते ।

रज्जुविदलचर्मणां चैलवत् शौचम् ॥ वसिष्ठः ३-५३

विदारिका —
विदारी — } भूकुष्माण्डम् ।

आम्रमामलकीमिक्षुं मृद्वीकादधिदाडिमान् ।

विदार्यश्चैव रम्भाद्या दद्याच्छ्राद्धे प्रयत्नतः ॥

इति शंखः १४-२२

विदार्यः — भूकुष्माण्डम् ।

विदार्यान् भूकुष्माण्डीकन्दान् कृष्णकुष्माण्ड्याः फलानि

वा इति हेमाद्रिः कृष्णवर्णभूकुष्माण्डफलमिति

माधवः ॥

विदूरः — जातिविशेषः प्रव्रजितात् जातः ।

ये च प्रव्रजितापत्या या चैषां वीजसन्ततिः ।

विदूरा नाम चाण्डाला जायन्ते नात्र संशयः ॥

अत्रिस्मृतिः ८-१८

विद्धप्रजननः — छिन्नशिश्नचर्मा ।

कृतशिश्नविकारविशेषो दाक्षिणात्ये प्रसिद्धः ॥

इति कल्पतरुः नियत-२७१ छिन्नलिङ्गचर्मा

दाक्षिणात्ये प्रसिद्ध इति गदाधरः ।

द्विर्नग्नशुक्लविक्लिधश्यावदन्तविद्धप्रजननेत्यादि

कात्यायनश्राद्धसूत्रे ॥ १-११

**विद्धा**— सूर्योदये पूर्वस्यास्तिथेः त्रिभिर्मुहूर्त्तैः युक्ता परतिथिः अस्तमनात् पूर्वं परस्यास्तिथेः त्रिभिमुहूर्त्तैः युक्ता पूर्वतिथिश्च ।

यथा उदयात् परं त्रिमुहूर्त्ता प्रतिपत् परां द्वितीयां विद्धाति अस्तमनात् पूर्वं त्रिमुहुर्त्ता द्वित या पूर्वां प्रतिपदं विध्यति ।

तदुक्तम्—

पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथापराम् ।
त्रिभिमुहुर्त्तैर्वेध्यन्ति समान्योऽयं विधिः स्मृतः ॥

**विद्धाधिका**— विद्धातिथिश्चेद् अधिका भवति अर्थात् दिनद्वये कर्मकालं व्यानोति सा, या तु दिनद्वये उदयं स्पृशति सा विद्धाधिका ।

या तु विद्धाधिकाविद्धाधिकयोरयमेव प्रभेदः ॥

**विद्या**— (१) पुरुषार्थसाधनमिति विज्ञानेश्वरः ।

पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।
वेदस्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

याज्ञ-१-३

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थं नोपपद्यते ॥
योहेरिव गणाद् भीतः सौहित्यान्नरकादिव ।
राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ॥
यद्पदैः पांशुभिः श्लक्ष्णैर्वल्मीकः क्रियते महान् ।
न तत्र बलमावध्यमुद्योगस्तत्र कारणम् ॥
शनैर्विद्यां शनैरर्थानारोहेत् पर्वतं शनैः ।
शनैः कन्था शनैः पन्थाः पञ्चैतानि शनैः शनैः ॥

इति नारदः संस्कारप्रकाशे-५२६

(२) आत्मज्ञानम् ।

तपो विद्या च विप्रस्य निःश्रेयसकरं परम् ।
तपसा किल्विषं हन्ति विद्ययाऽमृतमश्नुते ॥

मनुः १२-१०४

**विद्याधनम्**— कात्यायनस्मृतिसारोद्धारे-८६७ श्लोकाः ।

परभक्तोपयोगेन विद्याप्राप्ताऽन्यतस्तु या ।
तया प्राप्तं धनं यत्तु विद्याप्राप्तं तदुच्यते ॥
उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्वकम् ।
विद्याधनं तु तद्विद्याद् विभागे न विभज्यते ॥
शिष्यादार्त्विज्यतः प्रश्नात् सन्धिग्धप्रश्ननिर्णयात् ।
स्वज्ञानशंसनाद् वादाल्लब्धं प्राध्ययनाच्चयत् ॥
विद्याधनं तु तत् प्राहुर्विभागे न विभज्यते ।
शिल्पिष्वपि हि धर्मोऽयं मूल्याद् यच्चाधिकं भवेत् ।
परं निरस्य यल्लब्धं विद्यातो द्यूतपूर्वकम् ।
विद्याधनं तु तद्विद्यान्न विभाज्यं बृहस्पतिः ॥
विद्याप्रतिज्ञया लब्धं शिष्यादाप्तं च यद् भवेत् ।
ऋत्विङ्न्यायेन यल्लब्धमेतद्विद्याधनं भृगुः ॥
विद्यावलकृतं चैव याज्यतः शिष्यतस्तथा ।
एतद् विद्याधनं प्राहुः सामान्यं यदतोऽन्यथा ॥

**विद्याप्राप्तम्**—विद्यया प्राप्तं धनम् प्रमाणं विद्याधनशब्दे मृग्यम् ।

**विद्वान्**— वेदवित् ।

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।

हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥

मनुः २-१

अत्र विद्वद्भिः वेदविद्भिरिति कुल्लूकः ॥

विधा— प्रकारः ।

विधाशब्दः प्रकारवचन इति मेधातिथिः ।

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।

एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥

मनुः २-१२

विधानम्— वेदः ।

त्वमेको ह्यस्य सर्वस्य विधानस्य स्वयम्भुवः ।

अचिन्त्यस्याप्रमेयस्य कार्यतत्त्वार्थवित् प्रभो ॥

मनुः १-३

विधीयन्तेऽनेन कर्माणि अग्निहोत्रादीनि इति विधानं वेदः इति कुल्लूकः ॥

विधिः— (१) अत्यन्ताप्राप्तप्रापणं विधिः ।

यथा अग्निष्टोमेन यजेत स्वर्गकामः ।

(२) विधिर्विधेयस्तर्कश्च वेदः इति पारस्करः २-६-५

अत्र वेदस्य विधायक भागोऽपि विधिशब्देनोक्तः ।

विधियज्ञः विधिना सम्पाद्यो यज्ञः ।

विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।

उपांशुःस्याच्छतगुणः साहस्रो मानसः स्मृतः ॥

मनुः २-८५

विधिविषयो यज्ञो विधियज्ञो दर्शपौर्णमासादिरिति कुल्लूकः ॥

विधुनः— पक्षिविशेषः ॥

वसिष्ठः १४-५८ कल्पतरुनियत ३०१

विधुरः— पत्नीरहितः ।

साग्निकं सधवां चैव दहेदौपासनाग्निना ।

विधुरं विधवां ब्रह्मचारिणं च कुशाग्निना ॥

लघ्वाश्वलायनस्मृतिः-२०-५२

विनता— शुक्ला । प्रयोगो मिश्रशब्दे द्रष्टव्यः ।

विनयः— (१) राजदण्डः ।

पूर्वमाक्षारयेद् यस्तु नियतं स्यात्सदोषभाक् ।

पश्चाद् य सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ।

इति मिताक्षरायां नारदः ॥

(२) शिक्षा ।

तेभ्योऽधिगच्छेद् विनयं विनीतात्मापि नित्यशः ।

विनीतात्मा हि नृपतिर्नविनश्यति कर्हिचित् ॥

मनुः ७-३९

(३) अनौद्धत्यम् ।

बहवोऽविनयान्नष्टाः राजानः सपरिच्छदाः ।

वनस्था अपि राज्यानि विनयात् प्रतिपेदिरे ॥

मनुः ७-४०

विनयनम्— पृथक्करणम् ।

सीमन्तमूर्ध्वं विनयति पारस्करः १-१५-४

विनशनम्— सरस्वत्यन्तर्द्धानप्रदेशः ।

कुरुक्षेत्रं च कुरुक्षेत्रशब्दो द्रष्टव्यः ॥

ततो विनशनं राजन् जगामाथ हलायुधः ।

शूद्राभीरान् प्रति द्वेषाद् यत्र नष्टा सरस्वती ॥

यस्मात् सा भरतश्रेष्ठ द्वैपान्नष्टा सरस्वती ॥
तस्मात्तदृषयो नित्यं प्राहुर्विनशनेति हि ।
इति तीर्थप्रकाशोद्धृतमहाभारते ॥ पृ ४८१
हिमवद्विन्ध्ययोर्मध्यं यत् प्राग् विनशनादपि ।
प्रत्यमेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥

मनुः २-२१

**विनाड़िका—** } षष्टिगुरुवर्णोच्चारणकालः । दशगुरुवर्णः प्राण षट् प्राणः स्याद् विनाड़िका तासाम् इति ॥
**विनाड़ी—**

द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणो दशत्रुटिः स्मृतः ।
विनाड़िका तु षट् प्राणः ते षष्टिर्नाडिका स्मृता ॥
इति कालमाधवे
स्ताः षष्टिर्नाड़िका मता इति विष्णुधर्मोत्तरपुराणे पाठः

१-७३-३

**विनालम्** – वेणुविदलमयादिकं दीर्घभाजनं विनालमुच्यते इति गोविन्दस्वामी बौधा, ध, १-६ १०
अलाबूविल्वविनालानामिति ॥

**विनिकारः—** वञ्चनम् ।
यो ज्येष्ठो विनिकुर्वीत लोभाद् भ्रातृन् यवीयसः ।
सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः ॥

मनुः ९-२१३

**विनिगमना—** एकपक्षपातिनी युक्तिः ।
एकतरावधारणमिति श्रीनाथ ।
निर्णयज्ञानमिति रामचन्द्रः दायभागः-१

**विनिमयः**— परिवर्त्तनम् ।

**विनियोगः—** अनेन मन्त्रेण इदं कर्म कर्त्तव्यमिति निर्देशः
पुराकल्पे समुत्पन्ना मन्त्राः कर्मार्थमेव च ।
अनेनेदं तु कर्त्तव्यं विनियोगः स उच्यते ॥
इति योगियाज्ञवल्क्यः परिभाषाप्रकाशे-८७

**विन्दमाना—** भर्त्रन्तरपरिग्राहिणी इति श्रीमूला ।
पतिदायं विन्दमाना जीयेत २६ धर्मकामा भुञ्जीत ॥२७

कौट-३-२

**विन्ध्यः—** कुलपर्वतविशेषः ।
महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षपर्वतः ।
विन्ध्यश्च पारियात्रश्च सप्तैवात्र कुलाचलाः ॥

ब्रह्मपु-२७-२०

**विपणः—** लवणादिप्रतिषिद्धपण्यम् वाणिज्यं वा ।
विपणेन च जीवन्तः मनुः ३-१५२
विपणो वणिज्या इति कुल्लूकः ।

**विपरिधानम्—** वस्तुपरिवर्त्तनम् ।

**विपर्यासः—** अधोमुखीकरणम् ।
पत्रं चास्य विपर्यस्येयुः गौतमः ३-२-१

**विपाकः—** परिणामः ।
विपाकः कर्मणां प्रेत्य केषांचिदिह जायते ।
इह वामुत्र वैकेषां भावस्तत्र प्रयोजनम् ॥

याज्ञ ३-१३३

धर्माधर्मयोः विपाकः जात्यायुर्भोगाः ।

**विपाठः—** स्थूलदण्डबाणविशेषः ।

स्थूलदण्डबाणविशेषः विपाठः स्थूलदण्डः स्यात् इति
कल्पतरुः

इति नीलकण्ठः ।

विपाठाः पृथवः कस्य गार्धपत्राः शिलाश्रिताः ।
हारिद्रवर्णाः सुमुखाः पीताः सर्वायसाः शराः ॥
महाभा, विरा-४२-७

**विपुंसी**— कूर्चादिविकारेण पुरुषाकारा स्त्री ।
विपुंसीं षण्ढं च नोपहसेत् ॥ पारस्करः २-७-१०

**विप्रः**— वेदाभ्यासपरो ब्राह्मणः ।
जन्मना ब्राह्मणो ज्ञेयः संस्काराद्द्विज उच्यते ।
वेदाभ्यासाद् भवेद्विप्रस्त्रिभिः श्रोत्रिय उच्यते ॥ इति

**विप्रतिषेधः**— विरोधः ।
अर्जनं स्वत्वं नापादयतीति विप्रतिषिद्धम् ॥
आपस्त १-११-३०-६
मिताक्षरायाम् २-११३ उद्धृतम् ।

**विप्रवृतः**— विप्रैः प्रार्थितः ।
रोगी नियुक्तो विधिना हुतं विप्रवृतस्तथा ।
मांसमद्याच्चतुर्धेषा परिसंख्य प्रकीर्त्तिता ॥
इति बृहस्पतिः ।

**विप्रुट्**— सूक्ष्मजलकणा ।
विप्रुष उदविन्दवः स्पर्शमात्रानुभवेन या अदृश्य
मानरूपविशेषा इति मेधातिथिः मनुः ५-१३३
मक्षिका विप्रुषश्छाया गौरश्वः सूर्यरश्मयः ।
रजो भूर्वायुराग्निश्च स्पर्शे मेध्यानि निर्दिशेत् ॥
मनुः ५-१३३

**विप्रुषीका**— विप्रुषीकाः शालिभेदा इति हेमाद्रिः ।
विप्रुषीका मसूराश्च श्राद्धकर्मणि गर्हिताः ।
षट्त्रिंशन्मते च मार्कण्डेयपु-३२-४

**विफलः**— वृषणरहितः ।
ब्राह्मणानां च शापेन सर्वभक्ष्यो हुताशनः ।
समुद्रश्चाप्यपेयश्च विफलस्तु पुरन्दरः ॥ इति यमः
विफला वृषणरहित इति राजधर्मकाण्डे कल्पतरुः ।

**विभक्तजः**— पुत्रेषु विभक्तेषु पश्चाज्जातः पुत्रः ।
अनीशः पूर्वजः पित्रोर्भ्रातुर्भागे विभक्तजः ॥
इति मिताक्षरायाम् २-१२२
विभक्तजः गित्यूमेव गौतम ध, ३-१०-२७

**विभाक्**— ब्रह्मा ।
विभजत्यात्मानं देवमनुष्यादिरूपेण नानाशरीरानु-
प्रवेशेनेति विभाक् इत्युज्ज्वलावृत्तिः ।
देवपितृमनुष्यादिना ज्ञातृज्ञेयज्ञानभेदेन च यस्मात् स
एव ज्ञेय आत्मा स्वतो विभजति जगदनेकधा ॥ इति
विवरणे श्रीशङ्कराचार्याः आपस्त १-८-२३-२

**विभागः**— विभागो नाम द्रव्यसमुदायविषयाणामनेकस्वा-
म्यानां तदेकदेशेषु व्यवस्थापनम् । मिताक्षारा २-१०२

**विभागपत्रम्**— विभक्ता येन भ्रात्राद्या स्वइच्छया तु
परस्परम् ।

विभागपत्रं कुर्वन्ति भागलेख्यं तदुच्यते ॥

इतिशुक्रनीतौ ।

**विभावनम्**— निरूपणम् ।

बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम् ।

स्वरवर्णेङ्गिताकारैश्चाक्षुषा चेष्टितेन च ॥

मनुः ८-२५

**विभावितम्**— प्रतिपादितं प्रमाणितमित्यर्थः ।

अर्थेऽपव्ययमानं तु करणे न विभावितम् ।

दापयेद्धनिकस्यार्थं दण्डलेशं च शक्तितः ॥

मनुः ८-५१

विभावयेन्न चेल्लिङ्गैस्तत्समं दण्डमर्हति ॥ याज्ञ २-२१

**विभाषा**— विकल्पः ।

राजन्यो वा तिथिर्भवति नेति विभाषा भवत्येव इति कल्पतरौ नियतकालकाण्डे पैठीनसिः-१८६

**विभूः**— कृष्णपक्षरात्रिद्वादशमुहूर्त्तः इति कालमाधवे-३

**विभ्रमः**— भयं विनाऽप्याकुलता ।

सर्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते ।

अन्यत्र सूतकाशौचविभ्रमातुरमीतितः ॥

इत्याचारसारे विष्णुपुराणम् ।

**विमर्दः**— युद्धम् ।

तस्मिन् विमर्दे महति प्रवृत्ते महाभा, भीष्म ७८-४०

**विमर्शः**— (१) शोधनम् ।

विमृष्टे शोधयति इति हरिहरः कात्यायन, स्नानसूत्रम् ३-१६

(२) विचारः ।

**विमलः**— (१) हंसः शुचिषदित्यादिमन्त्रः विमल इति आह्निकेमित्रमिश्रः । नियतकालक ण्डे लक्ष्मीधरश्च ६४

विमलं शिवसंकल्पं विवर्णं रोहितं ततः ॥

तत्रात्रि स्मृतौ

(२) विमलशब्दः गणकप्रसिद्धा अक्षरसंख्यया चतुष्षष्ठ्या-शधिकशतत्रयाहोरात्रमाचष्टे इति कालमाधवे

अतुलशब्दो द्रष्टव्यः ॥

**विमलब्रह्मचर्यम्**— उद्ध्वरेतस्त्वम् ।

**विरक्तः**— संन्यासी ।

**विरजः क्षेत्रम्**—वैतरणीतीरस्थं याजपुरम् ।

सम्प्रत्यस्य याजपुरमितिसंज्ञा । अत्र विरजा देवी विद्यते नाभिगया इति अस्य क्षेत्रस्य प्रसिद्धिः ।

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयंविधिः ।

वर्जयित्वा कुरुक्षेत्रं विशालं विरजं गयाम् ॥

इति त्रिस्थलीसेतौ देवलः

विरजमुत्कलदेशे प्रसिद्धम् । दक्षिणदेशस्थलोणक्षेत्रमपि विरजमिति विधानपारिजाते ॥ ७५४

**विरात्रम्**— निशीथः ।

विरात्रे निशीथे इति अर्थशास्त्रव्याख्याने श्रीमूला

विरात्रे छन्नकुड्यच्छायासंचारिणमिति ॥ कौटि-४-६

विरावः— विकृतशब्दः ।

न च रक्तो विरावयेत् ॥ मनुः ४–६४

न च सानुरागो रासभादिरावं कुर्यादिति कुल्लूकः ।

विरूपा— } ज्येष्ठायामनूढायां विद्यमाना अनुजा ।

विरूपिका— } एकमातृप्रसूतानां भ्रातॄणां परिवेदने ।

दोषः स्यात् सर्ववर्णेषु नेतरेष्वत्रवीन्मनुः ॥

नाग्नयः परिविन्दन्ति न वेदा न तपांसि च ।

न च श्राद्धं कनिष्ठस्य च या कन्या विरूपिका ॥

इति शातातपकात्यायनौ

विरूपायां ज्येष्ठायामनूढायामित्यपरार्कः ॥

याज्ञ १-२२४

विरेकः— अतिसारः ।

मैथुने दुःस्वप्ने रुधिरोपगते कण्ठे वमनविरेकयोश्च ॥

स्नानमाचरेयुरिति शेषः । विष्णुः २२-६७

विलग्नः— कृशः ।

सुदक्षिणा वेदिविलग्नमध्या सापद्मपत्राभनिभा शिखण्डिनी ॥ महाभा (३७-१)

विलम्बकम्— पटोलफलम् ।

विलम्बकानि पटोलानि इति हेमाद्रिः परि-५८८

श्राद्धप्रकाशे मित्रमिश्रश्च-श्राद्ध ५२

प्रियालामलकैर्मुख्यैः फल्गुभिश्च विलम्बकैः ।

वंशाङ्कुरैस्तालकन्दैश्चुक्रिकाक्षीरिकाधवैः ॥

इति मार्कण्डेये

एतदेव उत्कलेषु गयाकलरा इति शचीन्द्रा इति प्रसिद्धं मन्ये ॥

विलयः— घृतमलम् ।

घिअकोरुअ इति भाषायां प्रसिद्धम् ।

विलयनम्— घृतादिमलमिति विज्ञानेश्वरः ३-२८६

नवनीतमिति हरदत्तः आपस्त २-८-१८-१

विलयनं मथितं पिण्याकं मधुमांसं च वर्जयेत् ॥

विलयनं भक्तमण्डमिति हेमाद्रिः (पेज) परि-६१३

विलयनं विगलनमिति देवपालः ॥ काठकगृ-३-१-८

पुष्टिकाम एव संप्रजातासु निशायां गोष्ठेऽग्निमुपसमाधाय विलयनं जुहुयात् गोभिल गृ-३-६-४

अत्र विलयनशब्देन घृतनिष्यन्दनमर्द्धमथितं दधि-चोच्यते तथा चोक्तम् ।

दध्यर्द्धं मथितं सर्वं तद् वै विलयनं स्मृतम् ।

घृतनिष्यन्दनं चात्र क्षिप्रमेका तथाहुतिः ॥

इति चन्द्रकान्तभाष्ये ।

विलायनम्— दाहनम् ।

यन्नामकीर्त्तनं भक्त्या विलायनमनुत्तमम् ।

मैत्रेयाऽशेषपापानां धातूनामिव पावकः ॥

विष्णुपु-६-८-२०

विवयनम्— रज्जूनामोतप्रोतरूपेण संयोजनम् इति

राजनीतिप्रकाशे मित्रमिश्रः ६६

विवर्त्तनम्— भूमौ लुण्ठनम् ।

लाङ्गुलचालनं क्ष्वेड़ा प्रतिवाचो विवर्त्तनम् ।

दन्तदर्शनमारावस्ततो युद्धं प्रवर्त्तते ॥

इति महाभा, उद्, ७२-७१

**विवशः**— परतन्त्रः मनुः ८-८२

साक्ष्येऽनृतं वदन् पाशैर्बध्यते वारुणैर्भृशम् ।
विवशः शतमाजातीस्तस्मात् साक्ष्यं वदेदृतम् ॥ इति

**विवादवृत्तिः**— कलहेन जीवनम् इति नित्याचारप्रदीपे ।
तत्र विवादप्रेष्यवृत्तिरिति हारीतः ।

**विवासः**— (१) स्थानान्तरे अवस्थानम् ।
त्रिरात्रमभिषेको विवासश्चान्योन्येन ॥
वसिष्ठः २३-२८

(२) गृहमङ्गः ।
ब्राह्मणं तु विवासयेत् ॥ मनुः ८-१२३
मेधातिथिस्तु ब्राह्मणस्य विवासत्वं वासोऽपहरणं गृह-भङ्गो वा इत्याचष्ट । गोविन्दराजस्तु नग्नं कुर्यादिति व्याचष्टे कुल्लूकस्तु राष्ट्रान्निःसारयेदिति ॥

**विवाहः**— स्त्रीणां मुख्यसंस्कारकर्म । यत्र कन्या भर्त्तरि-प्रतिपाद्यते ।
कन्यासंस्कारो विवाहः वरसंस्कार उद्वाह इति देवपालः काठकगृ ३-१-२३
अस्य भेदानाहमनुः ।
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥
मनुः ३-२१
वसिष्टस्तु षड् विवाहाः ॥ २८ ब्राह्मो दैव आर्षो गान्धर्वः क्षात्रो मानुषश्चेति ॥ वसिष्ठः १-२६
एषां ब्राह्मादीनां लक्षणानि स्वस्वनामशब्द द्रष्टव्यानि ।

कुलं च शीलं च वपुर्वयश्चविद्यां च वित्तं सनाथतां च ।
एतान् गुणान् सप्त परीक्ष्य देया कन्या बुधैः शेषम-चिन्तनीयम् । इति यमः संस्कारप्रकाशे-७५४

**विविक्तः**— (१) निर्जनो देशः ।
एकाकी चिन्तयेन्नित्यं विविक्ते हितमात्मनः ।
एकाकी चिन्तयानो हि परं श्रेयोऽधिगच्छति ॥
मनुः ४-२५८
विविक्तं पवित्रमिति मित्रमिश्रः-श्राद्धप्रकाशे-१३६
(२) पुत्रकलत्रादिभारावसन्नो गृहस्थः ।
धनानि तु यथाशक्ति विप्रेषु प्रतिपादयेत् ।
वेदवित्सु विविक्तेषु प्रेत्य स्वर्गं समश्नुते ॥
मनुः ११-६

**विवीतः**— तइला इति उड्भाषायां प्रसिद्धः ।
विवीतः प्रचुरतृणकाष्ठो रक्ष्यमाणः परिगृहीतो भूप्रदेशः इति विज्ञानेश्वरः २-१६०
विवीत तृणादिप्रयोजनभूरित्यपरार्कः । याज्ञ-२७१
विवीतः कुलुत्थनिष्पावकार्पासार्था भूमिरिति त्र्यदराजः
विवीत प्रवृद्धतृणस्तम्बो गवादिप्रचारदेश इति श्रीमूला-३-६
सममेषां विवीतेऽपि याज्ञ-२-१६०
विवीतशब्देन यवसाद्यर्थं रक्षितो भूप्रदेश उच्यते ।
व्यवहारकल्पतरौ-१७०
विवीतशब्देन तृणकाष्ठसमृद्धः परपरिगृहीतः प्रदेश उच्यते स्मृतिचन्द्रिका-व्यव-४८७

**विवेकः**—(१) विभागः ।

कर्मणां च विवेकार्थं धर्माधर्मौ व्यवेचयत् ॥

मनुः १-२६

(२) देहाद्यतिरिक्तस्यात्मतत्त्वस्यावबोधः इति कल्पतरौ मोक्षकाण्डे-४८

**विशसनम्**— कर्त्तनम् ।

विशसिता अङ्गानि यः कर्त्तर्यादिना पृथक् पृथक् करोति ॥ इति कुल्लूकः

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।

संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः ॥

मनुः ५-५१

**विशासिता**— छेत्ता मनुः ५-५१

**विशुद्धिपत्रम्**—अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते जनैः

विशुद्धिपत्रं विज्ञेयं लेख्यसाक्षिसमन्वितम् ॥

इति सरस्वतीविलासे हारीतः ॥

**विशालः**— पुण्यक्षेत्रविशेषः ।

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ।

वर्जयित्वा कुरुक्षेत्रं विशालं विरजं गयाम् ॥

एतद् विशालक्षेत्रं बदरिकाक्षेत्रमिति स्कान्दे वैष्णवे-बदरिकामाहात्म्ये—

षष्टिवर्षसहस्राणि योगाभ्यासेन यत्फलम् ।

वाराणस्यां दिनैकेन यत्फलं बदरीं गतौ ॥ ६२

तीर्थानां वसतिर्यत्र देवानां वसतिस्तथा ।

ऋषीणां वसतिर्यत्र विशाला तेन कथ्यते ॥ ६३

अ-१-६३

**विशाला**— उज्जयिनी ।

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ।

वर्जयित्वा कुरुक्षेत्रं विशालं विरजं गयाम् ।

विशालं बदरीक्षेत्रमिति केचित् इति विधान पारिजाते ३-७५४

**विशेषवृत्तः**— ऋत्विग्विशेषः ऋत्विक्शब्दो द्रष्टव्यः ।

**विशोका** — लक्ष्मीः ।

द्वादश्यां शुक्लपक्षस्य विशोका विष्णुना पुरा ।

विभूषिता शुभैर्माल्यैस्तस्मात्तां तत्र पूजयेत् ॥

अत्र विशोका लक्ष्मीः इति वर्षक्रियाकौमुद्याम् ।

द्वादश्या ज्येष्ठशुक्लद्वादशी-२८२

**विश्रम्भः**— विश्वासः ।

विश्रम्भे सर्वशङ्कासु सन्धिकार्ये तथैव च ।

एषु कोशः प्रदातव्यो नित्यं चित्तविशुद्धये ॥

इति पितामहः व्यवहारकल्पतरौ २०६

विश्रम्भात् स्नेहाल्लोभादभयात्प्रमादाद्वा अशुभं कृत्वा सद्यः शौचमारभेत इति हारीतः प्रायश्चित्तविवेके-१७

**विश्वजित्**— यज्ञविशेषः ।

**विश्वरूपम्**— कृष्णपक्षदिवसभागस्य नाम-कालमाधवः-२

**विश्वरूपा**— शुक्लचतुर्थीरात्रिः ॥ कालमाधवः-२

**विश्वेदेवाः**— इष्टिश्राद्धे क्रतुर्दक्षः संकीर्त्यौ वैश्वदेविके ।

नान्दीमुखे सत्यवसू काम्ये च धुरिलोचनौ ॥

पुरूरवार्द्रवौ चैव पार्वणे समुदीरितौ ।

नैमित्तिके कालकामावेवं सर्वत्र कीर्त्तयेत् ॥

इति शंखः

पराशरमाधवे तु धुनलोचनौ इतिपाठः स पाठस्तु मुद्रणदोष इति मन्ये ।

इष्टिश्राद्धे क्रतुदक्षौ काम्ये च धुरिरोचनौ ।
पुरूरवार्द्रवसञ्ज्ञौ पार्वणे समुदाहृतौ ।
साविण्डे कालकामौ तौ वृद्धौ सत्यवसू स्मृतौ ॥

इति प्रजापतिस्मृतिः १८०

दक्षस्य दुहिता साध्वी विश्वानाम परिश्रुता ।
तस्याः पुत्रा महात्मानो विश्वेदेवा इति श्रुताः ॥

इति पुराणे इति स्मृतिचन्द्रिकायाम् श्राद्ध-२८८

क्रतुर्दक्षो वसुः सत्यः कालः कामस्तथैव च ॥ ६१
धुरिश्चरोचनश्चैव तथा चैव पुरूरवाः ।
मार्द्रवश्च दशैते तु विश्वेदेवाः प्रकीर्त्तिताः ॥ ६२
इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः ।
नैमित्तिके कालकामौ काम्ये च धुरिरोचनौ ॥ ६३
पुरूरव मार्द्रवश्च पार्वणे समुदाहृतौ ॥

इति बृहस्पतिः कल्पतरौ श्राद्धकाण्डे-१४२

**विषम्** – (१) कालकूटवत्सनाभादि ।

(२) विषं सोऽहमिति सर्वज्ञः ।

अजोक्षा चन्दनं वीणा आदर्शो मधुसर्पिषी ।
विषमौदुम्बरं शङ्खः स्वर्णनाभोऽथ रोचना ॥

महाभा, उद्. ४०-१०

विषसूचकानिवस्तूनि कोकिलशब्दे द्रष्टव्यानि ।

**विषचारी**— यो विषविद्यया जीवति इति हेमाद्रिः ।

विषचार्युच्छिष्टभोजि गणविद्विषाण इति तत्र गौतमः ।

**विषदिव्यम्**— दिव्यविशेषः ।

महाभियोगेषु लिखितसाक्षिभुक्तिरूपत्रिविधमानुष-प्रमाणाभावे निर्णयपादे हेमन्तादौ पित्तश्लेष्मरोगादि-वर्जितं वादिनं प्रतिवादिनं वा विषदिव्येन शोधयेत् ॥

तत्र देयविषाणि यथा—

शृङ्गिणो वत्सनाभस्य हिमजस्य विषस्य वा ।

वर्ज्यविषाण्याह पितामहः—

चारितानि च जीर्णानि कृत्रिमाणि तथैव च ।
भूमिजानि च सर्वाणि विषाणि परिवर्जयेत् ॥

नारदोऽपि—

भृष्टं च चारितं चैव धूपितं मिश्रितं तथा ।
कालकूटमलाबुं च विषं यत्नेन वर्जयेत् ॥

तत्र प्राड्विवाकः सोपवासः महदेवं सम्पूज्य तदग्रतो विषं संस्थाप्य धर्मावाहनादिप्रतिज्ञापत्रस्थापनान्तं कर्म कृत्वा घृतप्लुतं विषमभिमन्त्र्य दक्षिणामुखस्थिताय दद्यात् ।

विषे पीते करतालिकाशतपञ्चकं यावत् प्रतीक्ष्य अनन्तरं चिकित्सनीयः एतेन शुद्धो भवति ॥

त्वं विषब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः ।
त्रायस्वास्मादभीशापात् सत्येन भव मेऽमृतम् ।
एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् ।
यस्य वेगैर्विना जीर्येच्छुद्धिं तस्य विनिर्दिशेत् ।
विशेषविधिस्तु मिताक्षरादौ द्रष्टव्यः ॥

मिताक्षरा २-११०

**विषयः**— (१) राज्यम् ।

म्रियमाणोऽप्याददीत न राजा श्रोत्रियात् करम् ।
न च क्षुधाऽस्य संसीदेच्छ्रोत्रियो विषये वसन् ॥

मनुः ७-१३३

प्रेते राजनि सज्योतिर्यस्य स्याद् विषये स्थितः ।

मनुः ५-८२

विषयस्थे च राज्ञि प्रेते गौतमः २-७-३२

(२) शब्दस्पर्शरूपरसगन्धाः इन्द्रियाणां विषयाः ।

विषयाणां ग्रहीतृणि शनैः पञ्चेन्द्रियाणि च ॥

मनुः १-१५

शब्द रूपं तथा स्पर्शो रसा गन्धस्तथैव च ।
इन्द्रियस्थान् विजानीयात् पञ्चेव विषयान् बुधः ॥

शङ्खः-७-२५

**विषवेगः**— विषवेगो नाम विषदोषात् धातोर्धात्वन्तरप्राप्तिः ७-२५

वेगो रोमाञ्चमादौ रचयति विषजः स्वेदवक्त्रोपशोषौ
तस्योर्ध्वं स्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ ।
यो वेगः पञ्चमोऽसौ नयति विवशतां कण्ठभङ्गं च हिक्कां
षष्ठो निःश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य ॥ मिताक्षरा १-११०

**विषुः**— पक्षिविशेषः ।वसिष्ठः १४-४८

कल्पतरुवीरमित्रोदययोस्तु विधुन इति पाठः ।
कल्पतरुः नियतकालकाण्डः-३०१

**विषुवद्वयम्**— तुलामेषसंक्रान्ती ।

आदित्यसंक्रमणम् १ विषुवद्वयम् २
विशेषेणायनद्वयम् ३ व्यतीपातः ४ जन्मर्क्षम् ५
अभ्युदयश्च ६ विष्णुस्मृतिः ७७ अध्याये ।
मृगकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने ।
विषुवती तुलामेषौ गोलमध्ये ततोपराः ॥
इति कालसारे-४३१

यदामेषंसहस्रांशुसतुलां च प्रतिपद्यते ।
समरात्रिन्दिनः कालो विषुवच्छब्दवाचकः ॥ ६
तत्र दानं स्वल्पमपि महद्भवति भार्गव ।
श्राद्धं जप्यहुतं दत्तं यच्चान्यत् सुकृतं भवेत् ॥

विष्णुधर्मपु-१-७३-१०

**विष्कम्भः**— कपाटरोधनकाष्ठम् ।

उदाहरणं पुरशब्दे द्रष्टव्यम् ।

**विष्किरः**— नखैः विकीर्य विकीर्य ये भक्षयन्ति ते विष्किराः पक्षिविशेषा चकोरादय इति विज्ञानेश्वरः ।

कोयष्टिप्लवचक्राह्व बलाका वकविष्किरान् ।
वृथाकृसरसंयाव पायसापूपशष्कुलीः ॥

याज्ञ १-१७३

**विष्टपम्**– भुवनम् ।

पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥

मनुः ९-१३७

**विष्टरः**— पञ्चविंशतिदर्भतरुणमयं कूर्चं विष्टर इति हरिहरः पारस्करः १-३-५

पञ्चविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषिता ।

विष्टरं सर्वयज्ञेषु लक्षणं परिकीर्त्तितम् ।। इति तत्रैव

विष्टरः दर्भोच्छादितासनविशेष इति देवपालः

काठकगृ-२-१२-८

संघीभूताः अष्टचत्वारिंशद्दर्भाः मूलप्रदेशमारभ्याग्रपर्यन्तं द्विगुणित सूत्रवेष्टिताः विष्टरपदवाच्याः इति श्रौतपदार्थनिर्वचने ।।

ब्रह्मविष्टरयोश्चापि सन्देहे समुपस्थिते ऊर्ध्वकेशोभवेद्ब्रह्मालम्बकेशस्तु विष्टरः ।

कतिभिस्तु भवेद्ब्रह्मा कतिभिर्विष्टरः स्मृतः ।

पञ्चाशद्भिर्भवेद्ब्रह्मा तदर्द्धेन तु विष्टर ।।

इति गोभिलभाष्ये-१-६-१५

**विष्टिः**— (१) विष्टिः बलात्कारेणाकृष्टः कर्मकर इति राजनीतिप्रकाशे-२७७

वेतनं विना राजसेवा इति नीलकण्ठः ।।

अश्रोत्रियाः सर्व एव सर्वे चानाहिताग्नयः ।

तान् सर्वान् धार्मिको राजा बलिं विष्टिं च कारयेत् ।।

महाभा, शान्ति ७६-५

(२) ज्योतिःशास्त्रप्रसिद्धयोगविशेषः ।

राजनीतिप्रकाशः-२७७

**विष्टुतम्**— कृष्णपक्षद्वितीयादिवसभागमात्रम् ।

कालमाधवः-२

**विष्ठा**— पुरीषम् ।

पूयं चिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम् ।

विष्ठा वार्द्धुषिकस्यान्नं शस्त्रविक्रयिणो मलम् ।।

मनुः ४ २२०

**विष्णुः**— (१) द्वादशीतिथिरिति हेमाद्रौ ।

एकादशी विष्णुना चेद् द्वादशी परतः स्थिता इत्यादि

(२) आदित्येषु द्वादशः आदित्यशब्दे द्रष्टव्यः ।

**विष्णुक्रान्तम्**— अपराजितापुष्पम् ।

विष्णुक्रान्तं मरुवकं केशाम्बुददलं तथा इति

विष्णुदेये वृद्धहारीतः ७-५४

**विष्णुक्रान्ता**— अपराजिता ।

आस्फोटा गिरिकर्णी स्याद् विष्णुक्रान्तापराजिता ।

इत्यमरः २-४-१०४

**विष्णुपदम्**— विशिष्टश्राद्धदेशेषु विष्णुना उक्तम् ।

तच्च गयामध्यस्थितमिति नन्दपण्डितः ।।

विष्णुः ८५-४४

**विष्णुपदा**— द्रव्यविशेषः ।

विष्णुपदाश्यामकपद्मपत्रकलशेन पाद्यं ददाति ।।

बोधा, गृ. शे, १६-२४

**विष्णुपदी**— संक्रान्तिविशेषः ।

वृषसिंहवृश्चिककुम्भसंक्रान्तयः ।

विषुवदि इत्यादि प्रयोगः अग्निवेश्यगृ-२-५-७

**विष्णुबलिः**— कर्मविशेषः ।

तथा विष्णुबलिश्चापि सप्तवर्षेषु पुष्टये ।

पतिगर्भवलिः कार्य्यः सीमन्तश्च प्रशस्यते ।
अकृते च भवेद्दोषः कृते पुष्टिं समृच्छति ॥
गर्भबाधानिवृत्त्यर्थं सुखसूतार्थमेव च ।
महादोषापनुत्त्यर्थं वलिः कार्य्यो यथाविधि ।
इति संस्कारप्रकाशे-१७८

विष्णुश्रृङ्खलः - योगविशेषः ।
द्वादशी श्रवणर्क्षं च स्पृशेदेकादशीं यदि ।
स एव वैष्णवो योगो विष्णुश्रृङ्खलसंज्ञितः ॥
इति मात्स्ये

विष्वङ्— यथेष्टचेष्टः ।
विष्वङ्गो यथेष्टचेष्टचेष्टा इति नरसिंहवाजपेयी ।
विष्वञ्चो विपरीता नश्यन्ति ॥ गौतमः २-२-३०

विसर्गः— त्यागः ।
न निष्क्रयविसर्गाभ्यां भर्त्तुर्भार्या विमुच्यते ।
एवं धर्मं विजानीमः प्राक् प्रजापतिनिर्मितम् ॥
मनुः-९-४६

विसोर्णा— विसतन्तुः ।
निपुणोऽणीयान्विसोर्णाया यः सर्वमावृत्यतिष्ठति ।
वर्षीयांश्च पृथिव्या ध्रुवः सर्वमारभ्य तिष्ठति ।
स इन्द्रियैर्जगतोऽस्य ज्ञानादन्योऽन्यस्य ज्ञेयात
परमेष्ठी त्रिभाजः ॥ इत्यादि आपस्त १-८-२३-२

विहननम्— पिञ्जनम् शोधनमित्यर्थः ॥ श्रीमूला को ४-१

विहव्यः— ममाग्ने वर्चो त्रिहवेष्वप्सु इत्ययमनुवाकः ।
बौधा, ग, शे, १-१४

विहारः— (१ विहारः विहरणं प्रादुष्करणमिति याव-
दित्याचारेन्दुः ।
दुहित्रा स्नुषया वाग्निविहारो न विरुद्ध्यते
इति कात्य यनः
(२) विहारः यज्ञदीक्षा इति वृत्तिकारः
आपस्त-१-३-१०-३६
न समावृत्तावदेरन् अन्यत्र विहारादित्येके ॥ इति
(३) स्त्रीसम्भोगः ।
आहारनिर्हारविहारयोगा सुसंवृता धर्मविदा तु कार्याः ।
वागबुद्धिवीर्याणि तपस्तथैव धनायुषी गुप्ततमे तु कार्ये ॥
वसिष्ठः ६-९
(४) यज्ञकर्म ।
विहारे यज्ञकर्मणि इति हरदत्तः ।
यथाश्रुति विहारे आपस्त-२-४-९-९
(५) यागार्थे यत्रयत्र यावती भूमिः श्रुत्यादिभिः
परिमाणविशेषविशिष्टत्वेन विहिता तत्र तत्र
तावती भूमिः विहारपदवाच्या इति श्रौतपदार्थ-
निर्वचने ।
(६) क्रीडाविनोदः ।
भुक्तवान् विहरेच्चैव स्त्रीभिरन्तः पुरे सह ॥
विहृत्य तु यथाकालं पुनः कार्याणि चिन्तयेत् ॥
मनुः ७-२२१

वीणाकम्—कृष्णदीर्घकर्कटी इति निर्णयसिन्धौ ।

**वीणातकम्**—खण्डगुड़ इति प्रसिद्धमिति नित्याचारप्रदीपे।
अस्य व्यवहारः आम्लोट शब्दे द्रष्टव्यः।

**वीतमानम्**— (३२०) विंशत्यधिक रक्तिकाशतत्रयेण वीतमानं सम्पद्यते इति व्यवहारकल्पतरौ-४२४

**वीथिः**—पञ्चकरप्रसारो मार्गः।
वीथिः पञ्चकरात्मिका इति शुक्रनीतिसारे १-२६२

**वीथी**— मार्गः।
गोवीथीं ग्रामरथ्यां च श्मशानं गोपितं तथा।
संपीड्य नरकं याति यावदाभूतसंप्लवम्॥
बृहस्पतिस्मृतिः ४२

**वीरक्रयः**— विक्रेत्रुपन्यस्तमूल्यत्याजनेन क्रय इति कृत्यरत्नाकरे। ४२१
कुङ्कुमालक्तकाभ्यां च रक्तसूत्रैः सकङ्कणैः॥
तथा नानाविधैः पुष्पैर्द्रव्यैर्वीरक्रयाहृतैः॥
इति ब्रह्मपुराणे

**वीरणः**— तृणविशेषः कालसारः पृ ३६६
शुभाः श्राद्धेक्षोरकुशा वल्वजा गन्धकी तथा।
वीरण श्चोलपाश्चैव लम्बा वर्ज्याश्च नित्यशः॥
इति तत्र वायुपुराणे

**वीरतरः**— (१) वीरतरः शरः वीरास्तरन्त्यनेन संग्राममिति एके, वीरतरस्तृणविशेषः इत्यपरे वाजसनेयिनां तु वृक्षविशेषे रूढिः। इति गोभिलीय चन्द्रकान्तभाष्ये २-७-६
वीरास्तरन्त्यनेन युद्धमिति वीरतरः शर इति संस्कारतत्त्वे-१२
(२) वीरतरः प्रकृष्टो वीरः इति हरिहरभाष्ये॥
पारस्करः १-१५-४

**वीरतरशङ्कुः**— वीरतरशङ्कुना शरेषीकया आश्वत्थेन वा शङ्कुना इति हरिहरः अश्वत्थेन शङ्कुना इति गदाधरः।
वीरतरः शङ्कुः शर इति जयरामः अश्वत्थशङ्कुरिति कर्कः।
खादिरः शङ्कुरित्यपरे इति गर्गपद्धतौ॥
तथा वीरतरः शर इति गोभिलस्मृतौ-३-३
वीरतरशङ्कुना पूर्णचात्रेण च सीमनामूर्ध्वं विनयति॥
पारस्करः १-१५-४
अत्र शरेषीकया इति यः हरिहरभाष्यपाठो लभ्यते-मन्मते स अपपाठः शुद्धपाठस्तु शरेणेषीकया इति युज्यते। तेन शरेण, इषीकया काशतृणेन वा इत्यर्थः संगच्छते॥

**वीरशय्या**—वीरसनं वीरशय्यां वीरस्थानमुपश्रिताः।
अक्षय्यास्तस्य लोकाः स्युः सर्वकामगमास्तथा॥
बृहस्पतिस्मृतिः-७७

**वीरहत्या**— (१) पुत्रवधः।
अग्निहोत्र्युपविध्याग्नीन् ब्राह्मणः कामकारतः।
चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत्॥
मनुः ११-४१
(२) यजमानवधः।
वीरो यजमान इति स्मृतेः वीरो यजमानः यस्य हन्ता वीरहा।

वीरहा— (१) पुत्रहन्ता ।

(२) राजहन्ता इति हेमाद्रिः ।

(३) अग्नित्यागी ।

वीरहा यो बुद्धिपूर्वमग्नीनुद्वासयीत सत्यामप्युपपत्तौ ।

श्रूयते हि वीरहा एष देवानां योऽग्निमुद्वासयेत॥

इति मिताक्षरावृत्तौ हरदत्तः गौतमः २-६-१५

अग्निहोत्रं त्यजेद्यस्तु स नरो वीरहा भवेत् ॥

आपस्तम्बस्मृतिः १०-१४

अग्नीनुत्सादयेद् यस्तु वीरहा स निरुच्यते ॥ इति

प्रायश्चित्तविवेके च ३६१

कल्पतरौ यमः श्राद्ध ६६१

वीराध्वा— महाप्रस्थानम् ।

वानप्रस्थो वीराध्वानं ज्वलनाम्बुप्रवेशनं भृगुपतनं

वानुतिष्टेत् ।

स्थानवीरासनी मौनी मौञ्जी दण्डकमण्डलुः ।

इति शंखलिखितवचनव्याख्याने ।

वीरासनम्— वीरासनं निराश्रयमुपवेशनमिति शूलपाणिः

५०४

किन्तु—

उत्थितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि ॥

एतद्वीरासनं नाम सर्वपापप्रणाशनम् ॥ इति

विष्णुधर्मोत्तरे

वस्तुतस्तु विष्णुधर्मोत्तरवचनमत्र प्रमाणम् ।

वीरासनम् अनुपविश्यावस्थानमिति व्रतकाण्डे

लक्ष्मीधरःव्रत-१६३

वीरुत— याश्छिन्ना अपि विविधं प्ररोहन्ति ताः ।

गुडुचीप्रभृतयो वीरुध इति मिताक्षरा ॥

य ज्ञ-२-२२६

वीरुधः वेत्रामृतादिलताः इति च याज्ञ-३-३६

बीजकाण्डप्ररोहिण्यो वीरुधइत्यपरार्कः ॥

ग्राम्या ओषधय आरण्या वीरुध इति विश्वरूपः ।

वीरुधां कुष्माण्डादीनामिति कुल्लूकः ॥ मनुः ११-१४२

वीवधः - वाहाङ्गी इति भाषायां प्रसिद्धः स च द्वद्वरु-

भयतः शिकाः इति गोविन्दस्वामी बौधा ३-१-१-८

गृहद्वारे आत्मानं वीवधेन सह दर्शनाद सन्दर्शनी-

त्याचक्षते बौधा ३-२-२-६

पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ ॥

अमरः ३-३-९६

वृकः— हिंस्रपशुविशेषः, स च आरण्यः ।

वृकशुनोरारण्य ग्राम्यत्वाद् भेद इति माधव चार्य्यः

पराशरः ५-१

स च ईहामृगः मध्यदेशभाषायां हुण्डार इति प्रसिद्ध

इति लक्षणप्रकाशे मित्रमिश्रः ।

बकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत् ।

वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ॥

मनुः ७-१०६

महाभा, शा, १४०-२५

वृक्कः— }
वृक्कक:— } प्राणायतनविशेषः । वृक्ककौ हृदयसमीपस्थौ मांसपिण्डौ इति

विज्ञानेश्वरः ३-९४

वृक्कौ कुक्षिगोलकौ महदामलकतुल्यौ इति संस्कार-प्रकाशे मित्रमिश्रः ।

**वृक्षमन्त्रः—** लक्षण्यं वृक्षमभिमन्त्रयते ।

मन्त्रः मा त्वाऽशनिर्मा परशुर्मा वातो मा राजप्रोषितो दण्डः अङ्कुरास्ते प्ररोहन्तु निवाते त्वाभिवर्षतु अग्निष्टे मूलम्मा हि सीत् स्वस्ति मेऽस्तु वनस्पते ॥

इति पारस्करः ३-१५-२१

**वृक्षमूलिकः—** प्रणवाभ्यासवान् ।

वेदो वृक्षः तस्य मूलं प्रणवः॥ बौधा २-१८-३०

**वजिनम्—** पापम् ।

नैनं छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्तमानम् ।

द्व्यक्षरे सम्यगधीयमाने पुनाति तद् ब्रह्म यथा इषेऽब्दाः ॥ वसिष्ठः ६-५

**वृतिः—** या कण्टकादिभिर्निर्मिता गवादिभ्यः क्षेत्रं वारयति ।

वृतिं तत्र प्रकुर्वीत यामुष्ट्रो न विलोकयेत् ।

छिद्रं च वारयेत्सर्वं श्वशूकरमुखानुपम् ।

मनुः ८-२३९

वृतिरावरणमिति व्यवहारकल्पतरौ-४६३

**वृत्तम्—** (१) वृत्तं शीलमाचारो जनापवादभेरुतेति मेधातिथिः ।

कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि ॥

महापक्षे धनिन्यार्ये निक्षेपं निक्षिपेद्बुधः ॥

मनुः ८-१७९

सतां वृत्तमनुष्ठिताः ॥ मनुः १०-१२७

गुरुपूजाघृणाशौचं सत्यमिन्द्रियनिग्रहः ।

प्रवर्त्तनं हितानां च तत्सर्वं वृत्तमुच्यते ॥

इति मिताक्षरायां मनुः मिता ३-२६७

प्रकाशितमनुस्मृतौ तु नास्ति

(२) हारीतोक्तं षोड़शगुणम् ।

क्षमा दमो दया दानमहिंसा गुरुपूजनं ।

शौचं स्नानं जपो होमस्तपः स्वाध्यायः सत्यवचनं सन्तोषो दृढ़व्रतत्वमुपव्रतत्वमिति षोडशगुणं वृत्तम् ॥

(३) वृत्तं प्रतिग्रहादि इति दिव्यसिंहमहापात्रादयः ।

सपिण्ड़ीकरणादूर्द्ध्वं प्रेतः पार्वणभाग् भवेत् ।

वृत्तपूर्त्तेष्टियोग्यश्च गृहस्थश्च ततो भवेत् ।

(४) कर्म ।

द्यौर्भूमिरापो हृदयं चन्द्रर्काग्नियमानिलाः ।

रात्रिः सन्ध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम् ॥

मनुः ८-८६

(५) वृत्तं दलनयन्त्रम् भाषायां पेषण, चकि इत्युच्यते ।

वृत्तं वा मुसलं वापि स्फुटते वाप्युलूखलम् ॥

इति गर्गः

वृत्तं दलनयन्त्रमित्यत्र शान्तिमयूखे नीलकण्ठः ।

(६) अप्रतिहतम् ।

ततः स्वयम्भुर्भगवानव्यक्तो व्यञ्जयन्निदम् ।

महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः ॥

मनुः १-६

अत्र वृत्तमप्रतिहतमिति कुल्लूकः ।

वृत्तिसर्गतायनेषु क्रमः इति पाणिनिः १-३-३८

तत्र वृत्तिरप्रतिघात इति व्याख्यातं जयादित्येन ॥

**वृत्तः**— मृतः ।

पिता यस्य तु वृत्तः स्याज्जीवेच्चापि पितामहः ॥

मनुः ३-२२१

निवृत्त इति पाठान्तरमस्य ।

**वृत्तलेख्यम्**— विवरणम् ।

प्रदर्शितं वृत्तलेख्यं समासाल्लक्षणान्वितम् ।

समासात् कथ्यते चान्यच्छेषाय व्ययबोधकम् ॥

इति शुक्रनीतौ

**वृत्तानुवादः** — अन्यथाद्यादिहीनेभ्य इतरेषां प्रदीयते ।

वृत्तानुवादसंसिद्धं तच्च स्याज्जयपत्रकम् ।

**वृत्तिः**— आत्मकुटुम्बस्थितिसमर्थं धनम् इति मेधातिथिः ।

एतान्द्विजातयोदेशान् संश्रयेरन् प्रयत्नतः ।

शूद्रस्तु यस्मिन् कस्मिन् वा निवसेद् वृत्तिकर्शितः ॥

मनुः २-२४

**वृथादानम्** — यच्चारणमार्गणकादीनां प्रतिपन्न मिति असहायभाष्ये ।

धर्ममनुद्दिश्य दत्तमिति विवादरत्नाकरे ।

वृथादान परिहासनिमित्तं पण्डादिभ्यो देयत्वेन पित्राङ्गीकृतमिति कुल्लूकः ८-१५९

प्रतिभाव्यं वृथादानमाक्षिकं सौरिकं च यत् ।

दण्डशुल्कावशेषं च न पुत्रो दातुमर्हति ॥ इति

**वृथापाकः**— श्रोत्रियान्नम्यः ।

यो गृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।

अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥

इति अत्रिसंहिता २५४

यत्र नाश्नन्ति देवाश्च पितरश्च यथाविधि ।

वृथापाकः सविज्ञेयास्तस्य नाद्यात् कथं च न ॥

इति शातातपः प्रायश्चित्तविवेके-२७५

**वृथाश्रमी**—यः शास्त्राविहिताश्रमेषु वर्त्तते स वृथाश्रमीति हेमाद्रिः ।

**वृद्धः**— (१) अधिकवयाः ।

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।

चत्वारि तस्य वर्द्धन्ते आयुर्विद्या यशोबलम् ॥

मनुः २-१२१

(२) विज्ञः ।

न तेन वृद्धो भवति येनास्य पलितं शिरः ।

यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥

मनुः २-१५६

(३) अभिज्ञः ।

निष्पाद्यमानं यैर्दृष्टं तत्कार्यं तद्गुणान्वितैः ।

वृद्धा वा यदि वावृद्धास्ते तु वृद्धाः प्रकीर्त्तिताः ।

इति कात्यायनः

**वृद्धकृच्छ्रः**— व्रतविशेषः ।

प्रातः सायमयाचितमुपवासस्त्र्यहं त्र्यहमिति प्राजापत्यं त्र्यहं त्र्यहमिति वृद्धकृच्छ्रः एकैकमिति बालकृच्छ्रः एतदष्टदिनसाध्यं वृद्धकृच्छ्रव्रतम् ॥

इति शंखलिखितौ प्रायश्चित्तविवेकः ५११

**वृद्धशीली**— वृद्धाः अधिगतवेदाः साक्षात्कृतधर्माणः तेषां यत् शीलं विहिताचरणनिषिद्धवर्जनरूपं तदस्ति यस्य सः अतऊर्ध्वं वृद्धशीली स्यात् गोभिलः ३-५-१

**वृद्धाश्रमः**— प्रव्रज्या इति जीमूतवाहनः दायभागे-२ जीवन्नेव वा पुत्रान् प्रविभज्य वनमाश्रयेत् वृद्धाश्रमं वा गच्छेत् इति तत्र हारीतः॥

**वृद्धिः**— (१) उदयः सुध इति भाषायां प्रसिद्धः।

नातिसाम्वत्सरी वृद्धिं न चादृष्टां पुनर्हरेत् ॥

मनुः ८-१५३

(२) ऋणप्रयोगः।

वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधान्यैः प्रकीर्त्तिता।

षड्विधान्यैः समाख्याता तत्त्वतस्तां निबोधत।

कायिका कालिका चैव चक्रवृद्धिस्तथापरा।

कारिता च शिखावृद्धिर्भोगलाभस्तथैव च ॥

इति बृहस्पतिः व्यवहारकल्पतरौ-२८२

(३) वृद्धिश्राद्धम्।

एवं प्रदक्षिणावृत्को वृद्धौ नान्दीमुखान् पितृन्।

यजेत दधिकर्कन्धुमिश्रान् पिण्डान् यवैः क्रियाः ॥

याज्ञ १-२५०

(४) वृद्धिः आधिक्यम्।

उदयास्तमिते चेन्दोः पक्षयोः शुक्लकृष्णयोः।

क्षयवृद्धिरेवमुदधेः सोमवृद्धिक्षयात् पुनः ॥ १२६

दशोत्तराणि पञ्चैव अङ्गुलीनां शतानि तु।

अपां वृद्धिः क्षयो दृष्टः समुद्राणां तु पर्वसु ॥

वायुपु १-४९-१३०

**वृद्धिश्राद्धम्**— आभ्युदयिकश्राद्धम्।

तत्स्वरूपं वृद्धिशब्दे द्रष्टव्यम्।

**वृन्ताकः**— विलाति वाइगण इति ख्यातः फलविशेषः किम्?

वृन्ताकः वार्त्ताकीसदृशः फलविशेषः हरितः पाके रक्तः इति लक्ष्मीधरः।

पटोलं मूलकं चैव वृन्ताकं च न भक्षयेदिति चातुर्मास्य व्रते स्कन्दे इति निर्णयसिन्धौ।

टमाटो विलातिवाइगण इत्यादिशब्दैः ख्यातः फलविशेषे भवितुमर्हतीति मन्ये।

वृन्ताकं वृहती सदृशस्थूलोद्भिदः फलं।

वृन्तभागेन सह फलशाकत्वेन प्रसिद्धम् ॥

इति स्मृतिचन्द्रिकायाम् श्राद्ध-२१७

**वृश्चिकबन्धः** – वामकरस्य वामपादस्य च पृष्ठतः संयोज्य बन्धनमित्येकः दक्षिणकरस्य दक्षिणपादस्य च तथा बन्धनमित्यपरः इति श्रीमूला कौ ४-८

**वृषः**— (१) वेदः।

वेदे हि वृष उच्यते इति नित्याचारप्रदीपे यमवसिष्ठौ उपलभ्यवसिष्ठस्मृतौ नास्ति ॥

(२) धर्मः।

वृषो हि भगवान् धर्मः ॥ मनुः ८-१६

(३) गोपतिः वृषभ इत्यर्थः।

एष्टव्या बहवः पुत्रास्त्रेकोऽपि गयां व्रजेत् ।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥
इति कालसारे यमः

विष्णुस्मृतौ तु तत्रैकोपि स्थाने यद्येकोपि ।
इति विशेषः विष्णुः ८५-६७

लिखितस्मृतौ च यद्येकोपि इतिपाठः ।

वृषणम्— कस्तूरिका इति कल्पतरौ व्रतकाण्डे ॥ १३

वृषदंशः— मार्जारः ।

या भर्त्तारं परित्यज्य रहश्चरति दुर्मतिः ।
उलूकीजायते क्रूरावृक्षकोटरशायिनी ॥
ताडिता ताडयेच्चयेत्तं सा व्याघ्री वृषदंशिका ।
स्कन्द, ब्रह्म, धर्मारण्य-७-४३

वृषलः— (१) पापी ।

वृषो हि भगवान् धर्मस्तस्य यः कुरुते
ह्यलम् वृषलं तं जनाः प्राहुः ॥ मनुः ८-१६

तस्य निवचन यथा—

प्रलीयते वृषो यस्मिन् निरालम्बश्च यो वृषे ३६
वृषं यस्तु परित्यज्य मोक्षमन्यत्रमार्गत ।
वृषो वेदाश्रमस्तस्मिन् यो वै सम्यङ् न पश्यति ॥ ३७
ब्राह्मणः क्षत्रियो वैश्या वृषलः स न संशयः ।
ब्रह्म,ण्ड्पु २-३-१४-३८

(२) शूद्रः ।

वृषल फेनपीतस्य निःश्वासोपहतस्य च ।
तस्या चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥
मनुः ३-१९

न वृषलैः सह ॥ मनुः ४-१४०

वृषली— (१) पापिनी ।

(२) शूद्रा ।

वृषलीफेनपीतस्ये त्यादिः मनुः ३-१९

वृषलशब्दे उदाहृतः श्लोकः ।

(३) रजस्वला कन्या पितुर्वेश्मनि यां कन्यां रजस्तु समुपस्पृशेत् ।
भ्रूणहत्यापितुस्तस्याः सा कन्या वृषली स्मृता ॥
अङ्गिरस्मृतिः-१२६

(४) सगोत्रेण या विवाहिता ।

(५) बन्ध्या ।

(६) व्यभिचारिणी ।

स्ववृषं यापरित्यज्य परवृषे वृषायते ।
वृषली सा हि विज्ञेया न शूद्री वृषली भवेत् ।
स्कान्दे, काशी ४०-६३

बन्ध्या तु वृषली ज्ञेया वृषली तु मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥
यस्त्वेनामुद्धरेत कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद् वृषलीपतिम् ।
चण्डाली बन्धकी वेश्या रजस्था या च कन्यका ।
ऊढ़ा या च सगोत्रा स्याद् वृषल्यः पञ्च कीर्त्तिताः ॥

वृषलीपतिः— वृषल्याः पतिः वृषलीशब्दो द्रष्टव्यः ।
क्रमविवाहे यस्य वृषली जीवति इतरामृता स ।

बृषलीपतिरिति हरदत्तः ॥ आपस्त १-६-१८-३३

वृषिः—
वृषी— बृषिस्तृणमयवर्त्तुलमासनमितिदिव्यसिंहमहापात्राः । कशा दर्भाः समाख्याताः कुतपाः बृषयस्तथा । दुहितुश्चैव ये पुत्रास्ते दौहित्राः प्रकीर्त्तिताः इत्युशनाः खलमासनमिति कल्पतरुमिति आह्निकप्रकाशे ३१३ तृणमयवर्त्तुलमासनमिति अन्यत्र कल्पतरौ । तत्रैव अस्य बृषी इति पाठान्तरमप्यस्ति ॥

वृसी—बृषीशब्दस्य पाठभेदः।

वेगः— (१) स्रोतः शीघ्रता ।

रजसा शुद्ध्यते नारी न चेद् गच्छेद् विवर्णताम् ।
यथा ग्राममलग्राही नदीवेगेन शुद्ध्यति ।

अङ्गिरस्मृतिः ५४

(२) विषवेगो नाम धातोर्धात्वन्तरप्राप्तिः ।

धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः इति वचनात् इति मिताक्षरायाम् २-१११

सप्तैव विषवेगा भवन्ति तेषां लक्षणानि पृथगेव विषतन्त्रे कथितानि ।

वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रेपशोषौ
तस्योर्ध्वस्तत् परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ ।
यो वेगः पञ्चमोऽसौ नयति विवशतां कण्ठभङ्गं च हिक्कां ।
षष्ठो निःश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य ॥

इति तत्रैव

वेणः— वैदेकेन अम्बष्ठयामुत्पन्नः ॥ मनुः १८-१९

वेणुच्छेदनेन नियतकाल-२६१

वेणिः— पैतृकं क्रीतमाधेयमन्वधेयं प्रतिग्रहम् ।
यज्ञादुपगमो वेणिस्तथाधूमशिखाऽष्टमी ॥

वसिष्ठः १६-१३

वेणिका— जलतरणसाधनभेदः इति श्रीमूला ।

गण्डिकाशब्दो द्रष्टव्यः कौट-४-३-८

कौट-१०-२-१४

वेणी— वेणिः वेणिशब्दो द्रष्टव्यः ।

वेणुः— वंशवृक्षः ।

स च हारीतेन दन्तधावने निषिद्धः आह्निकप्रकाशे-१३

वेणुकः— जातिविशेषः ।

सूताद् विप्रप्रसूतायां जातो वेणुक उच्यते ॥

वेतनम्— भृतिः ।

भृतिरिति स्मृतिचन्द्रिका कर्ममूल्यमितिपराशरः ।
पणोदेयोऽवकृष्टस्य षडुत्कृष्टस्य वेतनम् ।
षाण्मासिकस्तथाच्छादो धान्यद्रोणस्तु मासिकः ॥

मनुः ७-१२६

वेतसः— वञ्जुलः (वृक्ष) इति शान्तिमयूखे ।

नडे वेतसशाखाया वा मृत्योः पदं लोभयन्त इति काठकगृ-४-५-८

अत्र वेतरा वञ्जुलक इति आदित्यदर्शनभाष्ये ॥

वेत्ता– परिजेता ।

अप्रमत्ता रक्षत तन्तुमेतं मा वः क्षेत्रे परबीजानिवाप्सुः जनयितुः पुत्रो भवति सम्पराये मोघं वेत्ता कुरुते तन्तुमेतम् इति वसिष्ठापस्तम्बधृतश्रुतिः

वसिष्ठः १७-९

वेत्ता परिणेता क्षेत्री इत्यर्थः ।

वेदः=(१) कुशमुष्टिः ।

वैणवीं धारयेद् यष्टिं सोदकं च कमण्डलुम् ।
यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले ॥

मनुः ४-३६

अत्र वेदः कुशमुष्टिरिति कुल्लूकादयः ।
स्मृति चन्द्रिकायां च संस्कार-११८
नित्याचारप्रदीपे अपि-१-४०

दर्भमुष्टिः प्रदक्षिणमावेष्ट्य द्विगुणः कृतः प्रादेशमात्र उपविष्टवत्सज्ञानुसदृशसंपन्नः समन्त्रकवेदिसम्मार्जन-कर्मोपयोगी प्रच्छिन्नाग्रा वेद इत्युच्यते ॥
इति श्रौतपदार्थनिर्वचने ।

(२)स्वम् धनमित्यर्थः ।

विश्वजिता सर्ववेदसेन यजेतेति वेदशब्दः स्ववाचकः ।
सर्वस्वेन विश्वजिता यागेन यजेदित्यर्थः इति दायभाग-व्याख्याने रघुनन्दनः ॥ अ-२

सर्ववेदसः कृतसर्वस्वदक्षिणविश्वजिद्याग इत्यर्थः ।

कुल्लूकः ११-१

(३) वेद. मन्त्रब्राह्मणात्मकः ।

मन्त्रब्राह्मणयोर्वेदनामधेयम् ।

ते च मन्त्रा स्वरूपत ऋग्यजुः सामभेदेन त्रिधा-भिद्यन्ते । तत्र नियतच्छन्दोनिबद्धा ऋक् अनियत च्छन्दस्कं यजुः ।

गीतिलक्षणं साम सोऽपि वेदः वेदव्यासविभागानुसारं कर्मकाण्डदृष्ट्या चतुर्द्धा भिद्यते ऋक्यजुः सामाथर्व-नामभिः ॥

ते ऽपिशाखाभेदेन बहुधा भवन्ति ।

तदाह पाणिनीयमहाभाष्ये पतञ्जलिः एकविंशतिधा बाहृचम् नवधाऽथर्वणो वेद इति ॥

तत्र यजुर्वेदस्य एकशतमिति एकाधिकं शतम् १०१ शाखा भवन्ति तेषु वैशम्पायनशिष्येण याज्ञवल्क्येन सूर्याद्गृहीतः सूर्ययजुर्वेदः ॥

स च शिष्यपरम्परया पञ्चदश १५ तदुक्तं वायुपुराणे ६१ अध्याये—

याज्ञवल्क्यस्य शिष्यास्ते कण्ववैधेयशालिनः ।
मध्यन्दिनश्च शापेयी विदग्धश्चाप्य उद्दलः ॥ २४
ताम्रायणश्च वात्सश्च तथा गालवशैशिरी ।
आटवी च तथा पर्णी वीरणी सपरायण ॥ २५

इति वायुपु १-६१-२६

इत्येते वाजिनः प्रोक्ता दशपञ्च च संस्कृताः ।

शतमेकाधिकं कृत्स्नं यजुषां वै विकल्पकाः ।

वैशम्पायनशिष्येण तित्तिरिणा गृहीतः कृष्णयजुर्वेदः ८६ षडशीतिशाखाभेद भिन्नः तदुक्तं ब्रह्माण्डपुराणे पञ्चत्रिंशदध्याये—

वैशम्पायनशिष्योऽसौ यजुर्वेदमकल्पयत् ।

षडशीतिस्तु तेनोक्ताः संहिता यजुषां शुभाः ।

एतेन षड़शीतिः ८६ पञ्चदश १५ चेति मिश्रिताः एकाधिकंशतं शाखा भवन्ति ॥

कृष्णयजुर्वेदीयशाखाः काश्चन नागेश भट्टेन शब्देन्दुशेखरे प्रदर्शिताः यथा १ आलम्बिः २ कलिङ्गः ३ कमलः ४ रुचाभः ५ आरुणिः ६ ताण्ड्यः ७- श्यामायनः ८- काठः ९- कलापी इति ॥

अत्र कलापिनश्चत्वारः शिष्याः हरिद्रुः छागलः तुम्बरुः उलपश्चेति ।

चरणव्यूहे चरकानां द्वादशभेदाः दर्शिताः यथा—

१- चरकाः २- आव्हरकाः ३-काठाः ४-प्राच्यकठाः ५-कपिष्ठलकठाः ६-चारायणीयः ७-वारतान्तवीयाः ८-श्वेताः ९-श्वेततराः १०-औपमन्यवः ११-पाताण्ड़िनेयाः १२-मैत्रयणीयाश्चेति ॥

मैत्रयणीया अपि मानवा वाराहा दुन्दुमा छागलेया हारिद्रवीयाः श्यामायनीयाश्चेति षड्भेदवन्तः ॥

कूर्मपुराणे च-१-५२

अनादिनिधना दिव्या वागुत्सृष्टा स्वयं भुवा ।

आदौ वेदमयी भूता यतः सर्वाः प्रवृत्तयः १-२ अध्यायः

× × ×

अथ शिष्यान् स जग्राह चतुरो वेदपारगान् ।

जैमिनिं च सुमन्तुं च वैशम्पायन मेव च ॥

पैलं तेषां चतुर्थं च पञ्चमं मां महामुनिः ।

ऋग्वेदपाठकं पैलं जग्राह स महामुनिः ॥

ऋग्वेदप्रवक्तारं वैशम्पायन मेव च ।

जैमिनिसामवेदस्य सुमन्तुमृषिसत्तमम् ॥

इतिहास पुराणानि प्रवक्तुंमामयोजयेत् ।

एक आसीद् यजुर्वेदस्तं चतुर्द्धा व्यकल्पयत् ॥

चतुर्होत्रमभूत्तस्मिस्तेन यज्ञमथाकरोत् ।

आध्वर्यवं यजुर्भिःस्यादग्निहोत्रं द्विजोत्तमाः ॥

रयजेद्गात्रं माममिश्चक्रे ब्रह्मत्वं चाप्यथर्वभिः ।

ततः सत्रे च उद्धृत्य ऋग्वेदंकृतवान् प्रभुः ॥

यजूंषितु यजुर्वेदं सामवेदं च सामभिः ।

एकविंशतिभेदेन ऋग्वेदं कृतवान् पुरा ॥

शाखानां तु शतेनैव यजुर्वेदमथाकरोत् ।

सामवेदं सहस्रेण शाखानां प्रविभेद सः ।

अथर्वाणमथोवेदं विभेदकुशकेतनः ।

भेदैरष्टादशैर्व्यासः पुराणं कृतवान् प्रभुः ॥

कर्मपु, १-५२ अध्याये

वेदानामाकृति यथा—

ऋग्वेदोमूर्त्तिमांश्चैव शक्रनीलसमद्युतिः । २३

दिव्यगन्धानुलिप्ताङ्गो दिव्याभरणभूषितः ।

संस्थितः पूर्वतस्तस्य दीप्यमानः स्वतेजसा ॥ २४

उत्तरेण यजुर्वेदः शुद्धस्फटिकसन्निभः ।

दिव्यकुण्डलधारी च महाकायो महाभुजः ॥ २५

स्थितः पश्चिमदिग्भागे सामवेदः सनातनः ।

रक्ताम्बरधरः श्रीमान् पद्मरागसमप्रभः ॥ २६

स्रग्दामधारी चित्रश्च गीतभूषणभूषितः ।

अथर्वाञ्जनवच्छ्यामः स्थितो दक्षिणतस्तथा ।

स्कन्द-प्रभास-३-२७

**वेदपारगः**— तत्त्वदर्शी ।

उत्पत्तिं प्रलयं चैव भूतानामगतिं गतिम् ।

वेत्ति विद्यामविद्यां च स भवेद् वेदपारगः ।

इति हेमाद्रौ सम्वर्त्तः

**वेदमातरः**— गायत्रीसावित्रीसरस्वत्यः वेदमातर-इति

नीलकण्ठः

ततो मामब्रवीद् रामः स्मयमानो रणाजिरे ।

रणे मे मेदिनी भीष्म वाहा वेदाः सदश्ववत् ॥ ३

सूतश्च मातरिश्वा वै कवचं वेदमातरः ।

सुसंवीतो रणे ताभिर्योत्स्येऽहं कुरुनन्दन ॥ ४

महाभा, उद्, १७६ ४

**वेदविक्रयः**— प्रख्यापनं प्राध्ययनं प्रश्नपूर्वः प्रतिग्रहः ।

याजनाध्यापने वादः षड्विधा वेदविक्रयः ॥

इति छागलेयः कल्पतरौ २०५

**वेदवित्**— वेदशास्त्राण्यधीते यः शास्त्रार्थं च निषेवते ।

तदसौ वेदवित् प्रोक्तो वचनं तस्य पावनम् ॥

अत्रिसंहिता १४३

**वेदव्रतानि**— वेदव्रतानि चत्वारि विदधीत यथाविधि ।

तेषामाद्यं महानाम्नी श्रवणं तदनन्तरम् ॥

महाव्रतं ततः पश्चाद् भवेदुपनिषद्व्रतम् ।

ततो गोदानमित्येवं कार्य्याण्येतान्यनुक्रमात् ॥

इति शौनकः संस्कारप्रकाशे-५५०

**वेदसंन्यासी**— गृहस्थ एव कृतकरणीयो वेदसंन्यासिक

उच्यते इति गोविन्दस्वामी ।

**वेदाङ्गानि**— शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतींषि ।

**वेदाभ्यासः**— वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ।

शिष्येभ्यः सम्प्रदानं च वेदाभ्यासो हि पञ्चधा ॥

इति दक्षः २-२७

प्रकाशनान्तरे ३-३४

याज्ञवल्क्यस्मृतौ ३-३१०

श्लोके वेदाभ्यासशब्दस्य प्रयोगः अस्ति ॥

**वेदिः**— यज्ञादिकर्मार्थं परिष्कृता भूमिः ।

सदो ब्राह्मणस्य शरीरं वेदिः संकल्पो यज्ञः पशुरात्मा

राशना बुद्धिरित्यादि वसिष्ठः ३०-५

दीर्घान्तोऽपि वेदिशब्दः ।

वेदीमारोपयत् पश्चात् पत्नीभ्यां सह सुव्रत इति

पूजाप्रकाशोद्धृत भविष्ये-३०४

**वेदिका**— दारुपरिष्कृता चतुरस्रा विश्रान्ति भूः इति

स्मृतिचन्द्रिका ।

वेदिका रथ्यादिप्रदेशे संस्कृतोन्नता भूमिरिति मदनरत्ने ॥

वेदिका प्राङ्गणादिभूरिति अपरार्कः ।

प्रतोल्यादिसंस्कृता उन्नता भूमिरिति विवादरत्नाकरे ।

वातायनं प्रणालीश्च इत्यादि निर्यूहशब्दे द्रष्टव्यम् ॥

**वेदिपुरीषम्** — वेदिगताः पांसवो वेदिपुरीषमिति हरदत्तः ।

अपवृत्ते कर्मणि या वेदिः सा वेदिपुरीषमिति भट्टोजी-दीक्षितः । चतुर्विंशतिमतसंग्रह-श्राद्ध-८६

गार्हस्थ्य-२४

वेदिमृत्तिका इति लक्ष्मीधरः ।

वेदिपुरीषाद् ब्रह्मवादिनी इत्याश्वलायनः ॥

**वेदी** — वेदसाधनका दर्शपौर्णमासादयो याग इति हेमाद्रिः तत्र हारीतः—

अथ वेदश्च वेदी च त्रियुगं यत्र सीदति ।

स वै दुर्ब्राह्मणः प्रोक्तो ब्रह्मवादिषु गर्हितः ॥

इति वेदी अग्निरिति गदाधरः ॥ कात्यायनश्राद्ध-सूत्रम् १-११

यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।

स वै दुर्ब्राह्मणो नाम सर्वकर्म बहिष्कृतः ॥

इति सारसमुच्चये इति संस्कारप्रकाशे-५११

**वेदोपकरणम्** — वेदोपकरणानि वेदोपकारकाणि व्याकरणादीनि ।

वेदोपकरणे चैव स्वाध्याये चैव नैत्यके ।

नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥

मनुः २-१०५

**वेधः** — तिथ्यन्तरसम्बन्धः ।

पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम् ।

त्रिभिर्मुहूर्त्तैस्तिथिः परां तिथिम् अस्तमनात्पूर्वं त्रिमुहूर्त्तातिथिः पूर्वांतिथिं विध्यति इति सारः ।

**वेनः** — (१) पृथुनृपस्य पिता । मनुः ९-६६

(२) वादित्रजीवनः ।

सुवर्णकर्त्तुर्वेनस्य इति ण, स्थाने नकारं पठति

हेमाद्रिः परि-७७४

**वेला** — पूर्वाण्हादिरूपः समयविशेषः दिवसस्यार्द्धभागः ।

वर्षर्त्तुमासपक्षाहोवेलादेशप्रदेशवत् इति भाषालक्षणे प्रोक्तं भाषाशब्दे द्रष्टव्यम् ।

तं मुहूर्त्तं क्षणं वेलां दिवसं च युयोज हि ॥

महाभा, वन, २९७-७

**वेल्लकः** — खाद्यद्रव्यविशेषः ।

कुल्माषा वेल्लकाश्चैव कोमला वालकाः शुभाः । इति स्कन्द, ब्रह्म, धर्मारण्ये, २३-४

**वेशः** — (१) वेश्म ।

वेशो वेश्म इति प्रातिवेश्यशब्दव्याख्याने विज्ञानेश्वरः २-२६१

(२) वेशो वेश्यागृहमिति विवादरत्नाकरे ।

(३) पण्यस्त्रियां भृतिर्वेश इति कुल्लूकः ।

न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः ॥

सूनाचक्रध्वजवतां वेशेनैव च जीवताम् ।।

मनुः ४-८४

वेशवारः— वेशर इति ख्यातः व्यञ्जने प्रदेयः सर्षपादि-कल्कः ।

वेश्म— गृहम् ।

वेश्या— वेशो भृतिः तां जीवनहेतुतया अर्हतीति वेश्या। इति माधवाचार्याः पराशरः १०-१३

वेषः— वस्त्रमाल्यादिविन्यासः इति विज्ञानेश्वरः १-१२३
प्रसाधनमितिकुल्लूकः ।
हीनान्न वस्त्रवेषः स्यात् सर्वदा गुरुसन्निधौ ।।
उत्तिष्ठेत् प्रथमं चास्य चरमं चैव संविशेत् ।।

मनुः २-१९४

वेष्टिका— भोज्यद्रव्यविशेषः ।
मण्डका वटकाः पूपा तथा वै वेष्टिकाः शुभाः।
स्कन्द, ब्रह्म, धर्मारण्य, २३-२२

वेष्टिनी— वेष्टितशिराः बद्धोष्णीष इति यावत् ।

आपस्त-१-२-८-२

वेहत्— गर्भघातिनी गौः इति हरदत्तः ।
नित्याचारप्रदीपे च २-३१५
वृषमोपहता गौरिति हरदत्तः गौतमध-३-४-१८
कल्पतरौ च गार्हस्थ्य-२०३
पुरुषवशाकुमारी वेहताश्च नित्यम् ।। गौतमः १-७-१४

वैकङ्कतम्— भइँचकोलि इति ख्यातम् ।

वैकङ्कतफलम्— भइँचकोलि इति प्रसिद्धम् ।

वैखानसः— वानप्रस्थः ।
तस्याश्रमविकल्पमेके ब्रुवते । १-३-१
ब्रह्मचारी गृहस्थो भिक्षुर्वैखानसः गौतमः १-३-२
वैखानसो वने मूल फलाशी तपःशीलः १-३-२५

वैणः— (१) वैदेहकादम्बष्ठायां वैण इति बौधा १-३-१२
शूद्रेण राजन्यायां वैण इति वसिष्ठः १८-२
रथकार इत्यस्य नामान्तरम्, कर्मणा वैण्यो रथकर इति कौटल्योक्तेः ३-७
(२) वैणो वीणावादनजीवीति हेमाद्रिः वेणुच्छेद-जीवीति विज्ञानेश्वरः ।। याज्ञ १-१६१
(३) वेणुना नर्तको वैण इति हरदत्तः ।।

आपस्त २-१-२-६

वैणसः— जातिविशेषः ।
वैणस्य वेणुविकाररचना इति पण्डितसर्वस्वे ।

वैतंसिकः— मांसविक्रेता ।
यदा कामान् समीक्षेत धर्मवैतंसिको नरः ।
अथैनं मृत्युपाशेन कण्ठे बध्नाति मृत्युराट् ।।

महाभा, शा-१२-१२

वैतरणी— उत्कलदेशस्था प्रसिद्ध नदी ।
जपो होमस्तथाध्यानं यत्किंचित् सुकृतं भवेत् । १२०
लौहित्यवैतरण्यां च स्वर्गवेद्यां तथैव च ।।

सा तु देवी समुद्रान्ते दृश्यते चैव नामभिः ॥

ब्रह्माण्डपु २-३-१३-१०३

**वैतसम्**— वेतसनिर्मितम् ।

**वैतसः**—जातिविशेषः वेत्र पात्रनिर्माणवृत्तिकः ।

वैतसस्य वेत्रपात्रघटना ॥ इति पण्डितसर्वस्वे

**वैतानम्**— श्रौताग्निकर्म कल्पतरु-शुद्धि-२४

नित्यानि विनिवर्त्तेरन् वैतानवर्जम् ॥

पारस्कर गृ-३-१०-३२

निवर्त्तेरन् इति पारस्करग्रन्थपाठः ।

**वैतानिकम्**— वितानः अग्नीनां विस्तारः तत्र भवानि वैतानिकानि बह्वग्निसाध्यानि कर्माणि इत्यर्थः ।

उक्तानि वैतानिकानि इत्याश्वलायन गृह्यसूत्रव्याख्याने गार्ग्यनारायणवृत्तिः ।

**वैतानिकः**— वितानो यज्ञः तत् प्रयोजकः वैतानिकः अग्निरित्यर्थः ।

**वैतुपिकः**— तण्डुलग्राही वानप्रस्थः बोध १-३-३-७

**वैदलम्**— (१) वंशादिखण्डनिर्मितं वस्तु ।

अलाबुं दारुपात्रं च मृण्मयं वैदलं तथा ।

एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत् ॥

मनुः ६-५४

वैदलं वंशादिखण्डनिर्मितमिति कुल्लूकः ।

तरुत्वङ् निर्मितमिति गोविन्दराजः ।

वैदलं वेणवशूर्पादि इति नरसिंहवाजपेयी ।

पत्रशाकतृणानां च चर्मणो वैदलस्य च ।

मृण्मयानां च भण्डानां सर्वस्याश्ममयस्य च ॥

मनुः-७-१३१

वैदलं वेणुघटितं भाण्डमिति शूलपाणिः ।

(२) वैदलामुद्गचणकादय इति नरसिंहवाजपेयी ।

अतिरात्रमवाप्नोति तथापूपनिवेदकः ।

वैदलानी च भक्ष्याणां दानात् काममवाप्नुयात् ।

इति नित्याचारप्रदीपे-१-६६२

**वैदेहः**— वैश्यादब्राह्मण्यां जातः ।

क्षत्रियाद् विप्रकन्यायां सूतो भवति जातितः ।

वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ॥

मनुः ११-११

**वैदेहकः**— (१) वणिक् ।

वैदेहकः सार्थवाहः इत्याचारेन्द्रौ २४८

वैदेहका वणिज इति श्रीमूला ।

वैदेहको वाणिजके शूद्राद् वैश्यासुतेऽपि च ॥

इति मिश्रः

(२) जातिविशेषः गोपाल इति यावत् ।

वैश्यायां शूद्रसंसर्गाज्जातो वैदेहकः स्मृतः ।

अजानां पालनं कुर्यान्महिषीणां गवामपि ॥ २०

दधिक्षीराज्यतक्राणां विक्रयाज्जीवनं भवेत् ॥ २१

औशनसस्मृतिः

**वैदेहकव्यञ्जनः**— गुप्तचरविशेषः ।

स च वाणिजकः क्षीणवृत्तिरिति कुल्लूकः ७-१५४
वाणिजको वृत्तिक्षीणं प्रज्ञाशौचयुक्तो वैदेहकव्यञ्जनः
इति कौटलीये १-११-६

**वैद्यः**— चिकित्सकः ।

दद्या ज्योतिर्विदो वैद्यान् दद्याद्गां काञ्चनं महीम् ।
इति याज्ञ-१-३३३

नैवेशिकानि च ततः श्रोत्रियेभ्यो गृहीणि च ।
तत्र तेन न वस्तव्यं यत्र नास्ति चतुष्टयम् ।
ऋणप्रदाता वैद्यश्च श्रोत्रियः सजला नदी ।।
इति व्यासः कल्पतरो गर्ह-३३६
ब्रह्मपुराणेतु विप्रा न वस्तव्यमिति विशेषः २२१-१०३
(२) विद्वान् ।
स्वयमर्जितं वैद्यो वैद्येभ्यः कामं दद्यात् ।
इति व्यवहारमयूखे गौतमः
विद्यां वेत्तीति वैद्य इति नीलकण्ठः ।
वैद्यो वैद्याय ना कामो दद्यादंशं स्वतो धनात् ।
पितृद्रव्यं समाश्रित्य न चित्तेन तदाहृतमिति
तत्रैव कात्यायनः ।।

**वैद्यकः**— जातिविशेषः ।

नृपायां विप्रतश्चौर्य्यात् संजातो यो भिषक्स्मृतः ।
अभिषिक्तनृपस्याज्ञां प्रतिपाल्यतु वैद्यकः । २६
आयुर्वेदमथाष्टाङ्गतन्त्रोक्तं धर्ममाचरेत् ।
ज्यौतिषं गणितं वापि कायिकीं वृत्तिमाचरेत् ।। २७
औशनसस्मृतिः

**वैभाजनं पुरम्**— सुसमृद्धं पुरम् ।

विविधैः मार्गैः भजनीयं विभजनम् ।
तदेव वैभाजनमिति हरदत्तः ।। आपस्त १-८-२३-७
स सर्वं परमा काष्ठा स वैपुवतं स वैभाजनं
पुरम यथा सुसमृद्धं पुरं सर्वैरर्थिभिः प्राप्यम् ।
एवमयं परमात्मा इति हरदत्त ।
विभाजनं विवेक आत्मनः यस्मिन् देहे क्रियते ।
तत् विभाजनमेव वैभाजनम् तच्चानेकधा विभक्तम् ।
तदुपाध्यनुवर्तित्वात् वैभाजनम् इति शंकराचार्याः ।।

**वैयापृत्यकरः**— व्यापारकारी ।

व्यावृत्तस्य भावः वैयावृत्यम् तत् कर्तुं शीलमस्येति
वैयावृत्यकरः व्यापारकारीत्यर्थः इत्यसहायभाष्ये
वैयापृत्यकर इति विवादरत्नाकरे पाठः ।
तत्रापि व्यापारकर इत्यर्थः ।
शिष्यान्तेवासी दासस्त्री वैयापृत्यकरैश्च यत्
कुटुम्बहेतोरुत्क्षिप्तं दातव्यं तत् कुटुम्बिना ।।
इति नारदसंहिता २-१०

**वैरमणम्**— अध्ययनसमाप्तिः उत्सर्ग इत्यर्थः ।
आपस्त १-३-१०-२

**वैरूपाक्षः**— साममन्त्रविशेषः ।

वैरूपाक्षः पुरस्ताद्धोमानाम् ४-५-६ इति गोभिलसूत्रे ।
वैरूपाक्षः उपश्च तेजश्चेत्यादिजप इति केचित् ।
विरूपाक्षशब्दो यस्मिन् विद्यते सोऽयं वैरूपाक्षः ।

भूर्भुवः स्वरोमित्यादिको मन्त्र इति तत्त्वकारः ॥

संस्कारतत्त्व-१६

पठ्यमानमन्त्रकाण्डे तु भूर्भुवः स्वर ओ महामन्त्रमात्मानं प्रपद्ये इति प्रतीकं प्रपदशेषतयैव पठ्यते । भट्टभाष्येऽपि विरूपाक्षशब्दोऽस्मिन् विद्यते इति वैरूपाक्षो मन्त्रः विरूपाक्षोऽसीत्येवमादिकः इत्युक्तम् इति गोभिलभाष्ये ४-५-६

**वैवस्वतः**— (१) सप्तमो मनुः मनुः १-६२

(२) यमः मनुः ८-९२

**वैवाहनः**— विवाहसंस्कृतोऽग्निः ।

एष औपसदोऽग्निर्वैवाहनो वा काठकगृ-४-७-१

**वैवाह्यः**— वरः ।

षडर्घ्या भवन्ति ।

आचार्यऋत्विग् वैवाह्यो राजा प्रिय स्नातक

इति पारस्करः १-३-२

**वैशसम्**— वैरम् युद्धे कदनं वा इति नीलकण्ठः ।

वैशसं च प्रतीक्षध्वं रक्षध्वं चापि गोधनम् ॥

इति महाभा, विरा-३८-८

**वैश्रवणीया**— (तिथिः) त्रयोदशी इति हेमाद्रौ ।

तत्र स्कान्दे—

यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।

तिथिर्वैश्रवणीया च गजच्छायेति सा स्मृता ॥

नरसिंहपुराणे तु वैवस्वतीति पाठः

**वैश्वदेवम्**— (१) चातुर्मास्यपर्वसु प्रथमं पर्व ।

न वैश्वदेवे उत्तरवेदिमुपकिरन्ति न शुनासीरीये

मिताक्षरा-२-१-५

(२) उत्तराषाढ़ानक्षत्रम् हेमाद्रौ थ ख २६७

(३) पञ्चमहायज्ञानुष्ठानरूपः कर्मविशेषः ।

वैश्वदेवे तु निर्वृत्ते यदन्योऽतिथिराव्रजेत् ।

तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥

मनुः-३-१०८

शुद्ध्यर्थं चात्मनोऽन्नस्य वैश्वदेवं समाचरेत् ।

सिद्धान्नेन च गृह्याग्नावन्यस्मिन्ननलेऽपि च ॥

लघ्वाश्वलायनः १-११६

वैश्वदेवं क्वचित् कर्त्तुं न शक्नोति पितैव हि ।

पितुरेवाज्ञया कुर्य्यात् पुत्रोभ्राता परेऽपि हि ॥

लघ्वाश्वलायनः २-११८

(४) पाकः ।

विश्वदेवा देवता अस्येति वैश्वदेवमन्नम् ॥

इति हरिहरः

वैश्वदेवादन्नात् पर्युक्ष्य स्वाहाकारैर्जुहुयात् ॥

पारस्करः २-९-२

**वैश्वदेवः**— सर्वार्थः पाकः ।

विश्वेदेवा देवता अस्येति व्युत्पत्त्या वैश्वदेवशब्देन सर्वार्थः पाक इति मित्रमिश्राः ।

ततो वैश्वदेवस्य जुहोति ।

विश्वेदेवा देवपितृमनुष्या देवता अस्येति वैश्वदेवः । पाकः पञ्चमहायज्ञार्थं साधितपाक इत्यर्थः इति हरिहरः पारस्करः १-१२-३

**वैश्वानरी**— (१) इष्टिविशेषः वसिष्ठः २२-१०

मनुः ११ २७

(२) वैश्वानरी वैश्वानर्य्यः ऋचः वैश्वानरी न इत्य-इत्यष्टौ (अथर्व) ६-४-३५ इति गोविन्दस्वामी ।

**वैश्वानरीवीथी**— वैश्वानरी भाद्रपदे रेवती चेति कीर्त्तिता

देवीभागवते ८-१५

**वैश्वानर्यः**— वैश्वानरो ऊत्या इत्यष्टौ अथर्व ६-४-३५ वैश्वानये इति गोविन्दस्वामी बौधा, ४-७ ५

क्षापवित्रं सहस्राक्षो मृगारोंऽहमुचौ गणौ ।

पावमान्यश्च कूश्माण्ड्यो वैश्वानर्य ऋचश्च याः ॥ इति

**वैपुवतम्**— मध्यस्थम् विषुवान् नाम गवामयनस्य मध्य-भवमहः ।

एकविंशमेतदहरुपयन्ति विषुवन्तं मध्ये सम्वत्सरस्य दर्शनात् विषुवानेव वैषुवतं इति हरदत्तः ।

स सर्व परमाकाष्ठा स वैषुवतं स वै वैभाजनं पुरम्

आपस्त १-८-२२-७

सम्वत्सरसाध्ये गवामयनसत्रे सम्वत्सरस्य यः मध्यमदिवसः १८१ तम दिवसरूपः स भवति विषुवान् तत्र दिवाकीर्त्त्याख्यं ब्रह्मसाम भवति तेन साम्ना पर-मात्मा गीयते तेन ब्रह्म वैषुवतम् इत्युच्यते ॥

**वैष्टिकम्**— विष्टिः वेतनं विना बाध्यतया कर्मसम्पादनम् इत्यर्थः ।

वेष्टिः कर्मकरः तत्सम्बन्धिदेयमिति विवादरत्नाकरे-६६२ग वैष्टिकं जाङ्घिकं क्षेत्रद्रव्यापहरणमित्यादि तत्र शङ्खलिखितौ ॥

**वैष्कम्**— व्याघ्रादिहतं मांसम् ।

वैष्कमप्युपयुञ्जीत गौतमः १-३-३०

विष्क दुष्टमृगा व्याघ्रादयस्तैर्हतं मांसं वैष्कम् इति

हरदत्तः ।

**वैष्णवः**— वैखानसपञ्चरात्रादिवैष्णवागमोक्तदीक्षा-युक्तो वैष्णवः ।

तदभावे स्कन्दपुराणाद्युक्तगुणसम्पन्नो वैष्णवः ॥ यथा

परमापदमापन्नो हर्षे वा समुपस्थिते ।

नैकादशीं त्यजेद् यस्तु तस्य दीक्षा तु वैष्णवी ।

समात्मा सर्वजीवेषु निजाचारादविप्लुतः ।

विष्णवर्पिताखिलाचारः स हि वैष्णव उच्यते ॥

विष्णुपुराणे वैष्णवलक्षणं यथा—

न चलति निजवर्णधर्मतो

यः सममतिरात्मसुहृद्विपक्षपक्षे ।

न हरति न च हन्ति किंचिदुच्चैः ।

सितमनसं तमवेहि विष्णुभक्तम् ॥ ३-७-२०

कलिकलुषमलेन यस्य नात्मा,

विमलमतेर्मलिनीकृतस्तमेनम् ।

मनसि कृतजनार्द्दनं मनुष्यं

सततमवेहि हरेरतीव भक्तम् ॥ ३-७-२१

कनकमपि रहस्यवेक्ष्य बुद्ध्या तृणमिव यः समवैति वै परस्वम् ।

भवति च भगवत्यनन्यचेताः पुरुषवरं तमवेहि

विष्णुभक्तम् ॥ ३-७-२२ इति

वैष्णवनक्षत्रम्-श्रवणा

चित्रशास्त्रेषु चित्रास्याद्धर्मशास्त्रेषु वैष्णवम् ।

ज्योतिःशास्त्रेषु च स्वाती योगशास्त्रेषु वारुणम् ॥

इति शास्त्रारम्भप्रकरणे संस्कारप्रकाशे-५२०

**वैष्णवमार्गः** पश्चाद्भागः ।

वैष्णवमार्गः पश्चाद्भाग इति वीरमित्रोदये परिभाषा-

प्रकाशे-६७ हेमाद्रौ च परि-६३६

अर्द्धं प्रदक्षिणीकृत्य शिखापाशं प्रवेशयेत् ।

वैष्णवेनैव मार्गेण वृत्तग्रन्थौ पवित्रके ॥ इति

गरुड़पुराणे बहुलक्षणम् पवित्रशब्दो द्रष्टव्यः ।

**वैष्णवी**— (१) भूमिः ।

अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी ।

सूर्यसुताश्च गावः तासामनन्तं फलमश्नुवीत

यः कांचनं गां च महीं च दद्यात् वसिष्ठः २८-१६

सम्वर्त्तस्मृतौ तु तृतीयपादः लोकास्त्रयस्तेन भवन्ति

दत्ता इति पठ्यते श्लो ७४

वृहस्पतिस्मृतौ संवर्त्तवत्पाठः-वृह-३०

(२) शूद्रा इति कल्पतरुः श्राद्ध-८४

आपद्गतोऽभ्युपगतो यश्चस्याद् वैष्णवीसुतः ।

सर्वे ते मनुना प्रोक्ताः काण्डपृष्ठास्त्रयस्तथा ॥ इति

(३) विधवा इति हेमाद्रिः ७१८ अन्यत्र इन्द्रजालादि

माया इति स एव ।

वैष्णवीषु च ये सक्ता अलाजादादिनस्तथा ।

धनुष्कर्त्ता द्यूतवृत्तिर्मित्रध्रुक् शठ एव च ॥

इति अपाङ्क्तेयप्रकरणे यमः ।

मन्मते तु इयं वैष्णवी प्रव्रजिता

(४) द्वादशी ।

एकादशी द्वादशी च उभयोर्दैवता हरिः ।

शुद्धा यदा समाहीना समाहीनाधिकोत्तरा ।

एकादशीमुपवसेन्न शुद्धां वैष्णवीमपि ॥

इति निर्णयसिन्धूद्धृतस्कान्दे निर्णय-३१

**वोचम्**— गुड़त्वक्फलमिति नरसिंहवाजपेयी ।

भव्यं मोचं तथा वोचं खर्जूरमथदाड़िमम् ।

आम्रातकः श्रुवाम्लोटः फलमालपियालकम् ॥

इति नित्याचारप्रदीपाद्धृतविष्णुधर्मे ।

**वोढा**— वरः भर्त्ता इत्यर्थः ।

तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥

मनुः ९-१७२

**व्यक्तिः**— अवयवः ।

अव्यक्तो व्यक्तिरवयवस्तद्रहित इति कुल्लूकः १-७

**व्यङ्गः**— हीनाङ्गोऽधिकाङ्गो वा कात्याय. श्राद्धसूत्रे १-११

**व्यजनम्**— होतव्ये च हुते चैव पाणिशूर्पास्य दर्विभिः ।

न कुर्यादग्निधमनं कुर्याद्वा व्यजनादिना ॥

गोभिलस्मृतिः -१३५

**व्यञ्जनम्**— तेमनम् ।

व्यञ्जनं लाञ्छनं श्मश्रुनिष्ठानावयवे वापि च ॥

अमरः-३-३-११६

व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवेऽपि च ।

इति मेदिनी

हस्तदत्तस्तु ये स्नेहा लवणं व्यञ्जनानि च ।

दातारं नोपतिष्ठान्ति भोक्ता भुङ्क्ते च किल्बि-

षम् ॥ इति

**व्यतिक्षेपः**— व्यत्यासः ।

आर्य्यानार्य्ययोर्व्यतिक्षेपे कर्मणः साम्यम् ।

गौतमः २-१-६६

**व्यतीपातः**— विष्कुम्भादियोगेषु सप्तदशो योगः ।

शतमिन्दुक्षये दानं सहस्रं तुदिनक्षये ।

विषुवे दशसाहस्रं व्यतीपाते त्वनन्दकम् ।

इति हेमाद्रि घृतयाज्ञवल्क्यो तस्योत्पत्तिमाह गालवः ।

**व्यतीपातः**— (१) सुर्याचन्द्रमसोः संक्रान्तिसाम्यमिति

लक्ष्मीधरदिव्यसिंहगदाधरादयः ।

(२) अशुभ्ययोगविशेषः ।

पञ्चाननस्थौ गुरुभूमिपुत्रौ मेषे रविः स्याद्

यदि शुक्लपक्षे ।

मासाभिधानाकरभेण युक्ता तिथिर्व्यतीपात

इतीहयोगः ॥

मासाभिधानाद्वादशीतिथिः ।

करभं हस्तानक्षत्रमिति वप क्रियाकौमुद्याम् ॥ २४२

(२) प्रकारान्तरमपि ।

श्रवणाश्व धनिष्ठार्द्रानागदैवतमस्तके ।

यद्यमा रविवारेण व्यतीपातः स उच्यते ॥

नागदैवतम् अश्लेषा मस्तकं मृगशिराः ।

(३) विष्कुम्भादिषु योगेषु सप्तदशः अस्योत्पत्तिमाह

गालवः ।

चन्द्रार्कयोर्नयवीक्षण जातमूर्त्तिः कालानलद्युतिनिभः

पुरुषोतिरौद्रः ।

अस्तोद्यतो नु निपतंश्च निरीक्ष्यमाणः संघातयेवमिति

च व्यतिपातयोगः ॥ हेमा, परि, २४२

**व्यत्यसनम्** — विनिमयः ।

**व्यत्यासः**— विनिमयः ।

नैष संकल्पितः कामोमया भद्रे तथा त्वयि ।

उग्रकर्मा समुत्पन्नश्चरुव्यत्यासहेतुना ॥

महाभा राजधर्म ४६-२३

**व्यन्तरम्**— मार्गविदूरावकाश इति श्रीमूला ।

पथि व्यन्तरे गूढदेशाभिगमने इत्यादि कौटल्यः ३-४

**व्यपोहनम्**— उत्सर्जनम् ।

एवं सर्वानिमाद्राजा व्यवहारान् स्थापयन् ।

व्यपोह्य किल्बिषं सर्वं प्राप्नोति परमां गतिम् ॥

मनुः ८-४२०

**व्यभिहासः**— आभिमुख्येन हसनम् आपस्त १-२-८-१५

**व्यलीकम्**— वेलि इति उद्भाषायां प्रसिद्धः ।

परिहास इति यावत् ।

व्यलीको नागरे स्मृतः ।

व्यलीकमप्रियाकार्यं वैलक्ष्येष्वपि पीड़ने ।। इति विश्वः

उपाध्यायव्यलीकं तु कृत्वा श्वा भवतिद्विजः ।।

इति मार्कण्डेये १५-२

**व्यवसायः**— (१) अनुष्ठानम् आचरणम् ।

अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः ।

धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः ।।

मनुः १२-१०३

(२) निश्चयः ।

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।

बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ।।

भ, गीता २-४१

अत्र व्यवसायात्मिका निश्चयात्मिका इति श्रीशङ्कराचार्याः ।

मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ।।

भ, गीता १८-५६

अत्रापि व्यवसायः निश्चय इति ते एव ।।

**व्यवहारः**— (१) विवादनिर्णयः न्यायः ।

व्यवहारलक्षणमाह नारदः कात्यायनश्च-२६

विनानार्थेऽव सन्देहे हरणंहार उच्यते ।

नानासन्देहहरणाद् व्यवहार इति स्मृतः ।। इति

प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे ।

साध्यमूलस्तु यो वादो व्यवहारः स उच्यते ।।

कात्यायनः-२५

धर्मेण निश्चयो यस्तु व्यवहारः स उच्यते ।

वाक्छलानुत्तरत्वेन द्वितीयः परिकीर्त्तितः ।।

इति बृहस्पतिः

विरुद्धार्थिप्रत्यर्थि वाक्य जानितसन्देहहारी विचार एव व्यवहार इति कुल्लूकः ८-१

अन्यविरोधन स्वात्मसम्बन्धितया कथनमिति विज्ञानेश्वरः ।। २-१

विप्रतिपद्यमानरान्तरगताज्ञाताधर्मज्ञापनानुकूलो व्यापारो व्यवहारः वादिप्रतिवादिकर्त्तृकः सम्भवद्भोगसाक्षि प्रमाणको विराधिकोटिव्यस्थापनानुकूलो वा व्यापारः स इति व्यवहारमयूखे नीलकण्ठः ।।

(२) व्यवहारो लोकमर्यादास्थापनमिति हरदत्तः ।

तस्य च व्यवहारो वेदो धर्मशास्त्राण्यङ्गान्युपवेदाः ।। पुराणम् ।। गौतः २-२-१९

(३) कृषिक्रयविक्रयादिरिति मेधातिथिः ।

यत् किंचिदपि वर्षस्य दापयेन् करसंज्ञितम् ।

व्यवहारेण जीवन्तं राजा राष्ट्रे पृथग्जनम् ।।

मनुः ७-१३७

वेपार व्यवसाय इत्यादिशब्दैः भाषायां प्रसिद्धः ।।

(४) परस्परगृहगमनादिसम्बन्धः ।

ब्राह्मण्यं परिरक्षेत नानायोनिनिषेवणात् ।

दुष्टेभ्यो व्यवहाराच्च तथादुष्ट तिग्रहात ।। इति यमः

अत्र परस्परगृहगमनादिव्यवहार इति कल्पतरुः ।।

गार्ह-१४

**व्यवायः**— (१) मैथुनम् ।

व्यवाये तीर्थगमने धर्मेभ्यस्तु निवर्त्तते ॥

वसिष्ठः २१-६

(२) व्यवधानम् ।

पितर्यपरते पुत्रो मातुः श्राद्धान्निवर्त्तते ।

मातर्यपि च वृत्तायां पितृश्राद्धादृते समाः ।

असम्बद्ध इ वायाभावादनुषङ्गाधिकरणन्याय सम्भवादृते समा इति उभयत्रान्वयः इति विप्रमिश्रा इति

श्राद्धदीपे ॥

व्यष्कुः – मार्जारः ।

व्यष्कुमार्जार इति वैजयन्त्यां नन्दपण्डितः व्यक्कुः इति पाठान्तरम् ।

तत्र शंखः अविगवयाजादिव्यष्कुनास्तिकादौ त्रिमासम्

विष्णुः १०-२२

व्यसनम्— (१) मृगयाद्यष्टादशविधम् ।

मृगयाक्षो दिवास्वानः परिवादः स्त्रियो मदः ।

तौर्यत्रिकं वृथाट्या च कामजो दशकोगणः-४७

पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् ।

वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥

मनुः ७-४८

(२) दुःखम् ।

व्याकरणम्— (१) शास्त्रविशेषः ।

अर्थविशेषमाश्रित्य पदमत्वाचक्षाणं पदपदार्थ प्रतिपादनेन वेदस्योपकारकं विद्यास्थानमिति

हरदत्तः ॥ आपस्त २-४-८-११

(२) उच्चारणम् ।

ब्रह्मव्याकरणं कृत्वा हुत्वा वै पावके हविः ।

शालग्रामशिलां स्पृष्ट्वा शूद्रो गच्छत्यधोगतिम् ॥

त्रिकाण्डमण्डनम् प्रकीर्ण-२८

व्याजी — शतावरदण्डकर्मसु नियतग्राह्यं द्रव्यम् इति

श्रीमूला ३-१७

दण्डकर्मसु सर्वेषु रूपमष्टपणं शतम् ।

शतावरेषु व्याजीं च विद्यात् पञ्चपणं शतम् ॥

कौट ३-१७-१५

शतात् परेषु व्याजी च इति ।

व्याड़ः— व्यालः व्यालशब्दो द्रष्टव्यः ।

व्यानः— सर्वशरीरगो वायुः ।

व्यानः सर्वशरीरग इति देवीभागवते ७-३२-४०

प्राणो रेचकः अपानः पूरकः तयोर्वा अधः सन्धिः ।

सन्धानं व्यानः कुम्भकरूप इति पारस्करसूत्रभाष्ये

गदाधरः १-१६-११

व्यापृतः— कर्मणिनियुक्तः ।

हिरण्यं व्यापृतानीतंभाण्डागारेषु निक्षिपेत् ॥

याज्ञ १-३२८

अत्र व्यापृतैः हिरण्याद्यानयन नियुक्तैरिति

विज्ञानेश्वरः ॥

व्यामः— चतुरशीत्यङ्गुलो व्यामो रज्जुमानं खातपौरुषं च ।

कौट-२-२०

वे इति भाषायाम् प्रसारितभुजान्तरं व्याम इति निर्णयसिन्धौ ॥ ३

व्याममप्रमाणं नेत्रं स्यात् इति अरणिलक्षणे हरिहरः पारस्करः १-२

व्यामं व्यायतहस्तप्रमाणम् इति महाभारतव्याख्याने नीलकण्ठः-शान्ति-२६

**व्यालः**— (१) सर्पः ।

व्यालग्राही यथा व्यालं बालादुद्धरते बिलात् ।
एवं स्त्री पतिमुद्धृत्य तेनैव सह मोदते ॥

पराशरः ४-३१

(२) दुष्टमृगः ।

वर्षे वर्षे तु या नारी कृष्णजन्माष्टमी व्रतम् ।
न करोति महाप्लोहा व्याली भवति कानने ॥

इति भविष्ये

व्यालो दुष्टगजे सर्पे शठे श्वापदसिंहयोः । इति हेमः

व्याडो हिंस्रपशौ सर्पे डालयोरेकत्वश्रवणात् व्यालश्च ।

न दस्युव्यालदुर्भिक्षभयमासीच्च कस्यचित् ।
नापसर्गभयं चैव तस्मिन् शासति भूपतौ ॥

इति मार्कण्डेये ११६-७६

(३) दुष्टः इति मित्रमिश्रः राजनीतिप्रकाशे-१४६

नरोहेत् कुञ्जरं व्यालं नादान्तं तुरगं तथा ॥
इति विष्णुधर्मोत्तरे

**व्याहृतिः**— (१) भूः भुवः स्वः महः जनः तपः सत्यम् इति सप्त ।

गौतममतेन भूः भुवः स्वः पुरुषः सत्यमितिपञ्च

ॐ पूर्वा व्याहृतयः पञ्चसत्यान्ताः । गौतमः १-१-५२

**व्युत्थानम्**— (१) विरोधाचरणम् ।

व्युत्थानं प्रतिरोधे च विरोधाचरणेन च ।
न रोचये हि व्युत्थानं सत्येनासादयाम्यहम् ॥

महाभा, दान २०-२६

व्युत्थापयन्तु वा कृष्णो बहुत्वात्सुकरं हि तत् ।
अथवा पाण्डवांस्तस्यां भेदयन्तु ततश्च ताम् ॥
महाभा, आदि-२००-६

(२) स्वतन्त्रवृत्तिः इति हलायुधकोषे ।
स्वतन्त्रवृत्ति व्युत्थानमिति ॥ का-४

**व्युदासः**— (१) परिहारः ।

आपदि व्यवहरेत पण्यानामपण्यानि व्युदस्यन् ॥
आपस्त १-७-२०-११

**व्युपजापः**— कर्णमूर्हुर्जल्पनम् ।

व्युपजापपाठे बकारश्छान्दसः अपपाठो वा इत्युज्ज्वला ॥ आपस्त-१-२-८-१५

**व्युपतोदः**— अङ्गुल्यादिना घट्टनम् यत् आभिमुख्यार्थं क्रियते इति हरदत्तः ॥ आपस्त १-३-८-१५

व्युपतोदव्युपजापव्यभिहासोदामन्त्रण-नामधेयग्रहण-प्रेषणानीति गुरोर्वर्जयेत् ॥ इति

**व्युष्टम्**— (१) अतीतम् पर्युषितम् ।

दशरात्रे व्युष्टे नामकरणमिति गोभिलः

अत्र व्युष्टं प्रभातः

दिवसमुखं गोसर्गः प्रातर्व्युष्टं च निर्दिष्टम् ।। इति

(३) दूषितम् पर्य्युषितम् ।

ब्रह्मघ्नसूतिकादक्या कौलेयक कुटुम्बिभिः ।

व्युष्टं वा केशकीटाक्तं मृद्भस्मकनकाम्बुभिः ।।

इति आचारभूषणे-३०३

व्युष्टिः— (१) फलम् समृद्धिश्च ।

व्युष्टिः फलमितिनिर्णयसिन्धौ ।

व्युष्टिः फले समृद्धौ चेत्यमरः ३-३-३८

व्युष्टि ब्राह्मणपूजायां रौक्मिणेय निबोध मे ।

एते हि सोमराजान ईश्वराः सुखदुःखयोः ।।

महाभा, दान, १५६-३६

वैश्याः शूद्राश्च ये मोहादुपवासं प्रकुर्वते ।

त्रिरात्रं पञ्चरात्रं वा तेषां व्युष्टिर्न विद्यते ।।

इति निर्णयसिन्धौ ।

व्यूतः— ओतप्रोतभावेन समन्ततः वर्त्तमानः ।

व्यूहः— युद्धे सैन्यरचना ।

व्यूहः स्याद् बलविन्यासे निर्माणे वृन्दतर्कयोः

इति विश्वः ।

दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा ।

वराहमकराभ्यां वा सूच्या वा गरुडेन वा ।।

मनुः ७-१८७

व्यूहनम्— (१) क्षेपणम् ।

उद्धृत्य स्थालीपाकं व्यूह्य गोभिलः १-३-३१

अङ्गानां विविधं प्रसारणमिति विज्ञानेश्वरः ।

मिता-३-७६

सुश्रुतव्याख्याने व्यूहनम् द्धीं करणमिति

चक्रपाणिदत्तो चूर्णितानां संग्रहणमिति हारान-

चन्द्रः ।। संनिहितीकरणमिति गणनाथसेनः ।।

सम्यक् रचनमिति इन्दुटीका सूत्रस्थानम् अ-७

सर्वशरीर धातुव्यूहकर इति चरके वायुस्तुतौ ।

अत्र व्यूहो नाम यथायथस्थापनम् सज्जा इति यावत् ।।

व्यृद्ध — दुष्टः ।

अति व्यपहारो व्यृद्धो भवति आपस्त १-१०-२८-४

व्यृद्धिः— ऐश्वर्यक्षयः ।

व्रजः— (१) गवादीनां चतुष्पदां समूहः ।

गोष्ठाध्वनिवहा व्रजा इत्यमरः ३-३-३०

नान्नमद्यादेकवास न नग्नः स्नानमाचरेत् ।

न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे ।।

मनुः ४-४५

अत्र गोव्रजे गोष्ठे इति कुल्लूकः मन्मते गोशब्द-

साहचर्यात् व्रजशब्दोत्र समूहवाचकः अथवा गोव्रज-

शब्दोऽत्र अर्थद्वयप्रकाशकः ।

व्रतम् – (१) उपनयनम् ।

माघ एव यदा माघी सिंहे चैव यदा गुरुः ।

व्रतं क्षौरं तथोद्वाहं गृहकर्म विवर्जयेत् ।। इति

कालसारे शातातपः

व्रतचूडा द्विजानां तु प्रमीतेषु यथाक्रमम् ।

दशाहत्र्यहैकाहोभिः शुद्ध्यन्त्यपिहि निर्गुणाः ।

इति जाबालिः कल्पतरुशुद्धिकाण्डे-३६

श्राद्धदीपे तु प्रतीतिषु यथाक्रममिति विशेषः ।

हस्तलिखितपुस्तिका-११

(२) मधुमांसादिवर्जनरूपं व्रतम् ।

व्रतवत् देवदैवत्ये पित्र्ये कर्मण्यथर्षिवत् ।।

कामभ्यर्थितोऽगीयाद् व्रतमस्य न लुप्यते ।।

मनुः २-८८

(३) व्रतशब्दो यमनियमवाचक इति देवपाल ।।

- लौगाक्षिगृ, सू १-११

(४) चान्द्रायणादिव्रतम् ।

एवं द्विजातयः शोध्याः व्रतैराविष्कृतेनसः ।

अनाविष्कृतपापांस्तु मन्त्रैर्होमैश्च शोधयेत् ।।

मनुः ११-२२६

(५) पर्युषितत्वादिदोषरहितं सर्पिर्मिश्रं पयोमिश्रं वा (यज्ञाङ्ग) भक्षणीयद्रव्यं व्रतमित्युच्यते ।

व्रत भोजनमिति बौधायनः २-७-. ३-४

पञ्चान्नेन प्राणाहुतीर्हुत्वा भूयोऽन्नेन व्रतयेत् ।। इति

(६) कर्म ।

दृढव्रतो वधत्रः स्यात् सर्वेषां मित्रमिव ।।

पारस्करः ३-७-१६

अत्र व्रतं प्रारब्धं कर्म इति हरिहरः ।

व्रतं संकल्प इति गदाधरः ।।

(७) पयोव्रतम् ।

(८) अनन्त व्रतादि व्रतम् ।

तत् सर्वं होमाद्रिकल्पतर्वादिग्रन्थेषु द्रष्टव्यम् ।

व्रतती— लता ।

व्रतवती— पतिव्रता ।

पतिव्रता व्रतवती व्रतबती ब्रह्मबन्धुस्तथाऽश्रुत ।

इति कात्यायनः १५-१

व्रतादेशः— (१) उपनयनम् ।

उपनयनानन्तरं व्रतादेशः क्रियते तेन लक्षणया उपनयनमपि व्रतादेशः ।।

आदन्तजननात् सद्य आचूडान्नैशिकी स्मृतौ ।

त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् ।

पराशरः ३-६२

(२) उपनयात् परं दिवा मा स्वाप्सी इत्यादिव्रतानामादेशः ।

यस्तूपनीय व्रतदेशं कृत्वा विष्णुः २६-१

व्रतादेशनम् – उपनयनात्परं दिवा मा स्वाप्सीः इत्याद्युपदेशनं शिष्येभ्यः ।

कृतोपनयनस्यास्य व्रतादेशनमिष्यते ।

ब्रह्मणो ग्रहणं चैव क्रमेण विधिपूर्वकम् ।।

मनुः २-१७३

व्रातः— (१) नानायुधधराणां समूहः ।

नानायुधधरा व्राताः समवेताः प्रकीर्तिताः ।

इति कात्यायनः

नानाजातीया अनियतवृत्तय उत्सेधजीविनः संघा व्राता इति व्याकरणमहाभाष्ये पतञ्जलिः ५-२-१

गणइत्यर्थः

(२) समूहः ।

ततः शरसहस्राणि प्रापतन्नर्जुनं प्रति ।

भ्रमराणामिव व्राताः फुल्लं द्रुमगणं वने ॥

महाभा, द्रो १८-१६

व्रात्यः— (१) व्रते सुकृते साधुर्व्रात्यः ।

स एव व्रात्य इति पूजाभिधानम् ।

ततः अतिथिं प्रति व्रात्य क्वावात्सीः ॥

व्रात्य उदकम् इति व्यवहारः आपस्त २-३-७-१३

(२) यथाकालमनुपनीताः ब्राह्मणक्षत्रिय वैश्याः ।

तेतु आत्मशुद्ध्यर्थमुद्दालकादिव्रत महन्ति ॥

अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।

सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥

मनुः २-३९

व्रात्यस्तोमः व्रात्यशोधक यज्ञविशेषः ।

व्रात्या— दूषिताचारा स्त्री ।

व्रात्या अत्यन्तदुराचारा वधबन्धोपजीविप्रभृतयः ।

सप्तविधाः व्रातः संघः तेन चरन्ती अथवा व्रातमर्हन्ती

व्रात्या इति मेधातिथिः ८-३७३

व्रीहिः— शरत्पक्वं धान्यम् इति कालसारे गदाधरराज-

गुरुः ।

षष्टिका इति कुल्लूकः ।

व्रीह्यः षष्टिकाः सितगौरमहाव्रीहि-कृष्णव्रीहि

जतुमुख-कुक्कुण्डक लावक-परापतक-सूकर कोद्दाल

कोजालचीनशार वर्दुरगन्धन कुरुविन्द पाटलादयः ॥

इति हेमाद्रौ परि-५३७

## ( श )

शंसितव्रतः— अनुष्ठितव्रत इति कुल्लूकः ।

इदं शास्त्रमधीयानो ब्राह्मणः शंसितव्रतः ।

मनोवाग्देहजैर्नित्यं कर्मदोषैर्न लिप्यते ॥

मनुः १-१०४

शंस्यः— आहवनीयाग्निः ।

शंस्यस्त्वाहवनीयोऽग्निः स्मृतो यो हव्यवाहन इति ॥

शकः— क्रियालोपात् शूद्रत्वं गतः क्षत्रियः ।

मनुः १०-४०

शकलम्— खण्डम् ।

शकलखण्डे वा इत्यमरः १-३-१६

शकलं त्वचि खण्डे च रागवस्तुनि वल्कले ।

इति विश्वः

मुखनासाद्वयचक्षुर्द्वयकर्णद्वयेषु स्वर्णशकलानि

दत्वा इति दाहप्रकरणे गदाधरराजगुरुः कालसारे ॥

शकलोटः— शकलेटाः शालूकानि तानि च कलहार

कुमुदनीलोत्पलमूलानि शकलोटानञ्जला-

वावपेयुः इति गोभिलगृ २-४-८

शकुनः— क्रव्यादपक्षी इति हेमाद्रिः श्राद्ध ६१२

उदकयास्पृष्टं सयुष्टं पर्यायान्नं च वर्जयेत् ।

गोघ्रात शकुनोच्छिष्टं पदास्पृष्टं च कामतः ॥

याज्ञ १-१६८

**शकृत्**— पुरीषम् ।

मूत्रशकृच्छुक्राभ्यवहारेषु चैवम् ।

वसिष्ठः २०-२०

**शक्करी**— महानाम्नी ।

शक्करीणां पुत्रकाव्रतम् पारयिष्णवो भवतेति ॥

गोभिलः ३-२७

**शक्तिः**— लोहदण्डः ।

द्वावङ्कुशधरौ तत्र द्वावुत्तमधनुर्द्धरौ ।

द्वौ वरासिधरौ राजन्नेकः शक्तिपिनाकधृक् ॥

महाभा, उद, १५५-१७

स्कन्देनादाय मुसलं लगुडं वापि खादिरम् ।

शक्तिं चोभयतस्तीक्ष्णामायसं दण्डमेव वा ॥

मनुः ८-३१५

लक्षणं यथा—

चतुर्हस्तमिता शक्तिर्वर्त्तुला यष्टिका मता ।

शूलवत्तीक्ष्णशिखरा त्रिहस्तं दधती त्वधः

मूले चामरपुच्छाद्या युक्ता क्षेपणरश्मिना

इति वीरसर्वस्वे-१८२

**शक्वरी**— अङ्गुलिः इति निर्णयसिन्धौ-२३७

आरोहतं दशतं शक्वरीर्मम ॥ इति श्रुतिः

अत्र शक्वरीः अङ्गुलिः ॥

**शङ्कुः**— कीलकः इति मेधातिथिः । मनुः ८-२७१

स च द्वादशाङ्गुलविशिष्टः तदुक्तं कालसारे ।

द्वदशाङ्गुलकः शङ्कुस्तद्द्वयं च शयः स्मृतः ।

तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुसहस्रकः ॥

इति विष्णुधर्मोत्तरे

**शङ्खम्**— अमावास्या ।

शंखं प्राहुरमावास्यां क्षीणसोमां द्विजोत्तम ।

ग्रहोपरागे च सुते च जाते पित्र्ये गयायामयन द्वये च ।

नित्यं च शङ्खे च तथैव पद्मे दत्तं भवेन्निष्क-सहस्रतुल्यम्-हेमाद्रौजातुकर्ण्यो ।

**शङ्खः**—(१) बलीवर्दनाटनेन भिक्षाटनशील इति व्यवहारकल्पतरौ-४६

स्मृतिचन्द्रिकादिषु मङ्ख इति पाठः तदर्थस्तु मङ्खशब्दे द्रष्टव्यः ।

शङ्खो वृषभनर्त्तनजीवीति मदनरत्नाकरयोरिति व्यवहारप्रकाशे-११६

(२) शङ्खः नखी इति मित्रमिश्रः ।

रुहिकाख्यं कणो दारु सिह्लकं चागुरु सितम् ।

शङ्खो जातीफलं श्रीशो धूपानि स्युः प्रियाणिवै ॥

इति वामनपुराणे

(३) प्राणायतनविशेषः ।

कर्णौ शङ्खौ भ्रुवौ दन्तवेष्टावोष्ठौककुन्दरे ।

इति याज्ञ ३-९६

**शङ्खकः**— भ्रूकर्णयोर्मध्यप्रदेशौ अस्थिविशेषौ शङ्खकौ इति विज्ञानेश्वरः याज्ञ-३-९०

शङ्खकारः - जातिविशेषः कंसकारशब्दे द्रष्टव्यः।

शङ्खपुष्पम् — अपराजितापुष्पमिति काञ्चीपीठेश्वराः श्रीजयेन्द्रसरस्वतीस्वामिनः।

शङ्खपुष्पी — समुद्रतीरे लताविशेषः इति गोविन्दस्वामी।

अपःसुराभाजनस्था महाभाण्डस्थितास्तथा।

पञ्चरात्रं पिबेत् पीत्वा शङ्खपुष्पीशृतं पयः॥

मनुः ११-१४७

शङ्खपुष्पी भूसंलग्ना सूक्ष्मश्वेतकुसुमा इति

नन्दपण्डितः विष्णुः ४६-२३

शठः— वञ्चकः-मनुः ४-१९६

शठः वक्रचित्त इति हरदत्तः आपस्त-१-७-२०-५

शणः— धान्यविशेषः।

श्राद्धे न देयाः पालङ्क्या निष्पावा सहकोद्रवाः।

मसूरक्षीरवार्त्ताक कुलत्थशणशिग्रवः॥

इति हेमाद्रौ कात्यायनः परि-५४७

तम्बलं शण उच्यते इति गोभिलस्मृतौ ३-१२२

शतकन्दः – शतावरी इति श्राद्धदेये दिव्यसिंहः।

कल्पतरौ च श्राद्धकाण्डे-१७

शतघ्नम्— शतगुणम्।

शतघ्नी— बाणविशेषः।

शतघ्नी लोहनलिका दृढतालायता दृढा।

बर्हपुच्छं घृतामूले तीक्ष्णाधारमुखोज्वला।

यमोऽधिदेवता ह्यस्याः संग्रामोत्साहवर्द्धनः॥

इति वीरसर्वस्वे-१८३

शततन्तुः — वीणा इति मित्रमिश्रः गौतमसूत्र-२-७-७

व्याख्याने वीणाविशेष इति हरदत्तः॥

शतपत्रम्— विष्णुप्रियपुष्पविशेषः पद्मपुष्पं वा।

शतपत्रं च हारिद्रं करवीरं प्रियङ्गु च॥

इति वृद्धहारीतस्मृतिः ७-५८

देवीपुराणे च —

शतपत्रे स्तथा चैत्रे यः कुर्याद्‌ग्रहसत्तम।

लभते सर्वयज्ञानां सर्वदानफलं तथा॥

कृत्यरत्नाकरे-१४६

शतपत्रिका— शतपत्रिका शेवती इति आचारेन्दु परिशिष्टे-१२

शतपत्रिकया पूजा कार्त्तिके सर्वकामिकी।

मार्गे नीलोत्पलैः पूजा पौषे कुब्जकया शुभा।

कृत्यरत्नाकर-१४६

शतपुष्पम्— निशिः इति हेमाद्रिः।

वज्रर्यश्नाभिव नित्यं शतपुष्पं गवेन्धुकम्।

शतपुष्पा— सौप इति प्रसिद्ध इति गदाधरराजगुरुः।

मध्यदेशभाषायां सों वा इति प्रसिद्धमिति

निर्णयसिन्धौ-२९४

शतबलिः— रोहिताख्यो मत्स्य इति हरदत्तः।

तथा शतबलिमत्स्यमांसेन आपस्त २-७-१७-२

**शतमानम्**— ३२० रक्तिकाः इति व्यवहारकल्पतरौ-४२४

दशभिर्धरणैः पलमेवतु याज्ञ-१-३६५

दशभिर्धरणैः शतमान तदेव पलमिति दण्डविवेके ।

शतम नं विंशत्युत्तरशतत्रयरक्तिका इति शूलपाणि-

चण्डेश्वरौ ॥

निगृह्य दापयेदेनं समयव्यभिचारिणम् ।

चतुःसुवर्णान् षड्निष्कान् शतमानं च राजतम् ॥

इति मनुः ८-२२०

**शतमूलाः**— शतावरी इति मयूखे ।

**शतरुद्रियम्**— शतपरिमितरुद्र न्त्रविशेषाः नमस्ते रुद्रमन्यव इत्याद्याः । ते च—

नीलसूक्तं चतुःषष्टिः पुनः षोडश एव च । १-८०

एष ते द्वे नमस्ते द्वे न तं विद्वयमेव च ॥ ६

वयं सोमेति दशकं मींदुष्टम चतुष्टयम् ॥ १४

शतरुद्रमिदं प्रोक्तं चतुर्वर्गप्रदायकम् ॥ इति

शतरुद्रियं नमस्ते रुद्रमन्यव इत्यादयेकादशानुवाका इत्याचार्याः ।

विधानपारिजाते तु शतरुद्रियं नाम त्वमग्नेरुद्रो असुर इत्यादि वयंस्य.म पतयोणामित्यन्तं मन्त्रजातमिति महार्णवकारः ।

वाजसनेयिनां तु षोड़शर्चैः प्रथमानुवाकः शतरुद्रियम् इति विधानपारि-३८०

**शता**— शतावरीति आचारेन्दौ १६५

**शताह्वः**—अशोकः इत्याचारेन्दौ १५४ आचारमयूखे च-८८

जाती शताह्वा सुमनाः कुन्दं चाम्बुपटं तथा ।

वाणं च चम्पकाशोकं करवीरं च यूथिका ॥

इत्यादि वामनपुराणे

**शदः**— शदः क्षेत्रफल पुष्पमूलफलादि । मिताक्षरा-२-३१

क्षेत्रोत्पन्नफलं पुष्पमूलफलादि इति व्यवहार यूखे ।

धान्ये शदे लवे वाह्ये नातिक्रामति पञ्चताम् ॥

मनुः ८-११

सदे वृक्षफले इति कुल्लूकः मुद्रितमनुपुस्तके तथा विवादरत्नाकरे तु दन्त्यसकारादिः पाठः ।

शद इति भागाभिधानामिति गौतमविवृतो हरदत्तः

१२-३-२३

**शफः**— खुरः पशुनां पदोऽधःभाग इति यावत् ।

**शबरः**— शूद्राद्भिल्यां जातः जातिविशेषः ।

शूद्राद्लिल्यां जाताः शवरा इति श्रीमूला २-१-६

**शवलम्**— कुसीदकृष्यादिना अर्जितं धनम् ।

कुसीद कृषिवाणिज्यशिल्पशुल्कानुवृत्तितः ।

कृतोपकारादाप्तं च शवलं समुदाहृतम् ॥

नारदः ३-४६

स्ववृत्त्युपार्जितं सर्वेषां शुक्लम् ॥ ६

अनन्तरवृत्त्युपात्तं शवलम् ॥ विष्णुः ५८-७

**शवला**— आयुधविशेषः ।

शवला लोहघटिता पुप्रमाणा दृढायता ।

मध्ये निबद्धमुष्टिः स्याद् दृढ़पाट्टदिदामभि ॥
ऊर्ध्वमिक्षुदलाकारा ग्रन्थिना कर्णिशेखरा ।
चतुर्द्धारामयी चाथ तीक्ष्णधाराग्रशोभिनी ॥

वीरसर्वस्वम्-१८२

शमः— अन्तरिन्द्रियनिग्रहः ।

शमलम् — विष्ठा ।

उच्चारावस्करौ शमलं शकृत् ।
गूथं पुरिषं वर्चस्कमस्त्री विष्ठा विषा स्त्रिया ॥

अमरः २-६-६७

शमी— (१) बीजकोषः शिम्बः शमिरिति अस्यपर्याय-
शब्दौ । छुहँ इति लोक व्यवहारः ।

(२) वृक्षविशेषः ।

यस्य समित् शनैश्चरग्रहतृप्तये भवति यस्य ।
पत्रं हरशिरसि समायते शनैश्चरग्रहप्रीतये ॥
तत्काष्ठ दन्तधावने प्रशस्तमिति शेलुशब्दे द्रष्टव्यम् ॥

शमीधान्यम्— माषादि क्षारगणे पठितम् ।

माषो मुद्गो राजमाषः कुलत्थश्चणकस्तिलः ।
काकाण्डश्चीवर इति शमीधान्यगणः स्मृतः ॥
इति रत्नकोषे

माषादयः शमीधान्ये इत्यमरः-२-६-२४

शम्बुकम्— शामुका इति ख्यातम् ।

मत्स्यकण्टकशम्बूकशङ्खशुक्तिकपर्द्दकान् ।
पीत्वा नवोदकं चैव पञ्चगव्येन शुद्ध्यति ॥ इति
प्रायश्चित्तविवेके हारीतः प्राय-३१०

शम्भूः— कृष्णपक्षरात्रिचतुर्द्दशमुहूर्त्तः । कालमाधवे-३

शम्या — (१) यज्ञायुधविशेष ।

(२) खदिरकाष्ठनिर्मिता षट्त्रिंशदङ्गुलपरिमितायाया अष्ट स्वङ्गुलिपु कुम्माष्टकयुता तण्डुलादिपेषणकाले दृषदोऽधस्तात् स्थापनाय उपयुज्यमाना आग्नीध्रकर्त्तृक दृषदुपलादिसमाहननादौ करणभूता शम्या इति श्रौतपदार्थनिर्वचने ॥

(३) शम्या दण्डयष्टीति बालम्भट्टी

शम्या युगकीलकमिति श्रीमूला ॥ कौट ४-५

शम्या स्त्री युगकीलक इत्यमरः २-६-१४

धनुः शतं परीहारो ग्रामस्य स्यात् समन्ततः ।
शम्यापातास्त्रयो वापि त्रिगुणो नगरस्य य ॥

मनुः ८-२३७

शम्या यष्टिरिति कुल्लूकः ।

विवादरत्नाकरे तु सम्यापाता इति पठित्वा समी कीलक इत्युक्तम् लोकेऽपि अक्षकीलके शमीशब्द-व्यवहारो दृश्यते किन्तु अमरकोषादिदर्शनात्

शम्यायाः ।

साधुत्वं तर्कयामि समी इति दन्त्यपाठः
शम्या पर्यायो वा अशुद्धपाठो वा

युगच्छिद्रप्रवेशार्ह काष्ठं शम्येति महीधरः ।

चत्वारोष्टकाः शम्येति शुल्वसूत्रव्याख्याने ॥

कातीयशुल्वसूत्रम् २-५

(४) शम्या ।

स्थूल बुध्नः काष्ठदण्ड इति नीलकण्ठः ।

शम्यापाते नाभ्यतीयात् वेदीभिश्चित्रयन् महीम् ।

महाभा, शा, १६-६५

**शम्यापाताः**— प्रादेशमात्रा रथशम्या यावति दूरे प्रक्षिप्ता पतति ।

तावद्दूरं सर्वतः श्मशानात् परित्यज्य अध्येयम् इत्यर्थ ॥ इति

श्मशाने सर्वतः शम्याप्रासात् इत्यस्य व्याख्याने ॥

आपस्त-१-३-९-६

**शम्योषः**— मुद्गमाषादि शमीधान्यानि ।

मुद्गचणकादीनां बीजकोष इति गार्हस्थ्ये लक्ष्मीधरः ।

शमी बीजकोषी तस्यामुष्यन्ते दह्यन्ते कालवशेन पच्यन्ते इति शम्योषाः कोषीधान्यानि मुद्गमाषचणकादीनि इति हरदत्तः ।

शम्योषा युग्यघासो न स्वामिनः प्रतिषेधयन्ति ॥

आपस्त-१-१०-२८-३

**शयः**— हस्त शङ्कुशब्दे मृग्यः ।

**शय्या** – शयनीयम् ।

आत्मशय्या च वस्त्रं च जायापत्यं कमण्डलुः ।

आत्मनः शुचीन्येतानि परेषामशुचीनि तु ॥

आपस्त-२-४

**शरणम्**— गृहम् ।

प्राग्द्वारं दक्षिणद्वारं वा शरणं कारयेदित्यन्तम् ।

काठकगृ: १-११-१

अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः ।

शरणेष्वममश्चैव वृक्षमूलनिकेतनः ॥ मनुः ६-२६

अजिह्मोऽशठोऽशरणेऽसंकुसुकः वसिष्ठः-१०-२७

**शरभः**— अष्टपदमृगः ।

शरभः अष्टपद इति कल्पतरुः अष्टचरणः ।

सिंहशत्रु रिति हेमाद्रिः परि-५८५

अष्टपद आरण्यो मृग इति हरदत्तः ॥

तथाष्टपादः शरभः सिंहघाती महाभा, वन १३४-११

आपस्त-१-५-१७-२६

काश्मीरदेशे शरभोऽष्टपातस्यादुत्साहयुक्तश्चतुरूर्ध्वपादः ।

उष्ट्रप्रमाणः स महाविषाणः ख्यातो वनस्यश्च महामृगाख्य ॥ इति वैधकतन्त्रे

**शरभा**— अतिदर्शनीया ।

कन्या शीर्णदीप्तिः अरूपा वा इति आपस्त स्वगृह्यसूत्र व्याख्यायाम् मित्रशब्दो द्रष्टव्यः ॥

**शराङ्गः**— जातिविशेषः ।

म्लेच्छात् कुविन्द कन्याया जोलाजाति र्बभूवह ।

जोलाकुविन्दकन्याया शराङ्गः परिकीर्त्तितः ॥

इति ब्रह्मा कै, ब्र ६-१२१

**शरावः**— (१) परिमाणविशेषः ।

अष्टपलं मानिका च तस्य पर्यायः खारीशब्दो द्रष्टव्यः ।

(२) भोजनपात्रादि ।

विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।
वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत् ॥

मनुः ६-५६

न्यस्तमुसले इति अग्निपुराण पाठः-१६-८

शरीरम्—(१) देहः तन्मात्राहंकाराश्रयः ।

(२) यन्मुर्त्यवयवाः सूक्ष्मास्तस्येमान्याश्रयन्तिषट् ।
तस्माच्छरीरमित्याहुस्तस्य मूर्त्ति मनीषिणः ॥

मनुः १-१७

(३) अथर्वेदं शरीरपदं दन्त्याद्यं मध्यह्रस्वम् षटशब्द-योगात् ।

विभ्राजमानः सरिरस्य मध्य उपप्रयाहि दिव्यानि धाम शुः यजुः १५-५२

इमे वैलोकाः शरीरम् इति तत्र भाष्ये महीधरः ॥

शरेषीकाः— वीरतरशङ्कुः ।

वीरतरशङ्कुः शरेषीका इति हरिहरः ॥

पारस्करः १-१५-४

इषीका शब्दो द्रष्टव्यः ।

शर्कराः— इक्षुरसविकारविशेषः सम्प्रति चिनि इति प्रसिद्धः ।

इक्षुरसपाकप्रभव एव श्वेतवर्ण चूर्णात्मको विकारः शर्करा इति हेमाद्रौ ।

शललिः— शल्यकाख्यपक्षकण्टकः ।

शललिः श्वावित् सेधा तस्याः शालाका शललि-रुपचारात् इति देवपालः काठकगृ ३-७-३

शलल्या शल्यकाख्यपक्षकण्टकेन इति हरिहर-गदाधरौ ।

त्रेण्या शलल्या इति पारस्करः १-१५-४

शलली— (१) खाद्यद्रव्यविशेषः ।

मुद्गादिचूर्णसिद्धा सतिला स्नेहपक्वाशलली इति गदाधर राजगुरुः ॥

(२) श्वाविच्छलाकाशलली इति गोभिलस्मृतिः-३-८३

शलाकी— (१) शिरवैद्यादिः ।

गृहीतमूल्यो गोपालो गां त्यक्त्वा निर्जने वने ।
ग्रामचारी नृपैर्वध्यः शलाकीव वनेचरः ॥

इति ब्रह्मपुराणे

शलाकी शिरावैद्यादिरिति विवादरत्नाकरे

चण्डेश्वरः ॥

(२) शलाकी नापित इति व्यवहारकल्पतरुः ४१७

शलाटुः— आमफलम् ।

शुष्काम् शलाटुकान् कांश्चिद् गोपश्चेच्छ्राद्धहेतवे ।
वृक्षेषु कांश्चिद्यत्नेन भूम्यन्तर्भूतले तथा ॥

इति पुर्वाङ्गिरसे-१०१५

शल्कः— (१) शुक्त्याकारः मत्स्यविशेषाणां शरीरावरक-कांति इति उत्कलेषु प्रसिद्धः ।

शराश्च मत्स्येशेष्वपि हि सिंहतुण्डक रोहिताः
तथा पाठीनराजीवसशल्काश्च द्विजातिभिः ॥

याज्ञ-१-१७८

(२) त्वक् वृक्षवल्कलम् ।

सशङ्कदण्डः लौगाक्षि गृ-सू-१-५

सह शङ्केन त्वया वर्त्तमानो दण्डो यस्य स ।

सशङ्कदण्डः इति देवपालभाष्ये ॥

**शल्यम्**— (१) दूषितगर्भः शल्यः ।

असवर्णेन यो गर्भः स्त्रीणां योनौ निषिच्यते ।

अशुद्धा सा भवेन्नारी यावच्छल्यं न मुञ्चति ॥

इति देवलः-५०

अत्र शल्यवदनिष्टकारित्वाच्छल्यता ।

(२) शल्यः-बाणः-अश्रद्धेयं वस्तु च ।

यथा शल्यं भिषक्कायादुद्धरेद् यन्त्रशक्तितः ॥

प्राड्विवाकस्तथा शल्यमुद्धरेद् व्यवहारतः ।

व्यवहारकल्पतरुः-२५ नारद-३-१६

**शल्यकः**— शरलोमको वन्यजीवविशेषः उत्कलेषु झिङ्क इति प्रसिद्धः गदाधरराजगुरोरयमप्यभिप्रायः ।

शल्यका वराहविशेष इति बौधायनविवरणे गोविन्दस्वामी ॥

शल्यको वराहविशेष यस्य नाराचाकाराणि लोमानि इति गौतमसूत्रवृत्तौ हरदत्तः ।

यस्य धर्मणा तनुत्राणं क्रियते स शल्यक इति आपस्तम्बवृत्तौ हरदत्तः ॥ आपस्त-१-६-१७-३७

**शल्लकः**= शल्यकः ।

शल्यको इति विज्ञानेश्वरः १-१७७

शल्यक शब्दस्यायं पाठभेद इति ज्ञायते ।

भिक्ष्याः पञ्चनखाः सेधागोधाकच्छपशल्लकाः ॥

याज्ञ-१-१७७

**शवः**— मृतशरीरम् ।

शवानुगमने चैवम् वसिष्ठः २३-२६

**शष्कुली**— (१) स्नेहपक्वो गोधुमविकार इति

विज्ञानेश्वरः १-१७३

वृथाकृसरसंयावपायसापूपशष्कुलीः ॥ इति

याज्ञ-१-१७३

(३) प्राणायतनविशेषः ।

कनीनिके चाक्षिकूटे शष्कुली कर्णपत्रका ॥

इति याज्ञ ३-९६

**शष्पम्**— बालतृणमित्यमरः ।

विरूढा व्रीहय शष्पमिति महीधरः यजु:-१९-१

**शस्त्रम्**— (१) खड्गक्षुरिकादि इति हेमाद्रिः ।

यत्प्रक्षिप्यते शरादि तदस्त्रम् इति शस्त्रास्त्रयोर्भेदः ।

(२) अप्रगीत गुणिनिष्ठ गुणानिधानं शस्त्रम् ।

प्रगीतगुणिनिष्ठ गुणानिणधानं स्तोत्रमिति शस्त्रस्तोत्रयोः प्रभेदः स्तोत्रं तु सामस्वरेण गीतते॥

**शस्त्रहतः**—युद्धादौ शस्त्रेण हतः ।

पुनश्च—

पक्षिमत्स्यमृगैर्ये तु शृङ्गदष्ट्रनखैर्हताः ।

पतनानशनप्रायै र्वज्राग्निविषबन्धनैः ।

मृता जलप्रवेशेन ते वै शस्त्रहताः स्मृताः ॥

इति कालसारोद्धृतभगवतीपुराणे ।

शस्यम्— क्षेत्रगतं धान्यादि ।

शस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते ।

वितुषं चाममित्याहुः खिन्नमन्नं प्रकीर्त्तितम् ।

शस्यवेदः— कृषिशास्त्रम् ।

शस्यवेदः कृषिशास्त्रमिति कल्पतरौ दानकाण्डे-२०८

षड़ङ्गा वेदाश्चत्वारो धर्मशास्त्रं पुरातनम् ।

मीमांसा तर्कमपि च एता विद्याः प्रकीर्त्तिताः ।

आसामेवान्तरोत्पन्नाः पराविद्याः सहस्रशः ॥

आयुर्वेदः शस्यवेदो वर्गभेदः प्रकीर्त्तितः ।

इति तत्र नन्दिपुराणे

शाकम्— (१) पत्रम् ।

शाके शाप्रमाणेन गृह्यमाणेण न दुष्यति ॥

मत्स्यपु-२२६-११३

शाकप्रमाणं मुष्टिद्वयम् ॥

(२) पत्रपुष्पादि परिवा इति ।

शाकाख्यं पत्रपुष्पादि इत्यमरः २-४-१३६

मूलपत्रकरीराग्रफलकण्ड़ाधिरूढकम् ।

त्वक्पुष्पं कवचं चैव शाकं दशविधं स्मृतम् ॥

इति निर्णयसिन्धौ

शाकटी— शाकटिक इति नित्याचारप्रदीपे ।

शकटं शाकटी गावो जालमिति छागलेयः ।

शकरचालक इति भावः ।

शाकपिण्डी— भोज्यविशेषः ।

शाकपिण्डीभिः शर्करामरिचघृतक्षौदघ्वादिसाधिताभिः

इति काठकगृह्ये आदित्यनारायणभाष्ये-२-१०-१

शाकप्रमाणम्— मुष्टिद्वयम् ।

शाकं शाकप्रमाणेन गृह्यमाणं न दुष्यति ॥

शाकम्भरी— देवी तस्याः स्थानं शाद्वेशत्वेन विष्णुना उक्तम् ८५-२१

शाकम्भरी देवीस्थानं मरूदेशे यत्र लवणं भवतीति वैजयन्त्याम् ।

शाकलहोममन्त्राः—देवकृतस्येनसे इत्यादयः षट् मन्त्राः ।

देवकृतस्येति मन्त्राणां प्रजापतिः ऋषिः यजुश्छन्दः ।

अग्निर्देवता शाकलाधाने विनियोगः ॥

(१) देवकृतस्यैनसोऽवयजनमसि (२) मनुष्यकृतस्यैनसोऽवयजनमसि, (३) पितृकृतस्यैनसोऽवयजनमसि, (४) आत्मकृतस्यैनसोऽवयजनमसि (५) एनस एनसोऽवयजनमसि, (६) यच्चहमेनो विद्वांशचकार यच्चाविद्वांस्तस्य सर्वस्यैनसोऽवयजनमसि ॥ शुक्लयजुः ८-१३

मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः ।

सुगुर्वप्यपहन्त्यैनो जप्त्वा वा नमः इत्यृचम् ॥

इति मनुः ११-१५६

अत्र सम्वत्सरं प्रत्यहं देवकृतस्यैनस इत्यादिभिः अष्टभिर्मन्त्रैः होमि इति विज्ञानेश्वरः ३-३०३

अन्नं व्याहृतिभिर्हुत्वा तथा मन्त्रैस्तु शाकलैः ।

अन्नं विभज्य भूतेभ्यस्ततोऽग्नियादनग्निमान् ॥
शङ्खलिखितस्मृतिः-४

**शाकवृक्ष—** शाकवन इति लोके प्रसिद्ध इति लक्ष्मीधरः।
शागवन इति लोके पसिद्ध इति नरसिंहवाजपेयी
१-२८४

शागुआन इति सम्प्रतिका उत्कलीयाः ॥
पालाश वटवृक्षोत्थम श्वत्थं शाकवृक्षकम् ।
मृत्तिकोदुम्बरं पीठं मधूकं च विवर्जयेत् ।
इति पूजाप्रकाशे पुलस्त्यः ॥
कण्टकिक्षीरिणस्तु स्मूलान्परिखायोद्वासयेदपामार्गः ।
शाकस्तिल्वकः परिव्याध इति चैतानि ॥
आश्वलायनगृः २-६-५

**शाकाष्टका** – आश्विनकृष्णाष्टमी ।
शाकेन निर्वर्त्या अष्टका शाकाष्टका सा च
तुरीया आश्विनकृष्णाष्टमी शाकश्चात्र कालशाकः
कालिकशाक इति पाठान्तरम् हरिहर भाष्यम् ॥
पारस्करः-३-३

**शाकिनी—** शकरं शाकिनी गावः कपिरस्यन्दन वनम् ।
समुद्रः पर्वतो राजा एवं जीवामहे वयम् ॥
बृहद्वता-६-१३८

**शाकुनिकः—** पक्षिवधजीवी इति कुल्लूकः मनुः ८-२६०

**शाखानगरकम्—** नगरविशेषः ।
शाखानगरकं चान्यन्मन्त्रिसामन्त भुक्तिमत् ॥
मार्कण्डेयपुराण ४९-१६

**शाखारण्डः—** यः स्वशाखां परित्यज्य पारक्यां पठति ।
स्वशाखां यः परित्यज्य पारक्या मधिगच्छति ।
शाखारण्ड: स विज्ञेयः सर्वकर्मसु गर्हितः ॥

**शाणम्—** मानविशेषः ।
अङ्गुल्यग्रत्रयग्राह्यं धान्यादिवस्तु ।
अङ्गुल्यग्रत्रयग्राह्यं शाणामित्यभिधीयते ।
भावप्रकाशे शब्दोऽयं पुंसि पठ्यते ।
अष्टौशाणाः शतमानं वहन्ति इति महात्मा,
वन १३४-१५

**शाणी—** बरासीति देवपालः काठकगृ १-४-८

**शाणीचीरम्—** वरासीखण्ड इति देवपालः
काठकगृ-१-५-६

**शातकुम्भम्—** सुवर्णम् तस्मिन् शुद्धे शातकुम्भमयं
पात्रमित्यादि गौतमः ३-२-१०

**शादा—** शादा इष्टका देशान्तरप्रसिद्धेरिति गदाधरभाष्ये
पारस्करः ३-४-२

द्वीपमुन्नतमाख्यातं शादा चैवेष्टका स्मृता ।
किलिनं सजलं प्रोक्तं दूरखातोदको मरुः ॥
कात्यायनः २९-७

**शाद्वलम्—** दूर्वा ।
शाद्वलं हरिततृणमिति हरिहरः पारस्करः ३-१०-२२

शाद्वलं दूर्वा इति हरिहरः पारस्करः ३-४-६

शान्तः— शुक्लपक्षरात्रिदशममुहूर्त इति कालमाधवे ३

शान्तलाभम्— परमवृद्धिप्राप्तम् (ऋणम्) यदनन्तरं न वृद्धिः ।

शान्तलाभं परमवृद्धिप्राप्तमिति व्यवहार

कल्पतरुः-३२८

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता ।

धान्ये सदे लवे वाह्ये नातिक्रमति पञ्चताम् ॥

मनुः ८-१५१

इत्यादि प्रकारेण परमवृद्धिप्राप्तमिति निष्कर्षः ।

पूर्णावधौ शान्तलाभमृणदस्मुद्ग्राहयेद्धनी इति बृहस्पतिः

शान्तिः— (१) अनिष्टनिवृत्तिः तदर्थमनुष्ठानं च ।

धर्मद्वारा ऐहिकानिष्टनिवृत्तिरिति नियतकालकाण्डे लक्ष्मीधरः-३५४

शान्तिः अनिष्टनिवृत्तिरिति गदाधरः ॥ पारस्करः ३-१६-१

प्रत्युत्पन्नारिष्टशमनाय क्रियमाणं कर्मशान्तः ग्रहशान्ति महाशान्त्यादि इति नन्दपण्डितः विष्णु-३-६८

मत्स्यपुराणे तु—

दिव्यान्तरिक्षभौमेषु या शान्तिरभिधीयते ।

तामहं श्रोतुमिच्छामि महोत्पातेषु केशव ॥

इत्यारम्य विविधाद्भुतेषु विविधा शान्ति दर्शिता २२७ अध्यायतः २३७ अध्यायपर्यन्तम् ।

फलं चास्या

बाणप्रहारा भवन्ति यद्वद् ।

राजन्नृणां सन्नहनैर्यतानाम् ॥

दैवोपघाता न भवन्ति तद्वद् ।

धर्मात्मनां शान्तिपरायणानाम् ॥

मत्स्यपु २२७-२१

(२) चित्तशोधनम्—

क्षपणं हि कषायाणां पापानां शान्तिरुच्यते ॥

वायुपु १-११-६

शामित्रम्— यज्ञेषु पशुमारणम् ।

कलिवर्ज्ये—

अस्थिसञ्चयनादूर्ध्वमङ्गस्पर्शनमेव च ।

शामित्रं चैव विप्राणां सोमविक्रयणं तथा ॥

शामुल्यम्— वस्त्रम् ।

शमलं शारीरं मलं शरीरावच्छिन्नस्य मलस्य धारकं वस्त्रमिति सायणः ऋक् १०-८५-२६ वैदिकोऽयंशब्दः ।

शारङ्गी— मन्दपालभार्या ।

अक्षमाला वसिष्ठेन संयुक्ताधमयोनिजा ।

शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम् ॥

मनुः ९-२३

शारदः— अपराह्णः ।

अपराह्णोऽथ शारद इति श्रुतेः इति कालमाधवे ।

तत्र ग्रहणप्रसवे—

सायाह्ने संगवेऽश्नीयात् शारदे संगवादधः ॥ इति

शालग्रामः— गण्डकीनदीतीरस्थपर्वतविशेषः ।

तदुक्तं वाराहे—

गण्डक्याश्चोत्तरे पार्श्वे गिरिराजस्य दक्षिणे ।

शालग्राम इति ख्यातं मम भक्तसुखावहम् ॥ इति पूजा

तत्रैव वाराहे विष्णुना उक्तम्—

तस्मिन् क्षेत्रे हरो देवो मत्स्यरूपेण संयुतः ।

शालग्रामे गिरौ तस्मिन् शिलारूपेण तिष्ठति ॥

अहं तिष्ठामि तत्रैव गिरिरूपेण नित्यदा ।

तस्मिन् शिलाः समग्रास्तु मत्स्वरूपेण न संशयः ॥

तत्र पर्वते शालवृक्षमूले सालंकायनमुनिना

सन्तोषितः हरिः । स च वृक्षः हरिरेव ।

योऽयं वृक्षस्त्वया दृष्टः सोऽहमेव न संशयः ॥

इति भगवद्वाक्यात्

तद्वृक्षयोगात् गिरिरपि शालग्रामः तदंशत्वेन

पूज्य क्षुद्रांशा अपि शालग्रामपदवाच्या

इति सुविस्तरं वाराहे द्रष्टव्यम् ॥

**शालाग्निः**— गृह्याग्निः आवसथ्याग्निः इतिपर्यायः

**शालावृकः**— कुक्कुरः शृगालः कपिश्च, अमरः ३-३-१२

शालावृकाः कपिकोष्टुश्वानः इति अमरः

इन्द्रो यतीन् शालावृकेभ्यः प्रायच्छत् तमश्लीला

वागभ्यवदत् स प्रजापतिमुपधावत् तस्मै इन्द्राय

उपहव्यं प्रायच्छत् इति ॥

अत्र शालावृका उग्रश्वान इति गोविन्दानन्दः

केचन आरण्याः कुक्कुराः बलीयाकुक्कुरसंज्ञकाः ।

सन्ति ये पुनः संहता व्याघ्रमपि व्यापादयितुमर्हन्ति

मन्ये त एव शालावृका इति ॥

**शालिः**— हेमन्तपक्वं धान्यम् ।

कलमाद्याः धान्यविशेषाः शालयः रक्तशालि महाशालि

कलम-तुर्णकशकुनाहृसारासुख दीर्घशूकरोध्रशूक-सुग-

न्धपतङ्गतपनीयादयः इति हेमाद्रिः परि-५३८

शरत्पक्वं धान्यं तु व्रीहिः ॥

शालिश्यामाकनीवारा व्रिहीगोधूम यावकाः एतेषां

तण्डुला हौम्या यावनलप्रियङ्गवः स्मृत्यर्थसारः-३५

यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारियत् ।

यवानामिव गोधूमा व्रीहियामिव शालयः ।

इति छन्दोगपरिशिष्टे कात्यायन इति परिभाषा

प्रकाशे-१०६

शालयः कलमाद्याश्च षष्ठिकाद्याश्च अमरः ३-६-१४

**शालिका**— भार्यायाः भगिनी ।

सखीभार्य्यां कुमारीं च श्वश्रूं वा शालिकां तथा ॥

नियमस्थां च वृत्तस्थां योभिगच्छेत् स्त्रियं द्विजः ॥

इत्यादि संवर्त्तः-१६३

**शालीनः**— (१) शालानिवासशीलः गृहस्थविशेषः ।

शाला विद्यते अस्येति शालिनः ॥ बोधा २-१०-१

शालाश्रयत्वाच्छालीनत्वम् इति बोधा ३-१-१-३

विस्तिर्णाभिः शालाभियुक्ति इति गोविन्दस्वामी ॥

शालानिवासशीला इति कल्पतरौ नियत-२३५

(२) नपुंसकविशेषश्च अप्रगल्भतया क्षोभाद्वा नष्टपुंस्त्वः शालीन इति मित्रमिश्रः।

संस्कारप्रकाशे-७५६

(३) दान्तः।

शालाप्रवेशमर्हति अधृष्टः स शालीनः इति पतञ्जलिः।

**शालूकम्**— सौगन्धकादीनां मूलम्।

शालूकमेषां कन्दं स्यादित्यमरः १-१०-४१

मध्यदेश भाषायां सेरूकिति प्रसिद्धमिति निर्णयसिन्धौ।

उत्कलदेशे च कइँमुण्ड़ा इत्युच्यते।

**शाल्मलिः**— स्थिरायुवृक्षः शिमुलि इति प्रसिद्धः।

स समिदनर्ह इति गोभिलः १-५-१५

**शासनम्**— (१) ताम्रफलकादौ लिपिबद्धो राजादेशः।

शासनं राजादेश इति मेधातिथिः॥

कूटशासनकर्त्तॄंश्च प्रकृतीनां च दूषकम्।

स्त्रीबालब्राह्मणघ्नांश्च हन्याद्द्विट् सेविनस्तथा॥

मनुः ९-२३२

दत्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत्।

आगामिभद्रनृपति परिज्ञानाय पार्थिवः॥

याज्ञ १-३१८

पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम्।

अभिलेख्यात्मनोवंश्यानात्मानं च महीपतः॥ ३१९

प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम्।

स्वहस्तकालसम्पन्नं शासनं कारयेत्स्थिरम्॥ ३२०

याज्ञ-१-३२०

स्मृत्यन्तरे—

दत्वा भूम्यादिकं राजा ताम्रपत्रे पटेऽथवा।

शासनं कारयेद्धर्म्यं स्थानं वंशादिसंयुतम्॥

मातापित्रोरात्मनश्च पुण्यायामुकसूनवे।

दत्तं मयामुकायाद्य दानं सब्रह्मचारिणे॥

अनाच्छेद्यमनाहार्यं सर्वभागविवर्जितम्।

चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयानुगम्॥

दातुः पालयितुः स्वर्गं हर्त्तुर्नरकमेव च।

षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः॥

स्वदत्तां परदत्तां वा हरेद्यस्तु वसुन्धराम्।

षष्टिर्वर्षसहस्राणि दानच्छेदफलं लिखेत्॥

समुद्रं वर्षमासादि धनाध्यक्षाक्षरान्वितम्॥

ज्ञातं मयेति लिखितं सन्धिविग्रहलेखकैः।

एवंविधं राजकृतं शासनं समुदाहृतम्॥ इति

शिष्यन्ते भविष्यन्तो नृपतोऽनेन दानाच्छेयोऽनुपालनमिति शासनम् इति विज्ञानेश्वरः-३२०

(२) पुत्रपौत्रप्रपौत्रैस्तु दत्तं नैव विलुप्यते।

अबाध्यत्वेन यत् किंचिद्दानं शासनं तत् स्मृतम्॥

एतेन विप्रेभ्यः प्रतिपादितोग्रामः—

अभिलषितार्थचिन्तामणिः १-२-१०१४

(३) ब्राह्मणवसतिरग्रहारो वा शासनमुच्यते उत्कलेषु॥

शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशान्तिषु॥

इति मेदिनी

यथा केन्दुबिल्वाख्यं शासनं जयदेवस्य
जन्मग्राम इति सर्वाङ्गसुन्दरी टीकाकारः।

**शासी**— शासनकर्त्ता।
मधुपर्कं ततो दद्यात् पृथिवीशाय शासिने।
इति दत्तकमीमांसायां वृद्धगौतमः।

**शास्तिः**— शासनम्।
ये व्यपेताः स्वधर्मेभ्यः परधर्मे व्यवस्थिताः।
तेषां शास्तिकरो राजा स्वर्गलोके महीयते॥
अत्रिसंहिता-१७

**शास्त्रम्**— (१) धर्मशास्त्रादि।
येन शास्यन्ते शिष्याः।
(२) शासनम्।
ह्रीमानसि कुले जातः श्रुतवाननृशंसवान्॥
तिष्ठ तात पितुः शास्त्रे मातुश्च भरतर्षभ।
इति दुर्योधनं प्रति श्रीकृष्णवाक्यम्।
महाभा, उद्-१२४-१६

**शास्त्रिता**— नृपतिसहिता सभा व्यवहारकल्पतरौ
शासिता इति पाठः-२६ सभाशब्दो द्रष्टव्यः।

**शिक्यम्**— शिका इति उत्कलेषु प्रसिद्धम्।
शिक्यादिच्छेदभङ्गेषु पुनरारोपयेन्नरम्॥
इति मिताक्षरायाम् याज्ञ-२-१०२
तत्र स वृक्षोद्भवा पञ्चहस्तायतोभयतोभयतः
शिक्या तुला॥ विष्णुस्मृतिः १०-३
यथाः शिक्यं जलपवित्रं कमण्डलुं पात्रमिति
बोधायनः २-१०-१७-१२

**शिक्षा**— (१) वेदाङ्गविशेषः।
य वर्णानां स्थानप्रयत्नादिकम् अध्ययनकाले कर्मणि च
मन्त्राणामुच्चारणप्रकारं शिक्षयति सा शिक्षा यथा
याज्ञवल्क्यशिक्षाप्रभृतिः।
(२) हस्तिप्रभृतीनामायत्तीकरणं शिक्षा।

**शिखण्डी**— मयूरशिखा इति नरसिंहवाजपेयी।

**शिखा**— चूडाकर्मप्रभृति अच्छेद्यत्वेन गृहीतः केशः।
शिखां छिन्दन्ति ये केचिद् वैराग्याद्वैरतोऽपि वा।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥
इति लघुहारीतः-१८

**शिखाजटः**— शिखामात्रकेशधारी ब्रह्मचारी।
मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः॥
मनुः २-२१६

**शिखामानम्**— परिमाणविशेष।
सुरायाः पुष्पफलयोः तुषाङ्गाराणां सुधायाश्च
शिखामानं द्विगुणोत्तरा वृद्धिः कौ-२-१६

**शिखावृद्धि**— ऋणप्रयोगविशेषः यत्र वृद्धिः प्रत्यहं
गृह्यते।
प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा स्मृता।
शिखेव वर्द्धते नित्यं शिरश्छेदान्निवर्त्तते॥
व्यवहारमयूखे तु—
प्रतिकालं ददात्येव शिखावृद्धिस्तु सा स्मृता।
इति कात्यायनः।

प्रतिकालं प्रतिदिनं प्रतिमासं प्रतिवर्षं वेति नीलकण्ठः ॥

शिखी— (१) चित्रकपुष्पम् ।
पुष्पमिदं विष्णुप्रियमिति शेफालीशब्दे द्रष्टव्यम् ।
(२) बर्हि ।
अस्थ्यपि स्वकोशशिखिपरिपक्वं मज्जात्वम्
इति विज्ञानेश्वरः-३-८४

शिग्रुः – (१) शोभाञ्जनः कल्पतरौ नियत-२८१
सुजना इति प्रसिद्धः बीजकाण्डोभयप्ररोही वृक्षविशेषः ।
शिग्रुः शोभाञ्जनयोः भेद इति गदाधरराजगुरुः ।
शिग्रुशोभाञ्जने चैव कोविदाराणि चैव हि ॥
इति ब्राह्मे शिग्रुशोभाञ्जनयोः भेदश्रवणात् ।
वस्तुतस्तु तस्य सजना मुगुना इति भेदद्वयमस्ति ।
(२) शाकमात्रम् ।
अस्त्री शाकं हरितकं शिग्रुः अमरः २-९-३४
शिग्रुर्ना शाकमात्रे च शोभाञ्जनमहीरुहे ॥
इति विश्वमेदिन्यौ

शिग्रुकम्—शिग्रुकं वाहीकेषु प्रसिद्धं शाकमिति
कुल्लूकः मनुः ६-१४

शिपिविष्टः— खलतिः विवृतशेफ इत्यन्ये इत्युज्वलाया हरदत्तः ।

शिफा – वृक्षजटा इति व्यवहार कल्पतरुः-५६०
शिफा वृक्षजटा इति व्यवहारकल्पतरुः-५६०
शिफा जटारज्वादिप्रहारा इति चण्डेश्वरः-४०४
शिफा जटे इत्यमरः-२-४-११
वटादेः शाखाया अवलम्बिनी शिफा इति व्याख्या-सुधा ।
कन्येव कन्यां या कुर्यात्तस्याः स्याद्द्विशतो दमः ॥
शुल्कं च द्विगुणं दद्याच्छिफाश्चैवाप्नुयाद्दश ॥
मनुः ८-३६९
इत्यत्र शिफाः प्रहारान् दशप्राप्नुयादिति कुल्लूकः ॥

शिरः— (१) दण्डः शरीर आर्थिकोऽपि वा ।
परदाराभिशापे च बहवो यत्र वादिनः ।
शिरो हीनं भवेद्दिव्यमात्मनः शुद्धिकारणात् ॥
इति व्यवहारमयुखोद्धृतकालिकापुराणे ।
शीर्षकं शिरः व्यवहारस्य चतुर्थः पदो जयपराजय-लक्षणस्तेन च दण्डो लक्ष्यते इति विज्ञानेश्वरः-२-९५
(२) नारिकेलम् ।
शिरः कपोलमन्त्राणि नखचर्म तिलास्तथा ।
एतानि क्रमशो नित्यमष्टम्यादिषु वर्जयेत् ॥
इति समयमयूखोद्धृते स्कान्दे
(२) मस्तकम् ।
शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः ।
सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समवाससम् ॥
इति मनुः ८-२५६

शिरा— शिरा नाभिसम्बद्धाः चत्वारिंशत्संख्या वातपित्त-श्लेष्मवाहिन्यः सप्तशतसंख्या भवन्ति इति विज्ञानेश्वरः
याज्ञ-३-१००

**शिरोव्रतम्**— शीर्षकः।

अथर्वणामेतद् शिरोव्रतं नाम।

जापिनां होमिनां चैव ध्यायिनां तीर्थवासिनाम्।

नपरिवसन्ति पापानि ये च स्नाता शिरोव्रते॥

वसिष्ठः २६-१२

**शिलः**— गृहस्थवृत्तिविशेषः।

क्षेत्रादिपतितानां धान्यानां मञ्जरीशः ग्रहणम्।

ऋतमुञ्छशिलं ज्ञेयमृतं स्यादयाचितम्।

मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृताम्॥

मनुः ४१५

अत्र मञ्जर्यात्मकानेक धान्योच्चयनं शिल इति

कुल्लूकः।

**शिला**— पाषाणः।

न शिला तारयेच्छिलाम् इति दायभागे यमः-६

गोश्वोष्ट्रयान प्रासादस्रस्तरेषु कटेषु च।

आसीत गुरुणा ष्रद्धं शिलाफलकनौषु च॥

मनुः २-२०४

**शिलोच्चयः**— पर्वतः।

सर्वे शिलोच्चयाः सर्वाः स्रवन्त्यः। गौतमः ३-१-१४

पुण्याह्रदास्तीर्थान्यृषिनिवासागोष्ठपरिस्कन्धा

इति देशाः

**शिल्पम्** - चित्रकर्मादि मनुः २-२४०

शिल्पं गन्धयुक्त्यादिकरणमिति कुल्लूकः १०-११६

**शिल्पिन्यासः**— कङ्कणादिनिर्माणाय सुवर्णकारादिहस्ते सुवर्णादिसमर्पणमितिस्मृतिचन्द्रिका।

अन्वाहिते याचितके शिल्पिन्यासे तथैव च॥

**शिल्पी**— शिल्पिनश्चित्रकाराद्या इति कल्पतरुः-व्यव-३२

तेषां विवादे स्वधर्मेण निर्णयः।

कीनाशाः कारुकाः शिल्पिकुसीदश्रेणिनर्त्तकाः।

लिङ्गिनस्तस्कराः कुर्य्युः स्वेनधर्मेण निर्णयम्॥

इति बृहस्पतिः १-८४

**शिवः**— वेदः।

अष्टमन्त्रं शिवो वेदः केशो भङ्ग उदीरितः॥ इति

शिवशूलशब्दो द्रष्टव्यः।

**शिवगङ्गा**— शिवलिङ्गसमीपस्थ जलाशयः।

शिवलिङ्गसमीपस्थं यत्तोयं पुरतः स्थितम्।

शिवगङ्गेति तज्ज्ञेयं तत्र स्नात्वा दिवं व्रजेत्॥

इत्याचारसारे भविष्यवचनम्।

नित्याचारप्रदीपेऽपि १-२६८

**शिवतीर्थम्**— शिवलिङ्गसमीपस्था नद्यः सर्वाश्च भारत।

वापीकूपतडागाश्च शिवतीर्था इति स्मृताः॥

इति नित्याचारप्रदीपे २-११३

**शिवदिनत्रयम्**—एकादश्यष्टमी चैव चतुर्दशी शिवप्रिया।

तासामाद्यासूपवसेद् दिवानाद्यात्तथान्ययोः॥

**शिवनाभिः**—शिवनाभि इति ख्यातं यत्र देशे व्यवस्थितम्।

तच्छैवविष्णुवत्तीर्थं शालिग्राम समुद्भवम्।

नाभौ लिङ्गेन संयुक्तं गर्त्तेन च तथा पुनः ॥
शिवनाभिरिति ख्याता भुक्तिमुक्तिप्रदायिका ।
यवमात्रं तु गर्भः स्याद् यवार्द्धं लिङ्गमुच्यते ॥
वासुदेवमयं क्षेत्रं लिङ्गं शिवमयं शुभम् ॥

आग्र्यभूषण-१७७

**शिवनिर्माल्यम्—** गङ्गोदकम् ।

उच्छिष्टं शिवनिर्माल्यं वमनं प्रेतपर्पटम् ।
श्राद्धे सप्त पवित्राणि दौहित्रः कुतपस्तिलाः ॥
इति पूर्वाङ्गिरसे-६८
शिवनिर्माल्यं गङ्गोदकमिति निर्णयसिन्धौ ॥
भगीरथप्रार्थनया तद्गङ्गात्यवलेपहा ।
तिरोधानं जटारण्ये कृत्वा तामधरद्यतः ।
तन्निर्माल्यं ततो गङ्गा सम्प्राप्त्यै परमास्मृता ॥

आङ्गिरसस्मृतिः-१-९७

**शिवरात्रिः—** फाल्गुनकृष्णा चतुर्दशी ।

माघमासस्य शेषे या प्रलमाफाल्गुनस्य च ।
कृष्णे चतुर्दशी सा तु शिवरात्रिः प्रकीर्त्तिता ॥

**शिवशूलाः—** वेदविक्रययुक्ताः ।

अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।
प्रमदाः केशशूलिन्यो भविष्यन्ति कलौ युगे ॥

स्कान्दे, मोह, कौमा, ४०-२३५

अट्टमन्नं शिवो वेदः केशो भग उदीरितः इति ।
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।
केशशूलास्त्रियश्चापि भविष्यन्ति युगक्षये ॥

महाभा, वन, १९०-५२

**शिवसंकल्पः—** यज्जाग्रतो दूरमित्यादिमन्त्राः ।

**शिवा—** शृगाली ।

शिवां वाश्यमानामभिमन्त्रयते ॥ पारस्करः ३-१५-१६

**शिविका—** यानविशेषः नरस्कन्धवाह्यः ।

शिविकां ये प्रयच्छन्ति ते गच्छन्त्यमरावतीम् ॥ इति
नित्याचारप्रदीपोद्धृतविष्णुधर्मोत्तरे ७०
शिविका चतुर्दोलकमिति कल्पतरुरत्नाकरे-५८३
उत्कलेषु च उदोल इत्युच्यते ।

**शिशुः—** प्रागन्नप्राशनाच्छिशुरिति हरिहरभाष्ये
शातातपः । पारस्करः २-१-२३

**शिशुकृच्छ्रः—** व्रतविशेषः ।

अहः पराकं तत्रैकमेवं चतुरहौ परौ ।
अनुग्रहार्थं विप्राणां मनुधर्मभृतां वरः ।
बालवृद्धातुरेष्वेवं शिशुकृच्छ्रमुवाच ह ॥

वसिष्ठः-२३-४६

**शिशुचान्द्रायणम्—** चान्द्रायणविशेषः ।

चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः ।
चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतम् ॥

मनुः ११-२१६

**शशुमारः**— (१) अभक्ष्यमत्स्यविशेषः ।

मत्स्यानां वा चेटगवयशिशुमारनक्रकुलीराः ॥

वसिष्ठः-१४-४१

(२) सौवर्णौकूर्ममकरौ राजतौ मत्स्यडुण्डुभौ ।

ताम्रौ कुलीरमण्डूका वायसः शिशुमारकः ॥

इतिमात्स्ये दानक्रियाकौमुदी-१३०

**शिश्नः**— पुरूषस्य जननेन्द्रियम् ।

मनुः ११-१०४

शिष्टलक्षणं यथा—

धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ।

ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥

मनुः १२-१०६

**शिष्टः**— शिष्टः पुनरकामात्मा वसिष्ठः १-६

अथाप्युदाहरन्ति —

न पाणिपादचपलो न नेत्रचपलो भवेत् ।

न च वागङ्गचपल इति शिष्टस्य गोचरः ॥ ६-४२

पारम्पर्यगतो येषां वेदः सपरिबृंहणः ।

ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुति प्रत्ययहेतवः ॥

वसिष्ठः-६-४३

शिष्टाः खलु विगतमत्सरा निरहंकारा कुम्भीधान्या अलोलुपा दम्भदर्पलोभमोहक्रोधविवर्जिताः

१-१-१-५

धर्मेणाधिगतो येषां वेदः सपरिबृंहणः ।

शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः ॥ इति

बौधायनः-१-१-१-६

सर्वजनपदेष्वेकान्त समाहितमार्य्याणां वृत्तं-सम्यग् विनीतानां वृद्धानामात्मवतामलोलुपानाम-दाम्भिकानां वृत्तसादृश्यं भजेत ॥

आपस्तम्बः १-७-२०-८

(२) अवशिष्टः—

इतरेषु तु शिष्टेषु नृशंसानृतवादिनः ।

जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥

मनुः ३-४१

**शिष्यः**— वेदविद्यार्थी इति विज्ञानेश्वरः २-१८२

विवादं वर्जयेद् विप्रे सर्वेषां चैव सूचनम् ।

परिभोगं यथोक्तेषु मत्सरं पुत्रशिष्ययोः ॥

इति हारीतः संस्कारप्रकाशे-५८५

उक्तं यद्गुरुणा पूर्वं शक्यं वाऽशक्यमेववा-८७

करोत्येवहि पूतात्मा प्राणैरपि धनैरपि ।

तस्माद् वैशासने योग्यः शिष्य इत्यभिधीयते ॥

शिवपु-१-१८-८८

शिष्यः पुत्र इति प्रोक्तः सदा शिष्यत्वयोगतः ।

जिह्वालिङ्गान्मन्त्रशुक्रं कर्णयोनौ निषिच्य वे ॥ ६०

जातः पुत्रो मन्त्रपुत्रः पितरं पूजयेद् गुरुम् ।

निमज्जयति पुत्रं वे संसारे जनकः पिता ॥ ६१

सन्तारयति संसाराद् गुरुर्वै बोधकः पिता ॥

उभयोरन्तरं ज्ञात्वा पितरं गुरुमर्च्चयेत

शिवपु-१-१८-९१

**शिष्यागतम्** - शिष्यादध्यापनेन यत् प्राप्तं गुरुदक्षिणादि ॥

शिष्यागतं धनं शुल्कमिति शुल्कशब्दे द्रष्टव्यम् ।

**शीतकन्दकम्**— शालूकम् इति लक्ष्मीधरः श्राद्ध-४७

**शीतकन्दली**— शीतकन्दः शालूकामिति यावत् इति हेमाद्रिः ।

शीतकन्दं मध्यदेशभाषायां रातालु इति प्रसिद्धमिति कमलाकरः ।

**शीतकृच्छ्रः**— त्र्यहं शीतं पिबेत्तोयं त्र्यहं शीतं पयः पिबेत् ।

त्र्यहं शीतं घृतं पीत्वा वायुभक्षः परं त्र्यहम् यमः ।

त्र्यहमुष्णाः पिबेदपस्त्र्यहमुष्णं घृतं त्र्यहमुष्णं ॥

पयस्त्र्यहं च नाश्नीयादेष तप्तकृच्छ्रः ॥

एष एव शीतैः शीतकृच्छ्रः विष्णुस्मृतः-४६-१२

**शीतपाकी**— शाकविशेषः इति नीलकण्ठः ।

काकजङ्घा इति लक्ष्मीधरः श्राद्ध-५१

कालसारे गदाधरश्च । ४०८

**शीतलषष्ठी**— आरण्यषष्ठी (आरण्यषष्ठीं पश्यन्तु)

**शीतोष्णानुलेपनम्**— चन्दनकुङ्कुमाभ्यामनुलेपनम् इति नरसिंहवाजपेयिनः ।

**शीधुः**— आसवविशेषः शाकासवः इति यावत् ।

बौधा १-१-२-४

अस्य दन्त्यादिपाठोऽप्यस्ति मैरेयशब्दो द्रष्टव्यः ।

सीधुर्गौड़ी च मत्स्यण्डी गुडेन प्रभवास्त्रय इति वैजयन्त्यां हारीतः ॥ विष्णुः २२-८२

**शीनः**— दुःखी इति देवीभागवतटीकयाम् ।

**शीपालाः**— शैवाला इति कल्पतरुः राजधर्म-७८

**शीर्षकम्**— (१) दण्डः ।

शीर्षकं लक्षणया पराजयनिमित्तो दण्ड इति व्यवहारप्रकाशे १७१

रुच्यावान्यतरः कुर्यादितरो वर्त्तयेच्छिरः ।

विनापि शीर्षकं कुर्यान्नृपद्रोहेऽथपातके ॥

याज्ञः २-९६

शिरः शब्दो द्रष्टव्यः ॥

(२) शिरः दिव्यग्राहिणोजयेत्स्वयं दण्डाङ्गीकारः इति व्यवहार कल्पतरौ-२०९

**शीर्षकस्थः**— पराजयप्रयुक्तदण्डभाक् ।

तुलाग्न्यापो विषंकोशो दिव्यानीह विशुद्धये ।

महाभियोगेष्वेतानि शीर्षकस्थेऽभयोक्तरि ॥

याज्ञ २-९५

**शीलम्**— (१) स्वभावः ।

पित्र्यं वा भजते शीलं मातुर्वोभयमेव वा ।

न कथंचन दुर्योनिः प्रकृतिं स्वां नियच्छति ॥

मनुः-१०-५९

(२) हारीतोक्तं त्रयोदशविधं शीलम् ।

ब्रह्मण्यता देवपितृभक्तता समता सौम्यताऽपरोपता-ऽनसूयता मृदुता अपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता प्रशान्तिश्चेति त्रयोदशविधं शीलम् ।

मृदुतास्थाने अनुद्धतता इति पराशरमाधवे पाठः ।।

(३) शीलमन्त्रः करणशुद्धिर्बाह्यं वानुष्ठानमिति

हरदत्तः गौतमः २-२-१२

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।

अनुग्रहश्च दानं च शीलमेतत् प्रशस्यते ।। इति शाश्वतधर्मदीपिकायाम्-१२८

(४) निषेधव्य वृत्तिमात्रं शीलमिति नरसिंहवाजपेयी ।।

**शुक्तः** — (१) यद्वस्तु स्वभावतो मधुरमपि कालवशादम्ल-भवति तत् ।

दधि भक्ष्यं च शुक्तेषु सर्वं च दधिसम्भवम् ।

यानि चैवाभिषूयन्ते पुष्पमूलफलैः शुभैः ।।

मनुः ५-१०

कन्दमूलफलैः पुष्पैः शस्त्रैः शुक्तान् न वर्जयेत् ।

अविकारि भवेद् भक्ष्यमभक्ष्यं तद् विकारकृत् ।।

इति मन्वर्थमुक्तावल्यां बृहस्पतिः ।

(२) अश्लीलम् ।

शुक्तस्य अश्लीलस्य वदनं भाषणम् ।

अश्लीलं तु त्रिविधम् लज्जाकरं दुःखकरम् अमङ्गल-सूचकं च इति हरिहरः शुक्तं परुषमिति कल्पतरुः ।

पारस्करः-२-७-७

मूत्रपुरीषष्ठीवनादिषु शुक्तवाक्याभिधानेषु च पुनरुपस्पृशेत् इति शङ्खलिखितौ ।।

धान्याम्लमारनालं सन्धानं काञ्जिकं च सौवीरम् ।

अभिषवमवन्तिसोमं तुषोदकं शुक्तमिच्छन्ति ।।

इति हलायुधः का-२

**शुक्तम्** — (१) शुक्तं निष्ठुरमिति नन्दपण्डितः ।

विष्णुः ५-३६

(२) शुक्तम् आमलकादि काञ्जिकमिति स एव ।।

विष्णुः-५१-३५

अत्यम्लं शुक्तमाख्यातमिति वृद्धबृहस्पतिः कल्पतरौ नियतकालकाण्डे-२६१

**शुक्तावाक्** परोद्वेगकरं वाक्यम् ।

शक्ता वाचः परोद्वेगकराणि वाक्यानि इत्यपरार्कः ।।

शुक्ताः शोककारिण्यो वाचः यथा विधवां विधवेति इति गोविन्दस्वामी ।

शुक्ता वाचो मद्यं नित्यं ब्राह्मणः (वर्जयेत्) इति

**शुक्तिः** — (१) कर्पद्वयम् इति भावप्रकाशे खारीशब्दे द्रष्टव्यम् ।

(२) जलजीवास्थिविशेषः उत्कलभाषायां शामुका इत्युच्यते ।

मुक्तास्फोटः स्त्रियां शुक्तिः इत्यमरः १-१०-२३

मणिवज्रशङ्खशुक्तीनाम् वसिष्ठः-३-५१

शुक्रम् — कृष्णपक्षषष्ठी दिनभ, गमात्रम् ॥ कालमाधवः-२

शुक्रः — (१) ज्येष्ठो मासः ।

शुक्रश्च शुचिश्च ग्रैष्मावृतू शुक्र यजुः-१४-६

(२) यज्ञपात्रविशेषः ।

द्विकोणं वैल्वं पात्रं शुक्रपात्रमित्युच्यते ॥

(३) नक्षत्रग्रहविशेषः ।

सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः ।

शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः ॥

या-१-२९६

(४) चरमधातुः ।

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ।

स्नात्वार्कमर्चयित्वा त्रिःपुनर्मामित्यृचं जपेत् ॥

मनुः २-१८१

शुक्रियम्— (१) शुक्रियं नाम आरण्यकविशेषः विश्वानि देव सवितः इत्यादि वाजसनेयके पठ्यते इति मित-क्षारायाम् ॥ ३-३०८

शुक्रियमरिचं वाचं प्रपद्ये इत्यादिकमिति स्मर्ग-मयूखे-१४

(२) शुक्रियं ब्रह्मचारिव्रतविशेषः ।

शुक्रयशब्दोऽत्र अध्ययनवाची तत्सम्बन्धे । इदमपि-व्रतं शुक्रियमुच्यते त्रिरात्रिको ब्रह्मा यस्योनयसः श्रोत्रियाखिपुरुषमिति सूत्र भो-१६-२२ २६

श्रोत्रिय सशुकस्य तन्वो वेद तिस्र इति ॥

शुक्लम्— (१) न्यायार्जितं धनम् ।

श्रुतशौर्यतपः कन्यायाज्यशिष्यान्वयागतम् ।
धनं सप्तविधं शुक्लमुदयोऽप्यस्य तद्विधः ॥

नारदः ३-४५

तच्च दुःखासम्मिन्नमिति हेमाद्रिः ।

अत्र अन्तिमपादे उदयस्थाने उद्योग इति

पाठान्तरम् ।

स्ववृत्त्युपार्जितं सर्वेषां शुक्लम् ॥ विष्णुः ५८-६

क्रमागतं प्रीतिदायः प्राप्तं च सह भार्यया ।

अविशेषेण सर्वेषां धनं शुक्लमुदाहृतम् ॥

विष्णुः ५८-६

(२) शुक्रधातुः ।

अशुचिशुक्लोत्पन्नानां तेषामिच्छतां प्रायश्चित्तिः ।

पतनीयानां तृतीयांशः स्त्रीणामंशस्तृतीयः ॥

बोधायनः २-१-२-१२

शुक्लः— श्वित्रकुष्ठी ।

नग्न शुक्लक्लीब इत्यादि वसिष्ठः-११-१९

द्विनग्नशुक्लविक्लिध श्यावदन्तप्रजननेत्यादि

कात्यायन, श्रौः सूत्रम् १-११

शुक्लोऽतिगौरो मण्डलकुष्ठी वा इति गदाधरः

शुक्लजम्— सुवर्णम् इति कल्पतरौ व्रतका-१३४

शुक्लजोद्भवयानेन आपमेय पताकिना ।

आपगाधिपसंकाश आपमानुचरो भवेत् इति

शुक्लपक्षः— येषु दिवसेषु चन्द्रस्य कलापूर्तिर्भवति

स शुक्लः पक्षः ।

तस्य पक्षस्य दिवसनामानि यथा संतानं विज्ञानं प्रतानं ज्ञानमभिन्मानं संकल्पमानं प्रकल्पमानमुपकल्पमानमुपक्लृप्तं क्लृप्तं श्रेयोवसीय आयन्त्यं सम्भूतं भूतंप्रभूतामिति रात्रिनामानि दर्शाऽप्य दर्शाना विश्वरूपा सुदर्शना आप्यायमानाप्ययमानां प्याया सूनृता इरा आश्चर्यमाणा पूर्यमाणा पूरयन्ती पूर्णा-पौर्णमासीति कालमाधवे-२

**शुक्लब्रह्मचर्यम्**— ऋतुकालाभिगमनं शुक्लम् ।

ऋतुकालेऽभिगमनं नान्यदा इतिसारः ॥

**शुङ्गः**— (१) अङ्कुरः ।

शुङ्गः अङ्कुर इति श्रीशङ्कराचार्याः ।

तत्रैतत् शुङ्गमुत्पतितं सोम्य विजानीहि ।

छन्दोग्यः ६-८-३

(२) अग्रपल्लवः ।

न्यग्रोधावरोहान् शुङ्गश्च इति पारस्कर १-१४-३

अत्र शुङ्गान् तदग्रपल्लवान् मुकुलाकारान् इति हरिहरः उर्द्धाङ्कुरान् इति गदाधरः ॥

**शुचिः**—आषाढोमासः।

शुक्रश्च शुचिश्च ग्रैष्मावृतू शु. यजुः १४-६

शुचावूर्जे तपस्ये वा या द्वितीया भवेत्तिथिः ।

चातुर्मास्य द्वितीयास्ताः प्रवदन्ति मनीषिण ॥

**शुद्धम्**— श्रुतशौर्यादिनाऽर्जितं धनम् ।

**शुद्धपक्षः**— शुक्लपक्षः ।

शुद्धपक्षस्य पुण्याहे पर्वणि काठकगृ २-३-२

अत्र शुद्धपक्षः शुल्कपक्ष इति देवपालः ॥

**शुद्धवत्यः**— एतोन्विन्द्रं स्तवामेत्यादिमन्त्राः त्रयः इति कल्पतरुः नियत-६८

अघमर्षणं दवकृतं शुद्धवत्यस्तरत्समाः ॥ शङ्खः ११-१

ब्राह्मणमनृतेनाभिशंस्य पतनीयेनोपपतनीयेन वा मासमब्भक्षः शुद्धवतीरावर्त्तयेत ॥ वसिष्ठः २३-३६

सम्पूर्णमन्त्राः ऋक् ६-२-१८-म० ८-६५-७

तिरश्चीराङ्गिरसः ऋषिः इन्द्रो देवता अनुष्टुप्छन्दः ॥

एतोऽन्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना ।

शुद्धै रुक्थैर्वावृध्वासं शुद्ध आशीर्वान् ममत्तु ॥

इन्द्र शुद्धो न आगहि शुद्धः शुद्धाभिरूतिभिः ।

शुद्धो रयिं निधारय शुद्धो ममद्धि सोम्यः ॥ २

इन्द्र शुद्धो हि न रयिं शुद्धो रत्नानि दाशुषे ।

शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषाससि ॥

**शुद्धवधः**— अक्लेशमारणम् ।

शुद्धवधः अक्लेशमारणं चित्रवधस्तु क्लेशमारणम् इति श्रीमूला कौट ४-१०

तडागभेदकं हन्यादप्सशुद्धवधेन वा ।

तद्वापि प्रतिसंस्कुर्य्याद्दाप्यस्तूत्तमसाहसम् ।

मनुः-६-२७६

**शुद्धातिथिः**—सूर्योदयमारभ्य वर्त्तमानतिथिः शुद्धातिथिः ।

शुद्धाधिका — पूर्वेद्युः सम्पूर्णा परेद्युरपि वर्त्तमाना तिथिः शुद्धाधिका।

मुहूर्तमात्रसत्त्वेऽपि दिने गौरव्रतंपरे।

शुद्धाधिकायामप्येवं गणयोगप्रशंसनात्॥

इति कालमाधवकारिका

शुद्धाशुद्धिये — सामनी।

शुद्धिपत्रम् — अनेन प्रायश्चित्तं कृतमिति प्रदत्तं पत्रम्।

अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते बुधैः।

दत्तं लेख्यं साक्षिमद यच्छुद्धिपत्रंतदुच्यते॥

शुनासीरीयम् — चातुर्मास्ये चतुर्थे पर्व।

दन्त्यादिपाठोऽप्यस्यास्ति।

शुभः — भद्रमुस्तकः।

शुभाः श्राद्धे क्षीरकुशाः वल्वजाः गन्धकी तथा।

वीरणाश्चोलपाश्चैव लम्ना वर्ज्याश्च नित्यशः॥

इति कालसारे-१६७

अत्र शुभाः भद्रमुस्तक इति गदाधरः॥

शुम्भमानः — कृष्णगर्तदिवसस्य चतुर्दश मुहूर्त्तः।

इति कालमाधवे-३

शुम्भूः — कृष्णपक्षगतदिवसस्य त्रयोदशमुहूर्त्तः

कालमाधवे-३

शुल्कम् — शुल्कं वणिक्प्राप्य भाग इति मेधातिथिः।

शुल्कं वणिजादेः यः कर इति हेमाद्रिः।

विंशतिभागः शुल्कः पण्ये इति गौतमः २-१-२६

गृहोपस्करवाह्यानां दोह्याभरणकर्मिणाम्।

मूल्यं लब्धं तु यत्किंचिच्छुल्कं तत्परिकीर्त्तितम्॥

कात्यायन-८६८

घट्टादिदेयं शुल्कोऽस्त्री इत्यमरः २-८-२७

शुल्कं घट्टादिदेये स्यादवरार्ल्यग्रहे ऽस्त्रियाम्॥ मेदिनी

शुश्रूषकः — शिष्यादिः पञ्चविधः।

शिष्योनन्तेवासी भृतको ऽधिकर्मकृद्दास इति।

पञ्चविधः शुश्रूषकः मिताक्षरा-याज्ञ २-१८२

शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः।

चतुर्विधः कर्मकरस्तेषां दासास्त्रिपञ्चकाः॥ २

शिष्यान्ते वासि भृतकाश्चतुर्थस्त्वधिकर्मकृत्।

एते कर्मकरा ज्ञेया दासास्तु गृहजादयः॥

नारदस्मृतिः ४-३

शुश्रूषा — आज्ञाकरणम् इति विज्ञानेश्वरः २-१८२

पादसम्वाहनादिसेवापि।

धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा।

तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे॥

मनुः २-११२

अत्र शुश्रूषा परिचर्या इति कुल्लूकः।
एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत्।
एतेषामेव वर्णानां शुश्रूषामनसूयया॥ मनुः १-९१

**शुष्कवैरम्** —निरर्थवैरम् भद्रं भद्रमिति ब्रूयाद् भद्रमित्यत्र वा वदेत्।
शुष्कवैरं विवादं च न कुर्यात् केनचित् सह॥
मनुः ४-१३९

**शुष्काघमर्षणम्**— स्थले यदघमर्षणसूक्तं जप्यते तत् शुष्काघमर्षणम् इति छन्दोगस्नानभाष्ये चन्द्रकान्तः ८

**शूकम्**— शूकानि फलपुष्पमञ्जर्यः शूकयुतं तृणं शूकतृणम्, इति छन्दोगस्नानभाष्ये १-५-१८

**शूकतृणम्**— शूकानि पुष्पमूलमञ्जर्यः।
तानि येषां तृणानां सन्ति तानि शूकतृणानि॥
शरशीर्यादीनि प्रसिद्धानि इति नारायण भाष्ये।
तदलाभे शूकतृण शरशीर्यवल्वजेत्यादि गोभिलः
१-५-१८
शूकतृणं शूकयुक्तधान्यतृणमिति कालसारे गदाधरः॥

**शूकधान्यम्** यवादि।

**शूकशिम्बिः**— कपिकच्छुः, कण्डुरा, उत्कलेषु वाइढंक इति फलं भवेत्।
ऊर्जे यवान्नमश्नीयाद्देवान्नमथवा पुनः।
वृन्ताकं सूरणं चैव शूकशिम्बीश्च वर्जयेत्॥
इति काशीखण्डे

आत्मगुप्ता जहाऽव्यण्डा कण्डुरा प्रावृषायणी।
ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छुश्च मर्कटी॥
इत्यमरः २-४-८६

**शूद्रः**— चतुर्थो वर्णः।
पद्भ्यां शूद्रो अजायत शु. य जुः ३१ ११
दासा वा राजकुलादाहृत्यातिथिवच्छूद्रं पूजयेयुः।
आपस्त २-४-२१
अतएव ज्ञायते शूद्राणामतिथीनां पूजार्थे।
व्रीह्यादिकं राज्ञा ग्रामे स्थापयितव्यमिति हरदत्तः॥

**शून्यपालः**— मुख्याभावे यः शून्यस्थानं पालयति।
इन्द्रोदकप्रदातारं शून्यपालं ममाग्रमे।
विनीतमाचार्य्यकुले सुयुक्तं गुरुकर्मणि॥ ९
शिष्टं दान्तं कृतज्ञं च प्रियं च सततं मम।
नमे विक्रोशतो राजन् हन्तुमर्हसि कुञ्जरम्॥ १०
महाभा, अनु, मोक्ष, १०२ अध्याये।

**शूर्पम्**— वंशनिर्मितं व्रीह्यादीनां निस्तुषीकरणोपयोगि शूर्पमित्युच्यते शूर्पं प्रस्फोटनम् इति वैजयन्त्याम्॥
विष्णुः २३-११
मुसलोलूखले वार्क्षे स्वायते सुदृढे तथा।
इच्छाप्रमाणे भवतः शूर्पं वैतावमेव च॥
इति कात्यायनः परिभाषाप्रकाशे-१०७

शूर्पः — (१) धान्यादि परिपावनाय तदाख्यस घनविशेषः वंशनिर्मितिः ।

शूर्पवस्त्रवायुस्पर्शनमनायुष्यमपुण्यं च ॥

गौतमः ध, सु परिशिष्टे-२-१५-६

(२) परिमाणविशेषः कुम्भोद्रोणद्वयं शूर्पः इति । तद्विशेषः खारीशब्दे द्रष्टव्यः ।

शूर्पवातः— शूर्पचालनजातवायुः ।

शूर्पवातनखाग्राम्बु स्नानवस्त्रपदोदकम् ।

मार्जनीरेणुकेशाम्बु हन्ति पुण्यं दिवाकृतम् ।

अत्रिः ३१६

शूलम् — आयुधविशेषः ।

शूलं तु लोहजं तीक्ष्णं शिखरं सुषिसंयुतम् ।

स्थूलमूलं कृपाच्छीर्णं स्वर्णादिपरिलाञ्छितम् ।

पुंप्रमाणं प्रविख्यातं चतुर्हस्तमितं तु वा ।

कर्त्तव्यं विधिवद् वीरैः शङ्करोऽस्याधिदैवतम् ।

वीरसर्वस्वम् १८१

शूलः — संघः ।

शूलगव इति शूलः संघ इति ज्ञायते ।

सङ्घश्च बहुषु पशुषु भवति इति अष्टवक्रभाष्ये ।

मानवगृह्य-२-५-५

स्कान्दे माहेश्वरखण्डे कौमारिकाखण्डेऽपि—

अट्टशूला जनपदा शिवशूलाश्चतुष्पथाः ।

प्रमदाः केशशूलिन्यो भविष्यन्ति कलौयुगे ।। इति

शूलगवः— रुद्रदेवताककर्मविशेषः ।

रौद्रः शरदि शूलगवः इति मानवगृ २-५-१

पारस्करगृह्यसूत्रेऽपि ३-८ कण्डिकायां तस्य विधानं द्रष्टव्यम् ॥

शूलिकः — जातिविशेषः ।

उग्रः विधिना शूलिकः चौर्याज्जात इति

तयोर्भेदः उग्रशब्दो द्रष्टव्यः ।

तस्यां वै चौरसंवृत्त्या जातः शूलिक उच्यते ।

जातदोषान् समारोप्य शूलकर्मणि योजयेत् ।

ऐशनस्मृतः-४२

शृङ्खाणिका— नासिकामलम् ।

शृङ्खाणिका नासिकामलमिति हरदत्तः ।

आपस्त १-.-१६-१४

सिंहाणिका सिंघाणिका इत्यस्य पाठभेदौ ।

शिंघाणिका इति स्मृतिचन्द्रिकायाः ।

शृङ्गाटः— } शिंघडा इति ख्यातः जलप्रभवः त्रिकण्टकविशिष्टः फलविशेषः ।
शृङ्गाटकः— }

दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटविषकेतुकान् इति

शङ्ख-१४-२१

शृङ्गाटकः जलजः त्रिकण्टक इति हेमाद्रि ॥

शृङ्गाटकं सिघोडा इति निर्णयसिन्धौ ।

शृङ्गाटकम्— (१) द्वारम् ।

शृङ्गाटकं भवेद्द्वारि कण्टके च चतुष्पथे ।

इति मेदिनी

(२) शिङ्गडा इति ख्यातं जलोद्भवं फलम् तच्च श्राद्धे देयम् ।

धानालाजे मधुयुते सक्थून् शर्करया सह ।
दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटबिसकेवुकान् ॥

इति शङ्खः १४-२३

शृङ्गाट जलोद्भवमूलविशेषा इति नन्दपण्डितः
श्राद्धकल्पलतायाम्-५६ तरुभ्रान्तम् ।

**शृङ्गोदकम्**— शृङ्गोदकं यथा हेमाद्रौ तत्र विष्णुः ।

गोमूत्रं गोमयं क्षीरं दधि सर्पिश्च रोचना । २३-५६
षडङ्गमेतत् परमं मङ्गल्यं सर्वदा गवाम् ।
शृङ्गोदकं गवां पुण्यं सर्वाघविनिसूदनम् ।

विष्णुः २३-६०

ब्रह्मपुराणे

युद्धे भग्नं तु यच्छृङ्गं दक्षिणं पतितं भुवि ।
निर्मांसं प्राप्य विधिवत् पूरयित्वा जलेन च ॥
स्नानं कृतं तु मुनिभिर्देवैः सिद्धैस्तु सर्वदा ।
अलक्ष्मी नाशनं धन्यं सर्वसौभाग्यवर्द्धनम् ॥

वराहपुराणे—

शृङ्गेण यो गवां स्नानाद्रोहिण्यां द्विजसत्तम् ।
स सर्वपापजातानि दहत्याशु न संशयः ॥ इति

गवां शृङ्गोदके स्नात्वा महानद्युपसंगमे ।
समुद्र दर्शनेनैव व्यालदष्टः शुचिर्भवेत् ॥

इति अत्रिस्मृतिः-६२

गवां शृङ्गोदके स्नानं महानद्यास्तु सङ्गमे ।
समुद्रदर्शनाद् वापि शुनादष्टः शुचि र्भवेत् ।

पराशरः-५-२

**शेफाली**— गङ्गशिउली इति प्रसिद्धं पुष्पम् ।
यत् पुष्पं शरदि विकसति प्रभाते वृक्षात् अधः पतति ।

मालती बकुलाशोकशेफाली नवमालिका ।
अम्लानं तगराख्यं च मल्लिका मधुपिण्डिका ।
यूथिकाश्वपदं कुन्दं कदम्बं शिखिपिङ्गलम् ॥
पाटली चम्पकं हृद्यं लवङ्गमतिमुक्तकम् ।
केतकं कुरुवकं बिल्वं कह्लारं वासकं द्विजाः ।
पञ्चविंशति पुष्पाणि लक्ष्मीतुल्यप्रियाणि मे ।

इति नित्याचारप्रदीपोद्धृतनारदपञ्चरात्रे ।

पूजाप्रकाशे तु— ५६

मालती वकुलाशोकशेफाली नवमल्लिकाः ।
आम्रात तगरस्फोता मल्लिका मधुपिङ्गलम् ॥
पाटला चम्पकंहृद्यं लवङ्गमतिमुक्तकम् ।
केतकं कुरचं बिल्वं कह्लारं वासकं द्विजाः ।
पञ्चविंशति पुष्पाणि लक्ष्मीतुल्यप्रियाणि मे ॥

इति विष्णुधर्मोत्तरे

**शेलुः**— श्लेष्मातकः।

बहुआलु इति प्रसिद्ध इत्याचारसारे गदाधरराजगुरुः।

बहुवारकफलमिति लक्ष्मीधरः॥

आम्राम्रातकधात्रीणां ककोलखदिरोद्भवम्।

शम्यपामार्गखर्जूरी शेलुश्रीपर्णि पीलुजम्।

राजादनं च नारङ्गं कषायकटुकण्टकम्।

क्षीरवृक्षोद्भवं वापि प्रशस्तं दन्तधावनम्॥

इति स्कान्दे काशी-३५-८०

**शेषभोजी**—देवपित्राद्यर्चनशेषस्य अन्नस्य भोक्ता।

**शैखः**— भूर्जकण्टकः।

व्रात्यात्तु जायते विप्रात् पापात्मा भूर्जकण्टकः।

आवन्त्य वाटधानौ च पुष्पधः शैख एव च॥

मनु॰ १०-२१

एकस्य चैतानि देशभेदप्रसिद्धनामानि इति कुल्लूकः।

**शैखावत्यः**— श्रौतस्मार्त्तक्रियापरः।

शिखावान् वह्निः तस्याध्यानि श्रौतस्मार्त्तकर्माणि

शैखावतानि, तेषु साधुः शैखवत्यः इति नीलकण्ठः॥

ततस्तत्र महानासीत् ब्राह्मणः शंसितव्रतः।

शैखावत्यस्तपोवृन्दः शास्त्रे चारण्यके गुरुः॥

महा भा, उद् १७५-३८

**शैक्यम्**— परिमाणविशेषः।

अष्टाविंशतिः गौरसर्षपा रूप्यमाषकः ते

षोड़श धरणम् शैक्यानि वा विंशतिः। कौट २-१९

**शैलुषः**— / **शैलूषः**— नटः मनु॰ ४-२२४

शैलूषः नटभार्य इति हेमाद्रिः परि-७७३

स्त्रीणां नर्त्तयिता इति व्यवहारप्रकाशे-११८

**शैलूषकः**— नर्त्तकः जातिविशेषः ठकशब्दे द्रष्टव्यः।

**शैलुषी**— नटी।

**शोभनः**— शुक्लपक्षगतदिवसस्य त्रयोदशमुहूर्त्तः इति कालमाधवे-३

**शोभमानः**—शुक्लपक्षगतदिवसस्य चतुर्दशमुहूर्त्तः इति कालमाधवे-३

**शोभाञ्जनः**— सजना इति प्रसिद्धः बीजकाण्डोभयप्ररोही वृक्षविशेषः।

**शोषणम्**— आतपदानेन द्रव्यशोधनम्।

तूलिकां चोपधानं च पुष्परक्ताम्बराणि च।

पतिताद्यै रुपस्पृष्टं शोषणैः प्रोक्षणैः शुचिः।

अङ्गिरःस्मृतः-१६

**शौकरिकः**— यः शूकरैर्जीवति।

**शौचम्**— शुद्धिः।

अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः।

आचारेषु व्यवस्थानं शौचमित्यभिधीयते॥

अत्रिसंहिता-३५

बृहस्पतिस्मृतौ स्वधर्मेषु व्यवस्थानमिति विशेषः।

द्रव्यशौचं मनः शौचं वाचिकं कायिकं तथा ।
शौचं चतुर्विधं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ।
इति गौतम विवृतौ १८-२४

शौचं संकरवर्जितम् इति महाभारतवचनं परिभाषा प्रकाशे-३४

**शौटीरः**— सगर्वः ।
शौटीरशूरसदृशमनीकजनसंसदि ।
शृणु पापवचो मह्यं यद्वाच्यो हि पिता त्वया ॥
महाभा, उद्, १६२-३१

**शौण्डः**— सुराविक्रयी इति हेमाद्रिः ।
यक्ष्मा तथान्नं शौण्डस्य घाण्टिकस्य तथैव च ।
इति यमः

**शौण्डिकः**— सुराकारः ।
शौण्डिकस्य मद्यकरणम् इति पण्डितसर्वस्वे ।

**शौर्यागतम्**—युद्धे शूरतया अर्जितं धनम् ।

**शौल्किकः**— शुल्ककैः स्थानपालैर्वा नष्टापहृतमाहृतम् ॥
याज्ञ-२-१७३

**श्मश्रु**— मुखलोम ।
कॢप्तकेशनखश्मश्रुदन्तिः शुक्लाम्बरः शुचिः ।
मनुः ४-३५
श्मश्रूणि दाढ़िकालोमानि इति मेधातिथिः ॥
मनुः ५-१४०

**श्मश्रुकरः**— नापित इति नरसिंहवाजपेयी ।

**श्यामदन्तकः**— स्वभावात् कृष्णार्दशनः ।

**श्यामा**— अव्यञ्जनकुचा कुमारी इति संस्कारप्रकाशे ७६२
अनावाप्तरजा गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जनकुचा श्यामा कुचिहीना तु नग्निका ॥
इति अङ्गिराः ।

**श्यामाकः**— सुआँ इति प्रसिद्धः तृणधान्यविशेषः ।
स च मुन्यन्नविशेषः ।
श्यामाकान् कोद्रवान् कङ्गून् कञ्जान् राजमाषकान् ।
निष्पावकान् कदम्बानि वर्जयेच्छ्राद्धकर्मणि ॥
प्रजापतिस्मृतिः-१२६
प्रियङ्गवश्च गोधूमाः श्यामाका व्रीहयो यवाः ।
सारूप्येणापि होम्याः स्युः स्वरूपेणैव वै तिलाः ॥
स्मृत्यर्थसारः-२१

**श्यालिका**— भार्यायाः भगिनी ।
सखिभार्यां कुमारीं च श्वश्रूं वा श्यालिकां तथा ।
नियमस्थां व्रतस्थां च योऽभिगच्छेत स्त्रियं द्विजः ।
स कुर्यात् प्राकृतं कृच्छ्रं धेनुः दद्यात् पयस्विनीम् ॥
इति सम्वर्त्तः-१६२

**श्यावः**— ओष्ठयोरलोमकः प्रदेशः ।
श्यावान्तपर्यन्तावोष्ठावुपस्पृश्याचामेत ॥
आपस्त १-५-१६-१०
तत्रालोमकः प्रदेशः श्याव इति हरदत्तः मित्रमिश्रश्च ।

**श्यावदन्तः**— कृष्णदन्त ।

सुवर्णचौरः कौनख्यं सुरापः श्यावदन्तताम् ।
ब्रह्महा क्षयरोगित्वं दौश्चर्म्यं गुरुतल्पगः ॥

मनुः ११-४९

**श्रद्धा**— शास्त्रार्थे दृढप्रत्ययः ।
आस्तिक्यबुद्धिरिति यावत् विज्ञानेश्वरः १–६
वैदिककर्मणि फलावश्यं भावनिश्चय इति पूजा-
प्रकाशे मित्रमिश्रः ।
प्रत्ययो धर्मकार्येषु सदा श्रद्धेत्युदाहृता ॥
इति परिभाषाप्रकाशे देवलः-३४
श्रत् इति सत्यनाम श्रत् सत्यं धीयते यस्यां सा
श्रद्धा आस्तिक्यबुद्धिः पुण्यकृतां मनोविशेष इति
महीधरः शु. य. १९-३०

**हंसगीतायाम्**—
श्रद्धान्वितेन मनसा यद् यत्किंचित् समाचरेत् ।
तत्तद्बहुफलं तस्य जायते लोकयोर्द्वयोः ॥ १
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ।
देवश्रद्धानरो देवाः कथिता देवयाजिनः ॥ २
पितृश्रद्धाश्च पितरो दैत्ये श्रद्धा दितेः सुताः ।
पापश्रद्धास्तथा पाप विज्ञेया नरकंगमाः ॥
तस्माच्छ्रद्धां समास्थाय धर्मं धर्म्यं समाचरेत् ।
श्रद्धारस्य धर्मस्य नेहास्ति विफला क्रिया ॥ ४
अस्तिक्यभावमास्थाय नरः श्रद्धा समन्वितः ।
नित्यं पुण्यानि कुर्वीत पापानि परिवर्जयेत् ॥ ५
पुण्यं बहुफलं तस्य श्रद्धामास्थाय यत् कृतम् ।
श्रद्धापवित्रं परमं हि लोके
श्रद्धा शरीरं पुरुषस्य चोक्तम् ।
श्रद्धां समास्थाय नरश्च कृत्वा
पुण्यानि पुण्यां गतिमाप्नुवन्ति ॥ ६
विष्णुधर्मोत्तरपु-३-२७६ अध्याये ।

**श्रवणद्वादशी**—मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता
महती द्वादशी ज्ञेया उपवासे महाफला ॥
इति कालसारोद्धृतविष्णुधर्मोत्तरे ।

**श्रवणाकर्म**— श्रावणपूर्णिमायां विहितः सर्पबलिः ।
तद्विधानं पारस्करगृह्यसूत्रे द्रष्टव्यम् ।

**श्राद्धम्**— श्राद्धं नामादनीयस्य तत्स्थानीयस्य वा द्रव्यस्य
प्रेतोद्देशेन श्रद्धया त्यागः इति विज्ञानेश्वरः १-२१७
पितृनुद्दिश्य द्रव्यत्यागो विप्रस्वीकारपर्यन्तः
श्राद्धमिति कालसारे गदाधरराजगुरुः ।
तच्च श्राद्धं स्वरूपतः द्विविधं पार्वणमेकोद्दिष्टमिति ।
तत्र त्रिपुरुषोद्देशेन यत् क्रियते तत् पार्वणम् (पर्व अमा-
वास्या तत्र क्रियमाणं पार्वणं तद्विकृतित्वेन अन्यदपि
तत्सदृशं त्रिपुरुषोद्देशकं श्राद्धं पार्वणमिति निष्कर्षः)
एकपुरुषोद्देशेन क्रियमाणमेकोद्दिष्टम् (तत् स्वरूपं
एकोद्दिष्टशब्दे द्रष्टव्यम्) ।
पुनश्च श्राद्धं त्रिविधं नित्यं नैमित्तिकं चेति ।
तत्र नित्यं नियतनिमित्तोपाधौ चोदितमहरहरमावा-

स्याष्टकादिषु ।

अनियतनिमित्तोपाधौ चोदितं नैमित्तिकं यथा पुत्रजन्मादिषु फलकामनोपाधौ विहितं काम्यं यथा स्वर्गादिकामनायां कृत्तिकादिनक्षत्रेषु तिथिषु च इति

विज्ञानेश्वरः १-२१७

अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच प्रजानिःश्रेयसाय च ।

तत्र पितरो देवता ब्राह्मणास्त्वाहवनीयार्थे ॥ २

इत्यापस्तम्बः २-७-१६-२

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।
पार्वणं चेति विज्ञेयं गोष्ठयां शुद्धार्थमष्टमम् ।
कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं पुनः ॥

इति विश्वामित्रः ।

विवृतं चैतद्भविष्ये—

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्त्तितम् ।
वैश्वदेवविहीनं तदशक्तावुदकेन तु ॥
एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तदप्यदैवं कर्त्तव्यमयुग्मानाशयेद्द्विजान् ॥
कामाय विहितं काम्यमभिप्रेतार्थसिद्धये ।
पार्वणेन विधानेन तदप्युक्तं खगाधिप ।
वृद्धौ यत् क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते ।
सर्वं प्रदक्षिणं कार्यं पूर्वाह्णे तूपवीतीना ॥
गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।
अर्घार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ।
ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम् ।
नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि ॥
अमावस्यां यत् क्रियते तत्पार्वणमुदाहृतम् ।
क्रियते पर्वणि यत्तु तत्पार्वणमिति स्थितम् ॥
गोष्ठ्यां यत् क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते ।
बहूनां विदुषां सम्पत्सुखार्थं पितृतृप्तये ॥
क्रियते शुद्धये यत्तु ब्राह्मणानां च भोजनम् ।
शुद्ध्यर्थमिति तत्प्रोक्तं वैनतेय मनीषिभिः ॥
निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च ॥
देवानुद्दिश्य तु श्राद्धं यत्तद्दैविकमुच्यते ।
हविष्येण विशिष्टेन सप्तम्यादिषु यत्पुनः ।
गच्छन् देशान्तरं यत्तु श्राद्धं कुर्यात्तु सर्पिषा ।
यात्रार्थमिति तत्प्रोक्तं प्रवेशे च नसंशयः ॥
शरीरोपचये श्राद्धमर्थोपचय एव च ।
पुष्ट्यर्थमेतद् विज्ञेयमौपचायिकमुच्यते ॥

इति कालसारे

श्राद्धकालानाह याज्ञवल्क्यः—

अमावास्याऽष्टकावृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत् सूर्यसंक्रमः ॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः ॥ इति

प्रेतं पितृंश्च निर्दिश्य त्याज्यं यत्प्रियमात्मनः ।
श्रद्धया दीयते यत्तत्तच्छ्राद्धं परिकीर्त्तितम् ॥
इति कालसारे मरीचिः
संस्कृतं भोजनार्हं च पयोदधिघृतान्वितम् ।
श्रद्धया दीयते यस्माच्छ्राद्धं तेन निगद्यते ॥
इति तत्रबृहस्पतिः ।
विप्रस्वीकारपर्य्यन्तस्त्यागो द्रव्यस्य यः पितॄन् ।
उद्दिश्य मुख्यश्राद्धं तत्तदङ्गमितरत्स्मृतम् ॥
कालसारे मनुः प्रकाशित मनुस्मृतिपुस्तकेषु श्लोकोयं न दृश्यते ॥
अग्नौ हुतेन देवस्थाः पितृस्था द्विजतर्पणैः ।
नरकस्थाश्च तृप्यन्ति पिण्डैर्दत्तैस्त्रिभिर्भुवि ॥ इति

श्राद्धकल्पः— श्राद्धस्य विधिः । मनुः ३-११२

श्राद्धदेशः— पुष्करेष्वक्षयश्राद्धम् (१) एवमेवगयाशीर्षे (४) वटे (५) अमरकण्टकपर्वते (६) वराहपर्वते (७) यत्र-क्वचन नर्मदातीरे (८) यमुनातीरे (९) गङ्गायां विशेषतः । १०

श्राद्धदेशाः—

कुशावर्त्ते (११) बिन्दुके (१२) नीलपर्वते (१३) कनखले (१४) कुब्जाम्रे (१५) भृगुतुङ्गे (१६) केदारे (१७) महालये (१८) नडन्तिकायाम् (१९) सुगन्धायाम् (२०) शाकम्भर्याम् (२१) फल्गुतीर्थे (२२) महागङ्गायाम् (२६) त्रिहलिकाग्रामे (२४) कुमारधारायाम् (२५) प्रमासे (२६) यत्र क्वचन सरस्वत्यां विशेषतः (२७)
गङ्गाद्वारे प्रयागे च गंगासागरसंगमे ।
सततं नैमिषारण्ये वाराणस्यां विशेषतः ॥ २८
अगस्त्याश्रमे (२९) कण्वाश्रमे (३०) कौशिक्याम् (३१) सरयुतीरे (३२) शोणस्य ज्योतिषायाश्चसंगमे (३३) श्रीपर्वते (३४) कालोदके (३५) उत्तरमानसे (३६) बड़वायाम् (३७) मतङ्गवाप्याम् (३८) सप्तार्षे विष्णुपदे (४०) स्वर्गमार्गपदे (४१) गोदावर्य्याम् (४२) गोमत्याम् (४३) वेत्रवत्याम् (४४) विपाशायाम् (४५) वितस्तायाम् (४६) शतद्रुतीरे (४७) चन्द्रभागायाम् (४८) ईरावत्याम् (४९) सिन्धोस्तीरे (५०) दक्षिणपञ्च-नदे (५१) औसजे (५२) एवमादिष्वन्येषु तीर्थेषु (५३) सरिद्वरासु (५४) सर्वेष्वपि स्वभावेषु (५५) पुलिनेषु (५६) प्रस्रवणेषु (५७) पर्वतेषु (५८) निकुञ्जेषु (५९) वनेषु (६०) उपवनेषु (६१) गोमयेनोपलिप्तेषु गृहेषु (६२) मनोज्ञेषु (६३) अत्र च पितृगीता भवन्ति
कुलेऽस्माकं सजन्तुः स्याद् यो नो दद्याज्जलाञ्जलीन् ।
नदीषु बहुतोयासु शीतलासु विशेषतः ॥

विष्णुस्मृतिः ८५-६२

कूर्मपुराणे-२-६२ अध्याये च—
गङ्गायामक्षयं श्राद्धं प्रयागेऽमरकण्टके ।
गायन्ति पितरो गाथा नर्त्तयन्ति मनिषिणः ।
एष्टव्या बहवः पुत्रा शीलवन्तो गुणान्विताः ।

तेषां तु समवेतानां यद्येकोपि गयां व्रजेत् ।
गयां प्रप्यानुषङ्गेण यदि श्राद्धं समाचरेत् ॥
तारिताः पितरस्तेन स याति परमां गतिम् ।
वराहपर्वते चैव गयायां वै विशेषतः ।
वाराणस्यां विशेषेण यत्र देवः स्वयं हरः ॥
गङ्गाद्वारे प्रभासे तु बिल्वके नीलपर्वते ।
कुरुक्षेत्रे च कुब्जाग्रे भृगुतुङ्गे महालये ।
केदारे फल्गुतीर्थे च नैमिषारण्य एव च ॥
सरस्वत्यां विशेषेण पुस्करे तु विशेषतः ।
नर्मदायां कुशावर्त्ते श्रीशैले कर्णपद्रके ।
वेत्रवत्यां विशाखायां गोदावर्य्यां विशेषतः ।
एवमादिषु चान्येषु तीर्थेषु पुलिनेषु च ।
नदीनां चैव तीरेषु तुष्यन्ति पितरः सदा ॥

कूर्म पु. २-२० अध्याये

गोकर्णो गजकर्णश्च तथा च पुरुषोत्तमः ।
एतेषु पितृतीर्थेषु श्राद्धमानन्त्यमस्मृते ॥
इति मात्स्य इति श्राद्धप्रकाशे-१४४

**श्राद्धपुष्पम्**—रतिशक्ति र्वराकान्ता भोज्यं भोजनशक्तिता ।
दानशक्तिः सविभवा रूपनारोग्यसम्पदः ॥
श्राद्धपुष्पमिदं प्रोक्तं फलं ब्रह्मसमागमः ॥
इति मात्स्यपाद्मादिषु

**श्राद्धफलम्**— ब्रह्मसमागमः ।
फलं ब्रह्मसमागम इति वचनात् ।

**श्राद्धमित्रः**= श्राद्धेन यो मित्रतामर्जयति ।
यः संगतानि कुरुते मोहाच्छ्राद्धेन मानवः ।
स स्वर्गाच्च्यवते लोका च्छ्राद्धमित्रो द्विजाधमः ।
मनुः ३-१४०

**श्रान्तसम्वाहनम्**— श्रान्तस्य आसनशयनादिदानेन श्रमापनयनम् मिताक्षरा-१-२०६

**श्रामणकम्**— ग्रन्थविशेषः ।
तपस्विधर्मप्रतिपादकं वैखानससूत्रम् इति माधवः ।

**श्रावकः**— श्रावकाः श्वेतपटा इति हेमाद्रिः परि-५२०
बौद्धश्रावकनिर्ग्रन्थ शाक्तजीवककापिलान् ।
तत्रोक्तब्रह्माण्डपुराणे ।

**श्रावणा**— विज्ञापनम् । इदं क्रेयम् इदं विक्रेयमिति
श्रावणां श्रावयेद् विद्वान् ज्ञातिसामन्तसन्निधौ ।
मूल्यं यथावदादाय कर्म सर्वं तु दर्शयेत ॥
इति व्यवहारसमुच्चये भारद्वाजः ।

**श्रावणकम्**— वैखानसशास्त्रम् इति कल्पतरुः
मोक्षकाण्डे १२०

**श्रावणिकाग्निः**— (१) वानप्रस्थाश्रमविहितः अग्निः ।
ऊर्ध्वं पञ्चभ्यो मासेभ्यः श्रावणिकेनाग्नीनाधाय ॥
इति मिताक्षरायां वसिष्ठः ३-४५

उपलब्धवसिष्ठस्मृतौ तु श्रामणकेनाग्निमाधायाहिताग्निः स्यात् वसिष्ठः ६-१०

(२) तपस्विधर्मप्रतिपादकं वैखानसूत्रम् ।

इति माधवाचार्या श्रामणिक इत्युज्ज्वलावृत्तिपाठेः ।

श्रावणकेनाग्निमाधाये इति गौतमः १-३-२६

तत्र श्रावणकं वैखानसं शास्त्रम् तदुक्तेन प्रकारेण इति हरदत्तः एतेन श्रावणिक श्रावणक-श्रामणिक शब्दाः पाठभेदा एव इति विज्ञायते ।

श्रावणी— (१) श्रावणपूर्णिमा ।

श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या ।

पूर्वविच्छैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम् ॥

(२) श्रावणपूर्णिमायां विहितं सर्पबल्याख्यं ।

श्रवणाकर्माख्यं च कर्म इति संस्कारप्रकाशे ॥ १७

श्रीः— लक्ष्मीः ।

नवनवकवेत्तारमनुष्ठानपरं नरम् ।

इह लोके परत्रापि श्रीश्च तं नैव मुञ्चति ॥

दक्षस्मृतिः-३-१६

परान्नं परवस्त्रं च परयानं परस्त्रियः ।

परवेश्मनि वासश्च शक्रस्यापि श्रियं हरेत् ।

शङ्खलिखितस्मृतिः-१७

श्रीकृच्छ्रः— कृच्छ्रविशेषः ।

यदि बिल्वफलं मासं क्वथितं पीयते तदा ।

श्रीकृच्छ्रः फलकृच्छ्रश्च ।

श्रीकृच्छ्रः श्रीफलैः प्रोक्तः पद्माक्षैरपरस्तथा ।

मासेनामलैरेवं श्रीकृच्छ्रमपरं स्मृतम् इति यमः ॥

श्रीनिकेतनम्— रक्तबिल्वमिति हेमाद्रिः ।

मसूराः शणपुष्पाश्च कुसुम्भं श्रीनिकेतनम् ॥

इति तत्र ब्रह्मवैवर्त्ते ।

श्रीपञ्चमी— माघशुक्लपञ्चमी ।

माघे मासि सिते पक्षे पञ्चमी या श्रियः प्रिया ।

तस्याः पूर्वाह्न एवेह कार्यः सारस्वतोत्सवः ॥

अस्याः कालनिर्णये मत्कृता व्यवस्था यथा—

### वसन्तपञ्चमी निर्णयः

ओँ पावका नः सरस्वती वाजेभिर्वाजिनीवती ।

यज्ञं वष्टु धिया वसुः ऋक् १-३-१०

वेदाः शास्त्राणि सर्वाणि गीतनृत्यादिकं च यत् ।

न विहीनं त्वया देवि तथा मे सन्तु सिद्धयः ॥ १५

लक्ष्मीर्मेधा धरा पुष्टिर्गौरी तुष्टा प्रभा मतिः ।

एताभिः पाहि अष्टाभिस्तनूभिर्मां सरस्वति ॥ १६

मत्स्यपुराणे अ-६५

ध्यायं ध्यायं जगन्नाथं स्मारं स्मारं गुरोर्गिरः ।

वसन्तपञ्चमीकालं वदामि विदुषां मुदे ॥

सर्वत्र स्मृतिनिबन्धेषु श्रीपञ्चम्या उत्पत्तिवाक्यरूपेण

माघेमासि सिते पक्षे पञ्चमी या श्रियः प्रिया ।
तस्याः पूर्वाह्न एवेह कार्यः सारस्वतोत्सवः ॥
श्रियः प्रिया पञ्चमीति तस्या श्रीपञ्चमीसंज्ञापि प्रख्यातास्ति ।

अस्याः श्रीपञ्चम्याः पूज्यतानिरूपणे उत्कलीय निबन्धकाराणां मतानैक्यमालक्ष्य विवेक उपस्थाप्यते तत्रादौ दिव्यसिंहमहापात्रः कालदीपे माघेमासीत्यादि वाक्यमुल्लिख्य उदास्ते । पण्डितसर्वस्वकारश्च महता आडम्बरेण प्रदोषव्याप्तिं प्रतिषिध्य सोदयत्रिमुहूर्त्तव्याप्तिमुपदिशति कालसारकारो गदाधरस्तु माघेमासीति वाक्यमुल्लिख्यापि अस्मद्देशशिष्टैस्तु रात्रावेव सरस्वतीपूजा क्रियते इत्युल्लिलेख स्मृतिप्रकाशकृत् वासुदेवश्च रात्रिप्रथम प्रहरव्यापिनी ग्राह्येति निष्प्रमाणं निबबन्ध ॥

ये तावदेषु सरस्वतीपूजाकालं पूर्वाह्नमुपदिशन्ति ते । तत्प्रमाणरूपेण माघे मासीति वाक्यं निर्दिशन्ति । ये तु रात्रिपूजामुदाहरन्ति ते तत्र न किमपि प्रमाणमुपस्थापयन्ति रात्रिपूजायां शिष्टाचारमात्रं दर्शयन्नपि गदाधरस्तद्ग्राह्यतायां पूर्वाह्नव्याप्तिं प्रदोषव्याप्तिं वा न विशिष्य दर्शितवान् तदुक्ता रात्रिपूजापि न निर्विवाददेशाचारः दिव्यसिंहादिभिरेतद्देशीयैरपि तथ नुक्तत्वात् तेनापि सर्वत्र नास्मद्देशे विचार्य्यते । अस्मद्देशसमाचाराभावान्न व्यवस्थाप्यते इत्यादिना सामान्येन तद्देशीयशिष्टजनमा-

ऽऽचारज्ञापनात् देशाचारसङ्कोचः शिष्टान्तरसम्मत्य-भावश्च शब्देनानुक्तोऽपि स्पष्टमुद्दङ्कितः । देशजातिकुलधर्मा आम्नायैरविरुद्धाः प्रमाणमिति ॥ गौतमोक्तेर्निर्विवादोऽपि देशाचारो यत्रा शास्त्रविरुद्ध-स्य न प्रामाण्यमर्हति किमु तत्र निर्मूलो विवादास्पदी-भूतो देशाचारः ।

वस्तुतस्तु तादृशो देशाचारः कदाचिदपि नासीत् पु-रातनपञ्जिकासु तथा अनुपलम्भात् लक्ष्यते च १८३२ शकाब्दे पूर्वेद्युः चतुर्थी द-६-५ वती ॥ परेद्युः पञ्चमी द ६-३ वती तत्र परेद्युः सरस्वतीपूजा विहिता तथा १८३७ शकाब्दे पूर्वेद्युः चतुर्थी १७-१० परेद्युः पञ्चमी द-२६ तत्रापि पूजा परेद्युः कृता १८४० शकाब्दे पूर्वेद्युः चतुर्थी द-५-३८ ॥ परेद्युः पञ्चमी द १६-८७ तत्र च पूजा परेद्युः सम्पादिता एवमन्येष्वपि वर्षेषु निर्विवादमाचरितेति ।

सम्प्रत्यपि रात्रिपूजाचारो न लक्ष्यते सर्वत्र हि विद्यालयेषु बालकाबालिकाश्च आपञ्चमाद्वर्षात्सरस्वतीं पूजयन्ति दिवैव न तावद्रात्रि यावदुपवाससामर्थ्य मेषामस्ति, न च क्वापि रात्रावेव पूजा क्रियते तैरिति । एतेनाय देशाचारोऽपि रात्रिपूजापक्षं नानुसरतीति सर्वथा रात्रिपूजामनादृत्य पूर्वाह्नपूजा समादरणीया । शास्त्रमप्यस्या अनुकूलम् तदुक्तं देवीभागवते नवमे चतुर्थाध्याये —

शृणु नारद वक्ष्यामि कण्वशाखोक्तपद्धतिम् ।
जगन्मातुः सरस्वत्याः पूजाविधिसमन्विताम् ।। ३३
माघस्य शुक्लपञ्चम्यां विद्यारम्भदिनेऽपि च ।
पूर्वेऽह्नि समयं कृत्वा तत्र हि संयतः शुचिः ॥ ३४
स्नात्वा नित्यक्रियाः कृत्वा घटं संस्थाप्य भक्तितः ।

इत्यादिना स्नानसन्ध्याद्यनन्तरं सरस्वतीपूजा समुपदिष्टा ।

मत्स्यपुराणेऽपि पञ्चषष्टितमेऽध्याये—

सम्यक् पृष्टं त्वया राजन् शृणु सारस्वतं व्रतम् ।
यस्य संकीर्त्तनादेव तुष्यतीह सरस्वती ॥
यो यद्भक्तः पुमान् कुर्य्यादेतद्व्रतमनुत्तमम् ।
तद्वासरादौ सम्पूज्य विप्रानेतान्समाचरेत् ॥
मौनव्रतेन भुञ्जीत सायं प्रातस्तु धर्मवित् ।
पञ्चम्यां प्रतिपक्षंच पूजयेद्ब्रह्मवासिनीम् ॥
सन्ध्यायां च तथा मौनमेतत्कुर्वन्समाचरेत् ॥
नान्तरा भोजनं कुर्य्याद्यावन्मासास्त्रयोदश ॥

इत्यत्रापि त्रयोदशमासिकसारस्वतव्रते वासरादिपदेन पूर्वाह्ण एव पूजाकालत्वेनोक्तः। सायंतु मौनमात्रं व्रताङ्गमुपदिष्टमिति न तस्य प्राधान्यमङ्गीकर्त्तव्यम् नापि तेन व्यवस्था विधेया। माघे मासीत्यादि वाक्यमपि स्पष्टतया पूर्वाह्णपूजामभिधत्ते । श्रुतिरपि पूर्वाह्णो वै देवानामिति पूर्वाह्णपूजां द्रढयतीति पूर्वाह्णव्याप्त्या सरस्वतीपूजा कार्य्यैव ।

गदाधरमतेनापि पूर्वाह्णव्याप्तिग्रहणं नानुपपन्नं, यतश्चायं कालसारे ऽनन्तव्रतनिर्णये ।

मध्याह्ने भोज्यवेलायां समुत्तीर्य्य सरित्तटे ।
ददर्श शीला सा स्त्रीणां समूहं रक्तवाससाम् ।
चतुर्दश्यामर्च्चयन्तं भक्त्या देवं पृथक् पृथक् ॥

इत्यनन्तव्रतकथानकपठितमपि मध्याह्नकालं प्रमाणान्तरसद्भावे लिङ्गस्योपोद्बोलकत्वं नात्र प्रमाणान्तरमस्तीति युक्त्या बाधित्वा सोदयत्रिमुहूर्त्तकालमेव व्यधात् । पूर्वाह्णो वै देवानामिति श्रुत्या दैवकृत्ये विहितस्य पूर्वाह्णस्य कर्मकालत्वे दैवे ह्यौदयिकी ग्राह्या इति वाक्यात् सोदयत्रिमुहूर्त्तव्याप्तेरेवात्र प्राप्तत्वादिति निर्द्दिशन् अतस्तदनुसारमत्रापि पूर्वाह्णः प्राप्नोत्येव ।

इत्थं श्रीपञ्चम्या पूज्यतायां निर्णीतायां यदि केश्चित्कुलाचारानुरोधेन रात्रौ पूजा क्रियते न तत्र कश्चिद्विरोधः सर्वमतेन पूर्वाह्णव्याप्तिग्राह्ये गौरीव्रते रात्रिपूजासमाचारवदुपपत्तेरित्यस्मदाचार्यचरणानां प्रधानचार्य्य श्रीमदानन्दमिश्रशर्ममहोदयानां सिद्धान्तः। तेन गदाधरदर्शिता रात्रिपूजा पूर्वाह्णव्याप्तेर्न बाधिका न वा प्रदोषव्याप्तेः साधिकेति मन्तव्यम् ।

ननु 'पञ्चम्यां कुन्दकुसुमैः कौन्दी पूज्या समृद्धये' इति कुन्दपुष्पविकाशकालानुरोधात् प्रदोषः कर्मकालत्वेन स्वीकर्त्तव्य इति चेत् तन्न कुन्दकुसुमोक्तिलिङ्गेन माघे मासीत्यादिसाक्षात्पूर्वाह्णश्रुतेर्बाधायोगात् ।

अनन्तव्रतादौ गदाधरादिभिस्तथा निर्णीतत्वात् पूर्वाह्णेऽपि पूजायां कुन्दकुसुमव्यवहारस्यानिषिद्धत्वाच्च ।

वस्तुतस्तु रात्रिपूजापक्षे सायं प्रस्फुटितसद्यःपुष्पेण पूजाविधानं न सम्भवति सायं कुसुमावचयस्याप्रसिद्धत्वात् ।

स्नानंकृत्वा तु ये केचित् पुष्पं गृह्णन्ति वै द्विजाः
देवतास्तन्नगृह्णन्ति भस्मीभवति काष्ठवत् ॥ ४१

इति लघुहारीतोक्त्या तथा—

स्नात्वा पुष्पं न गृह्णीयाद्देवायोग्यं तदीरितम् ।

१६६-२६

इत्याग्नेयपुराणवचनेन च स्नानोत्तरं पुष्पचयनस्य निषिद्धत्वात् तथा—

प्रातरुत्थाय चिनुयात् स्वारामात् स्वयमेवहि ।
पूजार्थमत्रमन्त्रेण पुष्पादीन् प्रयतः सदा ॥

अत्र प्रातर्वचनम् अष्टधा विभक्तदिवसस्य अह्नो द्वितीयभागोपलक्षणार्थम् । अतएव दक्षः समित्पुष्प कुशादीनां द्वितीयः परिकीर्त्तितः इति पूजाप्रकाशे ७० अष्टधाविभक्तस्य दिवसस्य द्वितीयभाग एव देवपूजार्थ पुष्पचयनकालत्वेनोक्तत्वाच्च ।

पूर्वेद्युः सायं प्रस्फुटितस्य परेद्यु प्रातरवचितस्य कुन्दकुसुमस्य परदिनरात्रिपूजापेक्षया पूर्वाह्णपूजामधिकं साद्यस्कत्वमिति कुन्दकुसुमानुरोधेनापि रात्रिपूजापेक्षया पूर्वाह्णपूजा युक्ततरा इति न कस्यचिदपि सचेतसः विगतः स्यात् यत्तु—

पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।
प्रतिपन्नवमी चैव कर्त्तव्या सम्मुखी तिथिः ।
सम्मुखी नाम सायाह्नव्यापिनी गृह्यतां सदा ॥

इति पञ्चम्याः सम्मुखीतिथित्वेनात्र सायाह्नव्याप्तिः स्वीकार्य्येति तदप्ययुक्तम् । यत्र हि साक्षात्कर्मकालश्रुतिर्नास्ति तत्रैव तादृशस्य सामान्यवचनस्योपयोगः यत्र तु कर्मकालविशेषः स्मर्य्यते तत्र प्रातिस्विककर्मकालो गृह्यते यथा नागपञ्चम्यां मध्याह्नः ऋषिपञ्चम्यामपराह्णः घोटकपञ्चम्यां सायाह्नः रक्षापञ्चम्यां प्रदोषस्तथात्र श्रीपञ्चम्यां पूर्वाह्णः इति ।

यच्च पञ्चमी तु सदा ग्राह्या चतुर्थी संयुता विभो इति स्कान्दोक्तेः पञ्चमी पूर्वविद्धैव व्रतेषु निखिलेष्वपीति माधवीयसिद्धान्ताच्च प्रदोषव्यापिनी गृह्यतामिति तन्न नहि तिथेः पूर्वविद्धत्वमात्रेण प्रदोषव्याप्तिर्गृह्यते किन्तु कर्मकालव्याप्त्यैव व्यवस्था क्रियते कर्मकालस्य मुख्यत्वात् ।

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्

इति वचनात् ॥

तिथिविषयविशेषशास्त्रात् कर्मविशेषविशेषशास्त्रं प्रबलं तिथेर्गौणत्वात् कर्मणश्च प्रधानत्वात् इति माधवीयसिद्धान्ताच्च । तेन सर्वत्र कर्मकालानुसारेण

ग्राह्यतिथिर्निरूप्यते तिथि द्वैध स्थलेषु तु पूर्वविद्धापर-विद्धाविधायकवचनाश्रयणेन व्यवस्था क्रियते यथा—

श्रावणी दुर्गानवमी तथा दूर्वाष्टमी च या ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनमिति ॥

पूर्वविद्धत्वेन सुप्रसिद्धस्यापि पर्वपञ्चकस्य प्रातिस्विकः कालो गृह्यते श्रावण्यामध्याह्नः दुर्गानवम्याः मतभेदेन प्रदोष निशीथौ दूर्वाष्टम्याः पूर्वाह्नः शिवरात्रेः प्रदोष-निशीथौ वल्युत्सवस्य प्रभात इति व्रतभेदेन कर्मकाल भेदमाश्रित्य व्यवस्था गदाधरादिभिः कृता तथात्र श्रीप-ञ्चम्यामपि पूर्वाह्नव्याप्तया विधेयेति न कश्चिद्विरोधः । दिनद्वये सूर्योदये त्रिमुहूर्त्तसत्वे त्रिमुहूर्त्तासत्वे च पूर्वे-द्युरेव पूर्वोक्तपूर्वविद्धायकवचनबलात् इति सर्वं सुस्थितम् ॥

ननु सरस्वत्याः सायं सन्ध्यात्वेन प्रसिद्धेः सायं-सन्ध्यैव पूजाकालोऽस्तु इति चेदुच्यते तत्र हि गायत्र्या-स्त्रिकालपूजयता सवित्री सरस्वतीरूपता च विवक्षिता न पुनः सरस्वत्या गायत्रीसावित्रोभिन्नता एका हि सा तत्सवितुरिति ऋक् गायत्रीच्छन्दस्कत्वेन तथा गायन्तं त्रायत इति च गायत्री सविता देवता अस्या इति सावित्री विद्यात्वेन च सरस्वतीति नैता भिन्नाः सवितुः पत्नी सावित्रीति व्याख्यानेनापि सावित्र्याः सरस्वतीभिन्नता नास्ति ।

सरांसि घृतवन्त्यस्य सन्ति लोकेषु यत्त्रिषु ।
सरस्वन्तमिति प्राह वाचं प्राहुः सरस्वतीम् ॥ २५१

इति बृहद्देवतापाठात् गायत्र्यादिशब्दोऽपि सरस्वत्याः पर्य्यायत्वेन पठ्यते तथा च मात्स्ये तृतीया-ध्याये ।

स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत् ।
शतरूपा च स ख्याता सावित्री च निगद्यते ॥ ३१

सरस्वत्यथ गायत्री ब्रह्माणी च परन्तप इत्यादि वाग् वै गायत्रीति श्रुतिश्च गायत्र्याः सरस्वतीत्वं प्रतिपादयति एतेन गायत्र्यास्त्रिकालपूज्यतैव प्रदर्शिता । प्रकृतेनित्य-सत्यरूपायाः सर्वकालपूज्यायाः सरस्वत्याः प्रथमप्राप्तप्रातः पूजापरित्यागेन सायंपूजाविधाने मानाभवात् पूर्वाह्न एव मुख्यः पूजाकालः । कथंचित् मुख्यकाले पूजाकरणा-सम्भवे प्रतिनिधित्वेन मध्याह्न प्रदोषा अपिग्रहणीयाः । न पुनस्तादृशैः कालैस्तिथेः ग्राह्यता अशङ्कनीया ॥ सर्वथा दिनद्वये मुख्यकर्मकाले पञ्चम्या अलाभे एक भक्ताद्युक्तन्यायेन पूर्वेद्युः गौणकालव्याप्त्यापि निर्णयो विधातव्यः ।

मुख्यकाले यदावश्यं कर्म कर्त्तुं न शक्यते ।
गौणकालेऽपि कर्त्तव्यं गौणोऽप्येतादृशो मतः ॥

इति सिद्धान्तात्

पुनश्च श्रुतिरूपत्वेन नित्याया अपि सरस्वत्या औपचा-रिक तथा पूर्वसन्ध्यैव जन्मकाल इति निर्णीयते । अहं बहु स्याम् । यो वै ब्रह्माणं विदधाति पूर्वं वेदांश्च

तस्मै प्रहिणोति सर्वान् भूरिति भूलोकमित्यादि श्रुतिभिः सृष्टयारम्भसमकालमेव श्रुतिरूपायाः सरस्वत्याः प्रकाशप्रतिपादनात् ॥

चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रन्तु तदा सूर्योदये सति ॥ इति

सूर्योदयस्यैव सृष्टिकालत्वेन कीर्त्तनात् पूर्वसन्ध्यायामेव सर्वेषां बोधोदयाच्चबोधरूपायास्तस्याः पूर्वसन्ध्यायामेव मुख्यमिति पूर्वाह्न एव पूजाकालत्वेन ग्राह्यो न प्रदोषः ।

ननु इन्द्रमहेन्द्राधिकरणन्यायेन सरस्वतीगायत्र्यादिभ्यः पृथग्देवता नामभेदात् इत्यस्याः सायंकालरूपायाः सायंपूजा युज्यत एवेति तन्न । तत्र हि वृषारूढ़ा त्रिनेत्रा चन्द्रशेखरा सरस्वती ध्यायते न तादृशी सरस्वती कुत्रापि केनापि विद्यार्थिना श्रीपञ्चम्यां पूज्यत इति सर्वमव्याकुलम् ।

अस्यामेव माघशुक्लपञ्चम्यां यद्देवविग्रहाः प्रावरणं परित्यजन्ति श्रीजगन्नाथविग्रहाश्च यद्वसन्तवेशं धारयन्ति तत्र न प्रदोषव्याप्तिर्न सायाह्नव्याप्तिर्नापि सोदयत्रिमुहूर्त्तव्याप्तिरपेक्षते किन्तु दैवे ह्यौदयिकी ग्राह्येति नारदवचनादुदय वेधेनैव व्यवस्था, श्रीपुरुषोत्तमश्रीभुवनेश्वरक्षेत्रप्रासादयोरुदयवेध एव गृह्यते इति कालसारसिद्धान्ताच्च यत्र तु दिनद्वयेऽप्युदयसम्बन्धस्तत्र पूर्वोद्य रेव वसन्तपञ्चमीकृत्यं तिथि मलस्याकर्मण्यत्वात् ।

षष्टिदण्डात्मिकायास्तु तिथेर्निष्क्रमणे परे ।
अकर्मण्यं तिथिमल त्यजेदेकादशीं विना इति वचनात् ।
यत्तु श्रीजगन्नाथदेवमन्दिरेऽपि रात्रौ सरस्वती पूजा क्रियते तदनुरोधेन प्रदोषव्यापिनी तिथिर्गृह्यतामिति चेदुच्यते वसन्तपञ्चम्यां हि श्रीनीलाद्रिनाथस्य वसन्तगुण्डिचायात्रा विहिता श्रीपुरुषोत्तमक्षेत्रमहात्म्ये २१ अध्याये ।

माघमासस्य पञ्चम्यामष्टम्यां चैत्रशुक्लके ।
एते कालाः प्रशस्ता हि गुण्डिच ख्यमहोत्सवे ॥

इति नीलाद्रिमहोदये च त्रयस्त्रिंशदध्याये—

माघमासस्य शुक्लायां पञ्चम्यां नृपसत्तम ।
मध्याह्न पूजनस्यान्ते कौसुमैरम्बरोत्तमैः ॥
सर्वाङ्गे मण्डयेद् विष्णोर्भक्तिभाव समन्वितः ।

इत्यादिविधिमुक्त्वा ।

वसन्तगुण्डिचेत्येवं पश्यन् जन्मी च यो भवेत् ।
घोषयात्राफलं सोऽपि प्राप्नुयान्नात्र संशयः ॥ इति

तत्र वसन्तगुण्डिचायात्रायाम् उदयव्यापिन्यां पञ्चम्यां निर्णीतायां तदङ्गत्वेन तद्देहर्विहिते देवप्रतिमानां यात्राप्रत्यावर्त्तनानन्तरभाविनि सरस्वत्यदैवतके नारिकेलभङ्गकर्मणि नान्या तिथिर्गृह्यते अपितु अङ्गिनः वसन्तोत्सवस्य औदयिके तिथौ विहितत्वात् तदनुरोधेन अङ्गस्यकरणकर्त्तृकनारिकेलभङ्गादिकर्मणः तद्दिने रात्रौ पञ्चमीसत्त्वे पञ्चम्यसत्त्वे च विधीयते इति नात्र प्रदोष-

व्यापिन्यामेव पञ्चम्यां सरस्वतीपूजा क्रियते इति भ्रमः कार्य्यः ।

ननु यदा पञ्चमी सूर्य्योदये त्रिमुहूर्त्ता नास्ति ततः षष्ठी तद्दिने सूर्य्योदयव्याप्त्या वसन्तपञ्चमी तत्पूर्वदिने पूर्वविद्धावचनेन श्रीपंचमी प्राप्नोतीति वसन्तपंचमी श्रीपंचम्योर्भेद आपतित इति तदोमिति भ्रमः श्रीपञ्चमीनिर्णये पुरुषार्थचिन्तामणौ अत्र उत्तरदिने एव पूर्वाह्णव्याप्तौ उत्तरा अन्यदा तु पूर्वैव इत्युक्तम् यत्पुनर्मनुना ।

पुष्ये तु छन्दसां कुर्य्याद् वहिरुत्सर्जनं द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि ॥

४-९६ इति

माघशुक्लप्रतिपदि पाक्षिकवेदोत्सर्गविधानात् ।

उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् ॥

मनुः ५-११६

इति च ततस्त्रिरात्रानध्यनानन्तरं पूर्णातिथौ-माघशुक्लपञ्चम्यां पुनर्वासन्तवेदारम्भे प्राप्ते सरस्वती-पूजापूर्वकमेवाध्ययनप्रवृत्तिरित्युदयवेधग्राह्यायामाश्म-पनिकतिथौ श्रीपञ्चम्या निरूपणं युक्तमिति तत्रोच्यते यदत्र पूजायामिदमेव निदानमिति दृढ़प्रत्ययः स्यात् यदि वा तदर्थसाधकं वचनं लभ्येत तर्हि तथा विधानं युज्यते अन्यथा साक्षात्पूर्वाह्णश्रुतिं न निर्मूलयुक्तिर्व्याह-न्तुमीष्टे इति सर्वं समञ्जसमिति वसन्तपञ्चमी निर्णय ।

१६-३-७३

**श्रीपर्णी**— वृक्षविशेष ।

स च गह्मारी इति प्रसिद्धः ।

श्रीपर्णी गम्भारी इति कल्पतरौ दानकाण्डे-५४

अस्य काष्ठं प्रशस्तं दन्तधावने इति शेलुशब्दे द्रष्टव्यम् ।

अस्य काष्ठेन भद्रासनं क्रियते इति भद्रासनशब्दे द्रष्टव्यम् ।

**श्रीपर्वतः**— विशिष्टश्राद्धदेशः विष्णुः ८५-३८

स च दक्षिणदेशस्थः श्रीशैलः मल्लिकार्जुनस्थानमिति वैजयन्त्यां नन्दपण्डितः ॥

**श्रीफलम्**— विल्वफलम् ।

सोपरोदकगोमूत्रैः शुद्धयत्याविलकौशिकम् ।
सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा ॥

याज्ञ-१-१८६

**श्रीफलकृच्छ्रः**— मासाभ्यवहारानुवृत्तौ विष्णुः ४६-१६

विल्वाभ्यवहारेण श्रीफलकृच्छ्रः ॥ इति

**श्रीवासवम्**— विल्वनिर्यासः इति पूजाप्रकाशे मित्रमिश्रः ।

**श्रीशैल**— पुण्यक्षेत्रविशेषः ।

स च कुनुलमण्डले कृष्णाष्टेसनुतः-२५

कोशदूरे कृष्णानद्याः दक्षिणभागे वर्तमानः पर्वत-
विशेष इति काणे इतिहासे ।
गोदावर्यां गयायां च श्रीशैले ग्रहणोदये ।
सुरासुरगुरूणां च मौढ्यदोषो न विद्यते ॥

श्रीसूक्तम्— हिरण्यवर्णां हरिणीम् इति पञ्चदशर्चं सूक्तम् ।

श्रुतम्— शास्त्रम् ।
वेदोऽङ्गानि धर्मोध्यात्मवित्त्वं विज्ञानं स्मृतिश्चेति
षड्विधं श्रुतम् इति हारीतः ।
अत्र धर्मः धर्मशास्त्रम् स्मृतिः वेदशास्त्राविस्मरणम्
इति माधवाचार्याः ।
श्रुतं मन्त्रब्राह्मणविभागेन वेदार्थपरिज्ञानमिति
हरदत्तः ।
श्रुतं तु सर्वेभ्यो गरीयः गौतमः १-६-१६

श्रुतागतम्— श्रुतेन अर्जितं धनम् ।
श्रुतागतं धनं शुक्लमिति शुक्लशब्दे द्रष्टव्यम् ।

श्रुतिः— (१) वेदः ।
श्रुतिस्मृती च विप्राणां चक्षुषीदेवनिर्मिते ।
काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्तितः ॥
हारीतस्मृतः १-२४
श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥
मनुः-२-१०

सा च श्रुतिः षड्भागा विधिनिषेधार्थवादमन्त्र-
नामधेयोपनिषद्भेदात् ।
तत्र विधेस्तावत्तत्तदविषयप्रवर्त्तकताबोधकत्वेन
धर्मे प्रामाण्यम् यथा वायव्यं श्वेतमालभेत भूतिकामः
इत्यादेर्द्रव्यदेवतासंयोगानुमित वायुदेवत्ययागप्रवर्त-
बोधकत्वेन । निषेधस्य तु निवर्त्तनाबोधकत्वेन
यथा न कलञ्जं भक्षयेदित्यादेः अर्थवादो द्विविधः
प्राशंसार्थवादो निन्दार्थवादश्च तत्राद्यो विध्यपेक्षित-
प्रशस्त्य समर्पणेन यथा— वायुर्वै क्षेपिष्ठा देवता इत्यादिः । निन्दार्थवादः विधेयनिषिद्धनिन्दासमर्पणेन
यथा— यदश्रु अशीर्यत तद्रजतमभवदित्यादिः ।
तस्माद् बर्हिषि रजतं न देयमित्यादिनिषिद्धरजतदा-
ननिन्दार्थतया । कश्चिदर्थवादः प्रशंसार्थोऽपि
संदिग्धार्थनिर्णायकत्वेन प्रमाणम् । यथा अक्ताः शर्करा
उपदधाति तेजो वै घृतम् इत्यादिः ॥
देवस्यत्वेत्यादिमन्त्राणां अनुष्ठेयार्थस्मारकत्वेन ॥
ज्योतिष्टोमादिनामधेयानां तु भावनाकरणीभूत-
धात्वर्थपरिच्छेदकत्वेन । अनर्थकस्तोमानां तुगीति
कालपरिच्छेदकत्वेन ।
उपनिषदां तु अनर्थनिबर्हणसिद्धरूपब्रह्मज्ञापनार्थ-
त्वेन इत्येवमादि । इति परिभाषाप्रकाशे मित्रमिश्रः
श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लंघ्य वर्त्तते ।
आज्ञाच्छेदी मम द्वेषी न स भक्तो न वैष्णवः ॥
इति पराशरमाधवे प्रायश्चित्तकाण्डे-८

(२) सङ्गीतशास्त्रप्रसिद्धा श्रुतिः सा च—

श्रूयते इति श्रुतिः द्वाविंशतिविधा सप्तस्वरेषु तथाहि षड्जमध्यमपञ्चमाः प्रत्येकं चतुः श्रुतयः ऋषभधैवतौ प्रत्येकं त्रिश्रुतौ गान्धारनिषादौ प्रत्येकं द्विश्रुतौ इति मिताक्षरायां विज्ञानेश्वरः ३--११५

श्रुवा— वैकङ्कतफलम् इति नित्याचरप्रदीपे वोचशब्दो द्रष्टव्यः ।

श्रेणिः—
श्रेणी— } नानाजातीनामेकजातीयकर्मोपजीविनां सङ्घातः ।

श्रेणिरिति विज्ञानेश्वरः याज्ञ-२-३०

कारुशिल्पिप्रभृतीनां निवहः श्रेणिरुच्यते ।
श्रेणयः एककर्मप्रवृत्ताः वणिकृषि वलप्रभृतयः ॥

कल्पतरुः-राजधर्म-२०

श्रेणिः संजातीयसमूह इति कल्पतरुः ।

बन्धुवर्मशिलालेखे तथा दृश्यते ॥

पूगविपरीताः श्रेणय इति व्यवहारमयूखे नीलकण्ठः ।

श्रेणयः रजकाद्यष्टादशहीनजातय इति सरस्वती विलासे ।

श्रेयोवसीयः— शुक्लैकादशीदिनभागमात्रम् ।

कालमाधवः-२

श्रोणः— अमुष्कः इति त्रिकाण्डमण्डनव्याख्यायाम्-२-६१ कारिकादण्डशब्दे द्रष्टव्या ।

श्रोणी— ककुद्मती याज्ञ-३-८७

कटिः श्रोणिः ककुद्मती इत्यमरः २-६-७४

श्रोत्रियः— ब्राह्मणविशेषः ।

धर्मेण वेदनामेकैकां शाखामधीत्य श्रोत्रियो भवति ।

आपस्त २-३-६-४

मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च ततः परम् ।
अनूचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः ॥
एकां शाखां सकलां वा षड्भिरङ्गैरधीत्य वा ।
षट्कर्मनिरतो विप्र श्रोत्रियो नाम धर्मवित् ॥

इति देवलः

स्कन्दपुराणे तु सकलास्थाने सकल्पामिति पाठः स एव युक्ततरः कल्पस्योपादेयत्वात् ॥

स्कन्द, माहे-२-५-११४

ओंकारपूर्विकास्तिस्रः सावित्रीं यश्च विन्दति ।
चरितब्रह्मचर्यश्च स वै श्रोत्रिय उच्यते ।

इति यमः

ओङ्कारपूर्विका महाव्याहृतीः ।
जन्मना ब्राह्मणो ज्ञेयः संस्कारैद्विजउच्यते ।
विद्यया चापि विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥

इति ब्रह्मवैवर्त्ते

श्लघा - शोभ मलापकर्षणम् ।

उत्पन्नश्लाघः आपस्त १-१-२-२७

श्लाघा शोभा लत्सन्ना यस्य सः उत्सन्नश्लाघः

एवं भूतो भवेत् । प्रक्षणादिना मुखादिकमुज्ज्वलं
न कुर्यात् इति हरदत्तः-२७
मलापकर्षणं श्लाघा जले क्रीडा वा इति अन्यत्र ।
नाप्सु श्लाघमानः स्नायात् आपस्त-१-१-२-३०

**श्लेषितः—** सन्धितः ।
वाहुकण्टक युद्धेन तस्य कर्णोऽथ युध्यतः ।
विभेदसन्धि देहस्य जराया श्लेषितस्य हि ॥
महाणा, शा, ५-४

**श्लेष्म—** (१) जत्वादि । अठा इति भाषायाम् ।
श्लेष्म जत्वादि येन विश्लिष्टं चर्मादि सन्धी
यते इति हरदत्तः आपस्त १-७-२०-१२
श्लेष्मा चर्मादिसन्धानहेतुर्वृक्षनिर्यास इति नरसिंह-
वाजपेयी ।
श्लेष्म तोक्मकिण्वसुक्ता इति तत्र बौधायनः ।
(२) श्लेष्म रथकील इति कृत्यरत्नाकरे-७५
श्लेष्म वा एतद् यज्ञस्य यद्दक्षिणा न वा श्लेष्मा रथे
वहति इति ब्राह्मणम् ॥

**श्लेष्मा—** कफः ।
मलविशेषः मनुः ५-१३५ अमरः २-६-६२

**श्लेष्मातकः—** शेलुरिति हेमाद्रिः ।
बहुवारक इति वीरमित्रोदये परिभाषाप्रकाशे ॥
गर्भणा इति भाषाप्रसिद्धः ।

**श्लोकाध्यायः—** देव सवितः प्रसुव यज्ञमित्यादिः ।
उत्सर्गमयूख-१४
दक्षिणे द्वारपालौ तु रुद्रान् पुरुषसूक्तम् ।
श्लोकाध्यायं शुक्रियं च मण्डलाध्यायमेव च ॥ इति

**श्वजाघनी—**श्वपुच्छम् इति स्मृतिचन्द्रिका-आह्निक-४५

**श्वपचः—** चाण्डालाद् वैश्यकन्यायां जातः ।
चाण्डालाद् वैश्यकन्यायां जातः श्वपच उच्यते ।
श्वमांसभक्षणं तेषां श्वान एव च तद्बलम् ॥
औशनसस्मृतिः-१३

**श्वपाकः—** क्षत्तुरुग्रायां जातः ।
क्षत्तुर्जातस्तयोग्रायां श्वपाक इति कीर्त्यते ॥
मनुः १०-१९
चण्डालः पुल्कसीसङ्गाच्छ्वपाकं जनयेत्सुतम् ॥
इति जातिविवेके ।
स च लोके माहार इत्याचारेन्दौ ।

**श्वभ्रः—** गर्तः ।
जलौघपल्वलेमग्ना मेघविद्युद्धतापि वा ।
श्वभ्रे वा पतिताऽकस्माच्छ्वापदेनापि भक्षिता ॥
इति पराशरः मिताक्षरायाम् ३-२६४

**श्वयुक्—** श्वक्रीडी ।
देवलस्मृतौ श्राद्धवर्ज्यब्राह्मणवर्गे तस्योल्लेखः ।

**श्ववृत्तिः**— सेवा ।

सत्यान्ततं तु वाणिज्यं तेन चैवापि जीव्यते ।

सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ॥

मनुः ४-६

**श्वशुर्यः**— श्वशुरस्य पुत्रः शालक इत्यर्थः विष्णुः २२-४४

श्वशुर्यः शालक इति कल्पतरौ शुद्धि ५४

**श्वश्रूः**— भार्याया जननी भर्त्तुश्च जननी ।

**श्वागणिकः**— यः कुक्कुरैः जीवति ।

यः श्वगणेन जीवति इति विज्ञानेश्वरः १-२८८

(२) सम्यक् श्रवणम् ।

**श्वावित्**— श्वावित् भक्षकव्याघ्रविशेष इति हेमाद्रिः ।

श्वाविड् श्वदंशमृगा इति गोविन्दस्वामी ।

बौधा १-५-१२-५

श्वाविद् वराहविशेषः यस्य नाराचाकाराणि

इत्युज्ज्वलावृत्तौ हरदत्तः ॥

तन्मते यस्य चर्मणा तनुत्राणं क्रियते स शल्यक इति ॥

गौतमव्याख्यायां कल्पक इति २-८-२७

वैद्यकशब्दसिन्धौ तु शशकः शल्लकी मृगो वेति ।

श्वाविच्छलाकाशल्ललि इति गोभिलस्मृतः ३-८३

**श्वित्रः**—<br>**श्वित्री**— } श्वेतकुष्ठी-मनुः-३-७

**श्वेतपाका**— गुञ्जा ।

**श्वेतयूथिका**— हेमकुसुमानि इति हेमाद्रिः परि-६८३

**श्वेतवीर्या** — गिरिकर्णी इति शान्तिमयूखे ।

**श्वेतशाली**— परिमाणविशेषः इति धर्मकोषे ।

## (ष)

**षः**— प्राणः ।

षकारः प्राण उच्यते इति वृद्धहारीतस्मृतिः ६-२१६

**षट्कर्माणि**— स्नानं सन्ध्या जपो होमो देवतानां च

पूजनम् ।

आतिथ्यं वैश्वदेवं च षट् कर्माणि दिने दिने ॥

इत्याचारभूषणे पराशरः

**षट्तिली**— तिलस्नायी तिलोद्वर्त्ती तिलहोमी तिलोदकी

तिलभुक् तिलदाता च षट्तिली नावसीदति ॥

सकृत्तु षट्तिली भूत्वा सर्वपापैः प्रमुच्यते ॥

इति विष्णुधर्मोत्तरे

**षट्त्वचः**— तस्य षोढा शरीराणि षट्त्वचो धारयन्ति

च । याज्ञ-३-८४

रक्तमांसमेदोऽस्थिमज्जाशुक्राख्याः षड्धातवः

एव रम्भास्तम्भत्वगिव बाह्याभ्यन्तररूपेणस्थिताः ॥

त्वगिवाच्छादकत्वात् त्वचः ।

विज्ञानेश्वरः ।

क्षीरस्य पच्यमानस्य यथा सन्तानिका भवेत् ॥
पच्यमानस्य शुक्रस्य रजसश्च तथा त्वचः ।
पूर्वावभासिनी तासां निध्मस्थानं च सा स्मृता ।
शरीरे षट् त्वचः तद् यथा—
उदकधरा असृक्धरा सिध्मकिलाससम्भवाधिष्ठाना कुष्ठसम्भवाधिष्ठाना अलजीविद्रधिसम्भवाधिष्ठाना यस्यां छिन्नायां ताम्यत्यन्ध इव च तमः प्रविशति यां चाप्यधिष्ठाय अरूंषि जायन्ते पर्वसन्धिषु कृष्ण-रक्तानि स्थूलमूलानि इति षट्त्वचः ।
एताः षडङ्गं शरीरमवतत्य तिष्ठन्ति ॥
इति चरके, शा ७ अध्याय
सुश्रुतस्तु सप्त त्वच आह—
अवभासिनी लोहिता श्वेता ताम्रावेदिनी रोहिणी-मांसधराचेति ।

**षडङ्गयोगः**— योगशब्द द्रष्टव्यः ।

**षडङ्गवित्**—शिक्षादीनि षट् अङ्गानि यः वेत्ति ।

**षडङ्गानि**— शिक्षाकल्पव्याकरणनिरुक्तच्छन्दज्योतींषि ।

**षडशीतिः**— संक्रान्तिविशेषाः ते च कन्यामिथुनधनु-मीनसूर्यसंक्रान्तयः ।

**षड्गवम्**— मध्यमहलम् इति कुल्लूकः ।
अष्टागवं धर्महलं षड्गवं जीवितार्थिनाम् ।
चतुर्गवं गृहस्थानां त्रिगवं ब्रह्मघातिनाम् ॥
इति हारीतः

पशूनां षट्कसंख्यायां षड्गवं स्मर्यते बुधैः ।
इति हल युधः का-२

**षड्गुणाः**— सन्धिं च विग्रहं चैव यानमासनमेव च ।
द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत्सदा ॥
मनुः ७-१६०

**षड्रिपवः**— कामः क्रोधो भयं हर्षो लोभो दर्पस्तथैव च ।
रिपवः षड्विजेतव्याः पुरुषेण विपश्चिता ।
विष्णुधर्म-३-२३३-२४७

**षड्विनायकाः** – मोदश्चैव प्रमोदश्च सुमुखोदुर्मुख-स्तथा ।
आविघ्नो विघ्नकर्त्ता च इत्येते षड्विनायकाः ।

**षड्विष्णीः**— विष्णोरराटमसीत्य दि मन्त्रः ।
नित्याचारप्रदीपः २-१०१

**षड्होता**— सूर्यं ते चक्षुरित्यादीनि नववाक्यानि ।
षड्होतात्युच्यन्ते इति श्रौतपदार्थनिर्वचने ॥
वाक् होता दीक्षा पत्नी वातोऽध्वर्युरित्यादिरनुवाकः
षड्होता इति गोविन्दस्वामी ॥

**षण्ढः**— (१) नपुंसकः । तद्भेदा यथा—
निसर्गषण्डो बन्ध्यश्च पक्षषण्डस्तथैव च ।
अभिशापाद् गुरो रोगाद् देवक्रोधात्तथैव च ॥ १२-११
ईर्ष्याषण्डश्च सेव्यश्च वातरेता मुखे भगः ।

आक्षिप्तमोघबीजौ च शालीनोऽन्यापतिस्तथा।

नारदः १२-१३

षण्ड्श्चतुर्दशैते स्युर्वर्जनं याः प्रयत्नतः॥

षण्ड्कश्चातकः षण्ड्ः पण्ड्ः क्लीवो नपुंसकः।

सक्रीलश्चेति सप्तैवं क्लीबभेदा विभाषिताः॥

(२) कदल्यादिवनम्।

षण्ड्ः कदल्यादिवनम् इति श्रीमूला।

विवीतस्थलकेदारषण्ड्खलवेश्म वाहनकोष्ठानां।

पूर्वं पूर्वमाबाधं सहेत॥ कौट-३-४

(३) क्रियाभ्रष्टः।

नजुहोत्युचिते काले न स्नाति न ददाति च।

पितृदेवार्चनाद्धीनाः स षण्ड्ः परिकीर्त्तितः॥

इति गौतमधर्मसूत्रटिप्पण्यांयमः।

**षण्ढः** क्लीवविशेषः।

असल्लिङ्गोऽपि षण्ढः स्यात् इति कर्मविपाके।

अथेदानीं विजानीमः सन्ति षण्ढाः सशृङ्गकाः॥

मद्विना नापि नृपतिस्त्वयेत्युक्तः कथंचन।

इति श्रीकृष्णं प्रति दुर्योधनसन्देशः॥

महाभा, उद् १६०-६३

**षण्ढकः** — क्लीविशेषः।

तेषां स्त्रीतुल्यवाक्चेष्टः स्त्रीधर्माषण्ढको भवेत्।

पुमान् भूत्वा स्वलिङ्गानि पश्चाच्छिन्द्यात्तथैव च॥

इति कर्मविपाके।

**षण्नमस्काराः**— नमो वः पितर इति मन्त्रः।

नमो वः पितरो रसाय पितरो नमो वो यएतस्मिन्

इत्यादयः षड्मन्त्र' इति श्रौतपदार्थनिर्वचने॥

**षण्नवतिःश्राद्धानि**—अमामनुयुगकान्ति घृतपात महालयाः।

तिस्रोऽष्टका गजच्छाया षड्नवत्यः प्रकीर्त्तिताः॥

अङ्गिरस्मृतिः २-६०६

अमावस्या द्वादश १२ स्युर्मनवस्तु चतुर्दश॥ १४

युगादयश्च चत्वारः ४ क्रान्तयो द्वादश १२

स्मृताः-६१०

धृतयश्चापि पाताश्च त्रयोदश १३ त्रयोदश १३

महालयाः पञ्चदश १५ अष्टका द्वदश १२ स्मृताः-६११

गजच्छाया तथाचैका षट्नवत्य इतीरीताः-६१२

अङ्गीरसस्मृतिः।

१२+१४+४+१२+१३×१३×१५×१२×१ = ९६

श्राद्धानि

**षन्निवर्त्तनी**— कृषिवृत्तिविशेषः।

तल्लक्षणं यथा बौधायनधर्मसूत्रे षड़ेव निवर्त्तनानि निरूपहतानि करोति स्वामिने भागमुत्सृजत्यनुज्ञातं वा गृह्णाति।

प्राक्प्रातराशात् कर्षी स्यात् स्युतनासिकाभ्यां-

समुष्काभ्यामतुदन्नारया मुहूर्मुरप्युपच्छन्दयन्।

एतेन विधिना षन्निवर्त्तनानि करोति

इति षण्निवर्त्तनी इति बौधा-३-२-२

निवर्त्तनशब्दस्यार्थो निवर्त्तनशब्दे द्रष्टव्यः ॥

**षष्ठी—** शिशुरक्षिणी देवी ।

सूतिकाप्रकरणे गदाधरः—

कन्याश्चतस्रो राकाद्या वातघ्नी चैव पञ्चमी ।

क्रीडनार्थां च बालानां षष्ठी च शिशुरक्षिणी ।

खड्गे तु पूजनीया वै ब्राह्मणैश्च द्विजातिभिः ।

राकानुमतिः सिनीवाली कुहूरिति चतस्रः कन्याः ॥

पारस्करगृ-१

प्रफुल्ला द्वादशे मासि सम्पूज्यापत्यवृद्धये ।

सुते जाते तथा षष्ठ्यां षष्ठी द्वादशरूपिणी ।

वैशाखे चान्दनी षष्ठी ज्येष्ठे चारण्यसंज्ञिता ॥

आषाढे कार्दमी ज्ञेया श्रावणे लुण्ठनी मता ।

भाद्रे चपेठी विख्याता दुर्गाख्याश्वयुजे तथा ॥

नाड्याख्या कार्त्तिके मासि मार्गे मूलकरूपिणी ।

पौषे मास्यन्नरूपा च शीतला तपसि स्मृता ।

गौरूपिणी फाल्गुने च चैत्रेऽशोकाप्रकीर्त्तिता ॥

इति शब्दकल्पद्रुमोद्धृतस्कन्दपुराणे

**षष्ठीकल्पः—** गतश्रीकेन श्रीलाभाय कर्त्तव्यः कर्मविशेषः ।

स च मैत्रायणीयमानवगृह्ये द्वितीयपुरुषे त्रयोदशखण्डे । उपदिष्टः अथातः षष्ठीकल्पं व्याख्यास्यामः इत्यादिना ॥

**षष्ठीदेवीषष्ठी—** भाद्रशुक्लषष्ठी ।

**षाड्वः** – मुद्गाढ़क्यादीनि मासानि वा मूलफलादीनि । निष्कस्य गृहीता रसाः शर्करामध्वादिद्रव्य-सङ्गेन मधुरीकृता रागाः अम्लद्रव्यसंयोगेन । अम्लीकृताः षाड्वा उच्यन्ते इति हेमाद्रिः ॥

पिप्पलीशुण्ठियुक्तस्तु मुद्गयूषस्तु षाडवः ।

रागषाड़वतां याति शर्करासहितं च यत् ॥

इत्यन्यत्र

षाडवाः स्वाद्वम्लकटुकाद्याः प्रलोहा एव इति लक्ष्मीधरः नीयत-२८६

सरस्वत्यै त्रिमधुरं वरुणाय दधौदनम् ।

षाडवान्नं धनपतौ तव मित्रे त्रिलोचन ॥ इति भविष्ये

इदंत्वेकमेववस्तु अखवषाड़वखाडवपदैः व्यपदिश्यते । पाठभेदेन तत्र देशभेदेन उच्चारणभेदं हेतुं विद्मः ॥ भारतस्योत्तरभागेषु षकारस्य श्वकरोच्चारणं खकारस्य च ष इत्युच्चारणम् कुत्रचिच्चषकारखकारयो र्द्वयोरपि लोपः एतेन खाड़वस्य षडवत्वमाडवत्वं चोत्पन्नमिति तर्कयामः ॥

तेन खाड़व एव मूलशब्दः खटा इति च तस्य अपभ्रंश इति सम्भाव्यते ।

**षाडाहुतम्—** पुत्रकामेन उभयोः पक्षयोः प्रतिपादि षाडाहुताख्यं कर्म कर्त्तव्यम् तस्य विधानं मानव-गृह्ये द्वितीयपुरुषे अष्टादशखण्डे उपदिष्टम् ।

**षोडशश्राद्धानि**— षोडशप्रेतश्राद्धानियथा—

द्वादशाहे त्रिपक्षे च षण्मासे मासि चाब्दिके ।

श्राद्धानि षोड़शैतानि संस्मृतानि मनीषिभिः ॥

इति मिताक्षरायाम् १-२५५

द्वादशप्रतिमास्यानि आद्यं षाड्मासिके तथा ।

सपिण्डीकरणं चैव एतद्वै श्राद्धषोडशम् ॥

कात्यायनः २४-८

**षोडशसंस्काराः**— संस्कारशब्दे द्रष्टव्याः ।

**षोडशिका**— कर्षस्यपर्यायः ।

**षोढाशरीराणि**— जरायुजाण्डजशरीराणि प्रत्येकं षट्प्रकाराणि रक्तादिषड्धातुपरिपाकहेतुभूतषड्ग्नि-स्थानयोगित्वेन ।

तथाहि अन्नरसो जाठराग्निना पच्यमानो रक्ततां प्रतिपद्यते रक्तं च स्वकोशस्थेनाग्निना पच्यमान मांसत्वम् ।

मांसं च स्वकोशानलपरिपक्वं मेदस्त्वम् ।

मेदोऽपि स्वकोशवह्निना पक्वमस्थिताम् ।

अस्थ्यपि स्वकोशशिखिपरिपक्वं मज्जात्वम् ।

मज्जापि स्वकोशपावकपपिच्यमानश्चरमधातुतया परिणमते चरमधातोस्तु परिणतिनोस्तीति स एवतमनः प्रथमः कोशः इत्येवं षट्कोशाग्नियोगित्वात् षट्प्रका-रत्वं शरीराणाम् इति विज्ञानेश्वरः ॥ ३-८४

**ष्ठीवनम्**— थुत्कत्य मुखात लालादिभिः स्रावः इति हरिहरभाष्ये पारस्करः २-८-५

**ष्ठीविका**—खंकार इति प्रसिद्धा भाषायाम् ।

तेरेवामेध्यैः पादष्ठीविकाभ्यां च षट्पणः ॥

कौट-३-१६

---

## ( स )

**संयानम्**— (१) जलयानम् ।

संयात्यनेनेति व्युत्पत्त्या संयानशब्दो नदीपर इति चण्डेश्वरः विवादरत्नाकरः-४३६

मन्मते संयानं जलयानमिति युज्यते ॥

संयाने दशवाहवाहिनी द्विगुणकारिणी स्यात ॥

वसिष्ठ १६-१७

(२) प्रेतस्य साटोपनिर्हरणम् ।

अलं शोकेन भद्रं ते राजपुत्र महायशः ।

प्राप्तकालं नरपतेः कुरु संयान मुत्तमम् ॥

रामायणम्-अयो-७२-२

**संयावः**— क्षीरगुडादिकृत उत्करिकाख्यः पाकविशेष इति विज्ञानेश्वरः १-१७३

तिलसर्पिगुड़ादिसाहितगोधूमशकलनिर्मितो भक्ष्य-विशेषः सूदेषु प्रसिद्धः इति हेमाद्रिः ।

घृतक्षीरचूर्णसिद्धः उत्कलिकेति सिद्धः इति गदाधर-
राजगुरुः ।
समिता मधुदुग्धेन खण्डेलामरिचादिभिः ।
घृते क्षिप्त्वा क्षिपेत् खण्डे संयावो बृंहणो गुरुः ।
इति राजवल्लभः इति
समिताशब्दो द्रष्टव्यः ।
संयावः भाषायां लापशी इति नाम्ना प्रसिद्ध इति
विज्ञानेश्वरः ।
वृथा कृसरसंयाव पायसापूप शष्कुलीः इति
उत्कलदेशे प्रायेण एतत् प्रकारकं वस्तु अटकालि
इत्युच्यते ॥

**संयुक्तः**— केनचित् यौनेन सम्बन्धेन सम्बद्धः ।
संयुक्तं मैथुनं वोदकं याचेरन्नुदकं करिष्यामहे
इति पारस्करः ३-१०-१३

**संरम्भः**— (१) वेगः ।
संयम्य मन्युसंरम्भं मानयन्तो मुनेर्वचः ।
उरगीयमानानुचरैः ययुः सर्वे त्रिविष्टपम् ॥
भागवते-६-८-२४
(२) कोपः ।
ताडयित्वा तृणेनापि संरम्भान्मति पूर्वकम् ॥
मनुः ४-१६६
एकविंशति माजातीः पापयोनिषु जायते ॥
पारुष्ये वति संरम्भादुत्पन्ने क्षुब्धयोर्द्वयोः ।
स मान्यते यः क्षमते दण्डभाग् योऽतिवर्त्तते । इति
विवादरत्नाकरे नारद-२७५
(३) आटोपः ।
न संरम्भेण सिध्यन्ति सर्वार्थाः ।
सान्त्वया यथा भागवतम्-८-६-२४
दर्पो मदोवलेपो मानो गर्वो भवेदहंकारः । आवेशः
सम्वेगः संरम्भः सम्भ्रमस्तथाटोपः इति

**संलापः**— प्रीतिपूर्वं सम्भाषणम् मिताक्षरा-३-२६१
संलाप स्पर्शनिःश्वास सहयानासनाशनात् ।
याजनध्यापनाद् यौनात् पापं संक्रमते नृणाम् ॥
देवलः-३३

**संवत्सर**— वर्षम् ।
सम्यग्वसन्ति अयनर्त्तु मासादयो ऽस्मिन्निति सम्व-
त्सरः ।
सम्यग् वसन्ति यत्रर्त्तु मासपक्षदिनादयः ।
प्रज्ञैः कालविशेषोऽसौ सम्वत्सर इतिरितः ॥
सिद्धान्त दर्पणः २२-१७
स च सौरसावननाक्षत्रबार्हस्पत्यचान्द्रभेदेन पञ्चधा ।
तत्र सौरो मेषादिर्मीनान्तः सावनः षष्ट्युत्तरशतत्रया-
होरात्रात्मकः ।
चतुर्विंशत्यधिकशतत्रयदिवसैर्नाक्षत्रः नक्षत्रचक्रद्वादश-
वृत्त्या । गुरोरेकराशिस्थिति कालोबर्हस्पत्यः ।

ऋतुः पञ्चाशदधिकशतत्रयदिवसात्मक श्चान्द्रः सम्वत्सर इति सचायं सम्वत्सरः प्रभवादिनाम भेदेन षष्टिविधः तद्यथा—

प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः ।
अङ्गिराः श्रीमुखो भावो युवा धाता तथैव च ॥
ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो वृषः ।
चित्रभानुः स्वभानुश्च तारणः पार्थिवो व्ययः ।
सर्वजित् सर्वधारी च विरोधी विकृतिः श्वरः ।
नन्दनो विजयश्चैव जयो मन्मथदुर्मुखौ ।
हेमलम्होऽविलम्बोऽथ विकारी शार्वरी प्लवः ॥
शुभकृच्छोभनः क्रोधी विश्वावसुपराभवै ।
प्लवङ्ग कीलकः सैम्यः सधारणविरोधकृत ।
परिधवो प्रमाथो च आनन्दोरक्षसो मलः ।
पिङ्गलः कालयुक्तश्च सिद्धार्थो रौद्रदुर्मती ।
दुन्दुभी रुधिरोद्गारी रक्ताक्षिः क्रोधन क्षयः ।

एषां संवत्सराणां प्रातस्विकफलमुक्तमग्निपुराणे ।

१३६ अध्याये

पुनश्च सम्वत्सर परिवत्सरेदावत्सरानुवत्सरेद् वत्सर-नाम्ना व्यपदिश्यन्ते प्रभवादयः ॥

चन्द्राणां प्रभवदीनां पञ्चके पञ्चके युगे ।
संपरीदान्विदित्येतत्पूर्वास्तु वत्सराः ।
धिलं यवो वस्त्रधान्यं रजतं दीयतेऽत्र तु ।

तदुक्तं विष्णुधर्मोत्तरे—

सम्वत्सरे तु दातृणां तिलदानं महाफलम् ।
परिपूर्वे तथा दानं यवानां द्विजसत्तम ।
इदा पूर्वे तु वस्त्राणां धान्यानां चानुपूर्वके ।
इत्पूर्वे रजतस्यापि दानं दत्तं महाफलम् ॥ इति

**सम्वननम्**— (१) आत्मीयताकरणम् ।

सम्वननम् आत्मीयताकरणम् इति महाभारतव्याख्याने नीलकण्ठः ।

कोशसम्वनने दाने भृत्यानां चान्ववेक्षणे ।
भरणे चैव सर्वस्य विदुरः सत्यसंगरः ॥ उद् १४८-६

(२) वशीकरणम् ।

संम्वननसंयुक्तं येनास्य शत्रवो वश्या भवन्तीति

हरदत्तः गौतमः २-२-१७

यं वा मन्त्रयोगमूलकर्मभिः सम्वननकारकं मन्येत ॥

इति कौधलीये ४-४

सम्वननकारकं वशीकरणकर्त्तारमिति श्रीमूला ॥

मूलकर्म प्रोक्तं सम्वननं कार्मणं वशीकरणमिति

हलायुधकोषे का-४

(३) दानम् ।

दनं संम्वननं स्मृतम् इति विष्णुधर्मोत्तरपुराणे

३-१०-११

**सम्वननकार**— वशीकरणकर्त्ता-कौट-४-४

**सम्वासः**— अभिगमनम् ।

सम्वत्सराभिशस्तस्य दुष्टस्य द्विगुणो दमः ।

व्रात्यया सह सम्वासे चाण्डाल्या तावद् देवतु ॥

**सम्वाहः**— वणिक्प्रधानस्थानम् ।

कः पुनरार्यनिवासः ग्रामो घोषो नगरं सम्वाह इति

पातञ्जलमहाभाष्ये-२-४-१

तत्र सम्वाहो वणिक्प्रधान इति प्रदीपकारः ॥

**सम्वाहनम्**— अङ्गमर्दनम् ।

सम्वाहनं मर्दनमिति हरदत्तः ।

सदा निशायां गुरुं संवेशयेत् तस्य पादौ प्रक्षाल्य–

संवाह्य ॥ आपस्त १-२-६-१

**सम्वित्**— समयः पुरुषकृतनियम इत्यर्थः ।

लाभालाभौ यथाद्रव्यं यथा वा सम्विदा कृतौ ।

याज्ञ-२-याज्ञ

यो ग्रामदेशसंधानां कृत्वा सत्येन सम्विदम् ।

विसम्वदेन्नरो लोभात्तं राष्ट्राद् विप्रवासयेत् ॥

मनुः ८-२१९

**सम्वित्पत्रम्**— ग्रामो देशश्च यत् कुर्यान्मते लेख्यं परस्परम् ।

राजाविरोधिधर्मार्थं सम्वित्पत्रं वदन्ति तत् ॥

इति सरस्वतीविलासे पितामहः ।

**सम्विभागः**— (१) सम्यक् विभागः ।

पञ्चमे च तथा भागे सम्विभागो यथार्हतः ।

देवपितृमनुष्याणां कीटानां चोपदिश्यते दक्षः २-४१

अत्र सम्विभागः अन्नस्य विभज्य प्रतिपादनम् ।

(२) सप्रतिबन्धोदायः स्वामी रिक्थ-क्रयसम्विभाग-परिग्रहाधिगमेषु ॥ गौतमः २-१-३९

अत्र सम्विभागः सप्रतिबन्धो दाय इति विज्ञानेश्वरः ।

**सम्वीतम्**— निवीतम् ।

सम्वीतं निवीतं संवीतं मानुषेकृतो इति तैत्तिरीयश्रुतेः इति आह्निकतत्त्वे-३२९

**सम्वीताङ्गः**— आच्छादिताङ्गः ।

तिरस्कृत्योच्चरेत् काष्ठलोष्ठपत्र तृणादिना ।

नियम्य प्रयतो वाचं संवीताङ्गो ऽवगुण्ठितः ॥

मनुः ४-४९

अत्र संवीताङ्गः प्रच्छादिताङ्ग इति कुल्लूकः ।

कण्ठ सक्त यज्ञोपवीत इति नित्याचारप्रदीपे नरसिंह-वाजपेयिनः ॥

**सम्वृत्तिः**— अध्ययनाभ्यासः ।

स्वस्त्ययनमध्ययनसम्वृत्ति रित्यापस्तम्बः ॥

१-२-५-१

**सम्वेशः**— (१) शयनम् ।

सदानिशायां गुरुं संवेशयेत् तस्यपादौ प्रक्षाल्य संवाह्य आपस्त १-२-६-१

(२) मैथुनम् स्त्रीसम्भागः ।

परिणीय तु षण्मासान् वत्सरं वा न संविशेत् ।
उदुम्बरायणो नाम ब्रह्मचारी गृहे गृहे ॥

लघुविष्णुः १-२७

**संवेशनम्**— (१) मैथुनम् ।

**संवृतम्** — कृष्णतृतीयादिवसभागमात्रम् । कालमाधव-२

**संसक्त**— क्षेत्रादेः विप्रतिपन्नसीमकस्य सर्वासु दिक्षु ये अनन्तरं क्षेत्रादि भोक्तारस्ते संसक्ताः । ये तु तदन्तराः ते सामन्ताः ।
येऽपि तदनन्तरास्ते संसक्तसंसक्ता इत्यपरार्कः २-१५१
सामन्तग्रहणं च तत् संसक्ताद्युपलक्षणार्थम् ॥
इति विज्ञानेश्वरः
तन्मते संसक्ता एव सामन्ताः इति
संसक्तकास्तु सामन्तास्तत्संसक्तास्तथोत्तराः ॥
संसक्तसक्तसंसक्ताः पद्माकाराः प्रकीर्त्तिताः ।
इति मिताक्षरायां कात्यायनः
कात्यायनस्मृतिसारोद्धारे-७३८
मन्मते तु संयुक्तादयः सर्वे एव सामन्ताः संयुक्तादयस्तु-अवान्तर भेदभिन्ना इति ।

**संसन्नः**— कृष्णपक्षरात्रि नवममुहूर्त्तः इति कालमाधवे-३

**संसरणम्**— गमनागमनमार्गः ।
यान्त्यायान्ति जना येन पशवश्चाग्निवारिताः ।
तदुच्यते संसरणं न रोद्धव्यं तु केनचित् ॥

इति बृहस्पतिः

**संसर्गदुष्टम्**— सुरालशुनादिसंसृष्टमन्नादि ।
संसर्गदुष्टं यच्चान्नं क्रियादुष्टं च कामतः ।
भुक्त्वा स्वभावदुष्टं च तप्तकृच्छ्रं समाचरेत् ॥

इति व्यासः मिताक्षरायाम्-३-२९०

**संसर्पः**— क्षयमासस्य पूर्वतनोऽधिमासः ससर्पति कर्मण इति तस्य संसर्प इति संज्ञा ।
१८८५ शकाब्दीयतृतीय संख्यायां प्रणवपारिजाते प्रकाशितः मतकृत्संसर्पनिर्णयः यथाः—
क्षयमासपूर्वपतिताधिमासस्य संसर्पसंज्ञा प्रसिद्धा स च संसर्प इतराधिमासविलक्षणः ॥
तदाह जाबालिः—
मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत् ।
प्राकृतस्तत्र पूर्वः स्यादुत्तरस्तु मलीम्लुचः ॥
अधिमासस्तयोत्तर इत्यपि पाठान्तरं चतुर्थपादस्य अत्र प्राकृतः शुद्धः कर्मार्हि इति व्याख्यानं बहुभिरादृतम् ॥
तत्रायमभिप्रायः इतराधिमासेषु यथा पूर्वमासस्याशुद्धत्वामुत्तरमासस्य कर्मार्हत्वं न तथाऽस्य ॥
अत्र तु द्वयरोपिमासयोः कर्मार्हत्वभिति विशेषः तेन संसर्पाधिमासयुक्तो मासः षष्टिदिनात्मको विशुद्ध-इतराधिमासविलक्षणा इति सिद्धम् तदुक्तं धर्मसिन्धौ—
क्षयाव्यवहितपूर्वो मासो यथाश्विनोऽधिमासो मार्ग-

शीर्षः क्षयमासस्तत्रापि आश्विनमासगतं श्राद्धमधिके शुद्धे चाश्विने कार्यं द्वयोरपि कर्मार्हत्वात् ॥

एतेन संसर्पमासो मासान्तरस्याङ्गमिति स्पष्टम् ।

पण्डितशिरोमणयो माधवाचार्या अपि क्षयमासं दर्शान्तिकैचान्द्रमासग्रासशीलं निरूपयन्तः संसर्पस्य-मासान्तराङ्गत्वं प्रदर्शितवन्तः यथा—

यदा धनुःस्थे रवौ दर्शपूर्त्तिस्तदा तस्य मेषादिस्थ वचनेन मार्गशीर्षत्वं प्राप्तम् तथा मति पूर्वोदाहृत द्विसंक्रान्ते मासे धनुःस्थे रवौ दर्शो न समाप्तः किन्तु मकरस्थे अतः पौषमासत्वं तस्य सम्पन्नम् ।

तथा च मार्गशीर्षस्य तत्र लुप्तत्वात् तस्य क्षयसंज्ञा युक्ता ॥

अतएव एकमासग्रासित्वात् अंहसः पापस्य पतिरिति व्युत्पत्त्या स एवं बृहस्पतिसंज्ञयापि व्यवह्रियते (पृ-४४) एतेन संसर्पस्य स्वतन्त्रमासत्वं सुदुरपराहतमेव

यत्तु रघुनन्दनभट्टाचार्यैः तिथ्यर्द्धवचनमार्षमनार्ष-मिति विशङ्क्य क्षयमासं मासद्वयात्मकमस्वीकृत्य संसर्पस्य स्वतन्त्र शुद्धमासत्वं परिकल्पितं तन्माधवादिबहुप्रामाणिकनिबन्धकृद्विरुद्धत्वेनानादेयम् ।

तथाहि समागमिष्यतः संसर्पस्य आश्विनत्वे तदुत्तरमासस्य च कार्त्तिकत्वे—

मेषादिस्थे सवितरि यो यो दर्शः प्रपूर्यते चान्द्रः ।
चैत्राद्यः स स विज्ञेयः पूर्त्तौद्वित्वेऽधिमासोऽन्त्यः ॥

इति वचनं बाध्यते ।

तथा—

तिथ्यर्द्धे प्रथमे पूर्वो द्वितीयेर्धे तथोत्तरः ।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ ॥

इति वचनं निरवकाशं भवति ।

अपि च क्षयः कार्त्तिकादित्रये नान्यदास्याद् तदा वर्षमध्येऽधिमासद्वयं स्यात् ।

इति संसर्पस्याधिमासत्वविधायकं भास्करवचनं विरुणद्धि ॥

यत्तु निर्णयसिन्धु व्याख्यातृणा कृष्णशर्मणा तिथ्यर्द्धवाक्यं तु एकमासलोपभ्रान्तस्य कस्यचिदाधुनिकस्यैव इत्युल्लिख्य संसर्पमासस्य स्वतन्त्रशुद्धमासत्वं निरूपितं तन्मूलग्रन्थविरोधाश्रद्धेयम् । तत्र हि निर्णयसिन्धौ क्षयमासमृतानां प्रत्याब्दिकादौ विशेष उक्तो हेमाद्रौ—

तिथ्यर्द्धे प्रथमे पूर्वो द्वितीयेर्द्धे तथ त्तरः ।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ ॥

इति तिथ्यर्द्धवाक्यस्य प्रामाण्याङ्गिकारात् ।

ये तु माधवादयो मासगणनावसरे संसर्पमासं नाधिकं मन्यन्ते तेषामयमभिप्रायः—

सौरसम्वत्सरस्यान्ते मानेन शशिजेन तु ।
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ॥

वर्षद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते । इति क्रम

संचिताधिमासः प्रतिवर्षं त्रिकमागच्छति । क्षयमास-युक्ताब्दे तु तादृशः क्रमसंचिताधिमासस्त्वेक एव त्रिंश-द्दिवसवृद्धियोगात् षष्टिदिनवृद्धयसम्भवाच्च अत एव माधवादिभिः पूर्वो नाधिक इत्युक्तम् । जाबालिनापि प्राकृतस्तत्र पूर्वः स्यादिति संसर्पस्य कर्मार्हत्वं प्रतिपादितम् ॥

पूर्वो नाधिक इति वदद्भिः माधवगदाधरकमला-करादिभिः यदि संसर्पस्य विशुद्धस्वतन्त्रमासत्वमङ्गीकृतं स्यात् तर्हि तैस्तद्बाधकं तिथ्यर्द्धवचनं प्रमाणरूपेण परिगृहीतं न भवेत् । अतः संसर्पो मासान्तराङ्गमिति तेषामाशयः स्पुटीभवति ।

ये तु तिथ्यर्द्धवचनव्याख्यायां पक्षभेदेन क्षय-मासं मासद्वयात्मकमामनन्ति तेऽप्यस्माकं न बाधकाः, क्षयमासस्य मासद्वयात्मकत्वसिद्ध्या तत्पूर्वसंसर्पस्या-धिमासत्वसिद्धेः । परन्तु तादृशव्याख्यानं प्रकृते नोपयोगि ॥

तद् यथा—पक्षस्य मासत्वेन स्वीकारे तत्पक्षमृ-तस्य वर्षान्तरे शुक्लकृष्णात्मके मासे कथं श्राद्धसिद्धि विनिर्णयः स्यात् एतादृशव्याख्यानापेक्षया प्रत्येकतिथि-विभाग व्याख्यानं तु युक्ततरमेव ॥

तिथिविभागे कृते रात्रावपि श्राद्धं प्राप्नोतीति यदाशङ्क्यते तत् क्षयमासव्यवस्थायां परिहृतमस्माभिः । न चात्र पूर्ववत्तिथिविभागशङ्का कार्या मासयो-रेकत्वेन तदङ्ग तिथियुगलस्यापि एकत्वे सिद्धेरिति तथाहि यस्मिन् दिने क्षयशुक्लप्रतिपत् श्राद्धयोग्यकाल-व्यापिनी तदा द्वयोरपि मार्गशीर्षपौषशुक्लप्रतिपदोः श्राद्धमिति निष्कर्षः । व्रतोपवासादिषु चायमेवन्यायः ॥

धर्मसिन्धुरपि तदेवाह धनुर्मकरसंक्रान्तिद्वययुक्त एको मासः क्षयमाससंज्ञकः । स च मार्गशीर्षपौषा-ख्यमासद्वयात्मक एको मासो ज्ञेयः ॥ तस्य प्रतिपदा-दितिथीनां पूर्वार्द्धे मार्गशीर्ष उत्तरार्द्धे पौष इत्येवं सर्व-तिथीनां मासद्वयात्मकत्वात् ॥ अत्र तिथिषु पूर्वार्द्धे मृतस्य प्रत्यब्दश्राद्धम् उत्तरवर्षे मार्गशीर्षे विधेयम् उत्तरार्द्धे मृतस्य पौषे ॥ तथा पूर्वोक्तमार्गशीर्षगतं पौषगतं चाब्दिकमेकस्मिन् एव मासे तिथिपूर्वार्द्धादि-भागं विनैव कार्यमिति फलितम् ।

यच्च तिथिपूर्वार्द्धे मृतस्य तिथिपरार्द्धे मासिकं प्राप्नोतीति शङ्क्यते तदपि न युक्तिसहं तदा सावन-मानाश्रितस्याशौचकालस्याऽसमाप्तेरेकदशाहादिकृ-त्यानन्तरं विधेयस्य मासिकश्राद्धस्याप्राप्तत्वात् ॥

पौषमासविहितमासिकलोपोऽपि तत्र न दोषाय एकदशाहानन्तरं मासिकश्राद्धकाले तादृशतिथेरलब्ध-त्वेन पैतृकतिथिलङ्घनदोषाप्रसक्तेः ॥ क्षयपरवर्तिमल-मासं गृहीत्वा तत्र मासद्वादशकमपि सम्भवति । तेन द्वादशसंख्यकानां मासिकश्राद्धानां सिध्या द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा सपिण्डीकरणं

चैत्र प्रेतश्राद्धानि षोड़शेत्यादि वाक्यानां न विरोधः।

ये तु तिथ्यर्द्ध वाक्यं दर्शान्तमासस्य पूर्णिम न्तो वा तदन्यथाप्रतिपादनेन मासद्वयांशो भवितुमर्हतीत्यल मेतादृशनिरर्थकतिथ्यर्द्ध वाक्यारम्भगौरवेण ।

एतेन हेमाद्रिमाधवादिसर्वशिष्टविशिष्टनिबन्ध-कृत परिगृहीतस्य तिथ्यर्द्ध वचनस्य प्रामाण्यमव्याहत-मेव प्राकतस्तत्रपूर्वः स्यादिति जाबालिवचनस्य मास विलक्षणविशुद्धाधिमासत्वं क्षयमासास्य मासद्वयात्मक-त्वम् एकस्यैव दर्शान्तचान्द्रमासस्य क्षयमासात् पूर्वं विलुप्तत्वं च सुस्थिरमेव ॥

यच्च हेमाद्रिणा—

षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।
पूर्वमर्द्धं परित्यज्य कर्त्तव्या चोत्तरे क्रिया ॥

इति सर्वत्र मलमासस्य उत्तरमासपूर्वार्द्धत्वे प्राप्ते

मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत्,।
प्राकतस्तत्र पूर्वः स्यादुत्तरस्तु मलिम्लुचः । इति

वचनेन संसर्पाख्यमलमासस्य पूर्वमासद्वितीयार्द्धत्वं-साधितं कैरपि न परिगृहीतमिति विदुषां दृष्टिराकृष्यते इत्यलम् । (पण्डितरामनाथनन्दानामुत्तररूपोऽयं प्रबन्धः ॥

**संसादनः**— कृष्णपक्षगतरात्रेरष्टमुहूर्त्तः कालमाधवे-३

**संसाधनम्**— (१) अनुगमनम् । यत् संसाधयति वै विष्णु-क्रमाः आपस्त-२-३-७-९

संसाधनम् अनुव्रजनमित्युज्ज्वला ।

(२) ग्रहणम् ।

अनेकार्थाभियोगे तु यावत् संसाधयेद्धनी ।
साक्षिभिस्तावदेवासौ लभते साधितं धनम् ॥

कात्यायनः-४७३

**संसृष्ट**— (१) विभक्तो भ्रात्रादिर्यदि पुनर्मिश्रित धनत्वेन एकयोगक्षेमो भवति स संसृष्टः ॥

विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः।
पितृव्येणाथवा प्रीत्या स तत्संसृष्ट उच्यते ॥

इति मिताक्षरायां बृहस्पतिः।

स तु संसृष्ट इति जीमूतबाहनपाठश्चतुर्थपादे।

(२) संसृष्टः एकोदरसंसृष्टः सोदर इति यावत्।

इति मिताक्षरायाम् २-१३९

**संसृष्टी**— संसृष्टः ।

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।
दद्यादपहरेच्चांशं जातस्य च मृतस्य च ॥

याज्ञ २-१३८

**संस्कर्त्ता**— (१) संस्कारकर्त्ता ।

(२) पाचकः ।

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।
संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः ॥

मनुः ५-५१

संस्कारः— संस्करणम् ।

अपवित्रतानिरसनपूर्वकं पवित्रतासम्पादनम् ।

शोधनमिति यावत् ॥

एते संस्काराः गौतमेन अष्टाचत्वारिंशत् आश्वलायनेन पञ्चविंशतिः व्यासशार्ङ्गधरादिभिः षोड़श प्रतिपादिताः ॥

ते सर्व एव शरीरस्य आत्मनश्च शोधकाः ॥

तत्राह मनुः-२-२७

गार्भैर्होमैर्जातकर्मचौड़मौञ्जीनिबंधनैः ।

बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ २५

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।

कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ २६

शोधनप्रकारस्तु संस्काररत्नमालायां स्मृतिसंग्रहे—

निषेकाद् बैजिकं चैनो गार्भिकं चापमृज्यते ।

क्षेत्रसस्कारसिद्धिश्च गर्भाधानफलं स्मृतम् ॥

गर्भे भवेच्च पुंसूतेः पुंस्त्वस्य प्रतिपादनम् ।

निषेकफलवज् ज्ञेयं फ़लं सीमन्तकर्मणः ॥

गर्भाम्बुपानजो दोषो जातात्सर्वोऽपि नश्यति ।

आयुर्वर्चोऽभिवृद्धिश्च सिद्धिर्व्यवहृतेस्तथा ॥

नामकर्मफ़लं त्वेतत् समुद्दिष्टं मनीषिभिः ।

सूर्यावलोकनादायुरभिवृद्धिर्भवेद्ध्रुवा ।

निष्क्रमादायुःश्रीवृद्धिरप्युद्दिष्टा मनीषिभिः ॥

अन्नाशनान्मातृगर्भमलाशादपि शुध्यति ।

बलायुर्वर्चोवृद्धिश्च चूड़ाकर्मफ़लं स्मृतम् ।

उपनीतेः फलत्वेतद् द्विजतासिद्धिपूर्विका ॥

वेदाधीत्यधिकारस्य सिद्धिर्ऋषिभिरीरिता ।

देवपित्रर्णापगमो विवाहस्य फ़लं स्मृतम् ॥

इति संस्काररत्नमाला-६

तत्रादौ चत्वारिंशत् संस्काराः—

गर्भाधापुंसवनसीमन्तोन्नयनजातकर्मनाम करणान्नप्राशन चौलोपनयनम्-८

चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः

४+२=६

पञ्चानां यज्ञानामनुष्ठानं देवपितृमष्यभूतब्रह्मणामेतेषां

च अष्टकाः पार्वणः श्राद्धं श्रावण्याग्रहायणी

चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्था ॥

अग्न्य च्चियमग्निहोत्रं दर्शपौर्णमासावाग्रयणं

चातुर्मास्यानि निरूढ़पशुर्बन्धः सौत्रामणी इति

सप्त हविर्यहसंस्थाः ॥ ७

अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वजपेयोऽतिरात्रोऽपप्तोर्याम इति सप्त सोमसंस्थाः ॥

८×६×५×७-७-७=४० गौतमध १-८-१३४

अष्टावात्मगुणा दया सर्वभूतेषु क्षान्तिरनसूया

शौचमनायासो मङ्गलमकार्पण्य मस्पृहेति ॥

गौतमः १-८-२४

उक्ताश्चत्वारिंशात्संस्कारा अष्टौ चात्मगुणाः ।

संकलिताः अष्टचत्वारिंशत् संस्कारा भवन्ति ॥

पञ्चविंशतिः संस्कारा आश्वलायनेनोक्ताः यथा—

गर्भधानं पुंसवनं सीमन्तो बलिरेव च ।

जातकर्म नामकर्म निष्क्रामोऽन्नाशनं परम् ॥ ४

चौलकर्मोपनयनं तदगतानां चतुष्टयम् ।

स्नानोद्वाहौ चाग्रयेणमष्टकाश्च यथायथम् ।

श्रावण्यामाश्वयुज्यां च मार्गशीर्ष्यां च पार्वणम् ।

उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यशः ॥ ६

संस्कारा नियता ह्येते ब्राह्मणस्य विशेषतः ॥ ७

पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः ॥

ते पवित्राश्च योग्याश्च श्राद्धदिषु सुयन्त्रिताः ॥

आश्वलायनस्मृतिः-११

षोडशसंस्कारानाह व्यासः—

गर्भाधानं पुंसवनं सीमन्तो जातकर्म च ।

नामक्रिया निष्क्रमोऽन्नप्राशनं वपनक्रिया १-१३

कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः ।

केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः ॥

१-१४

त्रेताग्नि संग्रहश्चैव संस्काराः षोडश स्मृताः ॥

व्यासः १-१७ इति

रेणुकारिकायामपि २९-३२

गर्भाधानं पुंसवनं सीमन्तोन्नयनं ततः ।

जातकर्माभिधानं च निष्क्रमः प्राशनं क्रमात् ॥

चूडोपनयनं वेदव्रतानां च चतुष्टयम् ।

गोदानं मेखलोन्मोको विवाहो षोडश क्रियाः ॥

त्रयोदशानामाद्यानामधिकारी पिता भवेत् ।

इतरेषां त्रयाणां स्यादधिकारी स्वयं सुतः ॥

शार्ङ्गधरोऽपि—

द्विजानां षोड़शैव स्युः शूद्राणां द्वादशैव हि ।

पञ्चैव मिश्रजातीनां संस्कारा कुलधर्मतः ॥

वेदव्रतोपनयन महानाम्नी महाव्रतम् ।

विना द्वादश शूद्राणां संस्कारा नाममन्त्रतः ॥ इति

धर्मप्रवृत्तिस्तु षोडशसंस्कारेषु अन्त्येष्टिमन्तर्भावयति । यथा—

गर्भाधानं पुंसवनं सीमन्तो जातकर्म च ।

नाम निष्क्रमणं चान्नप्राशनं चौलकर्म च ॥

तथोपनयनं चैव महानाम्नी महाव्रतम् ।

उपनिषच्च गोदानं समावर्त्तनकं ततः ।

विवाहोऽन्त्येष्टिकं चेति संस्काराः षोडशैव तु ॥

धर्मप्रवृत्तिः-५९

द्विविधो हि संस्कारो भवति ब्राह्मो दैवश्च ।

गर्भाधानादिस्मार्त्तो ब्राह्मः पाकयज्ञा हविर्यज्ञा ।

सोम्याश्च दैव इति हारीतः संस्कारप्रकाशे-१३५

गर्भधानवदुपेतवो ब्रह्मगर्भांसंदधात पुंसवनात् ।

पुंसीकरोति फलस्थापनान् मातापितृजपाप्मान-

मपोहति। रेतोरक्तगर्भोपघातः पञ्चगुणो जातकर्मणा

प्रथममपोहतनामकरणेन द्वितीयम् प्रशनेन

तृतीयम् चूडाकरणेन चतुर्थम् स्नापनेन पञ्चमम् ।

एतैरष्टाभिः संस्कारै गर्भोपघातात् पूतो भवतीति ।

गर्भाधानवत् गर्भाधान विधिना उपेतः स्त्रियमुपरतः ॥

ब्रह्मगर्भे वेदग्रहणयोग्यं गर्भं सन्दधाति संजनयति ।

फलस्थापनात् फलस्थापनाङ्ग सीमन्तोन्नयनात् ॥

उपघातः पापसंघः पञ्चगुणः पञ्चप्रकारः उपपातक

जातिभ्रंशकरण संकरीकरणापात्रीकरणमलिनीकरण-

रूपपापञ्चकसंक्रान्त इति संस्कारतत्त्वे रघुनन्दनः ।

**संस्कृतिः**— (१) जीर्णोद्धारः ।

**संस्तुतः**— परिचितः ।

असंस्तुनापि परपत्नी भगिनीति वाच्या पुत्रीति

मातेति वा । विष्णुः ३२-७

**संस्था**— (१) विधा प्रकार इति यावत् ।

संस्था विधा इति हरदत्तः गौतमधः १-८-१६

अष्टका पर्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयूजीति

सप्तपाकयज्ञसंस्था इति ॥

(२) दृष्टार्था मर्यादा ।

अमुकेन अमुकं कर्म कर्त्तव्यमित्येवंरूपा ।

लौकिकीव्यवस्था कुलालस्य घटनिर्माणं कुविन्दस्य

पटनिर्माणि मित्यादिरूपा ॥ कुल्लूकः

वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥

मनुः १-२१

तत्र चेतसं प्रमुह्येत धर्मं राजर्षि सेविते ।

लोकस्य संस्था न भवेत् सर्वं च व्याकुली भवेत् ॥

महाभा, शा—५६-६

(३) मरणम् ।

भार्यायां परमगुरुसंस्थायां चाकालमभोजनमिति ।

आपस्तम्बः २-१५-५

अत्र संस्था मरणमिति हरदत्तः ॥

(४) समाप्तिः ।

अग्नीषोमसंस्थायां च इत्यापप्नम्बव्याख्याने ।

इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति ।

यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥

इति विष्णु पु-४-२२-१३

(५) स्थितिः ।

गोषु ब्राह्मणसंस्थासु छुरिकायाश्च भेदने ।

पशूनां हरणे चैव सद्यः कार्य्योर्द्धपादिकः ॥

मनुः-८-३२५

(६) महाजनाचारः ।

लोकाचार इति श्रीमूला कौः-३-१

संस्थया धर्मशास्त्रेणशास्त्रं वा व्यवहारिकम् ।

यस्मिन्नर्थे विरुद्धेत धर्मेणार्थं विनिर्णयेत ॥

(७) कर्मस्थानम् ।

सम्यक् तिष्ठन्ति आसु इति संस्थाः कर्मस्थानानि ।

पूजिताश्चार्थमानाभ्यां राज्ञा राजोपजीविनाम् ।

जानीयुः शौचमित्येताः पञ्च संस्थाः प्रकीर्त्तिताः ॥

कौट-१-११-२२

**संस्थानम्**— (१) प्रसिद्धस्थानम् ।

भर्त्तारं लंघयेद् या तु स्त्री ज्ञातिगुणदर्पिता ।

तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते ॥

मनुः-८-३७१

(२) मरणम् ।

संग्रामे संस्थानमनिवृत्तिश्च ॥ गौतमध २-१-१६

(३) समाप्तिः ।

ब्रह्मक्षत्रस्य यो योनिर्वंशो राजर्षिसंस्कृतः ।

क्षमेकं प्राप्य राजानं संस्थानं प्राप्यते कलौ ॥

इति विष्णुपुराणे-४-२१-१८

संस्थिते कर्मणि ब्राह्मणान् भोजयेत् पारकरः

२-१७-२०

(४) गृहम् ।

गत्वा तपसः पारं दीपस्य वसुधाधिपः ।

पुरन्दरस्य संस्थानं प्रतिपेदे महाद्युतिः ॥

महाभा, आश-२०-८

कीदृशं तस्य संस्थानं रूपं तस्य च कीदृशम् ।

कथमुरू कथं बाहू लक्ष्मणस्य च शंस मे ॥

रामायणे सुन्द-३५-४

(६) चतुष्पथम् ।

संस्थानं तु चतुष्पथम् इति हलायुधकोषे का-४

(७) संनिवेशः ।

संस्थानं संनिवेशः स्यात् हलायुधकोषे का-४

(८) स्थानं पदवी प्रकारे वा ।

तान्विदित्वा सुचरेतै र्गूढैस्तत्कर्मकारिभिः ।

चारैश्चानेकसंस्थानैः प्रोत्साद्यवशमानयेत ॥

मनु ९-२६१

**संस्थितः**— (१) मृतः ।

परासुरुपसंपन्नः प्रमीतः संस्थितो मृतः ॥

इति हलायुधः का-३

आसपिण्ड्क्रियाकर्म द्विजातेः संस्थितस्य तु ।

अदैवं भोजयेच्छ्राद्धं पिण्डमेकं तु निर्वपेत् ॥

मनुः ३-२४७

(२) समाप्तिः ।

संस्थिते कर्माणि ब्राह्मणान् भोजयेत् ॥

पारस्करः २-१७-२०

(३) सम्यक् स्थितः ।

विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः ।

पितृव्येणाथवा प्रीत्या स तत्संसृष्ट उच्यते ॥

बृहस्पतिः-२५-७२

मयैष धर्मो विहितः संस्थिता यत्र वर्णिनः अत्रिः-१६

**संस्रवः**— (१) संस्रवः श्राद्धे ब्राह्मणकरच्युता आप इति कल्पतरुः।

अर्घ्यदानावशिष्टा आप इति हरदत्तः।

श्राद्धब्राह्मणहस्तगलितं जलमिति विज्ञानेश्वरः।

दत्त्वार्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः॥

याज्ञ २३५

(२) होमेषु स्रुवादिगलितं घृतमपि संस्रवः।

संस्रवान् हुतशेषान् इति हरिहरः।

संस्रवान् स्रुवलग्नाज्यचर्वंवयवान् इति गदाधरः

पारस्करः-१-११-४

**संहतकेशः**— मुण्डितमुण्ड इति देवपालः

काठकगृ-१-११-४

**संहननम्**— (१) शरीरम् अमरः २-६-७१

(२) कवचादि धारणम् अमरः-३-३-१६८-७

**संहितः**— युक्तः।

एष स्त्रीपुंसयोरुक्तो धर्मो वो रतिसहितः।

आपद्यपत्यप्राप्तिश्च दायभागं निबोधत॥

मनुः-९-१०३

यथा यथा भाषसि धर्मसंहितं

मनोनुकूलं सुपदं महार्थवत्।

तथातथा मे त्वयि भक्तिरुत्तमा।

वरं वृणीष्वाप्रतिमं पतिव्रते॥ इति सावित्रीं

प्रति यमः महाभा, वन,-२९७-५१

**संहिता**— ऋगादेः समष्टिः।

यथा ऋचां समष्टिः ऋक्संहिता।

ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः।

साम्नां वा सरहस्यानां सर्वपापैः प्रमुच्यते॥

मनुः-११-२६२

**संह्लाद**— सहशब्दनम्।

यथाशृगालकुक्कुरादीनां समष्टिध्वनिः।

श्वशृगालगर्दभसंह्लादे गौतमध २-७-८

अत्र संह्लादः सहशब्दनमिति हरदत्तः॥

**सकटान्नम्**— अशौचान्नम् इति कल्पतरौ-शुद्धि-६३

अत्र कटशब्देन शववहनसाधनखट्वादिर्लक्ष्यते

तत्सम्बन्धेन सकटं मृताशौचम्।

आचार्यपितृपाध्यायान्निर्हृत्यापि व्रती व्रती।

सकटान्नं च नाश्नीयान्न च तैः सह संवसेत्॥

याज्ञ-३-१५

अत्र कटशब्देनाशौचं लक्ष्यते तत्सहचरितमन्नं

सकटान्नमिति विज्ञानेश्वरः॥

**सकाशः**— सन्निधिः।

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।

स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥

मनुः २-२०

लुप्यते पूजाऽऽचार्यस्य सकाशे आपस्त १-२-८-२१

प्रागुदीच्यां दिशि ग्रामस्यासकाशे निशि गवां मध्ये

तष्टो यूपः मानवगृ-२-५-२

**सकुलः**— नकुलः ।

नकुलं सकुलमिति ब्रूयात् पारस्करः २-७-१२

मनुः ९-१८७

**सकुल्यः**— समानोदकः ।

अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत् ।

अत ऊर्ध्वं सकुल्यः स्यादाचार्यः शिष्य एव वा ॥ इति

**सकुष्ठिकः**— सकुष्ठिकं सगुल्फं साङ्गुष्ठमित्यन्ये इति हरदत्तः ।

पादं सकुष्ठिकमुपगृह्णीयात् ॥ आपस्त १-२-५-२१

**सकूर्चम्**— छिन्नाग्रम् (दन्तकाष्ठम्) इति लक्ष्मीधरः ।

सकूर्चं द्वादशांगुलम्

**सकृदाच्छिन्नकुशाः**— उपमूलं सकृल्लुनान् कुशांस्तत्रो-पकल्पयेत् ॥

इति पराशरमाधवोद्धृतपुराणविशेषे ॥

**सक्तिः**— (१) संङ्गः ।

अग्नौ सक्तिर्ह्यनुग्निरवज्ञातस्य ॥ गौतमः ३-४-२

**सक्तुः**— भृष्टयवादिचूर्णम् सक्थुरिति पाठभेदोऽपि ।

**सक्थि**— पादमूलयोः सन्धिः इति विवादचिन्तामणिः ।

नेत्रकन्धराबाहुसक्थ्यंङ्ग भङ्गे चोत्तममिति विष्णुः ५-७०

ऊरुरिति विज्ञानेश्वरः या-२-२२०

ऊरुरित्यमरः-२-७-७३

**सक्थुः**— भृष्टयवचूर्णं धान्यचूर्णं च उभयत्र प्रसिद्धेरिति गदाधरः । अत्र धान्यचूर्णस्थाने धानाचूर्णमिति पाठः शुद्धो भवितुमर्हति ॥ विषुवसंक्रान्तौ सक्थूंश्च शर्करामिश्र न् दद्यात्सजलकर्करीम् ॥ सुमन्तुः

**संकटचतुर्थी**— श्रावणकृष्णचतुर्थी स्कान्दोक्ता ।

**संकटद्वारम्**— क्षुद्रद्वारम् संकटद्वारकाणि स्युरुच्छ्वासार्थं पुरस्य च ।

तेषां च द्वारवद् गुप्तिः कार्य्यासत्वं‌निमनाभवेत् ॥

महाभा, श, ६९-१४

**संकथनम्** — सुहृद्भावेन विद्या कथा ।

शीलं संवसता ज्ञेयं शौचं संव्यवहारतः ।

प्रज्ञा संकथनाज् ज्ञेया त्रिभिः पात्रं परीक्ष्यते ॥

इति यमः कल्पतरौ दानकाण्डे-२६

**सकरः**— (१) अवरोधः ।

यान्त्यायान्ति-एतदनन्तरं ।

यस्तत्र सङ्करं श्वभ्रं वृक्षारोपणमेव च ।

कामात् पुरोष कुर्य्याच्च तस्य दण्डस्तु माषकः ॥

इति बृहस्पतिः

अत्र सङ्करः संकीर्णता अवरोध इति यावत् ।

इति स्मृतिचन्द्रिका-२१५

(२) अवकरः ।

नाहेऽदमधितिष्ठेन्नतुषकपालकेशभस्मास्थितृणसंकर-
कूटे तिष्ठेत् इति शङ्खलिखितौ कल्पतरौ व्यवहार-
काण्डेपि-४५५ गार्हस्थ्य-३७४

(३) संसर्गः ।

एकशय्यासनं पंक्तिः भाण्डं पंक्त्यन्नमिश्रणम् ।
याजनाध्यापने योनिस्तथा च सहभोजनम् ।
नवधा संकरः प्रोक्तो न कर्त्तव्योऽधमैः सह ॥
इति पराशरमाधवे बृहस्पतिः प्राय-२३

मुनिवक्त्रोद्गतान् धर्मान् गायन्तो वेदपारगाः ।
पतन्तमुद्धरेयुस्तं धर्मज्ञाः पापसंकरात् ॥
पराशरः ६-३५

(४) समवायः ।

सर्वेषामपि पापानां संकरे समुपस्थिते ।

(५) पापम् ।

पारस्करीयगदाधरभाष्योद्धृतप्रयोगपारिजाते रोगेण
यद्रजः स्त्रीणामन्वहं हि प्रवर्त्तते ।
नाशुचिस्तु भवेत्तेन यस्माद्वैकारिकं मतम् ॥
इति तत्रापि स्वकालेऽशुचिरेव तदुक्तम्।
रोगजे वर्त्तमानेपि काले निर्याति कालजम् ।
तस्मादप्याप्रमत्ता स्यादन्यथा संकरो भवेत् ॥

**संकरीकरणम्**— पापभेदविशेषः खराश्वादिवधरूपः ।

खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा ।
संकरीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥
मनुः ११-६८

**संकर्षः**— (१) संनिकर्षः सामीप्यमिति यावत् ।
(सूर्याचन्द्रमसोः) यः परमः संकर्षः सामावास्या ॥
इति गोभिलः १-५-७

(२) काष्ठादिभिः पात्रादिभ्यः उच्छिष्टलेपादीनां
घर्षणेन निष्कासनम् ।
संकृष्याद्भिः संसृज्योत्तरतरः शुचौ देशे रुद्राय निनयेत्
आपस्त-२-४-२४

अमत्रेभ्यः येषु पाकः कृतः तेभ्यः अन्नलेपान् व्यंजन-
लेपांश्च संकृष्य काष्ठादिना अवकृष्य अद्भिः संसृजेत्
इति हरदत्तः ॥

**संकल्पः** (१) संकल्पमूलः कामो वै यज्ञाः संकल्प-
सम्भवाः ।
व्रतानि यमधर्माश्च सर्वे संकल्पजाः स्मृताः
मनुः २-३

अयं पदार्थः इमामर्थक्रियां साधयति इति यज्ज्ञानं
स इह संकल्पोऽभिप्रेतः बुभुक्षित आदौ भुजिक्रियां
पश्यति तत इच्छति ततोऽयवस्यति इति
मेधातिथिः अनेनेवं साधयामि इति मनः कर्मसंकल्प
इत्यपरार्कः अनेनाहं यक्ष्ये इति संकल्प इति भागवत
व्याख्याने श्रीधरस्वामिनः २-६-२५
मानसिकोऽध्यवसायः संकल्प इति कालादर्शः इति
पुरुषार्थचिन्तामणौ-२०३

(२) यक्ष्ये करिष्ये इत्यादिपदोच्चारणसमकालीन
दक्षिणहस्तकरणकपात्राधिकरणक जलप्रक्षेपसहित करिष्य

माणकर्मानुष्ठानप्रतिज्ञा संकल्प इत्युच्यते
इति श्रौतपदार्थनिर्वचने ॥
अभावेऽपि प्रतिपदः संकल्पः प्रातरिष्यते इत्यादि

**संकल्पमानम्—** शुक्लपक्षषष्ठीदिवसभागः ।
संज्ञानं विज्ञानं प्रज्ञानं ज्ञानमभिज्ञानं संकल्पमानं
प्रकल्पमानमुपकल्पमानमुपलकृतं क्लृप्तं श्रेयोवसीय
आयन्त्यं सम्भूतं भूतं प्रभूतमिति शुक्लपक्षदिवसनामानि
सावित्रचयने तैत्तिरीया पाठन्तीति कालमाधवे-२

**संकल्पश्राद्धम्—** पिण्डादिरहितं श्राद्धम् ।
संकल्पं तु यदा कुर्य्यान्न कुर्यात पात्रपूरणम् ।
नावाहनाग्नौकरणं पिण्डांश्चैव न दापयेत् ॥
इति व्यास
तत्र उच्छिष्टपिण्डोऽपि न दातव्यः विकिरश्च न दातव्य
इति वचनात् ।
अत्र शिष्टानां संग्रहकारिका यथा कालसारे-
मघाव्यतीपात निशाकरार्कोपरागसंक्रान्ति युगादि-
केषु छेदग्रहाणां नवशस्यलाभे श्राद्धे विशेषं प्रवदन्ति-
धीराः ॥ नावाहनं नार्घ्यविधिर्नचाग्नौक्रिया
विकीर्णं च नचापि पिण्डाः नाक्षय्यदानं न च सौमनस्यं
नैव स्वधावाचनदक्षिणे च इति ।

**संकष्टव्रतम्—** भाद्रपदशुक्लचतुर्थ्यां विहितं व्रतम् ।

**संकसुकः—** अस्थिरः संकुसुक इति पाठोऽपि दृश्यते ।
अमरकोषे संकसुक इति पाठः ३-१-४३
मनुवसिष्ठस्मृत्योस्तु संकुसुक इति पाठः ॥
अनग्निनिकेतः स्य द् ग्राममन्नार्थमाश्रयेत् ।
उपेक्षकोऽसंकुसुकेमुनिर्भावसमाहितः ॥
मनुः ६-४३

**संकुलः—** (१) संकुलः ।
चोरादिभिर्ग्रामाद्युपद्रवः इति हरदत्तः ।
संकुलोपाहितवेदसमाप्तिछर्दिच्छ्राद्धमनुष्ययज्ञभोजनेषु
इति गौतमधर्म २-७-३४
(२)संकीर्णम् ।

**संक्रमः—** (१) पोल इत्यादि शब्दवाच्यः शङ्क इति
लोकभाषाप्रसिद्धः ॥
संक्रमः जलोपरिगमनार्थं काष्ठशिलादिरूप इति
कुल्लूकः ।
संक्रमध्वजयष्टीनां प्रतिमानां च भेदकः ।
प्रतिकुर्याच्च तत्सर्वं पञ्च दद्याछतनिच ॥ मनुः ९-२८५
प्रियोवा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।
वैश्वदेवे तु संप्राप्ते सोतिथिः स्वर्गसंक्रमः ॥
इति शातातपपराशरौ ।
स्वर्गसंक्रमः स्वर्गप्राप्तिसाधन इति मित्रमिश्रः ।
मातापितृषु यद्द्याद् भ्रातृषु श्वशुरेषु वा ।
जायापत्येषु यद्दयात् सोनन्तः स्वर्गसंक्रमः ॥
व्यासस्मृतिः ४-२८
अत्र स्वर्गसंक्रमः स्वर्गप्राप्तिहेतुः यथा

नद्यादौ परिकल्पितः संक्रमः पथिकान् अनायासेन परपारं प्रापयति तथायमतिथिः स्वर्गप्राप्तिं प्रति संक्रमसदृश इति भावः ।

कौटलीयेऽपि-३-१०

राजादेशहितान् सेतून् कुर्वतां पथि संक्रमान् ।
ग्रामशोभाश्च रक्ष्याश्च तेषां प्रियहितं चरेत् ॥ इति

संक्रमः उदकावतरण मार्ग इति विज्ञानेश्वरः ३-२६२

संक्रमाणां तु यः कर्त्ता स दुर्गं तरतेनरः ।
स्वर्गलोके च निवसेदिष्टकासे तु कत्तथा इति हयशीर्षे

इति दानक्रिया कौमुदी-१८२

(२) सूर्यस्य राश्यन्तरगमनम् ।

त्रुटेः सहस्रभागे यः स कालो रविसंक्रमे ॥

इति कालदीपे

संक्रमे ग्रहणे चैव न स्नायाद् यदि मानवः ।
सप्तजन्मसु कुष्ठी स्याद्दुःखभागी च सर्वदा ॥

नित्याचारपद्धति-११७

**संगः**— (१) संगः लोकाचारप्राप्तमीतायज्ञादिरिति

कल्पतरुः ।

कुर्य्याद्घृतरशुं सङ्गे कुर्य्यात्पिष्टपशुं तथा ॥
न त्वेव तु वृथा हन्तुं पशुमिच्छेत् कदाचन ॥

मनुः ५-३७

अत्र प्रस्तावात् पशुवधप्रसंगे इति मेधातिथिः ।
संगे लोकाचारप्राप्तो सत्यामिति गदाधरः ॥

( ) आसक्तिः ।

न कुड्यां नोदके सङ्गे न चैले न त्रिपुष्करे ।
नागारे नासने नान्ने यस्य वै मोक्षवित्तु सः ॥

वसिष्ठः-१०-२३

**संगतम्**— सख्यम् ।

यः संगतानि कुरुते मोहाच्छ्राद्धेन मानवः ।
स स्वर्गाच्च्यवते लोकाच्छ्राद्धमित्रो द्विजाधमः ।

मनुः ३-१४०

मित्र संगतयोर्भेद उक्तो महाभारते उद्-३६-३७

न तन् मित्रं यस्य कोदपाद् विभेति ।
यद्वा मित्रं शंकितेनोपचर्य्यम् ।
यस्मिन् मित्रे पितरीवाश्वसीत ।
तद्वै मित्रं संगतानीतराणि ॥ इति

**संगरः**— (१) युद्धम् ।

आत्मनश्च परित्राणे दक्षिणानां च संगरे ॥
स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्मेण न दुष्यति ॥

मनुः ८-३४६

(२) प्रतिग्रहः ।

निर्मंक्ष्येहं सलिलस्य मध्ये मोघस्य एष कश्यपायास

संगरः राजमी प्रका-१०३

**संगवः**— पञ्चधाविभक्तदिवसस्य द्वितीयो भागः ।

अपराह्णे न मध्याह्ने न तु संगवे ।
भुञ्जीत संगवे चेत्स्यान्न पूर्वं भुक्तिमाचरेत् इति ।
भुजिमाचरेत् इति पाठन्तरम् ।

त्रिमुहूर्त्तं प्रातः स्यात्तावानेव तु संगवः मध्याह्न

स्त्रिमुहूर्त्तः स्यादपराह्णस्तथैव च ॥ १५६

सायं तु त्रिमुहूर्त्तः स्यात् पञ्चधा काल उच्यते ॥

प्रजापतिस्मृतिः-१५७

**संगवर्जितः**— संन्यासी ।

ब्राह्मणादिहते ताते पतिते संगवर्जिते ।

व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥

इति मिताक्षरायां कात्यायनः

**संग्रहः**— (१) रक्षणम् ।

राष्ट्रस्य संग्रहे नित्यं विधानमिदमाचरेत् ।

सुसंगृहीतराष्ट्रोहि पार्थिवः सुखमेधते ।

मनुः ७-११३

निग्रहेणैव पापानां साधूनां संग्रहेण च ॥

मनुः ८-३११

अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् ।

शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्यवेक्षणे ॥

मनुः ६-११

(२) चित्तानुरञ्जनम् ।

न श्राद्धे भोजयेन् मित्रं धनैः कार्योऽस्य संग्रहः ।

नारिं न मित्रं यं विद्यात्तं श्राद्धे भोजयेद्द्विजम् ॥

मनुः ३-१३८

**संग्रहणम्**— (१) स्त्रीपुंसयोर्मिथुनीभावः संग्रहणमिति

विज्ञानेश्वरः ।

संग्रहणं नाम समीचीनं ग्रहणम् परस्त्रिया आत्मीयाताकरणमिति दण्डविवेके ॥ १५४

(२) संग्रहणं दशग्रामीप्रधानाधिष्ठानमिति श्रीमूला-

धर्मस्थास्त्रयस्त्रयोमात्या जनपदसन्धिसंग्रहणद्रोण-

मुखस्थानीयेषु व्यावहारिकानर्थान् कुर्युः ॥

कौटल्यः ३-१-१

**संग्राहः**— बृहदुद्रंगः ।

श्लेषणपूर्वकमग्रपादाभ्यामुत्प्लवनमिति यावत् ।

इति नीलकण्ठः महा भा उद्-१५५-२०

असंग्राहाः सुसम्पन्ना हेमभाण्डेपरिच्छदाः ।

अनेकशतसाहस्राः सर्वे सादिवशे स्थिताः ॥ २०

**संघः**— (१) एकधर्मानुगतानां नानादेशवासिनां नाना-

जातीयामपि प्राणिनां समूहः । यथा भिक्षूणां

संघो वणिजां संघश्चातुर्विध्यानां संघ इति

मेधातिथिः ॥ मनुः-८-२१९

(२) आर्हतसौगतादीनां समूहः ।

आर्हतसौगतानां तु समूहः संघ उच्यते ॥ इति

विवादरत्नाकरे कात्यायनः ६६९

**संघातान्तर्गतः**— मठब्राह्मण इति श्राद्धविवेके शूलपाणिः

कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्या क्रियानृप ।

संघातान्तर्गतैर्वापि कार्या प्रेतस्य सत्क्रिया ॥

इति श्राद्धदीपे

**संघुष्टान्नम्**— को भक्षयिष्यतीति समुद्घोषणेन परिविष्ट-

मन्नम् उदकयास्पृष्टस ंघुष्ठ ं पर्य्यायान्न ं च वर्जयेत् ।
गोघ्रातं शकुनोच्छिष्ट ं पदास्पृष्ट ं च कामतः ॥
याज्ञः १-१६८

**संचरभागिनः**— दासादयः ।
उच्छिष्ट ं न प्रमृज्यात्तु यावन्नास्तमितो रविः ।
क्षीरधारास्ततो यान्त्यक्षय्याः स ंचरभागिनः ॥ इति
वसिष्ठः ११-२२

**स ंचारिरोगाः**— स ंचारिणो रोगाः कुष्ठापस्मारप्रभृतयः ।
दशपुरुषविख्याताच्छ्रोत्रियाणां महाकुलात् ॥
स्फीतादपि न स ंचारिरोगदोषसमन्वितात् ॥
याज्ञ-१-५४

**सचेलस्नानम्**— सवस्त्रस्नानम् ।

**संज्ञपनम्**— (१) स ंज्ञपनं प्रतारणमिति शूलपाणिः ।
सोमविक्रयकन्याविवाहमयमैथुनबालस ंज्ञापन ंग ब्राह्मणहितं च कुर्वन् न मिथ्यालिप्यते इति प्रायश्चित्तविवेके हारीतः ॥
(२) मारणविशेषः ।
वर्हिषि प्रतीचीनशिरसमुदीचीनपाद ं पशुं शाययित्वा शमितारः स ंज्ञपयन्ति एव ंरीत्या पशोमरिण ं स ंज्ञपनम् ॥

**संज्ञापनम्**— शुक्लप्रतिपद्दिनभागः ॥
शुक्लप्रतिपच्छब्दो द्रष्टव्य ॥

**सञ्जीवनम्**— नरकविशेषः मनुः ४-८६

**सञ्ज्वधिकरणम्**— यो ब्राह्मणायावगुरेत्, शतेन यातयेत् ।
यो ब्राह्मणायोपचरेत् स शंयुर्भवेत् इति ॥

**सटा**— केशः ।
एतदेव कुमारीणा सटोद्धरणम् काठकगृ ३-७-६

**सटालु**— सटालु अपक्वफलमिति हरिहरगदाधरौ ।
सटालुग्रप्सेनेति पारस्करः १-१५-४

**सतानुनात्री**—तानूनाप्त्रं नाम सोमयागे ऋत्विजां दीक्षितस्य च ।
आज्याभिमर्शनलक्षणं कर्म समानं तानूनप्त्रं येन अस्ति स सतानूनप्त्री इति हरिहरभाष्ये ॥
पारस्करः-२-११-८

**सतीनः**— (१) मटर इति ख्यातः द्विदलविशेषः ।
सतीनः कलाय इति हेमाद्रिः
गोभूमैरिक्षुभिर्मुद्गैः सतीनैश्चणकैरपि इति विष्णु.
धर्मोत्तरे सतीनका वर्त्तुलकलाया इति वालम्भट्टौ ॥
याज्ञ-१-३६५
कलायस्त्रिपुटः प्रोक्तो सतीनो वर्त्तलो मतः ।
स च मटर इति वैद्यकशब्दसिन्धो ॥
(२) शाकविशेषः ।
सतीनो वास्तुकश्चुंचुचिल्लीमूलकपोतिका ।
मण्डकपर्णी जीवन्ती शाकवर्गे प्रशस्यते ॥ इति
सुश्रुतसूत्रस्थाने ४६ अध्याये इति कल्पद्रुमः ॥

अत्र शाकत्वेन सतीनपत्राणि उक्तान्येव ।

**सत्यम्**— (१) यथार्थवादः ।

सत्यमप्राणिपीड़ाकरं यथार्थवचनमिति विज्ञानेश्वरः ।

१-१२२

सत्यं यथार्थं प्रियवचनमिति स एव ॥

३।श-३-६६

यथार्थाभिधानमिति कुल्लूकः ६-६२

भूतहिताय यथार्थवचनं सत्यमिति हेमाद्रिः ।

सत्यं भूतहितं प्रोक्तं मनसोदमकं दमः ।

तपःस्वधर्मवर्त्तित्वं शौचं संकरवर्जनम् ।

सन्तोषो विषयत्यागः ह्रीरकार्य्यनिवर्त्तनम् ।

क्षमा द्वन्द्वसहिष्णुत्वं मार्जवं समचित्तता ॥

ज्ञानं तत्त्वार्थसंबोधः शमश्चित्तप्रशान्तता ।

दया भूतहितैषित्वं ध्यानं निर्विषयं मनः ॥

इति व्यासः स्मृतिचन्द्रिका संस्कार-१४

परिभाषाप्रकाशे-३४

यद्भूतहितमत्यन्तं तत् सत्यमित धारणा ।

हितं स्याद् येन भूतानां तत्तद् वाच्यं विजानता ॥

विष्णुधर्मोत्तरपु-३-२६६-१३

देशकालादि विज्ञानात् स्वधर्मस्याविरोधतः ।

यद् वचः प्रोच्यते सद्भिस्तत् सत्यमभिधीयते ॥

बृहन्नारदीयपु-१५-२५

चत्वार एकतो वेदाः साङ्गोपाङ्गः सविस्तराः ।

स्वधीतामनुजव्याघ्र सत्यनेकं किलेकतः ॥

महाभा, वन, ६४-१०

(२) कृतयुगम् ।

कृतयुगस्य सत्यप्रधानात् सत्ययुगसंज्ञा ।

वैशाखशुक्लतृतीयायां तस्योत्पत्तिरिति युगादिशब्दे द्रष्टव्या, नरमानेन तस्य कालः अष्टाविंशतिसहस्राधिक-सप्तदशलक्षवर्षात्मकः ॥ मनुः-१६६

(३) ज्ञातम् ।

श्रद्धयासत्यमाप्यते इत्यस्यव्याख्याने महीधर आह-

श्रद्धया सत्यं ज्ञानमनन्तं ब्रह्मप्राप्यते इति उवटस्तु सत्यं ज्ञानमनन्तं ब्रह्म त्रयीलक्षणं वेत्याह ॥

शु, य, १९-३०

**सत्यंकारकृतम्**— इदंमया क्रीतं विक्रीतं यत् स्वीकृतम्। क्रयविक्रयादिव्यवस्थानिर्वाहाय यदंगुलीयकादि परहस्ते कृतं तत् सत्यंकारकृतमिति विज्ञानेश्वरः

२-६१

**सत्यलेख्यम्**— लेख्यविशेषः ।

जङ्गमं स्थावरं बन्धं कृत्वा लेख्यं करोति यत् ।

ग्रामो देशश्च यत् कुर्यात् सत्यलेख्यं परस्परम् ॥

इति शुक्रनीतौ

**सत्यसन्धः**— सत्या सन्धा अभिसन्धिरभिप्रायो यस्य असौ सत्यसन्धः सत्यसंकल्प इत्यर्थः इति

हेमाद्रि परि-४१२

**सत्यानृतम्**— वाणिज्यम् ।

सत्यानृतं तु वाणिज्यं तेन चैवापि जीव्यते ।

सेवाश्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ॥

इति मनुः-४-६

**सत्रम्**— एतावदितिकालमुद्दिश्य यज्ञानुष्ठानं सत्रमिति नरसिंहवाजपेयी नित्याचारप्रदीपे-२-३१७

(१) सत्रं गवायनादिक्रतुविशेष इति कुल्लूकः-८-३०३

अभयस्य हि यो दाता स पूज्यः सततं नृपः ।

सत्रं हि वर्द्धते तस्य सदैवाभयदक्षिणम् ॥

इति मनुः-८-३०३

गो सत्रादिषु सावन इति कालमाधवे ।

(२) सत्रं कर्मेति श्रीधरस्वामी ।

ब्रह्मनद्यां सरस्वत्यामाश्रयः पश्चिमे तटे ।

शम्याप्रास इति प्रोक्त ऋषीणां सत्रवर्द्धनः ॥

श्रीभागवते, १-७-२

(३) सत्रम् अन्नादिवितरणस्थानम् ।

ऋत्विजांदीक्षितानां च यज्ञियं कर्म कुर्वताम् ।

सत्रि व्रति ब्रह्मचारि दातृब्रह्मविदां तथा ।

दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।

आपद्यपि हि कष्टायां सद्यः शौचं विधीयते ॥

याज्ञ-३-२८-२६

सत्रिग्रहणेन सततानुष्ठानानतुल्यतयान्नसत्रप्रवृत्ता लक्ष्यन्ते इति विज्ञानेश्वरः

देशभाषायां छत्र इत्यस्य अपभ्रंशः ।

(४) सत्रं दुर्गादिसङ्कटप्रदेशः ।

सत्रादपसरेद् यत्तः कलत्रमपनीय वा ।

समादपि हि लब्धार्याद् विश्वस्तस्य भयं भवेत् ।

अत्र यत्तः यत्नवान् ॥

**सत्री**— (१) कृतसत्रयागः ।

अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः ।

दृष्टमात्राः पुनन्त्येते तस्मात् पश्येन नित्यशः ॥

इति पराशरः-१२-४६

अत्र सत्री द्वादशाहमारभ्य सहस्रसम्वत्सरपर्यन्तेषु सत्रेषु यस्यकस्यचित् सत्रस्यानुष्ठाता इति माधवः ॥

(२) क्रियमाणसत्रश्च न व्रतिनां व्रते न सत्रिणां सत्रे ॥

इति विष्णुः २२-५०

(३) गुप्तचरः ।

सत्रिप्रयोगादूर्ध्वम् इत्यादि कौटल्यः ४-५

**सत्वसम्पन्नः**— सम्पदापदोः हर्षविषादरहित इति विज्ञानेश्वरः १-३०९

**सत्वस्थः**— कामक्रोधादिरहित इति विज्ञानेश्वरः ३-१९९

**सदः**— (१) वृक्षफलम् (अकारान्तोयंसदशब्दः, अस्य तालव्यादिपाठोऽप्यस्ति)

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता ।

धान्येसदेलवे वाह्ये नातिक्रामति पञ्चताम् ॥

मनुः ८-१५१

अत्र सदे वृक्षफले इति कुल्लूकः ॥

(२) सभा ।

राजा मन्त्री वा सदः कार्याणि कुर्यात् ॥

वसिष्ठः १६-२

(३) यज्ञमण्डपविशेषः ।

तत्र सदो ब्राह्मणस्य शरीरम् ॥ वसिष्ठः ३०-५

**सदशबन्धकम्**— दशमांशसहितम् ।

अब्रुवन् हि नरः साक्ष्यमृणं सदशबन्धकम् ।

राज्ञा सर्वं प्रदाप्यः स्यात् षट्चत्वारिंशकेऽहनि ॥

याज्ञ २-७६

**सदोमण्डप**— यज्ञमण्डपविशेषः ।

**सद्भावकः**— अतिसुहृत् ।

सद्भावकस्य शुद्धभावकस्य अतिसुहृद् इति यावदिति गदाधरराजगुरुः ।

अस्थीनि मातापितृपूर्वजानां नयन्ति गङ्गाम्भसि ये कदाचित् ।

सद्भावकस्यापि दयाभिभूतास्तेषां च तीर्थानि फलप्रदानि ॥ इत्यादित्यपुराणे

**सद्यप्रक्षालकः**— अश्वस्तनिकः ।

सद्यः प्रक्षालको वा स्यात् माससंचयिकोऽपिवा ।

षण्मासनिचयो वस्यात् समानिचय एव वा ॥

**सद्यस्कम्**— तत्कालपक्वम् तत्कालनिर्मितं च सज इति भाषायाम् ।

परिपक्वं सुपात्रस्थं सुगन्धि नयनप्रियम् ।

सद्यस्कमेतिप्य नैवेद्येति शुभप्रदम् ॥ इति पूजाप्रकाशे वैधानसः

अतिपक्वमपक्वं च सुपक्वं कृमिसंयुतम् ।

दुर्भाण्डस्थमसद्यस्कं दुर्गन्धि न शुभस्मृतम् ॥

इति तत्रैव कौर्मे ।

**सद्योवधूः** - या स्त्री गृहाश्रमं प्रविशति सा ।

द्विविधाः स्त्रियः ब्रह्मवादिन्यो सद्योवध्वश्च ।

तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनंवेदाध्ययनं स्वगृहे च भैक्षचर्या इति हारीतः ।

सद्योवधूनामुपनयनं कृत्वा विवाह इति निर्णयसिन्धौ-३

**सनाभिः**— सहोदरः ।

सोदर्या विभजेरंस्तं समेत्य सहिताः समम् ।

भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ॥

मनुः ९-२१२

**सनाभ्यः**— सहोदरः सपिण्डश्च ।

न वर्द्धयेदघाहानि प्रत्यूहेन्नाग्निषुक्रियाः ।

न च तत्कर्मकुर्वाणः सनाभ्योऽप्यशुचिर्भवेत् ॥

मनुः-५-८४

**सन्ततिः**— (१) प्रजा ।

सन्तनोति अन्वयमिति सन्ततिः प्रजापर्याय एव इति दत्तकमीमांसायां नन्दपण्डितः ॥

(२) सन्तन्यमानं तृणादि इति नरसिंहवाजपेयी ।

वाक्प्रशस्तं चिरातीतमनेकान्तारतं लघु सन्ततिर्मक्षिकाधारा ॥

**सन्तनी—** सन्तनी होमविशेषाः आयुषः प्राणमित्येकादश ।

आयुषः प्राणमिति सन्तनीर्जुहोति काठकगृ ४-७-७

**सन्तानः—** (१) वंशः ।

निर्वाप्य पिण्डान्वयेन तु सापिण्डये मातृसन्ताने भ्रातृपितृव्यादिषु च सापिण्ड्य न स्यात् इति मिताक्षरायां विज्ञानेश्वरः १-५२

(२) पुत्रः ।

कूपस्तड़ागमुद्यानं मण्डपं च प्रपा तथा ।

सन्दर्भकरणं पुत्रः सन्तानं सप्तधोच्यते ॥

स्कान्दे, वै, वैशा, ४-३४

सच्छास्त्रश्रवणं तीर्थयात्रा सज्जनसङ्गतिः ।

जलदानं चान्नदानमश्वत्थारोपणं तथा ।

पुत्रश्चेति च सन्तानं सप्त श्रुतिविदो विदुः ॥

इति अन्यत्र

(३) गर्भाधानम् ।

प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थं च मानवाः ।

तस्मात् साधारणो धर्मः श्रुतो पत्न्या सहोदितः ॥

इति मनुः ६-९६

**सन्तानिका—** पक्वदुग्धस्य कठिन उपरिभागः सर इति प्रसिद्धः ।

क्षीरस्य पच्यमानस्य यथा सन्तानिका भवेत् ।

पच्यमानस्य शुक्रस्य रजसश्च तथा त्वचः ॥ इति

चरके, शा, ७ अ,

**सन्दशः—** (१) लौहनिर्मितः वस्तुग्रहणसाधनः यन्त्रविशेषः

लौहपिण्ड तृतीये तापे सन्तप्य सन्दशेन गृहीत्वा पुरत आनीते इति विज्ञानेश्वरः ।

अग्निदिव्यप्रकरणे-२-१०४

असत्यनिरतानांच तथा निष्ठुरभाषिणाम् ।

उत्पाद्यन्ते सदा जिह्वाः सन्दशैर्भृशदारुणैः ॥

वृहन्नारदीयपु १४-११६

(२) सन्दश वृद्धाङ्गुलितर्जन्यौ इति शूलपाणिः ।

उपधिदेविनां सन्दशच्छेदः इति विष्णुः ।

उत्क्षेपकग्रन्थिभेदौ करसन्दशहीनकौ इत्यस्यव्याख्याने तौ यथाक्रमं करेण सन्दशसदृशेन तर्जन्याङ्गुष्ठेन च हीनौ कार्यौ इति विज्ञानेश्वरः २-२७४

**सन्दर्शनी—** ध्रुवावृत्तिः भिक्षावृत्तिरिति यावत् ।

गृहद्वारे आत्मानं वीवधेन सहदर्शनात् सन्दर्शनीत्याचक्षते ॥ बौधा ३-२-६

**सन्दाता—** बन्धनकर्त्ता मनुः ८-३४२

**सन्दितः—** बद्धः असन्दितानां सन्दाता सन्दितानां च मोक्षकः ।

दाराधर्षहर्त्ता च प्राप्तः स्याच्चौरकिल्विषम् ।

मनुः ८-३४२

**सन्दिष्टम्** – प्रतिश्रुतम् इति विज्ञानेश्वरः ।

अर्घ्याक्षेपाति क्रमकृद् भ्रातृभार्य्याप्रहारकः ।

सन्दिष्टस्याप्रदाता च समुद्रगृहभेदकृत्

इत्यादि याज्ञ २-२३२

**सन्देहः**— संशयः ।

न च सन्देहे दण्ड कुर्य्यात् ।। आपस्त २-५-११-२

**सन्दोहः**— सर्वधेनूनां दुग्धम् ।

सन्दोहः सर्वधेनूनां दुग्धमिति विवारत्नाकरे पृ-१७०

सर्वघोषस्य सन्दोहो गृह्यतां मा विचार्यताम् ।

भोज्यन्तां तेन वै विप्रास्तथा ये चाभिवाञ्छकाः ।।

विष्णुपुराणे-५-१०-३६

**सन्धा**— प्रतिज्ञा मर्यादा अमरः ३-३-१०२

सत्यसन्धशब्दो द्रष्टव्यः ।

**सन्धानम्**— (१) अभिषवः इत्यमरः २-१०-४२

जले घृते तथा तैले सन्धाने गोरसेषु च ।

कुशान्तराय कुर्वीत ग्रहणे चन्द्रसूर्य्ययोः ।

इति निर्णयसिन्धुव्याख्याने स्मृत्यन्तरवचनम् ।।

(२) अर्थप्राप्तिः इति महाभारतव्याख्यायां नीलकण्ठः

शान्ति ८०-२४

(३) संयोजनम् ।

शीर्णस्फुटित सन्धानं यः करोति नरोत्तम ।

शिवस्यायतन वापि विष्णोर्वा शृणुतत्फलम् ।

शतजन्मार्जिते पापैर्मुक्तो वंशत्रयान्वितः ।

स्थित्वा विष्णुपुरे कल्पं तत्रैव परिमुच्यते ।।

इति वृहन्नारदीये पूजाप्रकशे-२५

प्रकाशितनारदीयपुराणेतु –

शीर्णस्फुटित सन्धानं कुरुदेवगृहे सदा ।

मार्गशोभां च दीपं च विष्णोरायतनं कुरु ।

इति-३१-५५

**सन्धानिका**— अम्लरसात्मकः भोज्यद्रव्यविशेषः आचार इति प्रसिद्धः ।

सन्धानिकायाम् इति वैद्यकशब्दसिन्धौ ।।

**सन्धिः**— (१) सन्धिः गृहवास्तु गर्भ इति मन्वर्थविवृतिः भित्तिरिति मन्वर्थ चन्द्रिका ।

कपाटियन्त्रादिकमिति नन्दपण्डितः ।।

सन्धिभित्त्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः ।।

मनुः-६-२७६

तेषां छित्वा नृपो हस्तौ तीक्ष्णे शूले निवेशयेत् ।

सन्धिछेदनं कवाटादियन्त्रभेदनम् इति व्यवहार-निर्णये-५०८

(२) राजधर्मगतगुणविशेषः ।

सन्धिः व्यवस्थाकरणमिति सरस्वतीविलासे ।

समानयानकर्मा च विपरीत स्तथैव च ।

तदात्वायतिसंयुक्तः सन्धिर्ज्ञेयो द्विलक्षणः ॥

मनुः ७-१६३

(३) सन्धिः कालविशेषः सन्ध्या इति प्रसिद्धः ।

अहः सम्पूर्णदिव्यमण्डलदर्शनयोग्यः कालः ।

तद्विपरीता रात्रिः ॥

यस्मिन्काले खण्डमण्डलस्योपलब्धि स सन्धिरिति

विज्ञानेश्वरः १-२४

सन्धौ सन्ध्यासमये इति हरिहरः पारस्करः २-८-७

(४) अपमार्गः ।

सन्धिना अपमार्गेण वा सर्पणं सन्धिसर्पणम् ।

कुद्दारमिति गदाधरः पारस्करः २-७-७

**सन्धितम्**— आसवादि ।

सन्धितम् आसवादिरिति गदाधरराजगुरुः ।

कार्त्तिके वर्जयेत् कांस्यं कार्त्तिके शुक्तिसन्धितम् ।

अत्रसन्धितं लवणशाक इति निर्णयसिन्धुसमयमयूखयोः ।

सन्धितमत्र सन्धानपर्यायो नवेति गवेषणीयम् ।

**सन्धिनी**— (१) वृषस्यन्ति गौः या वृषेण सन्धीयते सा ।

सन्धिनी वृषस्यन्ति तस्याः पयो न पिबेत् ।

ऋतुमद्भवति इति कल्पतरौ हारीतः नियत-२६५

(२) या चैकां वेलामतिक्रम्य दुह्यते या च

वत्सान्तरेण सन्धीयते-सा सन्धिनी ।

या गर्भिणी दुग्धे सा सन्धिनी एककालदोहनेत्यन्ये

इति हरदत्तः गौतमः २-८-२५

स्यन्दिनी यमसूसन्दिनीनां च इति गौतमः ।

**सन्धिपत्रम्**— अर्थिप्रत्यर्थिनोः विवादसमाधानपत्रम् ।

सन्धिपत्रं तु विज्ञेयमर्थिप्रत्यर्थिनोर्यदा ।

परस्परानुमत्या च निर्मितं तु ससाक्षिकम् ॥

इति सरस्वतीविलासे हारीतः

**सन्धिभेत्ता**— चौरविशेषः ।

गृहाणां विच्छेदाय कृतसञ्चरस्थाने पृष्ठसन्धाववस्थाय

तत्रत्यभित्तिभेत्ता इति स्मृतिचन्द्रिका ॥ ३१८

**सन्ध्या**— (१) कालविशेषः दिवसरजन्योः सन्धि-

कालस्वरूपः ।

ह्रासवृद्धी तु सततं दिवसानां यथाक्रमम् ।

सन्ध्या मुहूर्त्तमात्रं च ह्रास वृद्धौ च सास्मृता इति पाठः

योगिया-६-११

सन्ध्यागर्जितनिघातिभूकम्पोल्कानिपातने

इत्यादियाज्ञ-१-१४५

(२) कर्मविशेषः ।

अहोरात्रयोः सन्धौ या क्रिया विधीयते सा सन्ध्या

इति विज्ञानेश्वरः याज्ञ १-२४

सन्धौ सन्धा सुपासीत नास्तगे नोदगते रवौ इति

योगियाज्ञवल्क्यः ६-२५

सन्ध्यां चोपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत ॥

मनुः ७-२२३

सन्ध्यामुपास्य शृणुयाच्चाराणां गूढभाषितम् ॥

याज्ञ १-३३०

ओंकारो व्याहृतीः सप्त गायत्री शिरसा सह ।

आपोहिष्ठेत्यृचस्तिस्रो द्रुपदा चाघमर्षणम् ।

६-५ (योगिया)

उदुत्यं चित्रं तच्चक्षुस्तेजोसीति यथाक्रमम् ।

गायत्र्याश्च तुरीयं तु सन्ध्यामेतत् समाचरेत् ॥

इति योगियाज्ञवल्क्यः स्मृतिचन्द्रिकायाम् ।

आह्निक-३५७ (सङ्गमस्तूभयोर्भवेत्)

विप्रो वृक्षस्तस्य मूलं च सन्ध्या वेदाः शाखा

धर्मकर्मादिपत्रम् ।

छिन्ने मूले नैव शाखा न पत्रं तस्मान्मूलं

यत्नतो रक्षणीयम् ।

इति कुलोचितधर्मशिक्षायाम् १०

(३) ब्रह्मणः तनुः ।

त्रयाणां चैव देवानां ब्रह्मादीनां च सङ्गमः ।

मध्यमायां च सन्ध्यायां सर्वदेवसमागमः ॥ ६-१६

सन्धिः सर्वसुराणां च सन्ध्या तेन उदाहृता ।

गरीयसी च भूतानां तेन पैत्री तनुर्हि सा ॥ ६-२०

योगियाज्ञवल्क्यस्मृतिः

पैत्री पितृजननार्थां ब्रह्मणः तनुः सन्ध्या ॥

(४) सन्ध्याशब्दस्य विशिष्टोऽर्थः नित्याचारप्रदीपे १-४६१

सन्निधने तु परे सूक्ष्मे निर्गुणे गुणबोधिनि ।

प्रधानपुरुषातीते सन्निधते सन्धिरुच्यते ॥

परे सूक्ष्मे अविद्याजीवभिन्ने निर्गुणे प्रपञ्चहीने गुणबोधिनि जनवर्गस्य साक्षिणि परमात्मनि ब्रह्मबुद्ध्या सन्निधते पुनश्च प्रस्तुतत्वात् आदित्यमण्डले एवंविधपरमात्मबुद्ध्याधिते सन्धिःसन्ध्याशब्दः स्वात्मानं सर्वसाक्षिणं निष्प्रपञ्चं ब्रह्माहमिति ज्ञात्वा तदेव सूर्यमण्डलात्मकमिति बुद्धिः कार्या एवं सन्ध्याशब्दार्थः

योगियाज्ञवल्क्यस्मृतौ तु सा सन्ध्या सन्धिरुच्यते इति चतुर्थपादपाठ ॥ ६-२१

**सन्नः**— कृष्णपक्षरात्रिदशमुहूर्त्तः । कालमाधवे-३

**सन्नयनम्**— (१) पिण्डीकरणम् ।

यावद्ग्रासं सन्नयन् । आपस्त २-८-१६-५

(२) मिश्रणम् ।

सार्ववर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा ॥

समुत्सृजेद् भुक्तवतामग्रतो विकिरन् भुवि ॥

मनुः ३-२४४

**सन्निधाता** - (१) स्थापकः आश्रयदाता वा ।

अग्निदान् उक्तदांश्चैव तथा शस्त्रावकाशदान् ।

सन्निधातृश्च मोषस्य हन्याच्चौरमिवेश्वरः ।।

मनुः ६-२७८

(२) भाण्डागाराधिकृत इति धर्मूला १-१२-६

**सन्निपातः**— (१) मैथुनम् ।

यावत्संनिपातं च सहशय्या २१ ततो नानेति

२-१-१-२०

इति स्त्रीसहवासप्रकरणे

(२) समवाये ।

संनिपाते परस्य गौतमः १-६-४

आचार्य्य प्राचार्य्य सन्निपाते प्राचार्य्यायोपसंगृह्योपसं-

जीघृक्षेदाचार्य्य । आपस्त १-२-८-१६

**सन्निवापः**— संसर्गः ।

सन्निवापः संसर्ग इति नित्याचारप्रदीपे ।

अनग्निना सन्निवापं वर्जयेत् ।। आपस्तम्बः १-५-१२-१०

सन्निवापः एकत्रीकरणमिति हरदत्तः ।

**सन्निवेशः**— परिच्छिन्नो देशः ।

सन्निवेशः पूर्वापरदिग्विभागपरिच्छिन्नः ।

सम्यङ्निविष्टो गृहक्षेत्रादिरिति विज्ञानेश्वरः २-६

सन्निवेशो गृहादि इति वैजयन्त्यां नन्दपण्डितः

विष्णुः ३-७४

सन्निवेशो निकर्षण इत्यमरः ।

इयानसावीश्वरविग्रहस्य यः सन्निवेशः कथितो मयते ।

संधार्यतेऽस्मिन्वपुषिस्थविष्टे मनः स्वबुद्धया न यतो-

ऽस्ति किंचित् इति भागवते ।। २-१-३८

**सन्निहत्या**— कुरुक्षेत्रगततीर्थविशेषः इति गदाधरः ।

कुरुक्षेत्रस्य संज्ञान्तरमिति मित्रमिश्राः ।

कुरुक्षेत्रशब्दो द्रष्टव्यः ।।

सन्निहतिः कुरुक्षेत्रवर्त्तितीर्थ विशेष इति स्मृतिचन्द्रिका

श्राद्धकाण्डे-१४५

गङ्गाद्वारे प्रयागे च नैमिषे पुष्करे तथा ।

सन्निहत्यां गयायां च दत्तमाक्षय्यतां व्रजेत् ।। इति शङ्खः

**सन्निहिता**— नदीविशेषः ।

ग्रहणयोगे—

पौषे तु नर्मदा पुण्या माघे सन्निहिता शुभा ।।

इति रेवाशब्दोऽपि द्रष्टव्यः ।

मित्रमिश्रमते इयं कुरुक्षेत्रस्य अपरा संज्ञा ।

कुण्डविशेषश्च कुरुक्षेत्रशब्दो द्रष्टव्यः ।।

**सपर्य्या**— पूजा ।

सपर्य्या विविधा प्रोक्ता तासामेकां समाश्रयेत् ।

गन्धादिका निवेद्यान्ता पूजा पञ्चोपचारिका ।।

इति कालिकापुराणवचनं पूजापङ्कजभास्करे ।। १२

**सपिण्डः**— पित्रादयः षट् पुत्रादयश्च षट् स्वयं चेति

तदन्वये वर्त्तमानः सर्वो जनः सपिण्ड ।।

सपिण्ड़ता तु पुरुषे सप्तमे विनिवर्त्तने ।। मनुः ५-६०

समानोदकभावस्तु जन्मनाम्नोरवेदने ।।

लेपभाजश्चतुर्थाद्याः पित्राद्या पिण्ड़भागिनः ।

पिण्ड़दः सप्तमस्तेषां सपिण्ड्यं साप्तपौरुषम् ।।

इतिमात्स्ये

विज्ञानेश्वरस्तु सपिण्ड़ता च एकशरीरावयवान्वयेन भवति इत्युक्तवान् ।। याज्ञ १-५२

दायभागप्रकरणे तु त्रिपुरुषं सापिण्ड्यमाह ।।

मनुः ९-१८६

त्रयाणामुदकं कार्यं त्रिषु पिण्ड़ः प्रवर्त्तते ।

चतुर्थः सम्प्रदातैषां पञ्चमी नोपपद्यते ।।

एतत्त्रिपुरुषं सापिण्डयं दायग्रहणार्थमिति जीमूत-वाहनादयः ।

विज्ञानेश्वरादीनां मते तु तदायग्रहणेपि साप्तपुरुषं सापिण्ड्यम् ।

**सपिण्डनम्**— सपिण्ड़ीकरणम् ।

प्रथममृतस्य तत्र पितृभिः सह समत्वसम्पादनाय यत्र श्राद्धं तदेव सपिण्डनं पिण्ड़मिश्रणमितिशब्दार्थः

**सपिण्ड़ीकरणम्**— श्राद्धविशेषः ।

यत्र प्रेतस्य तादुपरितनैस्त्रिभिः पितृपुरुषैः सह पिण्ड़ार्धपात्रकरणकंसंयोजनं क्रियते प्रेतस्य पितृत्व चागच्छति ।।

**सप्ततन्तुः**— यज्ञः सप्तधातवः ।

सुवर्णं रजतं ताम्रमारकूटं तथैव च ।

लोहं त्रपु तथा सीसं धातवः सप्त कीर्त्तिताः ।

इति भविष्यत्पुराणम् परिभाषाप्रकाश-११५

**सप्तधान्यम्**— यवगोधूमधान्यानि तिलः कङ्गुस्तथैव च ।

श्यामाकं चीनकं चैव सप्तधान्यमुदाहृतम् ।।

विष्णुधर्मः परिभाषाप्रकाश-११५

**सप्तपावमान्यः**— पवमानःसोमो देवता यासां ताः पावमान्यः इति हरदत्तः आपस्त-१-२-२

यदन्ति यच्च दूरके भयं विन्दति माहि पावमान वितज्जहि ।

पवमानस्सोऽद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु नः ।। २

यत्ते पवित्रमचिष्यग्ने विततमन्तरा ब्रह्म तेन पुनीहि नः ।। ३

यत्ते पवित्रमार्चिवदग्ने तेन पुनहिनः ब्रह्म सवैं पुनीहि नः ।। ४

उभाभ्यां देव सवितः पवित्रेण सवेन च मां पुनीहि विश्वतः ।। ५

त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोमधामभिः ।

अग्ने दक्षैः पुनीहिनः ।। ६

पुनन्तु मां देवजनाः पुनन्तु वसवो धिया विश्वेदेवाः

पुनीतन मा जातवेदः पुनीहि मा ऋ, सं ७-२-१७-१८

**सप्तपितृकामावास्या**— भाद्रामावास्या ।

अमावस्या च पित्र्येण नक्षत्रेण च संयुता ।

सप्तप्रकाराः पितरो जाताः कमलसम्भवात् ।

तेभ्यः पूजा च कर्त्तव्या तत्र सर्वात्मना बुधैः ।

पिण्डो देयस्तथाष्टाङ्गः श्राद्धं कार्यं च सर्वदा ॥

दर्शे सवर्णवटकैः पतिमाराधयन्ति याः

ताः सर्वाः सुभगा नार्यः पुत्रवत्यो वराङ्गनाः ।

न वैधव्यं भवेत्तासां पुनर्जन्मसु सप्तसु ॥

इति श्राद्धदीपे

**सप्तप्रकृतयः**— स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा ।

सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते ॥

मनुः ९-२९४

**सप्तगङ्गाः**— गङ्गाद्याः सप्तनद्यः ।

शुद्धं गृहं समफलं देवयज्ञादिकर्मसु ।

ततो दशगुणं गोष्ठं जलतीरं ततो दश ॥ १ ॥

ततो दशगुणं विल्वं तुलस्यश्वत्थमूलकम् ।

ततो देवालयं विद्यात्तीर्थतीरं ततो दश ॥ २ ॥

ततो दशगुणं नद्यास्तीर्थनद्यास्ततो दश ॥

सप्त गङ्गानदीतीरं तस्या दशगुणं भवेत् ॥ ३ ॥

गङ्गागोदावरी चैव कावेरी ताम्रपर्णिका ।

सिन्धुश्च सरयू रेवा सप्तगङ्गाः प्रकीर्त्तिताः ॥ ४ ॥

शिवपु-१- ५-५

**सप्तमुञ्जः** शरतृणम् ।

इषीका यस्य हेमाभा पत्रं यस्य सुपिञ्जरम् ।

सप्तमुञ्ज इति ख्यातः स शरः पर्पटः स्मृतः ॥

इति काठकगृह्यभाष्ये

तत्र सप्तमुञ्जों मेखलां धारयेत् ॥ काठकगृ-१-१-६

**सप्तमृत्तिकाः**— वल्मीकादुत्करात्लेपाज्जलाच्च पथि वृक्षयोः ।

कृतशौचावशिष्टाश्च न ग्राह्याः सप्तमृत्तिकाः ॥

**सप्तवेणी**— सप्तवेणीतीर्थविशेषः ।

वाराणस्यां कुरुक्षेत्रे भृगुतुङ्गे महालये ।

सप्तवेण्यृषिकूपे च दत्तमक्षय्यमुच्यते ॥ शङ्खः १४-२६

**सप्तहोता**— महाहवि होता, सत्यहविरध्वर्युः अच्युतपाजा-अग्नीत् इति अनुवाकः

**सप्ताङ्गं राज्यम्**— सप्तप्रकृतिशब्दो द्रष्टव्यः ।

**सप्तार्षम्**— सप्तर्षितीर्थम् ।

सप्त र्षे विशिष्टश्राद्धदेशमध्ये विष्णुना उक्तम् ८५-४१

**सप्ताहम्**— सप्त दिवसाः ।

यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः ।

रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः ॥

मनुः ८-१०८

**सप्तौषधयः** — व्रीहयः शालयो मुद्‌गा गोधूमाः सर्षपास्तिला ।

यवश्चौषधयः सप्त विपदं घ्नन्ति धारिताः ।

गोभिलस्मृतिः ३-१०७

**सब्रह्मचारी** — सहाध्यायी येन सह एकस्मादाचार्यादुपनयनाध्ययन तदर्थज्ञानप्राप्तिः स सब्रह्मचारीति विज्ञानेश्वरः समाने तुल्ये ब्रह्मणि वेदे चरति स सब्रह्मचारीति हरिहरभाष्ये पारस्करः २-११-८

**सभा** (१) कार्यनिर्णयाय राज्ञा प्राड्विवाकेन वा सहिता ब्राह्मण-गणकलेखकादियुक्ता संसत् । सा च चतुर्विधा तदाह व्यवहारनिर्णये बृहस्पतिः ॥

व्यवहारनिर्णयः-६

प्रतिष्ठिता चला चैव मुद्रिता शास्त्रिता तथा ।

चतुर्विधा सभा प्रोक्ता सभ्याश्चैव तथाविधाः ॥

प्रतिष्ठिता पुरे ग्रामे चला नामाप्रतिष्ठिता ।

मुद्रिताऽध्यक्षसंयुक्ता राजयुक्ता च शास्त्रिता ।

नृपाधिकृतसभ्याश्च स्मृतिर्गणकलेखकौ ।

होमाग्न्यम्बुपुरुषाः साधनाङ्गानि वै दश ॥

एषां मूर्द्धा नृपोऽङ्गानां मुखं चाधिकृतः कृतः ।

बाहू सभ्याः स्मृतिर्हस्तौ जङ्घे गणकलेखकौ ॥

हेमाग्न्यम्बु दृशौ हृच्चु पादौ स्व पुरुषस्तथा ।

दशानामपि चैतासां कर्म प्रोक्तं पृथक् पृथक् ॥

वक्ताध्यक्षो नृपः शास्ता सभ्याः कार्यपरीक्षकाः ।

स्मृतिर्विनिर्णयं ब्रूते जयं दानं दमं तथा ॥

शपथार्थौ हिरण्याग्नी अम्बु तृषितक्षुब्धयोः ।

गणको गणयेदर्थं लिखेन्न्यायं च लेखकः ।

कुर्यादलग्नकौ रक्षेद्योर्थिप्रत्यर्थिनौ सदा ॥

एतद्दशाङ्गं करणं यस्यामध्यास्य पार्थिवः ।

न्यायान् पश्येत् कृतमतिः सा सभाध्वरसंमिता ।

व्यवहारनिर्णये-६

जयदानमिति-व्यवहारकल्पतरौ-२६-२७

(२) सभा धूर्त्तादिस्थानम् इति हरदत्तः ।

सभाः समाजांश्चागन्ता आपस्तः १-१-३-१२

**सभाजनम्** — पूजनम् ।

**सभापतिः** — सभामुख्यः ।

**सभास्तारः** — (१) अखिललोकश्लाघ्यः सभापतिर्वा ।

अर्थिप्रत्यर्थिनौ सभ्यान् लेखकं प्रेक्षकांश्च यः ।

धर्मवाक्यै रञ्जयति स सभास्तारतामियात् ॥

इति स्मृतिचन्द्रिकायां व्यासः

सभास्तारः अखिललोकश्लाघ्य इति भावः ।

सभास्तारो भविष्यामि तस्य राज्ञो महात्मनः ।

कङ्को नाम द्विजो भूत्वा मताक्षः प्रियदेवनः ।

महा भा, विरा-१-२४

(२) सभासदः सभास्तारा: सभ्याः सामाजिकाश्चते ॥

अमरः २-७-१६

**सभिकः—** द्यूतसमाह्वयकारकः ।

सभिकः कारयेद्यूतं देयं दद्याच्च तत्कृतम् ।

इति नारदः

प्राप्ते नृपतिना भागे प्रसिद्धे धूर्त्तमण्डले ।

जितं ससभिके स्थाने दापयेदन्यथा ननु ॥

याज्ञ-२-२०१

**समः—** ब्राह्मणविशेषः ।

ब्राह्मबीजसमुत्पन्नो मन्त्रसंस्कारवर्जितः ।

जातिमात्रोपजीवी च स भवेद्ब्राह्मणः समः ।

वेदव्याससमृति ४-४३

**समञ्जसम्—** यथार्थम्, सत्यम् ।

सभा वा न प्रवेष्टव्यं वक्तव्यं वा समञ्जसम् ।

मनुः ८-१३

शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससम् ।

सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम् ॥

मनुः ८-२५६

**समता—** विगलितरागद्वेषता ।

कपालं वृक्षमूलानि कुचेलमसहायता ।

समता चैव सर्वस्मिन् एतन्मुक्तस्य लक्षणम् ॥

मनुः ६-४४

**समन्तम्—** चतुरस्रम् ।

अग्नेः स्थण्डिलं गोमयेन समन्तं पर्युपलिम्पति ।

गोभिलः १-५-१९

**समयः—** (१) पुरुषकृतनियमः ।

समयः पौरुषेयी व्यवस्था इति गौतमीये

उज्वलावृत्तौ च हरदत्तः आपस्त १-१-१-१

बहुभिः साधुभिः महाजनरक्षार्थं कृता

सम्वित् समयः इति व्यवहारनिर्णये वरदराजः-३३१

पारिभाषिक धर्मेण व्यवस्थानं समय इति विज्ञानेश्वरः

२-१८५

(२) शुश्रूषा ।

नासमयेन कृच्छ्रं कुर्वीत आपस्तः १-३-१०

(२) बौद्धादीनां शास्त्राणि ।

पाखण्डनैगमादीनां स्थितिः समय उच्यते ।

इति नारदः-१०-१

स्वायम्भुवागमे षट् समया उक्ताः ॥

बौद्धं चैवार्हतं चैव शैवं पाशुपतं तथा ।

कापालं पाञ्चरात्रं च षडेते समयाः स्मृताः ॥

व्यवहारनिर्णये-१४

(३) सम्पर्कः ।

न तैः समयमन्विच्छेत पुरुषो धर्ममाचरन् ।

व्यवहारो नयस्तेषां विवाहः सदृशैः सह ॥

मनुः १०-५३

(४) सिद्धान्तः ।

कृतान्त-राद्धान्तसिद्धान्तसमयाः समा इति

हलायुधः का

(५) शपथः ।

द्विगुणेऽर्थे यथाभिहिताः समयक्रिया वैश्यस्य ॥

विष्णुस्मृतिः ९-१२

(६) विश्वासः ।

न ब्राह्मणस्य कोशं दद्यात् १५ अन्यत्रागामिका

लसमयनिबन्धनाक्रियातः ॥ विष्णुस्मृतिः ९-१६

**समयाध्युषितम्**— ग्रहनक्षत्रवर्जित उषः कालः ।

तथाप्रभातसमये नष्टे नक्षत्रमण्डले ।

रविर्यावन्न दृश्येत समयाध्युषितं च तत् ॥ इति

नित्याचारप्रदीपोद्धृत छन्दोगपरिशिष्टे हेमाद्रौ ।

कात्यायनश्च

**समयानपकर्म**— } सम्विद्व्यतिक्रमः तदाख्यव्यवहारपदं च ।
**समयानपाकर्म**— }

पाखण्डनैगमादीनां धर्मः समय उच्यते ।

समयस्यानपाकर्म तद्विवादपदं स्मृतम् ॥ नारदः-१०-१

बहुभिः साधुभिः महाजनरक्षार्थं कृता सम्वित् समयः ।

तस्य अन्यथाकरणं समयस्यानपकर्म इति व्यवहारनिर्णये

वरदराजः ॥

**समर्घम्**— अल्पमूल्यम्, उचितमूल्यम् ।

समर्घं धान्यमुद्धृत्य महार्घे यः प्रयच्छति ।

स वै वार्द्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥

वसिष्ठः २-४१

**समवस्रवः**— प्रणालिका देश इति कल्पतरुः राज-

धर्मकाण्डे-७८

समवश्रवे भक्त शरणं कारयेत् ॥

आश्वलायनगृ-२-७

**समशनम्**— सहभोजनम् ।

सहासनं समशनं प्रसिद्धमिति देवपाः काठकगृ ३-५-२

**समसानम्**— सहावस्थानम् ।

एकस्मिन् स्थाने गृहकरणम् इत्यर्थः ।

समवसाय अवसानं गृहम् सम् इति एकीभावे ।

एकस्मिन् प्रदेशे गृहाणि कृत्वा इति हरदत्तः ॥

आपस्त-१-१०-२६-८

**समाः**— सम्वत्सरः ।

समामासतदर्द्धाहनामजातिरवगोत्रकैः

स ब्रह्मचारिकात्मीय पितृनामादि चि ह्नतम् ॥

इति लेखप्रकरणे याज्ञवल्क्यः-२-८५

**समाख्या** प्रसिद्धिः ।

**समाजः**— जनसमूह इति विज्ञानेश्वरः ।

जनमेलक इत्यपरार्कः नाटकाभिनयादिरिति कश्चित् ।

क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।

हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका ।

याज्ञ १-८४

उत्सवादिषु समवायः समाज इत्युज्वलावृत्तौ ।

हरदत्तः सभाः समाजांश्चागन्ता ॥

आपस्त १-१-३-१२

**समादिष्टः**— आचार्यनिर्देशेन यः शिष्यः शिष्यान्तरान् पाठयति ।

समादिष्टमध्यापयन्तं तावदध्ययनमुपसंगृहणीयात् ॥

आपस्त १-४-१३-१३

**समाधानम्**— (१) स्थापनम् ।

स्तम्भेषु वंशादेरारोपणम् इति देवपालः ।

उत्तरपूर्वे समाधानमिति काठकगृ-१-११-४

(२) समाधिः एकाग्रता इति यावत् ।

असावहं भो इति श्रोत्रे संस्पृश्य मनः समाधानार्थम् ॥

बौधा, १-३-२७

**समाधिः**— (१) कर्त्तव्येषु कर्मसु अवधानमिति हरदत्तः ।

आपस्त-१-११-३८५

(२) एकाग्रता ।

सुषुप्तिवत् परानन्दयुक्तश्चोपरतेन्द्रियः निर्वातदीप

वत्संस्थः समाधिरभिधीयते-१४२

सर्वोपाधिविनिर्मुक्तः सदानन्दैक विग्रहः ।

निश्चलः परिपूर्णश्च समाधिरभिधीयते ॥ १४३

बृहन्नारदीयपुराणे ३१-अध्याये

धारणा द्वादशयामाध्यानं द्वादश धारणाः।

ध्यानद्वादशकं यावत् समाधिरभिधीयते ॥

कर्मपु २-११

**समानः**— प्राणवायुविशेषः ।

हृदि प्राणो गुदेऽपानो नाभिस्थस्तु समानकः इति

देवीभागवते ७-३२-४०

देहस्थितस्याशितपीतस्यान्नरसस्य सर्वाङ्गेषु समन-

यनात्समान इति गदाधरः पारस्करभाष्ये १-१६-११

**समानोदकः**— सप्तमपुरुषानन्तरं चतुर्दशपुरुषपर्यन्तं पितृ-

गोत्रजाः ज्ञातयः समानोदक इति एकोदक इति

उच्यते ततोऽपिजन्मनाम्ज्ञाने मति साम्पिण्ड्यम् ।

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।

समानोदकभावस्तु जन्मनाम्नोरवेदने ॥

मनुः ५-६०

**समापत्तिः**— उत्पादनम्, सन्तोषणम्, स्वदोषस्वीकारः ।

नियमातिक्रमिणमन्यं वा रहसि बन्धयेत आसमापत्तेः

आपस्त, २-२७-१७

असमापत्तौ असंप्रतिपत्तौ इति विवाहरत्नाकरे-६३७

**समाम्नायः**— (१) वेदः ।

(२) उपदेशः शब्दार्थारम्भणनां तु कर्मणां समाम्नायसमाप्तौ वेदशब्दः ।। आपस्त-२-४-८-१२

**समावर्त्तनम्**— ब्रह्मचारिणः वेदाध्ययनानन्तरं स्वगृहागमनम् ।

समावृत्तः स्नातकः आप १-२-७-१५

समावृत्तो मात्रे दद्यात् इति ।

**समावृत्तिः**— अधीतवेदस्य गुरुकुलात् निवृत्तिरिति हरदत्तः । समावृत्तेर्वा गौत्तमः २-१-४६

कलेक्टर इति कौट १-१-६

**समाहर्त्ता**— संग्राहकः कौट ४-४

**समाहितः**— एकमताः । अनन्यमनाः इति कल्पतरौ ।

नियत-२७

उपस्पृश्य द्विजो नित्यमन्नमद्यात् समाहितः ।

भुक्त्वा चोपः स्पृशेत् सम्यगद्भिः खानि च संस्पृशेत्

मनुः-२-५३

असद्देशगमनासत्प्रसंगादि निवृत्तिरूपसमाधान युक्त इति पूजाप्रकाशे मित्रमिश्रः ।

**समाह्वयः**— प्राणिभिरुपकरणैः क्रीडनम् ।

अप्राणिभि यत् क्रियते तल्लोके द्यूतमुच्यते ।

प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥

मनुः ९-२२३

परिगृहीताश्चान्योन्यं पक्षिमेषवृषादयः ।

प्रहरन्ते कृत पणस्तं वदन्ति समाह्वयम् ॥

इति बृहस्पतःव्यवहारमाधवः-३८६

**समिता**— सूक्ष्मगोधूमचूर्णम् मइदा इति प्रसिद्धम् ।

गोधूमाधवला धौताः कुट्टिताः शोषितास्ततः ।

प्रेक्षिता यन्त्रनिष्पष्टाश्चालिताः समिताः स्मृता

इति भावप्रकाशे ।

समिता मधुदुग्धेन खण्डेलामरिचादिभिः ।

घृते क्षिप्त्वा क्षिपेत् खण्डे संयावो बृंहणो गुरुः ॥

इति राजवल्लभः

गोधूमचूर्णं समिता इति शब्दकल्पद्रुमे ॥

**समित्**— होमार्थं काष्ठम् ।

समिध्यते दीप्यते अग्निरनयेति समित् सा न पलाशस्य अन्यस्य वा याज्ञियवृक्षस्य प्रादेशपरिमाणं काष्ठम् ।

समिदर्थं वृक्षा उक्ता ब्रह्मपुराणे—

पलाशाश्वत्थन्यग्रोधप्लक्षवैङ्कतोद्भवाः ।

अश्वत्थोदुम्बरौ बिल्वश्चन्दनः सरलस्तथा ।

शालश्च देवदारुश्च खदिरश्चेति याज्ञिकाः ।

समिल्लक्षणं छन्दोगपरिशिष्टे—

नाङ्गुष्ठादधिका कार्या समित् स्थूलतया क्वचित् ।

न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥

प्रादेशान्नाधिकान्यूना न तथा स्याद् द्विशाखिका ।

न सपर्णा न निर्वीर्या होमेषु न विजानता ।

मरीचिः—

प्रागग्रा समिधो देया ताश्च काम्येष्वपाटिताः ।

काम्येषु च सशल्कार्द्रा विपरीता जिघांसते ।

विशीला विदला ह्रस्वा वक्रा ससुषिराः कृशाः ।

दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशकाः ॥

इति हरिहरभाष्ये पारस्करः २-४-३

**समिदाधानम्**— समिद्धोमः ।

नित्यं स्नात्वा शुचिः कुर्यात् देवर्षिपितृतर्पणम् ।

देवताभ्यर्चनं चैव समिदाधानमेव च ॥

मनुः २-१७६

**समिद्धम्**— कृष्णदशमी दिनभागः कालमाधवः-२

**समीकम्**— (१) समीकं काष्ठदेश इति केचित् ।

गले पृष्ठे समीकं वा इत्याचारसारे ।

गुह्ये वक्षसि वक्त्रे चासमीके हृदये तथा ।

पायौ नाभ्यां ललाटे च नवमं मूर्द्धिविन्यसेत् ।

(२) युद्धम् अमरः २-८-१०४

**समुत्थानम्**— भग्नसन्धानम् क्षतिपूरणम् आरोग्यलाभः ।

समुत्थानं परिचयो इति नन्दपण्डितः विष्णुः ५-७५

**समुत्थानव्ययः**— पूरणार्थोऽव्ययः ।

दुःखमुत्पादयेदयस्तु स समुत्थानगं व्ययम् ।

दाप्यो दण्डं च यो यस्मिन् कलहे समुदाहृतः ।

इति याज्ञ २-२२२

समुत्थानं प्रतिक्रिया इति निर्णयसिन्धौ कमलाकरः ।

**समुदयः**— धान्यहिरण्याद्युत्पत्तिस्थानम् ।

समुदयन्ति उत्पद्यन्तेऽस्मादर्था इति समुदयोधान्यहिरण्याद्युत्पत्तिस्थानम् इति कुल्लूकः ॥

तैः सार्द्धं चिन्तयेन्नित्यं सामान्यं सन्धि विग्रहम् ।

स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च ॥

मनुः ७-५६

**समुदितः—** समस्तगुणयुक्त इति दिव्यसिंहमहापात्रः

श्राद्धदीपे

समुदितः सोदर्योऽपिभोजयितव्य इति तत्र

आपस्तम्बः ।

प्रकाशितापस्तकेतु गुणहीन्यात्तुपरेषां समुदेतः

सोदर्य्योपि भोजयितव्य इति ॥ आप-२-२-५-७

**समुदेतः—** कुलशिलवृत्तविद्यावयोभिरुपेता इति उज्ज्वला ।

अन्यं वा समुदेतम् आपस्त २-२-५-७

समुदित इति पाठान्तरम् ।

**समुद्गकम्—**
**समुद्गकम्—** } मुद्रितपिहितभाण्डम् संपुटकमित्यर्थः ।

समुद्गं संपुटक मिति व्यवहारकल्पतरुः ५२३

समुद्गपरिवर्त्तं चं सारभाण्ड़ं च कृत्रिमम् ।

आधानं विक्रयं चैव नयतो दण्ड़कल्पना ।

याज्ञ-२-२४७

**समुद्गकः—** (१) धूपविशेषः ।

कर्पूरदार्वगुरुभीरक्तचन्दन संयुतैः ।

धूपः समुद्गको नाम सर्वदेवतवल्लभः ।

हेमाद्रिपरि-६८६

(२) प्रासादविशेषः ।

अञ्जलीपुटसंस्थानः पद्माण्डक विभूषितः ।

षोड़शास्रः समन्ताच्च विज्ञेयः स समुद्गकः ॥ २४

इति राजधर्मकौस्तुभे प्रसादलक्षणे

**समुद्देशः—** संक्षेपेण निर्देशः इति गणपति शास्त्रिणः ।

कौट-१-१-१

**समुपोढः—** समीपमातः ।

अगारादभिनिष्क्रान्तः पवित्रोपचितो मुनिः ।

समुपोढेषु कामेषु निरपेक्षः परिव्रजेत् ॥

मनुः ६-४१

समुपोढेषु उपरुंहृतेषु इति कल्पतरौ मोक्षकाण्ड़े-३२

**समूहनम्—** (१) मार्जनम् ।

देवमाल्यापनयनं देवागारसमूहनम् ।

स्नापनं सर्वदेवानां गोप्रदानफलं समम् ।। इति यमः

वर्द्धन्यादिना शोधनमिति कल्पतरुः नियतकालकाण्ड़े

२५१

(२) अग्निसंस्कारकर्मविशेषः ।

प्रदक्षिणमग्नेः समन्तात् पाणिना सोदकेन त्रिःप्रमार्ष्टि

तत समूहनमित्याचक्षते सकृत् अपसव्यं पित्र्ये ॥

इति शांखायनगृ १-८-११

विकीर्णस्य अग्नेः कूटी करभम् इति कल्पतरौ ।

ब्रह्मचारिकाण्डे-२७२

**समूहनी—** (१) अग्निसमूहनार्थं दर्भनिर्मिता वेदाकृतिः

समूहनी ।

(२) सम्मार्जनी ।

रथश्वगजधान्यानां गवां चैव रजः शुभम् ।

अप्रशस्तं समूहन्याः श्वाजाविखरवाससाम् ॥

इति बौधायनः

समिद्धमग्निं पाणिना परिसमूहेन्न समूहन्या ।

आपस्त १-१-४-१८

समूहनी मार्जनी इति कल्पतरौ शुद्धिकाण्डे-१७४

समूहहितवादी सम्प्रति वै पञ्चायतशब्देन प्रतिनिधि-शब्देन च उच्यन्ते

द्वे त्रयः पञ्च वा कार्य्याः समूहहितवादिनः ।

कर्त्तव्यं वचनं तेषां ग्रामश्रेणिगणादिभिः ॥

इति व्यवहारमालायां वृहस्पतिः-५६

**समूहा**— वृत्तिविशेषः ।

अवारितस्थानेषु पथिषु वा क्षेत्रेषु वाप्रतिहतावकाशेषु वा यत्र यत्रौषधयां विद्यन्ते तत्र तत्र समूहन्या समूहयताभिवर्त्तयति इति समूहनम् ॥

**समेधा**— भाविनी सम्पत्तिः इति श्रीमूला ।

समेधा शास्ति भिश्चाभिगतानामङ्गविद्यया शिष्य-संज्ञाभिश्चकर्माण्य भिजनेऽवसितान्यादिशेत्

कौट-१-११-१७

**सम्पन्नम्**— (१) इष्टम् इति नीलकण्ठः ।

सम्पन्नतरमेवान्नं दरिद्रा भुञ्जते सदा ॥

क्षुत् स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ।

महाभा, उद् ३४-५०

(२) सम्पन्नमिति तृप्तिप्रश्ने इति शांखायन गृ ४-४-१५

सम्पन्नमित्यभ्युदये ।

सम्पन्नमिति तृप्ताः स्थप्रश्न स्थाने विधीयते ॥

गोभिलस्मृतिः १-४२

सम्पन्नंभोजने ब्रूयात् पानीये तर्पणं तथा ।

सुश्रुतं पायसे ब्रूयात् यवाग्वां कृसरे तथा ।

महात्मनां च गुह्यानि न वक्तव्यानि कर्हिचित् ।

त्वंकारं नामधेयं च ज्येष्ठानां परिवर्जयेत् ॥

अधराणां समानानामुभयेषां न दुष्यति ॥

इति महाभारते इति संस्कारप्रकाशे-५८२

**सम्पचनम्**— मिश्रणम् ।

प्रणीतोदकेन पिष्टं सम्पूय इति हरिहरभाष्ये ।

पारस्करः-पृ-५०३

**सम्पीडनम्**— अन्यायेनाधिकारः ।

गोवीथीं ग्रामरथ्यां च श्मशानं गोपितं तथा ४१

संपीड्य नरकं याति यावदाभूतसंप्लवम् ॥

वृहस्पतिस्मृतिः-४२

**सम्परायः**— (१) परलोकः ।

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते ।

न साम्परायिकं तस्य दुर्मतेर्विधिवे फलम् ॥

मनुः ११-३०

(२) उत्तरकाल इति हेमाद्रिः।

युद्धायत्योः सम्पराय इत्यमरः-३-३-१८८

सम्पराजः समीके स्यादायदुत्तरकालयोः।

(३) युद्धम्।

संशोध्य त्रिविधं मार्गं षड्विधं च वलं स्वकम्।

साम्परायिकल्पेन यायादरिपुरं शनैः ॥

मनुः ७-१८५

अत्र सम्परायः संग्राम इति कुल्लूकः।

**सम्पा—** कृष्णष्टमीरात्रिः कालसारः-२

**सम्पातः—** (१) स्रुवविगलितघृतबिन्दुः।

आहुतेराहुतेस्तु सम्पातं मूर्द्धनि वध्वा

अवनयेत् गोभिलः-२-३-७

(२) मन्त्रसेचितजलविन्दुः।

लशुनपलाण्डुगृञ्जनकवलभक्षणे सावित्र्यष्टसहस्रेण

मूर्न्द्धि संपानाम्नयेत् सुमन्तुः।

संपातान्नयेत् उदकविन्दून् प्रक्षिपेत् इति विज्ञानेश्वरः

३-२८-६

**सम्पुटम्—** न्युब्जम् इति प्रतिष्ठामयूखे नीलकण्ठः।

जीर्णादीनां च लिङ्गानामुद्धारविधिमाचरेत्।

लक्ष्मोज्झितं च मग्नं च स्थूलं बज्रहतं तथा।

संपुटं स्फुटितं व्यङ्गं लिङ्गमित्येवमादिकम् ॥

इत्यादिदुष्टलिङ्गानां त्याज्यापिण्डो

तथा षः इत्याग्नेये।

**सम्पुटः—** / **सम्पुटकः—** पिधानसहितः करण्डकः।

धनञ्जयोऽपिधर्मात्मा मातृभक्तिपरायणः।

ताम्रसम्पुटके कृत्वा मातुरङ्गान्यथो वहत् ॥ इति

निर्णयसिन्धौ-३

सम्पुर्णपाठः यक्षकर्दमशब्दे द्रष्टव्यः।

**सम्प्रक्षालिनी—** वृत्तिविशेषः।

उत्पन्नानामोषधीनां प्रक्षेपणं निक्षेपणं नास्ति निचयो

वा भाजनानि सम्प्रक्षाल्यन्युब्जतीति सम्प्रशालनी ॥

बौधायनः-३-२८-

**सम्प्रणेता—** नेता।

**सम्प्रति—** निकटे।

अप्राप्य देवताः प्रत्यवरोहेत् सम्प्रति ब्राह्मणान्।

मध्ये गा, अभिक्रम्य पितृन् ॥ इति पारस्करः ३-१४-८

**सम्प्रतिपत्तिः—** सम्मतिः सत्योत्तरम्।

शतमनेन गृहीतमित्यभियोगे सत्यं गृहीतं

मयेति उत्तरं सम्प्रतिपत्त्युत्तरम् ॥

सम्प्रपदम्— अटनम् ।

स्वप्याद् भूमौ शुची रात्रौ दिवा सम्प्रपदैर्नयेत् ।

स्थानासनविहारैर्वा योगाभ्यासेन वा तथा

याज्ञ-३-५१

अत्र सम्प्रपदैरटनैरिति मिताक्षरा ।

प्रपदैः पादाग्रै रिति स एव ।

भूमौ विपरिवर्त्तेत तिष्ठेदवा प्रपदैर्दिनम् ॥

इति मनुसमानार्थतया सम्प्रपदैः पादाग्रै रिति युज्यते नवेति ध्येयम्

सम्प्रयोक्ता— द्युतकारो इति हेमाद्रिः ।

पतितसम्प्रयोक्तृकितवानृतदानिकपरपरिभाविताद्या इति हेमाद्रौ उशनाः ।

सम्प्रेष्यः— दासः संप्रेष्य दासा इति लक्ष्मीधरः ।

प्राक्संस्कारप्रमीताना सम्प्रेष्याणामितिश्रुतिरिति कल्पतरौ वसिष्ठः ।

उपलब्धवसिष्ठस्मृतौ तु स्ववंश्यानामिति स्थितिरिति पाठो लभ्यते ॥

संप्लवः— (१) उपद्रवः ।

स्तोमवाहीनि भाण्डानि पूर्णकालं तु पालयेत् ।

गृहीतुराभवेद् भग्नं नष्टं चान्यत्र संप्लवात् ॥

इति विवादरत्नाकरे नारदः–१६६

(२) प्रलयः ।

गोवीथीं ग्रामरथ्यां च श्मशानं गोपितं तथा ।

संपीड्य नरकं याति यावदाभूतसंप्लवम् ॥

इति बृहस्पतिः-४२

संप्लवः परस्परसंघर्ष इति माधवः पराशरव्याख्याने व्यव-२३६

सम्बन्धी— कन्यापिता वरपिता वा वरपितुः कन्यापितुर्वा सम्बन्धी ।

सम्बन्धिनो येभ्यः कन्या गृहीता दत्ता वा मातृपितृ सम्बन्धिनो बान्धवा इति विज्ञानेश्वरः १-१०८

सम्बाधः— संकीर्णः ।

सम्भवः— (१) उत्पत्तिः ।

ब्राह्मणः सम्भवेनैव देवानामपि दैवतम् ॥

प्रमाणं चैव लोकस्य ब्रह्मात्रेव हि कारणम् ।

मनुः ११-८४

(२) स्त्रीसम्भोगः ।

उर्ध्वं त्रिरात्रात् सम्भव इत्येके गोभिल-२-४-७

(३) पोषणम् वर्द्धनम् ।

निषेकादीनि कर्माणि यः करोति यथाविधि ।

सम्भावयति चान्नेन स विप्रो गुरुच्यते ॥

मनुः २-१४२

सम्भवन्— शुक्लपक्षरात्रि त्रयोदशमुहूर्त्तः ।

कालमाधव-३

**सम्भान्** — शुक्लपक्षगतदिवसस्य पञ्चमो मुहूर्त्तः ।

कालमाधवे-३

**सम्भाषा**— सम्भाषणम् ।

परस्य पत्न्या पुरुषः सम्भाषां योजयन्रहः ।

पूर्वमाक्षारितो दोषैः प्राप्नुयात् पूर्वसाहसम् ॥

मनुः ८-३५४

**सम्भूतम्**— शुक्लत्रयोदशीदिवसभागः कालम.धवः

**सम्भूतः**— शुक्लपक्षरात्रिचतुर्थशमुहूर्त्तः कालमाधवे-३

**सम्भूयसमुत्थानम्**— विवादपदविशेषः ।

समावायेन वणिजां लाभार्थं कर्म कुर्वताम् ।

लाभालाभौ यथाद्रव्यं यथा वा सम्विदा कृतौ ॥

याज्ञ २-२५९

**सम्भेदः**— नदीद्वयसंगमः ।

सम्भेदः सङ्गमो नद्योः इति हलायुधः का-३

परस्त्रियं योभिवदेत् तीर्थेऽरण्ये वनेऽपि वा ।

नदीनां वाऽपि सम्भेदे स सङ्ग्रहणमाप्नुयात् ॥

मनुः ८-३५६

गृहे गोष्ठे नदीतीरे सन्ध्या दशगुणा क्रमात् ।

सम्भेदे स्यात् शतगुणा ह्यनन्ता शिवसन्निधौ ॥

इति स्कन्दपु काशी ३५-२३६

**सम्भोगः**— सम्यक् भोगः ।

सम्भोगो दृश्यते यत्र न दृश्येतागमः क्वचित् ।

आगमः कारणं तत्र न सम्भोग इति स्थितः ॥

मनुः-८-२००

**सम्भोजनम्**— परस्परभोजनदानग्रहणे ।

सम्भोजनं संकथनं सम्प्रीतिश्च परस्परम् ।

ज्ञातिभिः सह कार्याणि न विरोधः कदाचनः ॥

महा भा उद् ३६-२४

**सम्भोजनी**— गोष्ठी भोजनम् ।

बहुपुरुषभोजनात्मिका गोष्ठी इति कुल्लूकः ।

सह भुज्यते यया इति मेधातिथिः ।

सम्भोजनी साभिहिता पैशाची दक्षिणा द्विजैः ।

इहैवास्ते तु सा लोके गौरन्धेवैकवेश्मनि ॥

मनुः ३-१४१

सम्भोजनी या सहभोजनी मैत्र्यादिसहभोजनी प्रवर्त्तते परस्परं भुञ्जतेऽस्यामिति सम्भोजनीति हरदत्तः ।

सम्भोजनी नाम पिशाचभिक्षा नैषा पितृन् गच्छति नोत देवान् ।

इहैव सा चरति क्षीणपुण्या शालान्तरे गौरिव नष्टवत्सा । आपस्त-२-७-१७-८

सम्भ्रमः— भयोद्वेगः यथा गृहदाहादौ ।

चौरैरुपद्रुते ग्रामे सम्भ्रमे चाग्निकारिते ।

आकालिकमनध्यायं विद्यात् सर्वाद्भुतेषु च ॥

मनुः ४-११८

सम्मुखी— सायाह्न पूज्या तिथिः ।

पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।

प्रतिपन्नवमी चैव कर्त्तव्या सम्मुखी तिथिः ।।

सम्मुखी नाम सायाह्नव्यापिनी गृह्यतां तदा ॥

संवत्सर— वर्षम् ।

सम्यग् वसन्ति अयनर्त्तुमासादयोऽस्मिन्निति सम्वत्सरः ।

सम्यग् वसन्ति यत्रर्त्तुमासपक्षदिनादयः ।

प्राज्ञैः कालविशेषोऽसौ सम्वत्सर इतीरितः ॥

सिद्धान्तदर्पणः २२-१७

स च सौरसावननाक्षत्रबार्हस्पत्यचान्द्रभेदेन पञ्चधा ।

तत्र सौरो मेषादिर्मीनान्तः सावनः । षष्ट्युत्तरशतत्रयाहोरात्रात्मकः ।

चतुर्विंशत्यधिकशतत्रयदिवसैर्नाक्षत्रः नक्षत्रचक्रद्वादशावृत्या । गुरोरेकराशिस्थिति कालोबार्हस्पत्यः ।

चतुः पञ्चाशदधिकशतत्रयदिवसात्मकश्चान्द्रः सम्वत्सर इति । सचायं सम्वत्सरः प्रभवादिनामभेदेन षष्टिविधः तद्यथा—

प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः ।

अङ्गिराः श्रीमुखो भावो युवा धाता तथैव च ॥

ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो वृषः ।

चित्रभानुः स्वभानुश्च तारणः पार्थिवो व्ययः ।

सर्वजित् सर्वधारी च विरोधी विकृतिः स्वरः ।

नन्दनो विजयश्चैव जयो मन्मथदुर्मुखौ ।

हेमालम्बोऽविलम्बोऽथ विकारी शार्वरी प्लवः ॥

शुभकृच्छोभनः क्रोधी विश्वावसुपराभवौ ।

प्लवङ्ग कीलकः सौम्यः साधारणविरोधकृत ।

परिधवो प्रमाथी च आनन्दो राक्षसो नलः ।

पिङ्गलः कलयुक्तश्च सिद्धार्थो रौद्रदुर्मती ।

दुन्दुभी रुधिरोद्गारी रक्ताक्षिः क्रोधनः क्षयः ।

एषां सम्वत्सराणां प्रातस्विकफलमुक्तमग्निपुराणे ।

१३६ अध्याये

पुनश्च सम्वत्सर परिवत्सरेदावत्सरानुवत्सरेद् वत्सरनाम्ना व्यपदिश्यन्ते प्रभवादयः ॥

चन्द्राणां प्रभवादीनां पञ्चके पञ्चके तुगे ।

संपरीदान्विदित्येतत्पूर्वास्तु वत्सराः ।

तिलं यवो वस्त्रधान्यं रजतं दीयतेऽत्र तु ।

तदुक्तं विष्णुधर्मोत्तरे—

सम्वत्सरे तु दातृणां तिलदानं महाफलम् ।

परिपूर्वे तथा दानं यवानां द्विजसत्तम ।

इदा पूर्वं तु वस्त्राणां धान्यानां चानुपूर्वके ।

इत्पूर्वं रजतस्यापि दानं दत्तं महाफलम् ॥ इति

**सम्वननम्**— (१) आत्मीयताकरणम् ।

सम्वननम् आत्मीयताकरणम् इति महाभारतव्याख्याने नीलकण्ठः ।

कोशसम्वनने दाने भृत्यानां चान्ववेक्षणे ।

भरणे चैव सवस्य विदुरः सत्यसंगरः ॥ उद् १४८-९

(२) वशीकरणम् ।

संम्वननसंयुक्तं येनास्य शत्रवो वश्या भवन्तीति

हरदत्तः गौतमः २-२-१७

यं वा मन्त्रयोगमूलकर्मभि सम्वननकारकं मन्येत ॥

इति कौटलीये ४-४

सम्वननकारकं वशीकरणकर्त्तारमिति श्रीमूला ॥

मूलकर्म प्रोक्तं सम्वननं कार्मणं वशीकरणमिति

हलायुधकोषे का-४

(३) दानम् ।

दनं संम्वननं स्मृतम् इति विष्णुधर्मोत्तरपुराणे

३-१०-११

**सम्वननकार**— वशीकरणकर्त्ता-कौट-४-४

**सम्वासः**— अभिगमनम् ।

सम्वत्सराभिशस्तस्य दुष्टस्य द्विगुणो दमः ।

व्रात्यया सह सम्वासे चाण्डाल्या तावदेव तु ॥

**सम्बाहः**— वणिक्प्रधानस्थानम् ।

कः पुनरार्यनिवासः ग्रामो घोषो नगरं सम्वाह इति पातञ्जलमहाभाष्ये-२-४-१

तत्र सम्वाहो वणिक्प्रधान इति प्रदीपकारः ॥

**सम्वाहनम्**— अङ्गमर्दनम् ।

सम्वाहनं मर्दनमिति हरदत्तः ।

सदा निशायां गुरुं संवेशयेत् तस्य पादौ प्रक्षाल्य-संवाह्य ॥ अपस्त १-२-६-१

**सम्वित्**— समयः पुरुषकृतनियम इत्यर्थः ।

लाभालाभौ यथाद्रव्यं यथा वा सम्विदा कृतौ ।

याज्ञ-२-याज्ञ

यो ग्रामदेशसंघानां कृत्वा सत्येन सम्विदम् ।

विसम्वदेन्नरो लोभात्तं राष्ट्राद् विप्रवासयेत् ॥

मनुः ८-२१९

**सम्वित्पत्रम्**— ग्रामो देशश्च यत् कुर्यान्मतं लेख्यं परस्परम् ।

राजाविरोधिधर्मार्थं सम्वित्पत्रं वदन्ति तत् ॥

इति सरस्वतीविलासे पितामहः ।

**सम्विभागः**— (२) सम्यक् विभागः ।

पञ्चमे च तथा भागे सम्विभागो यूथार्हतः ।

देवपितृमनुष्याणां कीटानांजोपदिश्यते दक्षः ।। २-४१

अत्र सम्बिभागः अन्नस्य विभज्य प्रतिपादमन ।

(२) सप्रतिबन्धोदायः स्वामी रिक्थ-क्रयसंविभाग-परिग्रहाधिगमेषु ।। गौतमः २-१-३६

अत्र सम्बिभागः सप्रतिबन्धो दाय इति विज्ञानेश्वरः ।

**सम्बीतम्**= निबीतम् ।

सम्बीतं निबीतं संबीतं मानुषेक्तो इति तैत्तिरीयश्रुतेः इति आह्निकतत्त्वे-३२६

**सम्वीताङ्गः**— आच्छादिताङ्गः ।

लोष्ठतिरस्कृत्योच्चरेत काष्ठ पत्र तृणादिना ।

नियम्य प्रयतो वाचं संवीताङ्गोवगुण्ठितः ।।

मनुः ४-४९

अत्र संबीताङ्गः प्रच्छादिताङ्ग इति कुल्लूकः ।

काष्ठनकराज्ञापत्रोन इति नित्याचारप्रदीपे नरसिंह-वाजपेयिनः ।।

**सम्वृतिः**= अध्ययनाभ्यासः ।

स्वस्ययनमध्ययनसम्वृत्ति रित्यापस्तम्बः ।।

१-२-५-६

**सम्वेशः**= (१) शयनम् ।

सदा निशायां गुरु संवेशयेत् तस्यपादौ प्रक्षाल्य संवाह्य आपस्त १-२-६-१

(२) मैथुनम्, स्त्रीसम्भोगः ।

परिणीय तु षण्मासान् वत्सरं वा न संविशेत् ।

उदुम्बरायणो नाम ब्रह्मचारी गृहे गृहे ।।

लघुविष्णुः १-२७

**सम्वेशनम्**= (१) मैथुनम् ।

अहन्यसम्वेशनम् आपस्त २-१-१-६१

(२) स्वापनम् ।

सदा निशायां गुरु संवेशयेत ।। आपस्त १-२-६-१

(३) संवेशनः शुक्लापक्षरात्रेरष्टमुहूर्तः ।

कालमाधवे-३

**सम्व्यानम्**— उत्तरीयवस्त्रम् । अमरः २-६-३१८

**सरः**— (१) दध्न उपरिभाग इति शूलपाणिः पृ-२०१

सिद्धदुग्धस्य दध्नश्च कठिन उपरिभागः सर इति लोके उच्यते ।

सक्थुयावकभैक्षाशी पयोदधिसरः शकृत ।

एतानि क्रमशोऽश्नीयान्नरस्तत्पापमोक्षकः ।।

इति प्रायश्चित्तविवेकेसम्वर्त्तः

(२) हस्तसहस्राधिकपरिमाणं तडागाच्च न्यूनं सरः।

नदीषु देवखातेषु तडागेषु सरःसु च।

स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च॥

मनुः ४-२०३

**सरकम्**— रत्नम्।

सरकपांशुधावकाः सारत्रिभागं लभेरन्॥

कौट-४-१

**सरटः**— ककलासः।

लूताहिसरटानां च तरश्चां चाम्बुचारिणाम्।

हिंस्राणां च पिशाचानां स्तेनो विप्रः सहस्रशः॥

मनुः १२-५७

**सरलः**— पीतद्रुम इति हेमाद्रिः परि-६७२

**सरस्वती**— कुरुक्षेत्रान्तर्गतनदीविशेषः

सरस्वती दृषद्वत्योर्देवनद्योर्यदन्तरम्।

तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते।

मनुः-२-१७

महाहानिकरी ह्येषा द्वादशी लंघिता नरैः।

करोति धर्महरणमस्नातेव सरस्वती॥ इति

गङ्गादिसरित्सु उत्तीर्य्य परस्मिन्नपारे स्नातव्यम्।

सरस्वत्यां तु स्नात्वा परपारे स्नातव्यमित्यर्थः।

**सरोविन्दु**— मोक्षाय प्रयुक्तो गीतविशेषः याज्ञ-३-११

संगीतरत्नाकरे त्वस्य रोविन्द इति पाठः ५-५-५

**सर्गः**— (१) सृष्टिः।

मन्वन्तराण्यसंख्यानि सर्गः संहार एव च।

क्रीडन्निवैतत् कुरुते परमेष्ठी पुनः पुनः॥

मनुः १-८०

(२) जगत्।

उत्तमाङ्गोद्भवाज्जैष्ठ्याद् ब्राह्मणश्चैव धारणात्।

सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः॥

मनुः १-९३

**सर्जः**— सालवृक्षः हेमाद्रिपरि-६७२ स दन्तकाष्ठ च

याग्यः।

सर्जः पीतसालक इति श्रीमूला २-१७

वटासनार्क खदिरकरञ्जवदरसर्जनिम्बारिमेदापामा-

र्गमालती ककुभविल्वानामन्यतम विष्णुः ६१-१४

**सर्जरसः**— सालवृक्षोद्भवः धूपसाधनः वस्तुविशेषः

झुणा इति प्रसिद्धः।

सर्जरसः राल इति आचारेन्दुः-१६५

**सर्पच्छत्रम्**— शाकविशेष इति बालम्भट्टो ।

छत्राकं सर्पच्छत्रमिति विज्ञानेश्वरः १-१७६

**सर्पिः**— घृतम् ।

त्र्यहं भुञ्जीत दध्ना च त्र्यहं भुञ्जीत सर्पिषा ।

त्र्यहं क्षीरेण भुञ्जीत एकैकेन दिनात्रयम् ॥

पराशरः ६-१७

**सर्पिर्गोवारकम्**— परिमाणविशेष कौट-२१९

**सर्वक्षत्रक्षयः**— कुरुक्षेत्रम् इति मित्रमिश्रः ।

न गङ्गया विना वासः सर्वक्षत्रक्षयादृते ॥ इति

परिभाषाप्रकाशेपितामहः. ६ ४ ५

**सर्वगन्ध**— कर्पूरं चन्दनं दर्प.कुङ्कुमं च समांसकम् ।

सर्वगन्धमिति प्रोक्तं समस्तसुरदुर्लभम् ।

**सर्वपृष्ठेष्टिः**— बृहद्रथन्तरवैरूप-वैराज-शक्वर-रैवता

ख्यानि षट् सामानि पृष्ठाख्यस्तोत्रसाधनभूतानि ।

तत्प्रतिपाद्यगुणविशिष्ट इन्द्रो देवता अस्य इष्टेरिति

इष्टिरियं सर्वपृष्ठेष्टिरिति कथ्यते ॥

**सर्वलोहः**— सर्वतोलोहितवर्णश्छागः ।

छागेन सर्वलोहेन वर्षासु च मघासु च इति पैठीनसिः

**सर्ववेदसः**— कृत सर्वस्वदक्षिणविश्वजिद्यागः इति

कुल्लूकः ११-१

**सर्ववेदसम्**— सर्वस्वम् ।

विश्वजिता सर्ववेदसेन यजेत ।

**सर्ववेदाः**— सर्वस्वदक्षिणयागकर्त्ता ।

सर्ववेदाः स येनेष्टोयागः सर्वस्वदक्षिणः

इत्यमरः २-७-९

**सर्वान्नीनः**— सर्वान्नभोजी ।

नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी ।

मनुः ५२-११८

**सर्वारण्यकः**— वानप्रस्थविशेषः ।

अथ वानप्रस्थस्य द्वैविध्यम् । १

पचमानका अपचमानकाश्चेति । २

तत्र पचमानकाः पञ्चविधाः सर्वारण्यका ।

वैतुषिकाः कन्दमूलभक्षाः फलभक्षाः शाकभक्षाश्चेति

बौधायनः ३-३-१-३

**सर्वाशी**— सर्वत्र भक्षयिता ।

सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः ।

**सर्वौषधि**— औषधिगणविशेषः ।

कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम् ।

शटी चम्पकमुस्तं च सर्वौषधिगणः स्मृतः ॥

नित्याचारप्रदीपे: १-१३७

पुरुषार्थचिन्तामणौ तु—

वचाकचोरमुस्तं च सर्वौषध्यादशस्मृता ।

इति द्वितीयार्द्धपाठः ॥ ३७

सुरामांसी वचाकुष्ठं शैलेयं रजनीद्वयम् ।

शटीचम्पकमुस्तं च सर्वौषधिगणःस्मृतः ।

अग्निपुराणे १७२-१७

**सर्षपः**— (१) शस्यविशेषः ।

(२) परिमाणविशेषः ।

सर्षपाः षड्यवो मध्यस्त्रियवं त्वेककृष्णलम् ।

पञ्चकृष्णलको माषस्ते सुवर्णास्तु षोड़श ॥

मनुः ८-१३३

**सलावृकी**— शृगाली इति नरसिंहवाजपेयी ।

वृकजाताववान्तरभेद इति हरदत्तः ॥

आपस्त १-१-११-३३

**सवः**— यज्ञः, अनुष्ठानम् ।

बभुवुर्हि पुरोडाशा भक्ष्याणां मृगपक्षिणाम् ।

पुराणेष्वपि यज्ञेषु ब्रह्मक्षत्रसवेषु च ॥

मनुः ५-२३

**सवनम्**— (१) कर्म ।

पुनस्तोमेनेष्ट्वा पुनः सवनमायान्ति ॥

सवनशब्देन कर्मोच्यते इति हरदत्तः ।

(२) प्रातः सवन इत्यादि शब्देषु सवन शब्देन कर्म-विशेषः तदुपलक्षितकालविशेषश्च उच्यते ।

**सवनोपस्पर्शी**— त्रिकालस्नायी ।

प्रातः सवन मध्यन्दिनसवन सायंसवन भेदेन सवनानि त्रीणि भवन्ति ।

**सवर्णः**— (१) समानो वर्णः ।

द्विजातयः सवर्णासुजनन्त्यव्रत्यानिति विनिर्दिशेत् ॥

मनुः १०-२०

(२) मूर्द्धाभिषिक्तः ।

ब्राह्मणात् क्षत्रियायां जातः सवर्णः गौतमः १-४-१४

**सविता**— कृष्णपक्षगतदिवसस्य प्रथमो मुहूर्त्तः ।

कालमाधवे-१

**सव्यः**— वामः ।

सव्येतराभ्यां पाणिभ्यामुदकक्रियां कुर्वीरन् ।

वसिष्ठः ४-१२

ऊरुस्थोत्तानाचरणः सव्ये न्यस्योत्तरं करम् ॥

उत्तानं किंचिदुन्नाम्य मुखं विष्टभ्य चोरसा ।

याज्ञः ३-१९८

**सशल्कः**— (१) मत्स्यविशेषः ।

सह शल्कैः शुक्त्याकारैः आवरणविशेषैः वर्त्तत इति भाषायां प्रसिद्धः ।

पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्योः ।

राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्वशः ॥

मनुः ५ १६

(२) सशल्काः-सत्वचः इत्यर्थः ।

अपीडतायपवक्त्राः सशल्काः गौतमः १-१-२५

**सशूकः**— आस्तिकः ।

सशूकस्याव्यसनिनः कोशपानं विधीयते ॥

मिताक्षरा-२-११२

**सहः**— (१) बलम् ।

सहो बलमिहोच्यते इति साहसशब्दे द्रष्टव्यम् ।

(२) मार्गशीर्षो मासः ।

सहश्च सहस्यश्च हेमन्तिकावृतु शुक्लयजुः ।

१४-२७

अमरकोषे तु—

मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः ।

इति १-४-१४

सहो बले ज्योतिषि च सहा हेमन्तमार्गयोः

इति व्याख्यासुधायाम् ।

मार्गे सहः सहा इति शब्दार्णवः ।

**सहगमनम्**— मृतेन स्वामिना सह अग्निप्रवेशः ।

स्वामिशवदाहानन्तरं कालान्तरे तत्स्मृतिचिह्नं गृहीत्वा वह्निप्रवेशनं तु अनुगमनम् इति सहगमनान्तस्य प्रभेदः ।

**सहपिण्डक्रिया**— सपिण्डीकरणम् ।

सहपिण्डक्रियायां तु कृतायामस्य धर्मतः ।

अनयैवावृता कार्य्यं पिण्डनिर्वपणं सुतैः ॥

मनुः ३-२४८

**सहस्यः**—पौषो मासः ।

सहश्च सहस्यश्च हेमन्तिकावृतु ।

शुक्लयजुः १४-२७

**सहस्रदः**— गोसहस्रदाता हेमाद्रिः परि ३९८

सहस्रदः गोसहस्रद इति मेधातिथिः ।

बहुप्रद इति हेमाद्रिः

वेदार्थवित् प्रवक्ता च ब्रह्मचारी सहस्रदः ।

शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः ॥

मनुः ३-१८६

**सहस्रवाकः**— सहस्रपदाभ्यासी सहस्रवारपाठकइत्यर्थः ।

प्रतिषिद्धमन्त्रयोगे सहस्रवाकश्चेत् ॥ गौतमः ३-४-१३

अत्र वक्ति इति वाक इति हरदत्तः

**सहस्राक्षः—** (१) पुरुषसूक्तम्।

तच्च अष्टादशर्चमिति गोविन्दस्वामी।

क्षापवित्रं सहस्राक्षो मृगारोहमुचौः गणौ।

पावमान्यश्च कुश्माण्ड्यो वैश्वानर्य ऋचश्चयाः॥

बौधायनः-४-७-५

(२) इन्द्रः।

इन्द्रस्य हि मन्त्रिपरिषदरिषीणां सहस्रम् ५५

स तच्चक्षुः॥ ५६ तस्मादिमं द्व्यथं सहस्राक्षमाहुः॥

कौट १-१५-५७

**सहा—** घिउकुमारीति प्रसिद्धा इति कल्परत्नाकरे-३४२

**सहल्लेखम्—** भावदुष्टम् (भोज्यम्)।

विचिकित्सा तु हृदये यस्मिन्नेव प्रजायते।

सहल्लेखं तु विज्ञेयं।

अन्नं पर्युषितं भावदुष्टं सहल्लेखं पुनःसिद्धमाममांसं

पक्वं च॥ वसिष्टः १४-२८

अत्रसहल्लेखंपदं भावदुष्टस्य विशेषणरूपेणयोज्यम्।

**सहोढः—**यदि गर्भिणी परिणीयते तर्हि तत्पुत्र सहोढ़

या गर्भिणी संस्क्रियते ज्ञाताऽज्ञातापि वा सती।

वोढुः स गर्भो भवति सहोढ इति चोच्यते॥

मनुः ९-१७३

**सहोढजः—** सहोढः।

गर्भे विन्नः सहोढ़जः याज्ञ २-१३१

**सांस्पर्शिकम्—** संस्पृश्य यत् प्रसाधनादि कर्म क्रियते।

संस्पृश्य यानि क्रियन्ते तानि अभ्यञ्जनोत्सादन-

प्रसाधनानि सांस्पर्शिकानि इति काठकगृह्य भाष्ये।

सर्वाणि सांस्पर्शिकानि त्रिभिः सहवर्जयेत्॥

काठकगृ-१-१-१७

**साकमेधः—** चातुर्मास्ययागस्य तृतीयं पर्व।

**साक्षी—** साक्षात् द्रष्टा, साक्षात् श्रोता वा।

समक्षदर्शनात् साक्षी श्रवणच्चैव सिद्धति॥

मनुः ८-७४

स च एकादशविधः।

एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः।

कृतः पञ्चविधस्तेषां षड्विधोऽकृत उच्यते॥

नारदस्मृतिः ५-१

लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च।

गूढ़श्चोत्तरसाक्षी च साक्षी पञ्चविधः स्मृतः ५-४

ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम्।

कार्येष्वधिकृतो यः स्यादर्थिना प्रहितश्च यः॥

कुल्याः कुल्यविवादेषु विज्ञेयस्तेऽपि साक्षिणः॥

वृहस्पतिस्तु—

लिखितो लेखितो गूढः स्मारितः कूल्यदूतकौ।

यादृच्छिकश्चोत्तरश्च कार्यमध्यगतोऽपरः।

नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः ॥

कल्पतरौव्यव-९६

(१) तत्र लिखितः—

जातिनामादिलिखितं येन स्वं पित्र्यमेव च ।

निवासश्च स विज्ञेयः साक्षी लिखितसंज्ञकः ।

(२) लेखितः— अर्थिना च क्रियाभेदैस्तस्य कृत्वा-ऋणादिकम् ।

प्रत्यक्षं लिख्यते यस्तु लिखित स उदाहृतः ।

(३) गूढसाक्षी—

कुड्यव्यवहितो यस्तु श्राव्यते ऋणिभाषितम् ।

विनिह्नुते यथावश्यं गूढसाक्षी सकीर्त्तितः ।

(४) स्मारितः—

आहूय यः कृतः साक्षी ऋणन्यासक्रियादिके ।

स्मार्यते च मुहुर्यश्च स्मारितः सोऽभिधीयते ॥

(५) कुल्यः— विभागदाने विपणे जातिर्यत्रोपयुज्यते ।

द्वयोः समानो धर्मज्ञः कुल्यः स परिकीर्त्तितः ।

(६) दूतकः—अर्थिप्रत्यर्थीवचनं शृणुयात् प्रेषितस्तु यः ।

उभयोः सम्मतः साधुर्दूतकः स उदाहृतः ॥

(७) यादृच्छिकः— क्रियमाणे तु कर्त्तव्येयः कश्चित्स्वयमागतः ।

अत्रसाक्षित्वमस्माकमुक्तो यादृच्छिको मतः ।

(८) उत्तरसाक्षी—

यत्रसाक्षी दिशं गच्छन् मुमूर्षुर्वा यथाश्रुतम् ।

अन्यं संश्रावयेत्तं तु विद्यादुत्तरसाक्षिणम् ।

(९) कार्यमध्यगतः—

उभाभ्यां यस्य विश्वस्तं कार्यं वा विनिवेदितम् ।

गूढचारी स विज्ञेयः कार्यमध्यगतस्तथा ।

(१०) नृपः—

अर्थिप्रत्यर्थिनोर्वाक्यं यच्छ्रुतं भूभृतास्वयम् ।

स एव तत्र साक्षी स्याद् विसम्वदे द्वयोरपि ।

(११) अध्यक्षः—

निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ।

अध्यक्षः सभ्यसहितः साक्षी स्यात्तत्र नान्यथा ॥

(१२) ग्रामः—

मुषितं घातितं यत्र सीमायाश्च समन्ततः ।

अकुतोऽपि भवेत् साक्षी ग्रामस्तत्र न संशयः ।

गूढचारी कार्यमध्यगतश्चेति एकस्यैव संज्ञाद्वयमिति व्यवहार प्रकाशे ।

प्रसङ्गात् असाक्षी निरूप्यते स च पञ्चविधः ।

असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः ।

वचनाद् दोषतो भेदात् स्वयमुक्तिमृतान्तरः ॥

नारदः ४-१५७

(१) वचनादसाक्षिणो यथा—

श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः ।

असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः ॥

नारदः १-१५८

शंखोपि—

पित्रा विवदमानगुरुकुलवासिपरिव्राजकवानप्रस्थ

निर्ग्रन्था असाक्षिणः इति ।

(२) दोषादसाक्षिणो यथा—

स्तेना साहसिकाश्चाण्डाः कितवा वञ्चकास्तथा ।

असाक्षिणस्ते दुष्टत्वात् तेषु सत्यं न विद्यते ।

नारदः १-१५६

(३) भेदादसाक्षिणो यथा—

साक्षिणां लिखितानां च निर्दिष्टानां च वादिनाम् ।

तेषामेकोऽन्यथावादी भेदात्सर्वे न साक्षिणः ।

(४) स्वयमुक्तिः—

स्वयमुक्तिरनिर्दिष्टः स्वयमेवेत्य यो वदेत् ।

सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति ॥

नादः १-१६१

(५) मृतान्तरः—

योर्थः श्रावयितव्यः स्यात्तस्मिन्नसति चार्थिनि ।

क्व तद् वदतु साक्षित्वमित्यसाक्षी मृतान्तरः ॥

नारदः १-१६२

क्वचिन् मृतान्तरोपि साक्षी भवति ।

मृतान्तरोऽर्थिनि प्रेते मुमुर्षुश्रावितादृते ॥

तथा—

श्रावितोऽनातुरेणापि यस्त्वर्थोधर्मसंहितः ।

मृतेऽपि तत्र साक्षी स्यात् षट्सु चान्वहितादिषु ।

नारदः १-६८-११

याज्ञवल्क्योऽपि असाक्षिणो दर्शयति—

स्त्रीबालवृद्धकितव मत्तोन्मत्ताभिशस्तकाः ।

रङ्गावतारिपाखण्डिकूटकृद्विकलेन्द्रियाः ॥ २-७०

पतिताप्तार्थसम्बन्धि सहायरिपुतस्कराः ।

साहसी दृष्टदोषश्च निर्धूतायास्त्वसाक्षिणः ॥ २-७१

**साग्रः**— सम्पूर्णः आधिक्येन सहितो वा अग्रेण सहितः

साग्र इति विग्रहः ।

अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः ।

कृपः परशुरामश्च सप्तैते चिरजीविनः ।

सप्तैतांश्च स्मरेन्नित्यं मार्कण्डेयमथाष्टमम् ।

जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः ॥

इति हरिहरभाष्ये

साग्रः सम्वत्सरो जातो विप्रेह तव पश्यतः ।

इति महाभारते

साग्रं वर्षशतं जीवत्यस्याः श्रुतेर्व्याख्यानेसग्रं

सपादशतमिति लक्षणप्रकाशे मित्रमिश्रैरुक्तम्

अग्रशब्दस्यार्था मेदिन्याम्—

अग्रं पुरस्तादुपरि परिमाणे पलस्य च ।

आलम्बते समूहे च प्रान्ते च स्यान्न पुंसकम् ।

अधिके च प्रधाने च प्रथमे चाभिधेयवत् ॥

यद्यकार्यशतं शाग्रं कृतं वेदश्च धार्यते ।

सर्वं तत्तस्य वेदाग्निर्दहन्यग्नि रितेन्धनम् ॥

वसिष्ठः-२७-१

अत्रापि साग्रपदेन अकार्यशतस्य समूहः तदाधिक्यं वा ॥

साग्रो वेदश्च धार्यते इति पाठे साग्रोवेदः सम्पूर्णोवेनः सोपनिषत्को वेद इति वा ॥

**सांकारिक—** विवाहार्थमप्रशस्ता कन्या ।

सांकारिका यस्यांगर्भसायां माताभर्तृः अस्तिसङ्कलनं कृतवती सा कुलान्तरस्य दुहतृत्वं गण वा इति

हरदत्तः आप गृह्यसू-१-३-१२

**साङ्गतिकः—** विचित्रपरिहासादिभिर्यः वर्त्तते ।

नैकग्रामीणमतिथिविप्रः साङ्गतिक स्तथा ॥

वसिष्ठः-८-८

**साण्डः—** वृषभः ।

सह अण्डाभ्यां वर्त्तत इति साण्डः इति हरिहरः

रौद्रंपशुमालभेन साण्डम् पारस्करः ३-८-४

**सात्वतः=** (१) व्रात्यात् वैश्यात् सवर्णायां जातः ॥

मनुः १०-२३

(२) भागवतः ।

सनृशब्देन सत्त्वमूर्त्तिर्भगवान्, स उपस्यतया विद्यते यस्य स सत्त्वान् सत्त्वानेव सात्त्वत इति पूजाप्रकाशे मित्रमिश्रः ।

विप्रेभ्यस्त्वत्र तद्देयंब्राह्मणेम् यन्निवेदित ।

वैष्णवं सात्वतेभ्यश्च भस्माङ्गेभ्यश्च शाम्भवम् ।

सौरमगेभ्यः शाक्तेभ्यस्तापिने यन्निवेदितम् ।

स्त्रीभ्यश्च देयं मातृभ्यो यत्तु किंचिन्निवेदितम् ॥

इत्याचारादर्शे-४८

तत्र विष्णुः—

विष्णवे निवेदितं सात्त्वताय देयं ब्राह्मणाय वा ।

सात्त्वतलक्षणं ब्रह्माण्डे—

पञ्चमं सात्त्वतं नाम विष्णोरायतनान्यपि ।

पूजयत्याज्ञया राज्ञो यदि स्यात् संयतेन्द्रियः ॥

अथांशुः सात्वतो नाम विष्णुभक्तिः प्रतापवान् ।

महात्मा दाननिरतोधनुर्वेदविदां वरः ।

स नारदस्य वचनाद् वासुदेवार्च्चने रतः ।

शास्त्रं प्रवर्त्तयामास कुण्डगोलादिभिः श्रुतम् ।

तस्य नाम्ना तु विख्यातं सात्वतं नाम शोभनम् ।

परिभाषाप्रकाशे-२४

**साद्यस्कम्—** आशुभावि ।

चत्वार्याह महाराज साद्यस्कानि बृहस्पतिः ।

पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे ॥ ७१

देवतानां च संकल्पमनुभावं च धीमताम् ।

विनयं कृतविद्यानां विनाशं पापकर्मणाम् ७२

महाभ, उद्, प्रजा २३ अध्यायः

**साधकः**— कुटुम्बभरणे रतो गृहस्थः ।

उदासीनः साधकश्च गृहस्थो द्विविधो मतः ।

कुटुम्बभरणे सक्तः साधकोऽसौ गृही भवेत् ॥

इत्याचारसारे कुर्मपुराणम्

**साधनम्**— (१) साधनं मारणम् साधयेत देहमात्मनः ॥

इत्यत्र

आत्मदेहावच्छिन्नं जीवं ब्रह्मप्राप्तियोग्यं साधयेदिति

कुल्लूकः ।

एतेन साधनं योग्यतापादनम् ।

एतैश्च विद्यमानेषु स्नानासनविहारवान् ।

प्रयुञ्जानोऽग्निशुश्रूषां साधये देहमात्मनः ॥

मनुः २·२४८

(२) ऋणादिना प्रयुक्तस्य धनस्य करशुल्कादिराज-भागस्य वै तादृशधनस्य आदानम् ।

यः साधयन्तं छन्देन वेदयेद्धनिकं नृपे ।

स राज्ञा तच्चतुर्भागं दाप्यस्तस्य च तद्धनम् ॥

मनुः ८-१७६

अत्र साधनम् आदानम् ।

(३) समाधानम्, निश्चयः ।

अच्छलेनैव चान्विच्छेत्तमर्थं प्रीतिपूर्वकम् ।

विचार्य तस्य वा वृत्तं साम्नैव परिसाधयेत् ॥

मनुः ८-१८७

(४) अनुगमनं संसाधनशब्देन द्रष्टव्यम् ।

मारणे मृतसंस्कारे गतौ द्रव्योपपादने ।

निवर्त्तनोपाकरणानुव्रज्यासु च साधनम् ॥

अमरः ३-३-११६

**साधनिकः**—तुरगादिसाधनेषु अधिकृत इति हेमाद्रिः ।

**साध्यपालः**— साक्ष्यर्थिप्रत्यर्थिनामाकारणे रक्षणे च राज्ञा नियुक्तः पुरुष ।

साध्यपालस्तु कर्त्तव्यो राज्ञा साध्यस्य साधकः ।

क्रमायातो दृढः शुद्रः सभ्यानां च मते स्थितः ॥

इति व्यवहारमयूखे व्यासः

स्वपुरुष इत्यस्य संज्ञान्तरं स्वपुरुषशब्दे द्रष्टव्यम् ।

**सान्तपनम्**—व्रतविशेषः

गोमुत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।

एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम् ॥

इति मनुः ११-२१२

एतत्तु द्विदिनसाध्यम्, सप्ताहसाध्यस्य महासान्तपनसंज्ञा ।

पृथक्सान्तपनद्रव्यैः षड्हः सोपवासकः ।

सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥

याज्ञ ३-३१५

जाबालेन अस्यापि कृच्छ्रसान्तपनसंज्ञा दत्ता । यथाह-

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्, ।

एकैकं प्रत्यहं पीत्वा त्वहोरात्रमभोजनम् ।

कृच्छ्रं सान्तपनं नाम सर्वपापप्रणाशनम् ।

इति मिताक्षरा ३-३१४

एतदेव त्र्यूहाभ्यस्तं यतिसान्तपनं स्मृतमितिशंखः ॥

सान्तानिकः—विवाहार्थी विवाहार्थं धनप्रार्थी ।

इति भावः मनुः ११-१

सान्त्वम्—साम प्री तः ।

यथा ईमे तानभ्यर्च्य ब्राह्मणैः सह पार्थिवः ।

सान्त्वेन प्रशमय्यादौ स्वधर्मं प्रतिपादयेत् ।

मनु ८-३९१

साम सान्त्वम् अमरः २-८-२१

सान्नाय्यम्—हविः ।

यो दद्याद्बलिक्लेशः सांनाय्यं वानिवर्त्तते ।

दृष्टो वाऽदृष्टपूर्वो वा स यज्ञः सर्वकामिकः ।

शङ्खलिखितस्मृतिः ॥ ५

साम— (१) सामवेदः ।

सामध्वनावृग्यजुषी नाधीयीत कदाचनः ।

मनुः ४-१२४

गीतिलक्षणं साम

(२) उपायविशेषः, प्रीतिपूर्वकसम्भाषणम् ।

प्रियपूर्वं वचः साम भेदो वस्तूपदर्शनम् ।

अर्थोपकर्षणं दण्डस्ताडनं वन्धनं तथा ॥

इति बृहस्पतिः कल्पतरौ व्यव । ११

साम्ना दानेन भेदेन समस्तैरथवा पृथक् ।

विजेतुं प्रयतेतारीन् न युद्धेन कदाचन ॥

मनुः ७-१९८

मत्स्यपुराणे तु

द्विविधं कथितं साम तथ्यं चातथ्यमेव च ।

तत्राथ्यतथ्यं साधूनामाक्रोशायेव जायते ।

ये शुद्धवंशा ऋजवः प्रणीता धर्मेस्थिताः सत्यपरा विनीताः ।

ते सामसाध्याः पुरुषाः प्रदिष्टामानोन्नता ये सततं च राजन् । इति २२१-१०

अतिशङ्कितमित्येवं पुरुषं सामवादिनम् ।

असाधवो विजानन्ति तस्मात्तत् तेषु वर्जयेत् ॥ २२१-६

व्यवहारप्रकाशे अतिशङ्कितस्थाने अनिशङ्क पाठः २८०

अग्निपुराणे च सामभेदा उक्ताः

तुर्चविधं स्मृतं साम उपकारानुकीर्त्तनम् ।

मिथः सम्बन्ध कथन मृदुपूर्वं च भाषणम् ।

आयते दर्शनं वाचा तत्राहमिति चार्पणम् ॥ इति ।

(३) गीतविशेषः ।

तल्लक्षणं सङ्गीतरत्नाकरे ।५-२३१

स्तोभभङ्गीं विजानीयात् साम्नो वैदिकसामवत् ।

ब्रह्मणा च पुरा गीतं प्रस्तावोद्गीथकौ तथा ।

प्रतिहारोपद्रवौ च निधनं पञ्चमं मतम् ।

सामगायम्— सामगानम् ।

यथाविधानेन पठन् सामगायमविच्युतम् ।

सावधानस्तदभ्यासात् परंब्रह्माधिगच्छति ॥

याज्ञ ३-११२

**सामन्तः—** (१) सामन्ताः समीपवासिन इति मन्वर्थ-

विवृतिः ८-२७२

सीमान्तावासिन इति मन्वर्थमुक्तावली।

क्षेत्रादेर्विप्रतिपन्नसीमकस्य सर्वासु दिक्षु ये अनन्तरं

क्षेत्रादि भोक्तारस्ते संसक्ताः। ये तु तदनन्तरास्ते

सामन्ता इत्यपरार्कः २-२५२

समन्ताद्भवाः सामन्ताः। चतसृसु दिक्षु अनन्तर

ग्रामादयः चेत् प्रतिसोमं व्यवस्थिताः।

ग्रामो ग्रामस्य सामन्त क्षेत्रं क्षेत्रस्य कीर्तितम्।

गृहं गृहस्य निर्दिष्टं समन्तात् परिरभ्य च ॥

कात्यायनः ७३६

अत्र ग्रामादि शब्देन तत्स्थाः पुरुषा लक्ष्यन्ते।

ग्रामः पलायित इति यथा। सामन्तग्रहणं च तत्सं-

सक्ताद्युपलक्षणार्थम्। इति विज्ञानेश्वरः २-१५१

संसक्तसकत्संसक्ताः पद्माकाशः प्रकीर्त्तिताः ॥

इति तत्र कात्यायनः ७३८

अत्र संसक्ताः तत्संक्ताः सक्तसंसकताः सर्वे

सामन्ता इति मन्मतम् ॥

चतुः सामन्तसान्निध्ये प्राची दिग् बलवत्तरा।

उदीची च प्रतीची च सर्वाभावे तु दक्षिणा ॥

इति सरस्वतीविलासे सुमन्तुः

सामन्तः सीमान्तवासो इति चण्डेश्वरः विवादरत्नाकरे.

२०७

(२) सामन्तः क्षुद्रनृपतिः।

तदुक्तं शुक्रनीतौ प्रथमाध्याये-

लक्षकर्षमितो भागो राजतो यस्य जायते।

वत्सरे वत्सरे नित्यं प्रजानां त्वविपीड़नैः ॥ १८३

सामन्तः स नृप प्रोक्तो यावल्लक्षत्रयावधि।

तदूर्द्धं दशलक्षान्तं नृपो माण्ड़लिकः स्मृतः ॥ १८४

तदूर्ध्वं तु भवेद्राजा यावद् विंशतिलक्षकः।

पञ्चाशल्लक्षपर्यन्तो महाराज प्रकीर्त्तितः ॥ १८५ इति

(३) शतग्रामापतिरपि सामन्तः।

शतग्रामधिपो यस्तु सोपि सामतसंज्ञकः।

शतग्रामे चाधिकृतोऽनुसामन्तो नृपेण सः ॥

(४) अमात्यः।

प्रतापयुक्तस्तेजस्वी नित्यं स्यात् पापकर्मसु।

दुष्टसामन्तहिंस्रश्च तदाग्नेयं व्रतं स्मृतम् ॥ मनुः ९-३१०

अत्र सामन्तशद्बस्यार्थम् अमात्यमाह कुल्लूकः।

**सामपवित्रम्—**कयानश्चित्र आभुवदित्यादिगीतं वामदेव्यं

साम ॥ इति हरदत्तः आपस्तः १-१-१२

**सामयाचारिकः—** सामयाचारिकेष्वभिविनीतः इत्यत्र

पौरुषेयी व्यवस्था समयः, तन्मूला आचारः

समयाचाराः, तेषु भवा सामयाचारिकाः इति गौतमीयमिताक्षरायाम्, आपस्तम्बव्याख्याने च हरदत्तः

आपस्त १-१-१-१

**सामसावित्री**— गायत्रं साम । गोभिलः ३-३-३

**सामान्यम्**— ज्ञातिः ।

ततः प्रभृति वै प्रेतः पितृसामान्यमश्नुते ॥

इति मिताक्षरायां मार्कण्डेयः । २-२५४

**सामिधेनी**— अग्निप्रकाशिकाऽऽऋक् ।

**सामुद्रः**—समुद्रमार्गेण वाणिज्यकृत् । याज्ञ २-३८

**सामेधिकः**— भाविसम्पदभिज्ञः ॥ समेधा-भाविनी सम्पत्तिः तदभिज्ञः इति श्रीमूला कौट १-११-१६

शिष्याश्चास्तावेदयेयुरसौ सिद्धः सामेधिक इति ॥

**साम्परायिकम्** - पारलोकिकम् ।

प्रभुः प्रथमकल्पस्य योनुकल्पेन वर्त्तते ।

न सांपरायिकं तस्य दुर्मते र्विद्यते फलम् ॥

मनुः ११-३०

(२) युद्धसम्बन्धि ।

संरोध्य त्रिविधं मार्गं षट्विधं च बलं स्वकम् ।

सांपरायिककल्पेन यायादरिपुरं शनैः ॥ मनुः ७-१८५

अत्र संपरायः युद्धमिति कुल्लूकः ।

**साम्परायिककल्पः**— सामरिकविधानम् ।

साम्परायिककल्पेन यायादरिपुरं शनैः ॥

मनुः ७-२८५

**साम्प्रतम्**—कुशलम् इति पूजाप्रकाशे ५

योगो ज्ञानं यशः सिद्धिर्महादेवादवाप्यते ।

आरोग्यं साम्प्रतं पुत्रं भास्करात् प्राप्नुयाद्ध्रुवम् ।

तत्र देवीपुराणे ।

**साम्वत्सरः** ज्यौतिषिकः ।

राजा च सर्वकार्येषु साम्वत्सराधीनः स्यात् ।

विष्णुः ३-७५

**साम्वत्सरिकः**— सम्वत्सरमतिक्रान्तः शिशुः ।

सम्वत्सरं वर्षम् अतिक्रान्तः साम्वत्सरिकः ॥

साम्वत्सरिकस्य चूडाकरणम् ॥ इति पारस्करः २-१-१

**सायमाशः**— रात्रिभोजनम् ।

निष्ठितेसायमाशप्रातराशे भूतमिति प्रवाचयेत् ।

गोभिलगृ १-३-१७

**सायाह्नः**— पञ्चधा विभक्तस्य दिवसस्य पञ्चमो भागः ।

अप्रमत्तश्च द् भैक्ष्यं सायाह्नेऽनभिलक्षितः ॥

याज्ञ ३-५

मुहूर्त्तत्रितयं प्रातस्तवानेन तु सङ्गवः ।

मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्नश्च तादृशः।
सायाह्नस्त्रिमुहूर्त्तः स्यात्सर्वधर्मबहिष्कृतः ॥ इति

**सारः**— (१) सामर्थ्यम्।

अनुबन्धं परिज्ञाय देशकालौ च तत्वतः।
सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेत ॥
मनु ८-१२६

अत्र सार चापराधकारिणो धनशरीरादिसामर्थ्यम्।
इति कुल्लूकः।

(२) द्रव्यमूल्यम।

द्रव्याणामल्पसाराणां स्तेयं कत्वांन्यवेश्मतः।
चरेत्सान्तपनं कृच्छ्रं तन्निर्यात्यविशुद्धये ॥
मत्स्यपु १२६ अध्याये।

मनुस्मृतौ तु तन्मिर्यात्यात्मशुद्धये ॥
इतिपाठः ११-१६४

(३) काष्ठमज्जा मज्ञ इति भाषायां प्रसिद्धा।

अश्वत्थो यः शमीगर्भः प्रशस्तोर्वीसमुद्भवः।
तस्य या प्राङ्मुखी शाखा उदीची चोर्ध्वगापि वा ॥
अरणिस्तन्मयी ज्ञेया तन्मध्ये चोत्तरारणिः।
सारवद्दारवं चात्र मोविली च प्रशस्यते ॥
इति अरणिलक्षणे

**सारङ्गः**= (१) मृग इति लक्ष्मीधरः।

(२) चातकः वसिष्ठ १४-४८

**सारघम्**— मद्यम्।

कुष्माण्डमिक्षुदण्डं च मांसं सारघमेव च।
एते बलिसभाः प्रोक्तास्तृप्तौ छागसमाः सदा ॥
इति कालिकापुराणे

अत्र सारघं मद्यमितिनिर्णयसिन्धुव्याख्याने कृष्ण-भट्टः।

**सारसः**= पक्षिविशेषः।

कलविङ्कं प्लवं हंसं चक्राह्वं ग्रामकुक्कुटम्।
सारसं रज्जुवालं च दात्यूहं शुकसारिके ॥
इति वर्जयेदित्यनुवृत्तौ मनुः ५-१२

सारसः लक्ष्मण इति विज्ञानेश्वरः १-१७२
सारसः पुष्कराह्वयः स च दीर्घगलजंघो नीलाङ्गः पक्षी इति हेमाद्रिः परि-५८३

**सारस्वतस्थानम्**— विद्वत्समागमः स्नानशब्दो द्रष्टव्यः।

**सार्थः**— वणिक्सङ्घः, समूहः।

सार्थः वणिक्सङ्घ इति श्रीमूला, को १-१२
सङ्घसार्थौ तु जन्तुभिः इत्यमरः २-६-४१

येत्वरम्यचरास्तेषाम् अरण्ये करणं भवेत्।
सेनायां सैनिकानां तु सार्थेषु वणिजां तथा।
इति व्यवहारकल्पतरौ बृहस्पतिः ॥

**सार्थमुख्यः**— वणिग्दलपतिः ।

**सार्थवाहः**— क्रयविक्रये वर्त्तमानः वणिक्
अमरः २-९-७८
तथोक्ता तेन सार्थेन दमयन्ती नृपात्मजा ।
प्रत्युवाच ततः साध्वी भर्तृव्यसनपीडिता ॥ १२२
सार्थवाहं च सार्थं च जना ये चात्र केचन ।
युवस्थविरबालाश्च सार्थस्य च पुरोगमाः । १२३
मानुषीं मां विजानीत मनुजाधिपतेः सुताम् ॥
महा भा, वन, ६४-१२४

**सार्पम्**— अश्लेषानक्षत्रम् हेमाद्रि श्राद्ध-२६७

**सार्ववर्णिकम्** - (अन्नादयम्) सर्वव्यञ्जनोपेतम् अन्नम् ।
अत्र वर्णशब्दः प्रकारार्थकः ।
सार्ववर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा ।
समुत्सृजेद् भुक्तवतामग्रतो विकिरन् भुवि ॥
मनुः ३-२४४

**सालावृकः**— आरण्यः श्वा इति शंकरानन्दः ।
इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् ॥
अस्य ताल्व्यादिपाठोऽपि दर्शितः ॥

**सावनदिनम्**— सूर्यस्य उदयमारभ्य पुनः सूर्योदयपर्यन्तम् ।
सवनः यज्ञः, तद्योग्यं दिनम् ॥
सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा ॥
मध्यमग्रह भुक्तिश्च सावनेन प्रकीर्त्तिता इति
कालसारेऽयासः

**सावनमानम्**— सवनमध्वरः तदुपयोगिदिवसादिपरिच्छिन्नः कालः यज्ञे सावनमित्याहुः इति स्कान्दे ।

**सावनमासः**— त्रिंशदहोरात्रात्मको मासः ।

**सावनवर्षः**— षष्ट्युत्तरत्रिशताहोरात्रात्मको वर्षः ।

**साविका**— प्रसवस्य कारयित्री स्त्री ।
श्वपाकं पतितं व्यङ्गमुन्मत्तं शवहारकम् ।
भूतिकां साविकां नारीं रजसा च परिप्लुताम् ।
सचैलं सशिरः स्नात्वा तदानीमेव शुद्ध्यति ॥
इति देवलः
नित्याचारप्रदीपे साविकास्थाने सूयिका इति पाठः ॥
नित्या-१-३३२

**सावित्री**— (१) तत्सवितुरित्यादिमन्त्रः ।
सविता देवता अस्या इति सावित्री अत्र योगरूढिः ।
(२) ब्रह्मवादिनी विशेषः ।
निषत् शब्दो द्रष्टव्यः ।

**सावित्रीव्रतम्**— ज्येष्ठामावास्यायां विहितं व्रतम् ।
त्रयोदश्यादिदिनत्रयेऽपि ।

**साहसम्**— (१) प्रसभहरणम् ।

सामान्यद्रव्यप्रसभहरणात् साहसं स्मृतम् ।
तत्तुल्याद् द्विगुणो दण्डो निह्नवे तु चतुर्गुणः ॥
याज्ञ-२-२३०

(२) मनुष्यमारणादि ।

मनुष्यमारणं स्तेयं परदाराभिमर्शनम् ।
पारुष्यमुभयं चेह साहसं पञ्चधा स्मृतम् ॥ इति

राजदण्डं जनक्रोशं चोल्लंघ्य राजपुरुषेतरजनसमक्षं यत्किंचित् मारणहरणपरदार प्रधर्षणादिकं क्रियते तत्सर्वं साहसमिति साहसलक्षणम् ।

नारदेनापि साहसस्य स्वरूपं विवृतम् ।

सहसा क्रियते कर्म यत् किंचिद्बलदर्पितैः ।
तद् साहसमिति प्रोक्तं सहोबलमिहोच्यते ॥ २ १४

इति तदिदं साहसं चौर्यवाग्दण्डपारुष्यस्त्रीसंग्रहणेषु व्यासक्तमपि बलदर्पविष्टम्भोपाधितो भिद्यते इति दण्डातिरेकार्थं पृथगभिधानम् । तस्य च दण्डवैचित्र्यप्रतिपादनार्थं प्रथमादिभेदेन त्रैविध्यमभिधाय तल्लक्षणं तेनैव विवृतम् ।

तत्पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा ।
उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥ ३

फलमूलोदकादीनां क्षेत्रोपकरणस्य च ।
भङ्गाक्षेपोपमर्दाद्यैः प्रथमं साहसं स्मृतम् ॥ ४

वासः पश्वन्नपानानां गृहोपकरणस्य च ।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥ ५

व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम् ।
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ॥ १४-६

**साहसः**— दण्डभेदः ।

साहसं तु दमो दण्ड इति अमरः २-८-२१

पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्रं त्वेव चोत्तमः ॥
मनुः ८-१३८

साशातिपणसाहस्रो दण्ड उत्तमसाहसः ।
तदर्द्धं मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृतः ॥
याज्ञ १-३६३

**साहसिकः**— साहसकर्त्ता ।

अन्वयवत् प्रसभहर्ता मनुष्यमारणादिपञ्चविध साहसकर्त्ता ।

ऐन्द्रं स्थानमभिप्रेप्सुर्यशश्चाक्षयमव्ययम् ।
नोपेक्षेत क्षणमपि राजा साहसिकं नरम् ॥
मनुः ८-३४४

**सिंहतुण्डः**— मत्स्यविशेषः सिंहमुख इति विज्ञानेश्वरः
१-१७८

सिंहतुण्डा विस्तृमुखा इति पण्डितसर्वस्वे ॥ ५७

**सिंहनादः**— वीरध्वनिः ।

कर्णं दृष्ट्वा महात्मानं युद्धाय समुपस्थितम् ।

क्ष्वेडितास्फोटितरवै सिंहनादरवै रपि

धनुःशब्दैश्च ।

विविधैः कुरवः समपूजयन् महा भा, द्रो, ४-१८

**सिंहाणिका**— नासिकामलः कफात्मकः उत्कलभाषायां सिंहाणि इति सिंघाणिका इत्यस्याः पाठान्तरम् प्रसिद्धः ।

सिंहाणिकादयालम्भे इति नित्याचारप्रदीपे पाठः ।

१-२-६८

श्लेष्म सिंहाणिकोत्सर्गोनान्नकाले प्रशस्यते ।

बलिमङ्गलजप्यादौ न होमे न महाजने ॥

विष्णुपु-३-१२-२६

मुखमार्गेण निर्गतः कफः श्लेष्मा नासिकामार्गेण निर्गतः सिंहाणिका इति त्रयोभेदः ।

**सिंही**— (१) कण्टकारिका ।

सिंही कण्टकारिका इति पारस्करभाष्ये हरिहरः

अङ्कारान्ति इति उत्कलदेशे ख्याता १-१३-१

(२) वाइगण इति ख्याता ।

वार्त्ताकी हिङ्गुली सिंही भाण्टाकी दुष्प्रधर्षिणी

अमरः २-४-११३

वातिङ्गणस्तु वार्त्ताङ्गो वार्त्ताकः शाकबिल्वकः ।

**सिंहेम**— सिंहे मे मन्युरित्यादि ब्रह्मो फेमे किल्विषम् इत्यन्त्रम् ।

बोधायनधः-४-७-७

**सिकताः**— नित्यबहुवचनान्तस्त्रीलिङ्गशब्दः अयं समावर्षा-शब्दवत् ।

गङ्गायाः सिकताधारास्तथा वर्षति वासवे ।

शक्या गणयतुं लोके न व्यतीताः पितामहाः ॥

विष्णुधर्मोत्तर, पु. २-७८-३

**सिक्**— वस्त्रप्रान्तभागः कानि इति पणत इति भाषा-प्रसिद्धः ।

सिचावधूतोऽभिमन्त्रयते इति पारस्करः ३-१५-[illegible]७

सिचा चोपहृतमित्यापस्तम्बः १-१६-३१

पश्चाद्भगिनी सिचं गृहणाति इति काठकगृ-

२-११-२

**सिक्थम्**— (१) मधूच्छिष्टम् सिठा इति भाषाप्रसिद्धम् ।

(२) अन्नकवलः गुण्ड़ा इति भाषाप्रसिद्धः ।

उपोषणं चतुर्दश्यां चतुर्दश्यां तु पारणम् ।

कृतैः सुकृतलक्षैश्च लभ्यते वाथवा न वा ।

ब्रह्मा स्वयं चतुर्वक्त्रैः पञ्चवक्त्रैस्तथाप्यहम् ।

सिक्थे सिक्थे फलं तस्य शक्तो वक्तुं न पार्वती ॥

इति शिवरात्रिप्रसङ्गे

**सिक्थकम्**— मधूच्छिष्टम् ।

मधूच्छिष्टं सिक्थकम् इति विज्ञानेश्वरः ३-३१

**सिंघाणिका**— नासिकामल इति हेमाद्रिः ।

सिंहाणिका इति पाठभेद मित्रमिश्रगृहीतः ।

**सितः**— शुक्रमहाग्रहः इति मयूखे ।

**सितासितः**— गङ्गायमुनयोः संगमः ।

पुत्रकामः प्रयागे हि स्नायात् पुण्ये सितासिते ॥

पद्मः उत्तर-१३

**सितास्विन्नम्**— अनूष्मपक्वम् इति कमलाकरः ।

हैमन्तिकं सितास्विन्नम् इत्यादि हविष्यशब्दे द्रष्टव्यम् ॥

**सिद्धार्थः**— श्वेतसर्षपः ।

**सिद्धेच्छा**— वृत्तिविशेषः, पक्वान्नभिक्षा इति यावत् ।

वृत्तिविश्रान्तो वृद्धत्वाद् धातुक्षयाद्वा सज्जनेभ्यः

सिद्धमन्नमिच्छतीति सिद्धेच्छा बौधा, ३-२-१३

**सिनीवाली**— चतुर्दशीमिश्रा अमावास्या ।

दृष्टचन्द्रा सिनीवाली नष्टचन्द्राकुहूर्मता ॥

इति श्राद्धदीपे

सिनी सिता अवसितेति यावत् । अल्पो बालः बालो

सिनी चासौ बाली चेति सिनीबाली ॥

या पूर्वामावस्या सा सिनीवाली योत्तरा सा कुहूः

कौशिक सू १-१-३०

**सिन्दूरम्**— कापालालंकविचूर्णविशेषो रक्तवर्णः ।

नेत्राञ्जनं सताम्बूलं सिन्दूरं रक्तवाससी ।

बिभृयात् सोपवासापि सर्वदा भर्तृवृद्धये ॥

इति वृद्धशातातपः-५४

**सिन्धुः**— (१) नदी ।

कामक्रोधौ तु संयम्य योर्थान् धर्मेण पश्यति ।

प्रजास्तमनुवर्त्तन्ते समुद्रमिव सिन्धवः ॥

मनुः ८-१७५

(२) समुद्रः ।

(३) तन्नामा नदः ।

पञ्च वेषामधोमध्ये सिन्धुनामाम हानदः ।

हठवत्प्लवते तत्र चन्द्रमाः सोमसत्तमः ॥

इति सोमशब्दे द्रष्टव्यम्

**सिलः**— सिलाः ग्रासविशेषा इति बौधायनीये

गोविन्दस्वामी ३-२-११

**सिलोञ्छा**— गृहस्थवृत्तिविशेषः ।

अवारितस्थानेषु पथिषु वा क्षेत्रेषु वाप्रतिहतावकाशेषु वा

यत्र यत्रोषधय विद्यन्ते तत्र तत्रै कंकणिशमुञ्चयित्वा

काले काले सिलैः वर्त्तयतीति सिलोञ्छा ॥

बौधायनः ३-२-११

**सिह्लकम्**— सिह्ला इति मध्यदेशे प्रसिद्धमिति शान्तिमयूखे ।

**सीता**— सीता कृष्यमाणा भूमिरिति मेधातिथिः ।

मनुः ९-३६३

लाङ्गलपद्धतिरिति हरिहरभाष्ये ॥

पारस्करः २-१५-१७

हलविलेखिता भूमिरिति देवपालः काठकगृ-५-१८-१

लौगाक्षिगृह्यसूत्रभाष्ये च ७२ कण्डिका ॥

**सीताद्रव्यम्**— कृष्युपकरणम् हलकुद्दालादि ।

सीताद्रव्यापहरणे शस्त्राणामोषधस्य च ।
कालमासाद्य कार्य्यं च राजा दण्डं प्रकल्पयेत् ॥

मनुः ६-२९३

**सीतायज्ञः**— कृषियज्ञविशेषः ।

सीतायज्ञः पक्वेषु धान्येषु कृष्टक्षेत्रमध्ये हलयज्ञः

इति शूलपाणिः

सीतायज्ञः कृषिं कुर्वतः साग्नेः व्रीहिनिष्पत्तिकाले यवनिष्पत्तिकाले च भवति इति हरिहरः ॥

पारस्करः २-१७

कार्त्तिकशुक्लद्वादश्यां यवबीजवपनोपक्रमाय सीतायज्ञस्यार्येषु प्रसिद्धे यत्र वीरणादिमयी सीताकुमारी देवता विरच्यते इति देवपालः ॥ काठकगृ-५-१७-७

**सीमन्तः**— (१) स्त्रीणां केशविन्यासः ।

सीमन्तमूर्ध्वं विनयति पारस्करः १-१५-४

सीमन्तं स्त्रिया ऊर्ध्वं विनयति पृथक्करोति ललाटान्तरमारभ्य केशान् द्विधाकरोति इति हरिहरः ।

केशललाटयोः सन्धिमारभ्य ऊर्ध्वं केशान् पृथक् करोति ॥ इति गदाधरः

(२) नवपल्लवः ।

सीमन्ता नवपल्लवा इति निर्णयसिन्धौ ।

आरामस्य च सीमन्ताः कलायाः सर्व एव च ॥

(३) सीमन्तोन्नयनकर्म ।

षष्ठेऽष्टमे वा सीमन्तः याज्ञ-१-११

**सीमन्तोन्नयनम्**— गर्भसंस्कारकर्म प्रथमगर्भस्य षष्ठेऽष्टमे वा मासि विधेयम् ।

षष्ठेऽष्टमे वा सीमन्तः-याज्ञ-१-११

पत्न्याः प्रथमजं गर्भमत्तुकामाः सुदुर्भगाः ।
आयान्ति काश्चिद्राक्षस्योरुधिराशनतत्पराः ॥
तासां निरसनार्थाय श्रियमावाहयेत् पतिः ।
सीमन्तकरणी लक्ष्मीस्तामावहति मन्त्रतः ॥
श्रिय श्रितशरीरत्वात्तां त्यजन्तीह मोहिताः ।
अलक्ष्म्यो दुर्भगाः क्रूरा राक्षस्यः पिशिताशनाः ।
गृष्टयः संप्रगृह्यन्ते पीड्यन्ते च विशेषतः ॥
कासांचित्तादृशी वृत्ति र्ब्रह्मणा विहिता पुरा ।
तस्मात् प्रथमगर्भस्य सीमन्ताख्यो विधीयते ॥

इति आश्वलायनाचार्य्याः ।

तृतीये गर्भमासे सीमन्तं कारयेत् इति लौगाक्षिः ।

चतुर्थे गर्भमासे सीमन्तोन्मयनम् इति आश्वलायनः ।

सीमन्तोन्नयनं प्रथमगर्भे चतुर्थेमासि इति आपस्तम्बः ॥

सीमन्तोन्नयनं चतुर्थे पञ्चमे षष्ठे वा इति बैजवापः ।

स चेत् प्रथमगर्भः स्याच्चतुर्थे मास्युपागते ।
पञ्चमे वाथ षष्ठे वा कुर्यान्नान्दी मुखादिकम् ।

इति बौधायनः

आधानादष्टमे मासि सीमन्तोन्नयनं भवेत् ।
नवमे मासि वा कुर्याद् यावद्गर्भविमोचनम् ॥

इत्यत्रिः ।

**सीमा**— मर्य्यादा सा च पञ्चविधा ।

ध्वजिनी मत्सिनी चैव नैधानी भयवर्जिता ।
राजशासननीता च सीमा पञ्चविधा स्मृता ॥

इति नारदः

हुतं दत्तं तपोऽधीतं यत् किंचित् कर्म संचितम् ।
अर्द्धाङ्गुष्ठेन सीमाया हरणेन प्रणश्यति ॥ इति बृहस्पतिः

दानक्रियाकौमुद्याम्-४१

**सीरः**— लाङ्गलम् ।

सैरी तामली वेत्येके आपस्त १-१-२-३७
अनड्वाहो तु यो दद्याद् द्विजे सीरेण संयुतो ।
अलंकृत्य यथाशक्त्या धूर्वहो शुभलक्षणौ ॥

इति धर्मशास्त्रसंग्रहे सम्वर्त्तः-७०

संस्कृतिसंस्थानप्रकाशितसम्वर्त्तस्मृतो तु—
अनड्वाहौ तु यो दद्यात् कीलसीरेण संयुतौ ।

इति पाठः

**सीरवाहकः**— कृषीवलः विवादरत्नाकरदासप्रकरणे ।

**सीवनी**— सीवनी अण्डाधःस्था शिरा ।

सीवन्याः पार्श्वयोर्न्यस्य गुल्फयुग्मं सुनिश्चितम् ॥

देवीभागवते-७-८५-१२

**सीसम्**— धातुविशेषः सीसा इति भाषाप्रसिद्धः ।

सीसं लोहविशेषो रजतसदृश क्षणद्युतिरिति हरदत्तः ।
नागाख्योपधातुरिति हेमाद्रिः ।

**सीसकम्**— सीसम् सीसा इति भाषाप्रसिद्धम् ।

अभ्रिकार्ष्णायस्य दद्यात्सर्पं हत्वा द्विजोत्तमः ॥
पलालभारकं षण्ढे सैषकं चैकमाषकम् ॥

मनुः ११-१३३

**सुकालः**— शोभनकालः प्रातःकालो वा विकालसाहचर्य्यात् ।

विकालश्च सायंकाल इति नीलकण्ठः ।
उत्कलेषु च प्रातःकालः सकालशब्देनोच्यते जनभाषायाम् ।
त्रिकालश्च सुकालश्च दुष्कालः कालनाशनः ।
मृत्युश्चैवाक्षयोऽन्तश्च क्षमामायोकरोवकः ॥

ब्रह्मपु. ४०-६३

**सुकालिनः**— शूद्राणां पितरः ।

सोमपा नाम विप्राणां क्षत्रियाणां हविर्भुज ।
वैश्यानामज्यपानाम् शूद्राणां तु सुकालिन ॥

मनु ३-१९७

**सुकृतम्**— धर्म ।

प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।

विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम् ॥

मनु ६-७६

दशपूर्वान् परान् वंश्यानात्मानं चैक विंशकम् ।

ब्राह्मीपुत्र सुकृतकृन् मोचयेदेनस पितृन् ॥

मनु-३-३७

**सुकृता**— दुहिता इति नरसिंहवाजपेयी ।

श्लेष्मतोक्मकिण्वसुकृताः अविक्रेया इति बौधा ।

**सुखम्**— स्वाधीनतालभ्यः मनसो विकाशः ।

सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।

एतद् विद्यात् समासेन लक्षणं सुखदुःखयोः ॥

मनुः-४

**सुखण्डम्**— सुखण्डी इति भाषायाम् इति वैजयन्त्यां-

नन्दपण्डित ॥ विष्णु ५१-३४

तत्र यमः भूतृणं शिग्रुकं चैव सुखण्डं कवकानि च ।

एतेषां भक्षणं कृत्वा प्राजापत्यं चरेद्द्विजः ॥ इति

अस्यैव पाठभेद खुखण्डम् इति

**सुखरात्रिः**-- कार्त्तिकशुक्लप्रतिपत् ।

अमावास्यां तुलादित्य लक्ष्मीर्निद्रां विमुञ्चति ।

सुखरात्रेरुषः काले प्रदीपोज्ज्वलितालये ॥

पुनश्च—

कार्त्तिके मासि शुक्लादौ तिथौ च कुसुमांशुके ।

सुखाय सुखरात्रि स्यात् कायराग्र्सुखाय वै ।

इति कालसारे

दण्डैकरजनीयोगे दर्श स्यात्तु परेऽहनि ।

तदा विहाय पूर्वेद्यु परेह्नि सुखरात्रिका ॥

स्कान्दं, वै, कार्त्तिक ६-१०१

**सुखा**— भौमवारयुक्ता शुक्लचतुर्थी ।

यदा शुक्लाचतुर्थ्यां तु वारोभौमस्य वै भवेत् ।

तदा सा सुखदा ज्ञेया सुखा नामेति कीर्त्तिता ।

स्नानदानादिकं कर्म सर्वमक्षयमुच्यते ॥

इति देवीपुराणवचनंवर्षक्रियाकौमुद्याम्-६

**सुखावस्थः**— विवाहस्थेय पुरुष इति श्रीमूला ।

पतिविप्रकारात् पतिज्ञातिसुखावस्थग्रामिका-

न्वाधिभिक्षुकीज्ञाति कुलानामन्यतममपुरुषं गन्तु-

मदोष इत्याचार्या कौट-३-४

**सुखासिका**— कर्कटी भेद ।

उत्कलभाषायां कण्टिआलीकाकुडी इति प्रसिद्ध ।

**सुगन्धम्**— गन्धनाकुल्याः पत्रादि ॥ हेमाद्रि परि-५६६

उदाहरणं पञ्चशिम्बशब्दे द्रष्टव्यम् ।

**सुचरितम्**— धर्म ।

ततः स नृशार्दूल पूरुं राज्येऽभिषिच्य च ।
ततः सुचरितं कृत्वा भृगुतुङ्गे महातपा ॥
महाभा, आदि-७५-५७

**सुचरित्रम्—** सदाचार ।

**सुता—** कृष्णप्रतिपद्रात्रि-कालमाधवे-३

**सुदर्शन—** शुक्लपञ्चमी रात्रिः कालमाधवे—३

**सुधन्वा—** व्रात्यात् वैश्यात् सवर्णायां जातः ।
मनुः-१०-२३

**सुधा—** अनुव्रज्या, पादशौचम्, उपासनं, पूर्वालापश्च ।
सुधावस्तूनि वक्ष्यामि शिष्टे च गृहमागते ।
मनश्चक्षुर्मुखं वाचं सौम्यं दद्याच्चतुष्टयम् ॥ ५
अभ्युत्थानमिहागच्छ पूर्वालापः प्रियान्वितः ।
उपासनमनुव्रज्या कार्य्याण्येतानि यत्नतः ॥ ६
ईषद्देयानि चान्यानि भूमिरापस्तृणानि च ।
पादशौचं तथाभ्यङ्गमासनं शयनं तथा ॥ ७
किंचिद्दद्याद् यथाशक्ति नास्यानश्नन गृहे वसेत् ।
मृजलं चार्थिने देयमेतान्यपि सतां गृहे ॥ ८
दक्षस्मृतिः

**सुनिषण्ण—** सुनिषण्णः चाङ्गेरिसदृशो जलप्रभवः शाकः इति दिव्यसिंहमहापात्राः ।
श्राद्धदीपे श्राद्धदेये—
कालेयं कालशाकं च सुनिषण्णं सुवर्चला इति
स च सुनुसुनिआ इति उत्कलेषु प्रसिद्धः ।
सुनिषण्णं कर्कटीसदृशं सुलाटिआ इति
गौडप्रसिद्धमिति निर्णयसिन्धौ ॥

**सुनृता—** शुक्लनवमीरात्रिः ।

**सुन्वती—** कृष्णद्वितीयारात्रिः ।

**सुपर्णः—** (१) श्येनपक्षीति हरदत्तः ।
स्वर्णचूड़पक्षीति वैद्यकशब्दसिन्धौ ।
हंसभासचक्रवाक सुपर्णाश्च आपस्त १-५-१७-३५
(२) चतुष्कपर्दा युवतिः सुपेशा इत्यादि ऋक्त्रयमिति
ऋ १०-११४-३
लक्ष्मीधरः सुपर्णशब्दोपलक्षितत्वात् ।

**सुप्रभातम्—** प्राभातिकमङ्गलगानम् ।
ब्रह्मासुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रः शनिराहुकेतवः कुर्वन्तु सर्वे मम सुप्रभातम् ।
इत्यादि वामनपुराणे-१४-२१

**सुब्रह्मण्यम्—** शोभनं ब्रह्मवर्चसम् इति सायणः
ऋ, सं १०-६२-४

**सुब्रह्मण्या—** ज्योतिष्टोमे इन्द्राह्वानाय प्रयुक्ता ऋक्

जन्मज्येष्ठेन च ह्वानं सुब्रह्मण्यास्वपि स्मृतम् ।
यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता ॥

मनुः-९-१२६

सुब्रह्मण्य नाम मन्त्रविशेषो ज्योतिष्टोमे छन्दोगैर्गीयते । इन्द्र आगच्छ इत्यादि इति व्यवहारकल्पतरौ ॥ ६६०

**सुभद्रा—** (१) सारिका (लताविशेषः) इति शान्तिमयूखे (२) श्रीकृष्णभगिनी ।

देवक्या जठरे देवः संजातो दैत्यदर्पहा ।
तथान्या रोहिणी नाम भार्य्यातस्य च या भवत् ॥ ५
तस्यां जज्ञे हली नाम बलभद्रः प्रतापवान् ।
तृतीया सुप्रभा नाम वसुदेवप्रिया च या ॥ ६
तस्यां सा माधवी जज्ञे अश्ववक्त्रस्वरूपधृक् ।
तां दृष्ट्वा विकृताकारां सुतां जातां च सुप्रभा ॥
वासुदेव समायुक्ता विषादं परमं गता ॥ ७
अथ ते यादवाः सर्वे कृतशान्तिकपौष्टिकाः ।
स्वस्ति स्वस्तीति संत्रस्ताः प्रोचुर्भूयात् कुलोऽत्रनः ॥ ८
एवं सा यौवनोपेता तथा दुःखसमन्विता ।
न कश्चिद् वरयामास वाजिवक्त्रां विलोक्यताम् ॥ ९
ततश्च भगवान् विष्णुर्ज्ञात्वा तां भगिनीं तथा ।
मातरं पितरं चैव तथा दुःखसमन्वितौ ॥ १०
तामादाय गतस्तूर्णं बलदेवसमन्वितः ।
हाटकेश्वरजे क्षेत्रे तपस्तप्तुं ततः परम् ॥
ब्राह्मणं तोषयामास सम्यग् यज्ञपरायणः ।
व्रतैश्च विविधैर्दानैर्ब्राह्मणानां च तर्पणैः ॥ १२
ततस्तुष्टिं गतो ब्रह्मा वर्षान्ते तस्य शार्ङ्गिणः ।
उवाच वरदोऽस्मीति प्रार्थयस्वाभिवाञ्छितम् ॥ १३

विष्णु उवाच—

एषा मे भगिनी देव जाताश्ववदना किल ।
तवप्रसादाद् सद्भक्ता भूयादेतन्ममेप्सितम् ॥ १४

श्रीब्रह्मोवाच—

एषा शुभतता साध्वी मत् प्रासादाद् भविष्यति ।
सुभद्रा नाम विख्याता वीरसूः पतिवल्लभा ॥ १५
एतद्रूपां पुमान् योत्र पूजयिष्यति भक्तितः ।
एतां विष्णो त्वया सार्द्धं तथानेन च सीरिणा । १६

स्कन्द-नागर ८४-१६

**सुभिक्षः—** सुहितः ॥ सुभिक्षः सुहित इति हरदत्तः । न सुभिक्षाः स्युः ॥ आपस्त १-६-१८-५

**सुमना—**जाती इति पूतामप्रकाशे ।

सुमनाः सुवर्णजातिः इति आचारमयुखे ॥ ८६
जाती शताह्वा सुमनाः कुन्दंचाम्बुपटं तथा ॥ इति विष्णुदेयपुष्पेषु निर्दिष्टा वामनपुराणे ।

**सुमेकः—** संवत्सरः इति नियतकाल काण्डे लक्ष्मीधर ॥ ४०६

महिषच्छागमेषाणां रुधिरेण तथा नृप ।
सुमेकमेकं वरदा तृप्ता भवति चण्डिका ।।
इति तत्र भविष्यपुराणे ।।

**यन्त्रितः—** शास्त्रनिगृहीता ।
सावित्रीमात्रसारोऽपि सर्वाशी सर्वविक्रयी ।।

मनुः २-११८

**रभिमती—** दधिक्राव्णोरित्यादिः ऋक् तत्रसुरभि-
शब्दश्रवणात् ।

**रभिमदिष्टिः—** गोमरणनिवृत्त्यर्थं पुरुषमरणनिवृत्त्यर्थं
भयनिवृत्त्यर्थं पूतिगन्धनिवृत्त्यर्थं च पृथगिष्टिसंकल्पः
अग्नये सुरभिमते अष्टाकपालः ।।

**रसम्** } तुलसी ।
**सुरसा** } भूस्तृणं सुरसं शिग्रमित्यादिवचनात् ।
हेमाद्रिमाधवयोर्मते निर्गुण्डी इति नन्दपण्डितः ।।

विष्णुः ७९-१७

**रा—** मद्यविशेषः ।
गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।
यथैवेका यथा सर्वा न पातव्या द्विजोत्तमैः ।।

मनुः ११-९४

गौडी माध्वी तथा पैष्टी निर्यास्या कथितापरा ।
एवं चतुर्विधा ज्ञेयाः सुराख्यासां प्रभेदकाः ।
भेदेन द्वादश प्रोक्ताः सुराः सौवीरकारसैः ।
सीधुगौडी च मत्स्यण्डी गुडेन प्रणवास्त्रयः ।
माध्वीकं मधुकंमाध्वी मधुना संयुतास्त्रयः ।
पैष्टी आरिष्टं जातं च तण्डुलप्रभवास्त्रयः ।।
मृद्विकारससम्भूता ताड़माडरसोद्भवा ।।
निर्यास्या सा तु विज्ञेया ।। इति वैजयन्त्यां हारीतः ।।
विष्णुः २२-८२

**सुरागर्भः—** सुरापस्त्रीगर्भसम्भूता कृत प्रायश्चित्तेन
सुरापेण जनित इति हेमाद्रिः ।। परि ४६३

**सुरुङ्गः—** तिर्य्यग् भूखातमार्गः । सुड़ङ्ग इतिभाषायाम् ।।

कौट १-२०

**सुवर्चला—** सूर्यभक्ता, सूर्यावर्त्ता इति गौड़ा इति दिव्य-
सिंह प्रयोगः सुनिषण्णशब्दे द्रष्टव्यः । सैव ब्रह्मसुवर्चला
इत्युच्यते । सुवर्चला लक्षणं वैजयन्त्याम्-
शिग्रुपत्रसमं पत्रं मूलं विद्रुमसांनिभम् ।
पुष्पं तु श्यामलं प्रोक्तं भवत्येषा सुवर्चला ।।
इति अर्कभक्ताभिध ओषधि इति तत्र नन्दपण्डितः ।।
विष्णुः ४६-२३

**सुवर्णम्—** हिरण्यम् ।

सुवर्णः—(१) सुवर्णजात्युपहितपरिमाणविशेषः ।

जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।
प्रथमं तत् प्रमाणानां त्रसरेणुं प्रचक्षते ।। १३२
त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ।
ता राजसर्षपस्तिस्रस्ते त्रयी गौरसर्षपः ।। १३३
सर्षपाः षट् यवोमध्यस्त्रियवं त्वेककृष्णलम् ।
पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोड़श ।।

मनुः ८-१३४

दशार्द्धगुञ्जं प्रवदन्ति माषं माषाह्वयैः
षोड़शभिश्च कर्षम् ।
कर्षैश्चतुर्भिश्च पलं तुलाज्ञाः कर्षं सुवर्णस्य
सुवर्णसंज्ञम् ।।

इति लीलावत्याम् ।

(२) ब्राह्मणात् क्षत्रियायां जातः सुवर्णः । सवर्ण इति तस्य संज्ञाभेदः पाठभेदो वा ।।

विधिनां ब्राह्मणः प्राप्य नृपायां तु समन्त्रकम् । २३
जातः सवर्ण इत्युक्तः सानुलोमद्विजः स्मृतः ।
अथ वर्णक्रियां कुर्वन् नित्यनैमित्तिकीं क्रियाम् ।। २४
अश्वं रथं हस्तिनं च वाहयेद्वा नृपाज्ञया ।।
सैनापत्यं च भैषज्यं कुर्याज्जीवेत्तु वृत्तिषु ।। २५

इति धर्मशास्त्रसंग्रहे औशनसस्मृतिः ।

सुवासिनी— ऊढा दुहिता इति लक्ष्मीधरः :

सुवासिन्यो नवोढ़ाः स्त्रियः स्नुषा दुहितरस्पेति ।
सुवासिनी कुमारीश्च रोगिणो गर्भिणीः स्त्रियः ।
अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन् ।।

३-११४

सुश्रुतम्— पायसभोजने तृप्तिप्रश्न ।

सुश्रुतं पायसे ब्रूयाद् यवाग्वां कृसरे तथा इति सम्पन्नशब्दे द्रष्टव्यम् ।

सुषिरः— अवकाशः । फाङ्का इति भाषायाम् ।

सुषिरस्तम्बप्रवेशोपसारं वा ।। कोट १-२०

सुषेकम्— जलसेचनभाग्ययुक्तं क्षेत्रम् ।

गर्त्तानूपं सुसेकं च समन्तात् क्षेत्रसंयुतम् ।
प्रकृष्टं च कृतं काले वानयन् फलमश्नुते ।।

कल्पतरौ बृहस्पतिः ।।

सुहितः— भोजनेन तृप्तः ।

सूक्तम्— सम्पूर्णमृषिवाक्यम् पुरुषसूक्तादिकम् ।

सम्पूर्णमृषिवाक्यं तु सूक्तमित्यभिधीयते ।।

बृहद्देवता १-१३

सूक्तवाकः— अध्वर्युप्रेषितो होता यं मन्त्रं पठति ।

स सूक्तवाक इत्युच्यते ।

**सूचक**— (१) पिशुनः कर्णेजप इति मेधातिथिः ।

(२) राज्ञा दोषदर्शनाय नियुक्तः ।

नृपेणैव नियुक्तो यः परदोषमवेक्षितुम् ।

नृपस्य सूचयेत् ज्ञात्वा सूचकः स उदाहृतः ॥

(३) वैश्यात् शूद्रायां जातः ।

शूद्रायां वैश्यसंसर्गाद्विधिना सूचकः स्मृतः

औशनसस्मृतिः ४२

**सूचिकः**— पाचकः जातिविशेषः ।

वैदेहिकात्तु विप्राणां जातश्चर्मोपजीविनः ।

नृपायमेव तस्यैव सूचिकः पाचकः स्मृतः ॥

औशनसस्मृतिः २२

**सूची**— (१) असाक्षिविशेषः ।

अनिर्दिष्टस्तु साक्षित्वे स्वयमेवैत्य यो वदेत् ।

सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति ॥

नारद सं २-१४०

(२) युद्धव्यूहविशेषः ।

दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा ॥

वराहमकराभ्यां वा सूच्या वा सकरेण वा ॥

मनुः ७-१८७

(३) लोहकण्टकविशेषः ।

विश्वकर्मन्नुहविषा सूचीं लौहीं दशाङ्गुलाम् ।

कन्याया निखनेद् द्वारि सान्वस्मैन प्रदीयते ॥

अग्नि पु-२६०-२१

**सूतः**— (१) क्षत्रियात् ब्राह्मण्यां जातः जातिविशेषः ।

राजन्येन ब्राह्मण्यामुत्पन्नः सूतो भवतीत्याहुः इति

वसिष्ठः १८-६

(२) पुराणवक्ता सूतः ।

वैण्यस्य हि पृथोर्यज्ञे वर्तमाने महात्मनः ।

सुत्यायामभवत् सूतः प्रथमं वर्णवैकृतः ॥ २८

ऐन्द्रेण हविषा तत्र हविः पृक्तं बृहस्पतेः ।

जुहावेन्द्राय देवाय ततः सूतो व्यजायत ॥ २९

प्रमादात्तत्र सञ्जज्ञे प्रायश्चित्तं च कर्मसु ।

शिष्यहस्तेन यत् पृक्त मभिभूतं गुरोर्हविः ।

अधरोत्तरचारेण जज्ञे तद्वर्णवैकृतः ॥

इति वायुपु १-३०

**सूतकम्**—जननाशौचम् ।

लक्षणया अशोचसामान्यमपि ।

व्याधितस्य कदर्यस्य प्राणग्रस्तस्य सर्वदा ।

स्त्रीजितस्य च मूर्खस्य मरणान्तं हि सूतक ॥

नित्याचारप्रदीपे-५२७

**सूतिका**— या स्त्री प्रसूते ।

**सूदः**— अन्नकारः इति श्रीमूला १-१२

अन्नपानविशेषज्ञः मांसपाक विशारदाः । ११७

शाकपाककलादक्षाः पक्वान्नकरणे बुधाः ॥
पानव्यजन तत्वज्ञाः खण्डपाकस्य वेदिनः । १३=
क्षीरप्रकार वोद्धारः सूदाः कार्य्या महीभुजा ॥
अभिलषितार्थचिन्तामणि । १-२-१३६

**सूना** — सूना प्राणिवधस्थानमिति कुल्लूकः मनु ४-८४
सूना प्राणिहिंसा इति विज्ञानेश्वरः १-१४१
सुना नाम कष्टमयः पात्रविशेषः इति गोभिलभाष्ये ।
४-३-२२
स च पशुमारणे व्यवह्रियते ॥

**सूनिकः** — जातिविशेषः ।
आयोगवेन विप्रायां जातस्ताम्रोपजीवनः ।
तस्यैव नृपकन्यायां जात सूनिक उच्यते ॥
औशनसस्मृतिः १४

**सूनृतम्** — प्रियहितवचनम्, प्रियसत्यवचनं वा ।

**सूनृता** — सूनृता प्रिया सत्या वाक् इति महीधरः ॥
शुक्ल यजुः १८-६
तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ॥
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥
मनु ३-१०

**सूपः** — डालि इति प्रसिद्धः पाकविशेषः ।
डाली तु सलिले सिद्धा लवणार्द्रकहिङ्गुभिः ।
संयुक्ता सूपनाम्नी स्यात् ॥ इति भावप्रकाशे इति
द्विदलमाषमांसादिपक्वाः सूपाभिधायका इति राजानि
घण्टौ इति वैद्यकशब्दसिन्धौ ।
गुणांश्च सूपशाकाद्यान् पयोदधिघृतं मधु ।
विन्यसेत् प्रयतः पूर्वं भूमावेव समाहितः ॥
मनुः ३-२२६
दद्यादेवादितः सर्वं सूपमन्ने च पैतृके ॥
इति लघ्वाश्वलायनः २३-५१

**सूयमाना** — कृष्णचतुर्थी इति कालमाधवे । २

**सूयिका** — सूयिका प्रसवकारिणी इति मित्रमिश्रः ।
चण्डालं पतितं व्यङ्गमुन्मत्तं शवमन्त्यजम् ।
सूतिकां सूयिकां नारीं रजसा च परिप्लुताम् ।
श्वकुक्कुटवराहांश्च ग्राम्यं न संस्पृश्य मानवः ।
सचैलं सशिरः स्नात्वा तदानीमेव शुद्ध्यति ॥
इति अह्निकप्रकाशे वृद्धशातातपः । पृ १०५
साविका इत्यस्य पाठभेदः संज्ञाभेदो वा,
सत्रिकाशब्दो द्रष्टव्यः ।

**सूरणः** — पिण्डाकारकन्दविशेषः उत्कलेषु ओलुअ इति
प्रसिद्धः ।

**सूर्मिः—** स्त्रोप्रतिकृतिः ।

सूर्मिं ज्वलन्तीं वा श्लिष्येत् ॥ इति बौधायनः

१-१-१-१३

**सूर्मी—**लोहमयो स्त्रोप्रतिकृतिः ।

गुरुतल्प्यभिभाष्यैनस्तप्ते स्वप्यादयोमये ।

सूर्मीं ज्वलन्तीं स्वाश्लिष्येन्मृत्युना स विशुद्ध्यति ॥

मनु ११-१०३

**सूर्यगङ्गा—** सूर्यमन्दिरसमीपस्थो जलाशयः ।

भास्करायतनाभ्यासे यत्तोयं पूर्वतः स्थितम् ।

सूर्यगङ्गेति विज्ञेयं तत्र स्नात्वा दिवं व्रजेत् ॥

इत्याचारसारे भविष्यवचनम् ।

नित्याचारप्रदीपे च १-२६८

**सूर्यषष्ठी** — भाद्रशुक्लषष्ठी इति निर्णयसिन्धौ ।

**सूर्याभिनिर्मुक्तः—** सूर्यास्तमने आश्रमाद् बहिर्वर्त्तमानो ब्रह्मचारी वसिष्ठः १-१८

**सूर्याभ्युदितः—** सूर्योदयकाले अत्यक्तनिद्रो ब्रह्मचारी ।

वसिष्ठः-१-१८

**सूर्योढः—** अस्तमिते सूर्ये गृहमागतोऽतिथिः ।

सूर्येण अस्तंगच्छतीढः प्रापितः रात्रौ स्वगृहगमनाशक्तेः

इति ॥

अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना ।

काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत् ॥

मनुः ३-१०५

**सृक्क—** ओष्ठप्रान्त भागः ।

सृक्कणीपरिलेढि च ॥

सृक्किणी ओष्ठसन्धिरिति विश्वरूपः ।

ओष्ठपर्यन्ताविति विज्ञानेश्वरः ।

गल्लयोरन्तर्भागाविति अपरार्कः ।

**सृणि—** अङ्कुशः ।

**सृमराः—** (१) गणचारिण्यः क्षुद्रमक्षिकाः । कल्पतरौ

गार्हस्थ्य । ६१५

(२) पशुविशेषः ॥ सृमरः शरभ इति श्रीमूला २-१७

तथा मत्ताश्च मातङ्गान् महिषान् गवयान् वृषान् ।

चमरान् सृमरांश्चैव तथा गोरखरानपि ॥

इतिमत्स्यपुराणे ११७-५७

**सृमुकम्—** जलप्रभवखादिरशाकमिति लक्ष्मीधरः ।

श्राद्धः ५१

सृमुको बीजपूर इति दिव्यसिंहमहापात्रः ।

**सृष्टः—** उत्साही इति लक्ष्मधरः श्राद्धकाण्डे । १७६

प्रयतः प्रसन्नमनाः सृष्टः भोजयेद् ब्राह्मणान् ॥

आपस्त २-१७-४

**सृष्टिः**— (१) उत्पादनम्, निर्माणम् ।

(२) अकार्पण्येन धनोत्सर्गः ।

अपराह्णस्तथा दर्भा वास्तुसम्पादनं तिलाः ।

सृष्टिमृ ष्टिर्द्विजाश्चाग्र्याः श्राद्धकर्मसुसम्पदः ॥

मनुः ३-२५-५

**सेगवः**— शिशुः ।

गृहस्तेहावबद्धानां नराणामल्पमेधसाम् ।

कुक्षी खादति मांसानि माधमां सेगवा इव ॥

महाभा शान्ति, आपस्त, १३६-८६

**सेतिका**— सेर इति प्रसिद्धा सेरिकाशब्दो द्रष्टव्यः ।

सेतिकाकुडव इति कल्पकल्पतरौ दानकाण्डे-१४७

**सेतुः**— (१) जलप्रवाहनिरोधान्यतरप्रवर्त्तकः मृत्तिका-पाषाणादिकृत उन्नतदीर्घकृत्रिमभूमिविशेषः ।

तत्र प्रवाहनिरोधकः सेतुः बन्ध्यः ।

प्रवाहप्रवर्त्तकः सेतुः खेयः ॥

(२) मर्यादा ।

दुष्येयुः सर्ववर्णाश्च भिद्येरन् सर्वसेतवः ।

सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ॥

मनुः ७-२४

सर्वसेतवः ग्रामश्रेणी धर्ममर्य्यादा इति मित्रमिश्रः ॥

राजनीतिप्रकाशः-२८

कर्णकीलायससम्बन्धोऽनुगृहं सेतुः यथासेतुभोगं वेश्म कारयेत् ॥ कौट-३-८

**सेधा**— सललवतीति लक्ष्मीधरः ।

सेधा श्वावित् इति विज्ञानेश्वरः १-१७७

सेधा श्वावित् मध्यदेशभाषया साहीति प्रसिद्धा इति लक्षणप्रकशे मित्रमिश्रः ॥

**सेनानायकः**— बलाध्यक्षः ।

तस्य स्वरूपं बलाध्यक्षशब्दे द्रष्टव्यम् ।

**सेनानी**— सेनापतिः ।

ततः स्वैरविहारी स्यान्मन्त्रिभिर्वा समागतः ।

बलानां दर्शनं कृत्वा सेनान्या सह चिन्तयेत् ॥

याज्ञ १-३२६

**सेनापतिः**— पत्तिकदशकस्य पतिः ।

बलाध्यक्षशब्दो द्रष्टव्यः ।

सेनापतिबलाध्यक्षौ सर्वदिक्षु निवेशयेत् ॥

यतश्च भयमाशङ्केत् प्राचीं तां कल्पयेद्दिशम् ॥

मनुः ७-१८६

**सेनामुखम्**— सैन्यपुञ्जविशेषः ।

एको रथो गजश्चैको नराः पञ्च पदातयः ।

त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ।

पत्तिं तु त्रिगुणामेतां प्राहुः सेनामुखं बुधाः ।

महाभा, आदि-२-१६

रथा दशदशेभाश्च त्रिशदश्वाः क्रमेण च ।

पदातयश्च पञ्चाशत् सेनामुखमितीरितम् ॥

वीरसर्वस्वम्-२८५

**सेरिका**— कुड़वः ।

सेरिका कुड़व इति दण्ड विवेके भारद्वाजः १७१६

सेरिका कुड़व स च द्वादशप्रसृतिमितः इति

कल्पतरुः

द्वादशप्रसृतिभि: सेरिका तच्चतुष्टयं प्रस्थ इति

समयप्रकाशरत्नाकरस्मृतिसागरेषु ।

चतुर्भिः सेरिकास्थाने सेतिकेति विश्वरूपधृतपाठः ।

मानानि सेतिकाप्रस्थप्रभृतीनि ॥

**सेवा**— (१) परवृत्तानुवर्त्तित्वमिति मेधातिथिः ॥

मनुः १०-११६

वेतनग्रहणेनाज्ञाकरणमिति विज्ञानेश्वरः

याज्ञ १-१००

सेवा परचित्तानुवर्त्तनम् इति स्मृतिचन्द्रिका-४७५

(२) भोगः ।

तस्मात् स्त्रियः सेव्याः कर्त्तव्याश्च सुरक्षिताः ॥

याज्ञ १-७८

अत्र सेव्या उपभोग्या इति विज्ञानेश्वरः ॥

**सेवाषण्डः**— उपचारविशेषेण यस्य पुंस्त्वोत्पत्ति. स

सेवाषण्ड़ इति वीरमित्रोदये संस्कारः ७५८

स्त्रिया बहुप्रकारं सेव्यमानो जातरिरंसः इत्यपरार्क-

१-५५

**सेव्यः**— सेवाषण्ड़ः ।

**सैध्रकम्**— दृढदारुतिर्मितम् ।

सैध्रक मुसलमादाय इति बौधायनः ।

**सैपुरिका**— } सेपुरे भवा सैपुरिका सैपुरिकी ।

**सैपुरिकी** — } सपुरीपणस इति नाम्नाख्यातस्य सर्वाङ्ग-

चक्षुर्युक्तस्य तृणप्रायवृक्षविशेषफलस्य एवन्नाम

भवितुमर्हति इति सम्भाव्यते ।

**सैरम्**— मद्यविशेष: ।

माधूकमैक्षवं सैरमित्यादि मिताक्षरायाम् ।

**सैरिन्ध्रः**— दस्युना आयोगव्यां जातः ।

प्रसाधनोपचारज्ञमदासं दासजीवनम् ।

सैरिन्ध्रं वागुरावृत्ति सूते दस्युरयोगवे ॥

**सैरी**— सीरवाहयोक्त्ररज्जुः ।

सैरीतामली वेत्येके इति ।

वैश्यमेखलाप्रस्तावे आपस्तम्बः १-१-२-३७

**सोपपदातिथयः**— तिथिविशेषाः ।

सिता ज्येष्ठे द्वितीया तु आश्विने दशमी सिता ।
चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृता ॥
इति हेमाद्रौ परिशिष्टखण्डे ।

अष्टकासु च सर्वासु युगमन्वन्तरादिषु ।
अनध्यायं प्रकुर्वीत तथा सोपपदास्वपि ॥
इति ज्योतिर्निर्बन्धे

वेदव्रतोपनयने स्वाध्यायाध्ययने तथा ।
न दोषो यजुषां सोपपदास्वध्ययनेऽपि च ॥
इति गदाधरभाष्ये चण्डेश्वरः पारस्करः २-२-५

**सोपाकः**— चण्डालेन पुक्कस्यां जातः ।

**सोभाञ्जनः** — शिग्रुः सजना इति ख्यातः वृक्षः ।

**सोमः**— (१) सोमलता । सा च लताविशेषः यथा—

(२) ब्रह्मादयोऽसृजन् पूर्वममृतं सोमसंज्ञितम् ।
जरामृत्युविनाशाय विधानं तस्य वक्ष्यते ॥ १

एक एव खलु भगवान् सोमः स्थाननामाकृति वीर्य-
विशेषैः चतुर्विंशतिधा भिद्यते ।

तद्यथा—

अंशुमान् मुञ्जवांश्चैव चन्द्रमा रजतप्रभः ।
दूर्वासोमः कनीयांश्च श्वेताक्षः कनकप्रभः ॥ २

प्रतानवांस्तालवृन्तः करवीरोंशवानपि ।
स्वयं प्रभोमहासोमो यश्चापि गरुडाहृतः ॥ ३

गायत्र्यस्त्रैष्टुभः पांक्तो जागतः शांकरस्तथा ।
आग्निष्टोमोरैवतश्च यथोक्त इति संज्ञितः ॥ ४

गायत्र्यात्रिपदायुक्तो यश्चोडुपतिरुच्यते ।
एते सोमाः समाख्याता वेदोक्तैर्नामभिः शुभैः ॥ ५

सर्वेषामपि चैतेषामेकोविधिरुपासने ।
सर्वतुल्यगुणाश्चेव विधानं तेषु वक्ष्यते ॥ ६

× × ×

सर्वेषामेव सोमानां पत्राणि दश पञ्च च ।
तानि शुक्ले च कृष्णे च जायन्ते निपतन्ति च ॥

एकैकं जायते पत्रं सोमस्याहरहस्तथा ।
शुक्लस्य पौर्णमास्यां तु भवेत् पञ्चदशच्छदः ॥ १५

शीर्यते पत्रमेकैकं दिवसे दिवसे पुनः ।
कृष्णपक्षक्षयेऽत्रापि लता भवति केवला ॥

अंशुमानाज्यगन्धस्तु कन्दवान् रजतप्रभः ।
कदल्याकारकन्दस्तु मुञ्जावांल्लशुनच्छदः ॥ १७

चन्द्रमाः कनकाभासो जले चरति सर्वदा ।
गरुडाहृतनामा च श्वेताक्षश्चापि पाण्डुरौ ॥

सर्पनिर्मोकसदृशौ तौ वृक्षाग्र.वलम्बिनौ ।

तथान्यैर्मण्डलैश्चित्रैश्चित्रिता इव भान्ति ते ।
सर्वे एव तु विज्ञेयाः सोमाः पञ्चदशच्छदाः ।
क्षीरकन्दलतावन्तः पत्रैर्नानाविधैस्मृताः ॥ २०
हिमवत्यर्वुदे सह्ये महेन्द्रे मलये तथा ।
श्रीपर्वते देवगिरौ गिरौ देवसहे तथा ॥ २१
पारियात्रे च विन्ध्ये च देवसुन्दे ह्रदे तथा ॥
उत्तरेण वितस्तायाः प्रवृद्धाये महीधराः ।
पञ्च तेषामधो मध्ये सिन्धुनामा महानदः ।
हठवत् प्लावते तत्र चन्द्रमाः सोमदत्तमः ॥ २३
तस्योद्देशेषु वाप्यस्ति मुञ्जवानं शुमानपि ।
काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम् ॥ २४
गायत्रस्त्रैष्टुभः पांक्तः जागतः शाक्करस्तथा ।
अत्रसन्त्य परे चापि सोमाः सोमसमप्रभाः ।
न तान् पश्यन्त्यधर्मिष्ठाः कृतघ्नाश्चापि मानवाः ।
भेषजद्वेषिणश्चापि ब्राह्मणद्वेषिणस्तथा ॥ २६

× × ×

उषधीनां पतिं सोममुपजुष्य विचक्षणः ।
दशवर्षसहस्राणि नवां धारयते तनुम् ॥ ८
नाग्निर्न तोयं न विषं न शस्त्रं नास्त्रमेव च ।
तस्यात्रमायुः क्षेपणे समर्थाश्च भवन्ति हि ॥ ९

भद्राणां षष्टिवर्षाणां प्रसूतानामनेकधा ।
कुञ्जराणां सहस्रस्य वलं समधिगच्छति ॥
क्षीरोदं शक्रसदनमुत्तरांश्च कुरूनपि ।
यत्रेच्छति स गन्तुं वा तत्राप्रतिहतागतिः ॥
कन्दर्प इव रूपेण कान्त्या चन्द्र इवापरः ।
प्रह्लादयति भूतानां मनांसि स महाद्युतिः ॥ १२
साङ्गोपाङ्गश्च निखिलान् वेदान् विन्दति तत्त्वतः ।
चरणमोघसंकल्पो देववच्चाखिलं जगत् ॥ १३

कुलोचितधर्मशिक्षा-२३३

सोमशब्दः क्षीरिण्यां लतायां प्रसिद्धः ।
श्यामलाम्लाननिष्पत्रा क्षीरिणी त्वचि मांसला ।
शलेष्मलावमनी वल्ली सोमाख्या छागभोजनम् ॥

इति अन्यत्र

(२) सूर्यरश्मिविशेषः ।
क्षीणं पीतं सुरैः सोममाप्याययति नित्यदा ।
एकेन रश्मिना विप्राः सुषुम्णाख्येन भास्करः ॥

कूर्मपु, १-४३ अध्याये

**सोमग्रहः**— चन्द्रग्रहणम् पराशरः-१२ २६
सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ।
सोमग्रहे तथैवोक्तं स्नानदानादिकर्मसु ॥ इति

**सोमतीर्थम्**— सोमतीर्थं पाणिमध्यमिति हरिहरभाष्ये ।
धनायुदाररेखासु सोमतीर्थं तु मध्यगम् ।

लाजादिहवनं तेन कर्त्तव्यं वपनं तथा ॥

इति ब्रह्मपुराणे

परिभाषाप्रकाशे-७७

नित्याचारप्रदीपे-१-६५

**सोमपाः**— ब्राह्मणानां पितरः।

सोमपा नाम विप्राणाम् ॥ मनुः ३-१९७

संपूर्णः श्लोकः सुकालिन इति शब्दे द्रष्टव्यः।

**सोममार्गः**— आकाशः इति नित्याचारप्रदीपे-१-३३६

जातवेदाः सुवर्णं च सोममार्गस्तथैव च।

ब्राह्मणानुमते चैव स्पृष्ट्वा त्वाचम्य शुद्ध्यति।

कल्पतरौ शुद्धिकाण्डे अयमेव पाठः-१३१

अग्निस्वर्णकाशानामेकं स्पृष्ट्वा इत्याचारसारे पाठे।

तत्र आकारलोपः प्रामादिक इति मन्ये।

आकाशस्यैव सोममार्गत्वदर्शनात्।

आकाशस्य स्पृश्यत्वाभावाच्च ॥

**सोमलता**— सोमशब्दः क्षीरिण्यां लतायां प्रसिद्ध इति।

श्यामलाऽम्ला च निष्पत्रा क्षीरिणी त्वचि मांसला।

श्लेष्मला वमनी वल्ली सोमाख्या छागभोजनम् ॥

**सोमसदः**— साध्यानां पितरः मनुः ३-१९५

**सोमसूत्रम्**— शिवलिङ्गसमीपात् जलनिर्गमप्रणाली।

सोमसूत्रम् उत्तरदिक् इति पूजाप्रकाशे मित्रमिश्रः।

शम्भोः प्रदक्षिणं कुर्वन् सोमसूत्रं न लङ्घयेत्।

प्रासादविस्तारसमानसूत्रं सोमस्य सूत्र दिशि

सोमसूत्रम्।

सूत्राद् बहिर्लङ्घनतो न दोषः स्याद्दोष आभ्यन्तर

लङ्घनेन ॥ इत्यादि बृ, नारदीये।

**सोमांशुः**— सोमलताखण्डम् इति हरिहरः पारस्करः

१-१४-३

**सोमायनम्**— व्रतविशेषः।

सोमायनाख्यं मासव्रतं मार्कण्डेयेनोक्तम्।

गोक्षीरं सप्तरात्रं तु पिबेत् स्तनचतुष्टयात्।

स्तनत्रयात् सप्तरात्रं सप्तरात्रं स्तनद्वयात् ॥

स्तनेनैकेन षड्रात्रं त्रिरात्रं वायुभुग् भवत्।

एतत्सोमायनं नाम व्रतं कल्मषनाशनम्।

अस्य कल्पभेदा मिताक्षरायां द्रष्टव्याः ॥

मिता ३-३१४

**सोमारौद्रम्**— सोमारुद्रं सोमारुद्रा धारयेथामसूर्यम् इति

चतस्र ऋच इति कुल्लूकः।

सोमारौद्रं तु बह्वेना मासमभ्यस्य शुद्ध्यति ॥

मनुः ११-२५५

ऋचां सम्पूर्णः पाठः—

बार्हस्पत्यो भरद्वाज ऋषिः सोमारुद्रौ त्रिष्टुप्।

सामारुद्रा धारयेथामसुर्यं प्रवमिष्टयोऽरमश्नुवन्तु ।
दमे दमे सप्त रत्ना दधानां शंनो भूतं द्विपदे शं
चतुष्पदे ॥ १

सोमारुद्रा वि बृहतं विषूची ममीवा यानो
गयमाविवेश ।
आरे बाधेथां निर्ऋतिं पराचैरस्मे भद्रा सौश्रव-
सानि सन्तु ॥ २

सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि
धत्तम् अव स्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो
अस्मत्तिग्मायु धौतिग्महेती सुशेवो सोमारुद्रा विह
सु मृलतं नः प्रनो मुञ्चतं वरुणस्यपाशाबद् गोपायतं
नः सुमनस्यमाना ॥ ४ इति

**सोमावरार्ध्यम्**— अशक्तौ सोमयागमात्रम् ।
अवरार्ध्यशब्दः अवधाची ।

**सोष्यन्ती**— आसन्नप्रसवा स्त्री (प्रसवशूलवती)

**सोष्यन्तीकर्म** — सुखप्रसवार्थककर्म ।

**सौत्रिकः**— } सूचीशिल्पोपजीवीत हेमाद्रिः ।
**सौचीकः**— } गान्धर्वो लोहकारश्च सौचीकस्तन्तुवायकः ॥
इति यमः
तन्त्रवायस्तु सौचिक इत्यमरः-२-१०-६

**सौत्रामणी**— यागविशेषः ।
ऋद्धिकामस्याग्निचितः सुखेतरच्छिद्रसोमवामिनो
मुखेन सोमवामिनो राज्यच्युतनृपस्य पशुकामस्य
च सौत्रामणीयाग इति महीधरः । शुक्लयजुः १६-१

**सौदायिकम्**— सुदायसम्बन्धिभ्यो लब्धं धनम् ।
ऊढ़या कन्यया वापि पत्युः पितृगृहेऽपि वा ।
भ्रातुः सकाशात् पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥
कत्यायनः-९०१
पितृ-पितृव्यादिभ्यः सुदायसम्बन्धिभ्यः प्रसादादिना
लब्धं सौदायिकमिति दायभागे ।

**सौनम्**— सूना, पशुमारणस्थानम्, सूनासम्भवं मांसं
सौनम् । याज्ञ १-१७५

**सौमिक्युत्तरवेदिः**— यूपावटीयाच्छंकोरनुस्पंद्य द्वादश
प्रत्यञ्चिक्षुद्रपदानि प्रक्रम्य मध्यमः औत्तरवेदिकः शंकुः
तस्मात् पञ्च दक्षिणा पञ्चोदञ्चि क्षुद्रपदानि
प्रक्रम्य शङ्कु निहन्ति तौ उत्तरवेद्याः श्रोणिस्थानम् ।
पूगावटीयात् प्रत्यगर्द्धं प्रक्रम्य चत्वार्युदञ्चि प्रक्रम्य
तावंसो अक्ष्णया प्रमायस्पन्द्यया परितनोति
इयं सौमिक्युत्तरवेदिरुच्यते ॥

**सौम्यम्**— मृगशिरोनक्षत्रम् । हेमाद्रिश्राद्ध-२६७

**सौम्यकृच्छ्र**,— पिण्याकदधिसक्थूनां प्रतिवासरम् ।

एकैकमुपवासः स्यात् सौम्यकृच्छ्रः प्रकीर्त्तितः ॥

अत्रिस्मृतिः-१२८

पिण्याकशाक तक्राम्बु सक्तूनां प्रतित्र्यहम्।

एकरात्रोपवासश्च कृच्छ्रः सौम्यः प्रकीर्त्तितः ॥

इति देवलः-८७

**सौम्यता**— सर्वजनहृद्यचारित्रत्वम् हेमाद्रिःरि-३६३

सौम्यता शीलविशेषः शीलशब्दे द्रष्टव्या ॥

**सौम्या-दिक्**— उत्तरा।

यत्र दिङ्नियमो नास्ति जपयज्ञादिकर्मसु।

तिस्रस्तत्र दिशः प्रोक्ताः ऐन्द्री सौम्याऽपराजिता।

इति परिभाषाप्रकाशे कात्यायनः।

**सौम्यायनम्**— उत्तरायणम्।

सोमं च पशुबन्धं च सर्वाश्च विकृतीरपि।

सौम्यायने यथाकालं विदध्युर्गृहमेधिनः ॥

इति निर्णयसिन्धौ

भानोश्च भौमस्य विहाय वारौ शुक्रादियोगानशुभान् सदापि।

रिक्तातिथींश्चापि मृदुध्रुवर्क्षे सौम्यायने च प्रविशेद् गृहाणि इति तत्रैववृद्धगार्ग्यः।

**सौरमासः**— एकस्मिन् राशौ रवियावत् कालं वर्त्तते। यथा मेषवृषादयः द्वादश।

एकमासं रवियावत् कालमासो न भास्करः ॥ इति

**सौरवर्षः**— मेषादिमीनान्त राशिचक्रे सूर्यस्यावस्थान-कालः।

स च कालः पञ्चषष्ठ्युत्तरतिशतदिनानि ३६५ पञ्चदशदण्डाः १५ सार्द्धैकत्रिंशल्लिप्तिकाः ३१-३० इति तदुक्तं सामन्तचन्द्रशेखरेण सिद्धान्तदर्पणे—

**सौरिः**— शनिग्रहः।

ध्यात्वा सरस्वतीं देवीं गणनाथं विनायकम्।

राजा दशरथः स्तोत्रं सौरेरित्थमथाकरोत् ॥

स्कन्दपु, प्रभा, ४९-३३

**सौरिकम्**— सुराक्रयसम्पाद्यमृणम्।

प्रातिभाव्यं वृथादानमाक्षिकं सौरिकं च यत्।

दण्डशुल्कावशेषं च न पुत्रो दातुमर्हति ॥

मनुः ८-१५९

**सौरिकः**— सुराजीवी।

सुरया जीवन्ति इति सौरिकाः शौण्डिका

इति गोविन्दानन्दः प्रायशित्तविवेकव्याख्याने।

**सौवर्चलम्**— कृष्णलवणम्।

लवणग्रहणेनैव विट्सौवर्चल सैन्धवसामुद्रसोमककृत्रि-माण्यविशेषेण गृह्यन्ते इति विज्ञानेश्वरः। ३-३८

**सौवसंकरः**— वृत्तिसं र इति हेमाद्रिः।

स्त्रौवयौन सौवसंकरेत्यादि तत्र श्राद्धवर्ज्यें हारीतः ।

**सौवीरः**— देशविशेषः।

किरातसौवीरचोलपाण्या उत्तरे दक्षिणे स्थिथाः।

शतात्परं षष्ठिमात्राः इति बार्हस्पत्यार्थशास्त्रे

३-१०४

**सौवीरम्**— त्रैककुदमञ्जनम् (सुरमा)

सेवीराञ्जनं सुरमा इति मध्यदेशे प्रसिद्धमिति

आह्नकप्रकाशे-१४८

सौवीराञ्जनमित्युक्तं पिञ्जलीनां यदञ्जनम्।

कात्यायनः

**सौहित्यम्**— तृप्तिः।

न भुञ्जितोद्धृतस्नेहं नातिसौहित्यमाचरेत्।

नातिप्रगे नातिसायं न सायं प्रातराशितः ॥

मनुः ४-६२

**स्कन्दषष्ठी**— चैत्रकृष्णषष्ठी ।

**स्कन्धः** — (१) वृक्षस्य यतो भागात् शाखा उदयते स स्कन्धः। विवादरत्नाकरः-२८५

(२) कायः।

सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानिचित्।

पक्ष्मणोऽपिनिपातेन येषांस्यात् स्कन्धपर्ययः ॥

महाभा, शा, १५-२६

(३) युद्धम्।

अपि चोद्धर्षणं कार्य्यं भीरूणामपि यत्नतः।

स्कन्धदर्शनमात्रात्तु तिष्ठेयुर्वा समीपतः ॥

महाभा शा १००-४६

**स्कन्धावारः**— सेनानिवासस्थानम्।

उपप्लव्यं स गत्वा तु स्कन्धावारं प्रविश्य च।

पाण्डवानथ तान् सर्वान् शल्पस्तत्र ददर्शहि ॥

महाभा, उद् ७-२५

**स्तनयित्नुः**— गर्जन्मेघः इति हरिहरः।

स्तनयित्नुमभिमन्त्रयते शिवा नो वर्षाः।

सन्तु शिवा नः सन्तु हेतयः ।

शिवा नस्ता सन्तु यास्त्वं सृजसि वृत्रहन् इति ॥

पारस्करः ३-१५-१८

दह्रेऽपररात्रे स्तनयित्नुना आपस्त १-६-२३

**स्तम्भः**— गर्वः इति कल्पतरौ तीर्थकाण्डे-२५

**स्तसा**— शिरा इति मित्रमिश्रः।

अतः परं प्रवक्ष्यामि कर्णयोरपि लक्षणम्।

निर्लोमशौ स्तसाकीर्णौ तनुच्छिद्रौ तनुत्वचौ ॥

इति भद्रगजलक्षणप्रकरणे ।

**स्तेनः**— (१) चौरः ३-१५०

उत्क्षेपकः सन्धिभेत्ता पान्यमुड् ग्रन्थिभेदकः।

स्त्रीपुंगाश्वपशुस्तेयी स्तेनो नवविधः स्मृतः ॥ इति

(२) ये व्यपेताः स्वकर्मभ्यः स्तेनास्ते परिकीर्त्तिताः

यमः स्मृतिचन्द्रिकायाम्-१६८

**स्तेयम्—** चौर्यम्, विवादपदविशेषश्च ।

स्यात् साहसं त्वन्वयवत्प्रसभं कर्म यत् कृतम् ।

निरन्वयं भवेत्स्तेयं हृत्वापव्ययते च यत् ॥

मनुः ८-३३२

**स्तोकः—** (१) अल्पः ।

स्तोकाल्पक्षुल्लकाः श्लक्ष्णं सूक्ष्मं दभ्रं कृशं तनु ॥ ६१

स्त्रियां मात्रा त्रुटी पुंसि लवलेशकणाणवः ॥

अमरः ३-१-६२

(२) नप्ता पुत्रो वा ।

मानस्तोके तनये मान शुक्ल यजुः १६-१६

भाषायां वर्त्तमानः टोकशब्दः अस्यैवापभ्रंशः ।

**स्तोककः—** चातकः ।

**स्तोत्रम्—** प्रगीतगुणनिष्ठगुणाभिधानं स्तोत्रम् ।

**स्तोभः—**सामावयवविशेषः । गीतालापपूरणाक्षरः ।

स्तोभं हेलनभेवेत्यत्र गीतालापपूरकमिति श्रीधरस्वामी

कलापूरणायोच्चारितवर्णविशेष इति संगीतरत्नाकरे ॥

५-२२५

**स्तोभकः—** यः स्वतः परदोषं राजनि निवेदयते ।

शास्त्रेण निन्दितं त्वर्थमुख्यो राज्ञाऽप्रचोदितः

आवेदयति यः पूर्वं स्तोभकः स उदाहृतः ॥

इति कात्यायनः ॥

सूचकः परदोषज्ञापनाय राज्ञा नियुक्तः स्तोभकस्तु

स्वनएव परदोष निवेदयते इत्यनयोर्भेदः ।

**स्तोमः—** (१) गृहभाटकम् ।

परान्स्वगृहे वासयित्वा तेभ्यो भृतिग्रहणम् ।

इति हरदत्तः आपस्त । १-६-१८-२०

परभूमौ गृहं कृत्वा स्तोमं दत्त्वावसेन्तु यः ।

स तद् गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम् ।

स्तोमं वासमूल्यमिति चण्डेश्वरः विवादरत्नाकरः १६८

गृहोपभोगभोग्यस्तु स्तोम इत्यभिधीयते ॥

इति व्यासः

स्तोमशब्देन परगृहानुभवार्थं तेभ्यादत्तादक्षिणा उच्यते

इति वरदराजः - ११६

गृहात्स्तोमः शदः क्षेत्राद् भोगलाभः प्रकीर्त्तितः ।

शिखावृद्धि कायिकां च भोगलाभं तथैव च ॥

इति वृहस्पतिः व्यव-कल्प - २७५

(२) वेतनम् ।

स्तोमवाहीनि भाण्डानि पूर्णकालं तु पालयेत् ।

ग्रहीतुराभवेद् भग्नं नष्टं चान्यत्र संप्लवात् ॥

इति विवादरत्नाकरे नारदः—पृ १६६

अत्र स्तोमो वेतनमिति चण्डेश्वरः ॥

(३) स्तोत्रम् ।

(४) संघः ।

स्तोमः स्तोत्रेऽध्वरे वृन्दे इत्यमरः ।

**स्त्रीप्रसूः**— स्त्रीमात्रजननी।

**स्त्रीपंसादः**— स्त्रीसेनाविशेषः ।

स्त्रियः सम्यक् सीदन्ति विश्रम्भेणोपविशन्ति ।

यस्यां सभायमिति स्त्रीसभाविशेषः स्त्रीपंसाद ।

इति तैत्तिरीयसायणभाष्ये ।। २-५-१-१

स स्त्रीपंसादमुपासीदत् । अस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णीतेति ।।

**स्थगरम्**— चन्दनादिगन्धद्रव्यम् इति गोभिलभाष्ये ।

पत्नी बर्हिषि शिलां निधाय स्थगरं पिनष्टि ।

गोभिलः ४-२-२९

स्थगरं सुरभिज्ञेयं चन्दनादिविलेपनमिति कात्यायनः

१७-५

**स्थण्डिलम्**— (१) भूमिः ।

अबीजकमपि क्षेत्रं केवलं स्थण्डिलं भवेत् ।।

मनुः १०-७१

स्थण्डिलशायी अनित्यां वसतिं वसेत ।।

वसिष्ठ १९-११

(२) संस्कृता भूमिः ।

मृदानिर्मितं समचतुरस्रं प्रतिदिशम् अष्टादशांगुलं-विस्तृतं होमानुसारेण ततोधिकं वा न तु ततो न्यूनं चतुरङ्गुलोच्चं मध्योन्नतं स्थण्डिलमित्युच्यते ।। इति याज्ञिकाः स्थण्डिलं संस्कृता भूमिरिति

हलायुधकोशे ।

अग्नेः स्थण्डिलं गोमयेन समन्तं पर्युपलिम्पति ।।

इति गोभिलः १-५-१३

यागार्थं संस्कृता भूमिश्च स्थण्डिलम् ।।

समे स्थण्डिलचत्वरे इत्यमरः । २-७-१८

हस्तमात्रं चतुष्कोणं बाहुमात्रमथापि वा ।

चतुरङ्गुलमुच्छ्रायं स्थण्डिलं सर्वकर्मसु ।।

इति गृह्यकारिका ।

तच्च स्थण्डिलं सिकताभिः कार्य्यम्

सिकताश्चतुरङ्गुलं प्राचीनमुच्छ्रयत पञ्च ङ्गुलं पश्चात् इत्यादि बौधायनसूत्रे इति संस्काररत्नमाला ।

१-५१

**स्थपतिः**— शिल्पिविशेषः ।

स्थपतिः कञ्चुकिन्यपि ।

जीवेष्टियाजके शिल्पिभेदे ना सन्तमे त्रिषु ।।

इति मेदिनी ।

जीवेष्टिः वृहस्पतिसवः ।।

प्रतिगृह्य राजा स्थपतिर्वा पुरोहिताय इत्यापस्तम्ब-गृह्यसू । ५-१३-१४

**स्थलम्**— स्थलं लूनापनीततृणस्तम्बा परिष्कृता भूमिः इति श्रीमूला विवीतस्थलकेदारषण्ड खलवेश्पवाहन

कोष्ठानां पूर्वमाबाधं सहेत ॥ कौट ३-६

**स्थाणुः**— शिवः ।

ऊर्ध्वरेताः स्थितः स्थाणुर्यावदाभूतसंप्लवम् ।
यस्माच्चोक्तं स्थितोऽस्म ति ततः स्थाणुरितिस्मृतः ॥
वायु, पु १०-५६

**स्थाणुका**— अभ्रातृका (कन्या) इति नरसिंहवाजपेयो ।
स्थाणुकषण्ड्गणिका अभोज्यान्ना' प्रकीर्त्तिताः ॥
इति यमः ।

**स्थानम्**— (१) दण्डकोषपुरराष्ट्रात्मकं चतुर्विधं स्थानम् ।
तिष्ठत्यनेनेति स्थानं दण्डकोषपुरराष्ट्रात्मकं चतुर्विधं चिन्तयेत् ॥
दण्ड्यतेऽनेनेति दण्ड़ हस्त्यश्वरथपदातयस्तेषां पोषण-रक्षणादि तत् चिन्त्यम् । कोशोऽर्थनिचयः तस्यापव्य-यादि । पुरस्य रक्षणादि राष्ट्रं देशः तद्वासिमनुष्य-पश्वादिधारणक्षमत्वादि चिन्तयेत् ॥ इति कुल्लूकः ।
तैः सार्द्धं चिन्तयेन्नित्यं सामान्यं सन्धिविग्रहम् ।
स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च ॥
मनुः ७-५६

(२) ग्रामादिः ।

देशश्चैव तथा स्थानं सन्निवेशस्तथैव च ॥
ज्ञातिः संज्ञाधिवासश्च प्रमाणं क्षेत्रनाम च ॥
पितृपैतामहं चैव पूर्वराजानुकीर्तनम् ।
स्थावरेषु विवादेषु दशैतानि प्रवेशयेत् ॥

इति मिताक्षरायाम् २-६

(३) प्रयुक्तधनस्थितिः ।

अवकाशे स्थितौ स्थानम् ॥ इत्यमरः ३-३-११७
स्थानं सादृश्येऽवकाशे स्थितौ वृद्धिक्षयेतरे ॥
इति मेदिनी ।

स्थानं मूलधनमिति कल्पतरुः । २७७

स्थानलाभनिमित्तं यद्दानग्रहणमिष्यते ।
तत् कुसीदमिति ज्ञेयं तेन वृत्तिः कुसीदीनाम् ॥
नारदः ४-१-६८

**स्थानपालः**— स्थानरक्षकः ।

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ॥
अर्वाक्सम्वत्सरात् स्वामी हरेत परतो नृपः ॥
-याज्ञ २-१७३

स्थानरक्षी इति विज्ञानेश्वरः ॥

स च दिक्पाल इति दण्ड़विवेके ॥

**स्थानासनिकः**— शयनवर्जितः ।

दिवास्थानं रात्रावासनं न कदाचित् शयनं यस्य
इति हरदत्तः ।

**स्थानिकः**— दुर्गजनपदचतुर्भागरक्षी इति श्रीमूला ।
सगोपस्थानिको वाह्यं प्रदेष्टा चोरमार्गणम् ।
कुर्यान्नागरिकश्चान्तर्दुर्गे निदिष्टहेतुभिः ॥

कौट ४-६

**स्थापकः**— आचार्य्यः ।

सर्वलक्षणसंपूर्णा मन्त्रवन्तो जितेन्द्रियाः ।
कुलशीलसमायुक्ताः स्थापकाः स्युर्द्विजोत्तमाः ।।
इति मात्स्ये ।

स्थापका आचार्या इति कृत्यकल्पतरौ दानकाण्डे-
२८०

**स्थायुकः**— ग्रामाधिकृत इति हेमाद्रिः परि-७७६
स्थायुकाः षण्ढगणिका अभोज्यान्नाः प्रकीर्तिताः
इति तत्र यमः ।

**स्थालम्** – (१) दन्तमूलप्रदेशस्थम् अस्थि।
स्थालानि दन्तमूलप्रदेशस्थानि अस्थीनि
द्वात्रिंशत् इति मिताक्षरायाम् ।
स्थालैः सह चतुःषष्टिर्दन्ताः ।। याज्ञ ३-८५

(२) पात्रम् ।

कुलालचक्रनिष्पन्नमासुरं मृण्मयं स्मृतम् ।
तदेवहस्तघटितं स्थालादिदैविकं भवेत् ।।
गोभिलस्मृतिः । २-११५

**स्थालकानि**— पार्श्वकास्न्थामाधारभूतानि ।
कक्षाधःप्रदेशसम्बद्धान्यस्थीनि पार्श्वकाः ।
तदाधारभूतानि स्थालकानि इति विज्ञानेश्वरः।।
३-८६

**स्थालीपाकः**— चरुः ।
स्थाल्यां पक्व ओदनः स्थालीपाक इत्युच्यते । स च होमार्थश्चरुः ।

सर्वत्र पूर्वं स्थालीपाकः पश्चात् वैश्वदेवः ।
अकृते वैश्वदेवे तु स्थालीपाकाः प्रकीर्त्तिताः ।।
इतिगदाधरकृतपारस्करभाष्ये १-१२

**स्थावरोदकम्** – कूपतडगादि, यतः जलं न प्रसर्पति ।
तस्या उत्सर्गः स्थावरोदके शुचौ वा देवतायतने ।।
काठकगृ २-६-३

**स्थासकः**— चन्द्रनादिकृतरचनाविशेषः ।
आश्वयुज्यामश्वादीनां नवविचित्रवस्त्रालंकारै-
श्चन्दनालक्तकसिन्दूरादिस्थासकैश्च पूजयेत् ।।
इतिकाठकगृह्य,ब्र भाष्ये । ५-३-१
चारुचन्दनस्थासकस्थूलतरकान्तिभ्यामुरुदण्डाभ्या-
मुपाहसन्तमिवैरावतकरायाममिति काव्येऽपि प्रयोगः
हर्षचरितम् ।।

**स्थितिः** – (१) परम्परा ।
शास्त्रपरम्परा वंशपरम्परा आचारपरम्परापि ।
पूगश्रेणिगणादीनां या स्थितिः परिकीर्तिता ।।
इति कात्यायनः।
(२) परिभाषिकैधर्मैर्व्यवहारः
पाखण्डनैगमादीनां स्थितिः समय उच्यते ।।
इति नारदः, विवादरत्नाकरे । १७७
(३) शीलम् ।
अवृत्तिकर्शिता हि स्त्री प्रदुष्येत् स्थितिमत्यपि ।।
मनुः ९-७४

शास्त्रोक्तवर्णाश्रमादिधर्मेषु अवस्थानमापद्यपि ततोऽप्रच्यवनं स्थिति इति हेमाद्रिः । परि १९२

**स्थितिकम्** — देशाचारयुतं वर्षमासपक्षाहवृद्धिमत् ।
ऋणिसाक्षिलेखकानां हस्ताङ्कं लेख्यमुच्यते ॥
पूगश्रेण्यादिकानां तु समयस्य स्थितेः कृतम् ।
स्थितिः पत्रं तु तत्प्रोक्तं मन्वादिस्मृतिवेदिभिः ।
इति व्यवहारमाधवे बृहस्पतिः ।

**स्थितिमती** – शीलवती स्त्री । मनुः ९-७४
विधाय वृत्तिं भार्य्यायाः प्रवसेत् कार्य्यवान्नरः ।
अवृत्तिकर्षिता हि स्त्री प्रदुष्येत् स्थितिमत्यपि ॥

**स्थिराघातम्**—मुद्गरादिभिरपि हन्यमानं यन्न विदीर्यते तत् स्थिराघातम् (अवसानम्) इति गदाधरभाष्ये ॥
पारस्करः १-४-२
स्थिराघातमेकवर्णमशुष्कमित्यादि । गोभिलः ४-७-८

**स्थिरायुः**— शाल्मलिवृक्षः ।

**स्थूणा**— (१) लोहप्रतिमा ।
(२) गृहस्तम्भश्च ।
अस्थूणं स्नायुयुतं मांसशोणितलेपनम् ॥
मनुः ६-७६
स्थूणा स्तम्भेऽपि वेश्मनः ॥ अमरः ३-३-५६

**स्थूरा** — पार्ष्णोरुपरिभागः ॥ व्यवहारकल्पतरुः ५३०

**स्थूरिका** - स्थूरः पृष्ठेन भारं वोढा वृषः, तद्भारः स्थूरिका इति मन्वर्थविवृत्तिः ।
विवादरत्नाकरे तु स्फूरिका इति पाठं गृहीत्वा स्फूरिका वन्ध्या इति ।
विवादचिन्तामणौ तु तूलिका इति पाठो गृहीतः तन्मते तूलिका नासा ॥
मेधातिथिस्तु खरिकेति पाठं गृहीतवान् । तन्मते खरिका यया गोरथक्षेत्रादौ वाह्यते वलीवर्दः । अन्ये तु पादस्य पश्चाद्भागं चतुर्थं खरिकामाहुः इति मेधातिथिः ॥ छूरिकेति च पाठो दृश्यते । उत्कलीय तालपत्रपुस्तकेषु स्फूरिकेति पाठः । कुल्लूकस्तु गोवाहनार्थं नासाच्छेदने इत्यर्थं कृतवान् ।
गोषु ब्राह्मणसंस्थासु छुरिकायाश्च भेदने ।
पशूनां हरणे चैव सद्यः कार्योऽर्द्धपादिकः ॥
इति मनुः ८-३२५

**स्थूलकम्** — असूक्ष्मवस्त्रम् । कौट ४-१

**स्थूललक्षः** — वदान्य अमरः ३ १०६
बहुदेयार्थदर्शी इति विज्ञानेश्वरः ।
स्थूलमनेकद्रव्यं ददातीति स्थूललक्ष्यो बहुप्रदः ।
इति सरस्वतीविलासे ।
महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवक इति ।
विनीतः सत्त्वसंपन्नः कुलीनः सत्यवाक् शुचिः ॥
राजलक्षणे याज्ञ १-३०९

**स्नातकः** —समाप्तसमावर्त्तनसंस्कारः अकृतविवाहः ॥
स च त्रिविधः । विद्यास्नातकः व्रतस्नातकः अभय-स्नातकश्चेति ॥ यः समाप्य वेदमसमाप्य व्रतानि समावर्त्तते स विद्यास्नातकः । यः समाप्य व्रतान्य समाप्य वेदं समावर्त्तते स व्रतस्नातकः। उभयं समाप्य समावर्त्तते यः स विद्याव्रतस्नातकः ॥ इति हरीतः पारस्कराचार्य्याश्च—

समाप्य वेदमसमाप्य व्रतं यः समावर्त्तते स विद्या-स्नातकः २-५-३४

समाप्य व्रतमसमाप्य वेदं यः समावर्त्तते स व्रत स्नातकः २-५-३५

उभयं समाप्य यः समावर्त्तते स विद्याव्रतस्नातकः इति २-५-३६

ते च कृतस्नाना उद्वाहपर्यन्तं स्नातक शब्दवाच्या भवन्ति—

आजायासङ्गमात् स्नातका भवन्ति अत ऊर्ध्वं गृहस्थाः ।

इति बौधायनगृह्यसूत्रे ॥ १-१५-१०

**स्नाता**—ऋतुस्नाता स्त्री ।

शुद्धा भर्त्तुश्चतुर्थेऽह्नि स्नाता नारी रजस्वला ।
दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति ॥

विष्णुधर्मोत्तरपु २-७६-१८

**स्नानम्**— (१) समावर्त्तनकर्म ।

स्नानं सहधर्मचारीणीसंयोगः ॥ इति गौतमः १-८-१५

(२) मान्त्राद्यष्टविधं स्नानम् ।

मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च ॥
वारुणं मानसं चैव सप्तस्नानान्यनुक्रमात् ॥

योगियाज्ञवल्क्यः ।

बृहस्पतिस्तु तृतीयपादे सारस्वतं कापिलंचेति पठति ।

असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षय ।
मन्त्रस्नानादिः सप्त केचिदिच्छन्ति सूरयः ॥
मान्त्रं भौमं तथाग्नेय वायव्यं दिव्यमेव च ।
वारुणं मानसं चैव सप्तस्नानान्यनुक्रमात् ॥
आपोहिष्ठेति वै मान्त्रं मृदालम्भश्च पार्थिवम् ।
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ।
यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।
वारुणं चावगाहं तु मानसं बिष्णुचिन्तनम् ॥
शस्तं स्नानं यथोद्दिष्ट मन्त्रस्नानक्रमेण तु ।
कालादेशादसामर्थ्यात् सर्वं तुल्यफलं स्मृतम् ।
मानसं प्रवरं स्नानं केचिदिच्छन्ति सूरयः ।
आत्मतीर्थप्रशंसायां व्यासेन पठितं यतः ।

इति आह्निकप्रकाशे योगियाज्ञवल्क्यः १६५

आग्नेयं भस्मना स्नानमवगाह्य च वारुणम् ।
आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम् ।
यत्तु सातपवर्षं तु ततस्नानं दिव्यमुच्यते ।
पञ्चस्नानानि पुण्यानि मनुः स्वायम्भुवोऽब्रवीत् ॥
आपस्नानं व्रतस्नानं मन्त्रस्नानं तथैव च ।
आपस्नानं गृहस्थस्य व्रतमन्त्रे तपस्विनाम् ।

दक्षस्मृतिः २-१४-तः १७

स्नानानि पञ्च पुण्यानि कीर्त्तितानि मनीषिभिः ।

आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च ॥ ९

आग्नेयं भस्मना स्नानमवगाह्य तु वारुणम् ।

आपोहिष्ठेति च ब्राह्मं वायव्यं रजसास्मृतम् ॥ १०

यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।

तत्र स्नाने तु गङ्गायां स्नातो भवति मानवः ।

पराशरः ९-११

नित्याचारप्रदीपादिषु स्नानानां विशेषविधिरुक्तः यथा—

(१) मन्त्रस्नानम् अथवा ब्राह्मस्नानम् ।
आपोहिष्ठा, शं न आपः, द्रुपदा अघमर्षणम्
एतैर्मार्जनम् ।

(२) भौमस्नानम् ।

अङ्गप्रोक्षनादि कृत्वा गङ्गामृत्तिकादिना सर्वांगलेपनम् ।

(३) आग्नेयस्नानम् ।

भस्मना अङ्गविलेपनमाग्नेयस्नानम् ।

तत्र अग्निर्मूर्द्धा इति नरसिंहवाजपेयिनः ।

पुण्यं कनखले यच्च प्रयागे यच्च सुन्दरि ।

तत्फलं सकलं देवि भूतिस्नाने विधीयते ।

इति ब्रह्मपुराणे

(४) गोखुरोद्धृतरजसा वायुप्रचलितेन सर्वाङ्गसंयोगो वायव्यस्नानम् ।

वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः सप्तविंशतिः ।
ते अग्रे अश्वमायुञ्जन्ते अस्मिन् जवमादधुरिति तत्र मन्त्र इति नरसिंहवाजपेयिनः ।

(५) अनभ्रवृष्टौ निरावरणस्यावस्थानं दिव्यस्नानम् ।

(६) जलेन स्नानं वारुणम् ।

अस्य विधिस्तु आकरेषु द्रष्टव्यः

(७) विष्णुचिन्तनं मानसस्नानम् ।

(८) विद्वत्समागमः सारस्वतस्नानम् ।

वायव्यं गोरजः प्रोक्तमस्तं गच्छति गोपतौ ।

विद्वत्सरस्वतीप्राप्तं स्नानं सारस्वतं तु यत् ॥

इति आह्निकप्रकाशे बृहस्पतिः १९६

(९) कापिलं स्नानम् ।

आर्द्रेण कर्पटेनाङ्गशोधनं कापिलं स्मृतम् ।

इति बृहस्पतिः ।

(१०) आतुरस्नानम् ।

आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः ।

स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्ध्येत स आतुरः ॥

इति पराशरः ७-१०

स्नानप्रशंसा गुणादशस्नानपरस्य साधोः रूपं च तेजश्च बलं च शौचम् ।
आयुष्यमारोग्यमलोलुपत्वं दुःस्वप्नघातश्च तपश्च मेधा । इतियोगियाज्ञवल्क्यः ॥ स्मृतिचन्द्रिका आह्निकः २८९

एते दशगुणाः प्रातः स्नानगुणा इति प्रोक्तं अनन्त भाट्टीये विधानपारिजाते ३-६७७

तत्र—प्रातर्मध्याह्नयोः स्नानं वानप्रस्थ गृहस्थयोः ।
यतेस्त्रिषवणं प्रोक्तं सकृच्च ब्रह्मचारिणः ।

इति योगियाज्ञवल्क्यः ।

**स्नायुः**— अङ्गप्रत्यङ्गसन्धिबन्धनाः स्नायवः नवशतानि इति विज्ञानेश्वरः । ३-१००

**स्नुषा**— पुत्रवधूः मनुः ६-६३ ।

**स्नुही**—सर्जवृक्षः सिहु इति भाषायाम् ।

धवलितकलशन्यस्तरक्तपताका स्नुही भवने ।

चैत्रासित भूतदिने पापरुजं दूरतोऽभिधत्ते ॥

इति राजमार्त्तण्डे कालसारोद्धृते ॥

कालसारः १३५

**स्नेहपक्वम्**— बाह्यजलनिरपेक्षेण केवलघृतादिना पक्वम् ।

**स्पशः**—चरः मनुः ८-११६

वत्सस्य ह्यभिशस्तस्य पुरा भ्रात्रा यवीयसा ।

नाग्निर्ददाह रोमापि सत्येन जगतस्पशः ॥ इति

**स्पृष्टास्पृष्टिः**—स्पृश्यास्पृश्यभावः । अस्पृष्टि अस्पृश्यम् ।

स्पृष्टमस्पृष्टि येनेति च बहुव्रीहिः ।

इति मित्रमिश्रः शुद्धिप्रकाशे १३०

देवयात्रा विवाहेषु यज्ञप्रकरणेषु च ।

उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते ।।

अत्रिसंहिता २४६

तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।

नगरे ग्रामदाहे च स्पृष्टास्पृष्टि न दुष्यति ।

इति नित्याचारप्रदीपे १-३३७

**स्फातीकरणम्**— सम्पादनम् ।

विन्दमाना पुत्रार्थं स्फातीकुर्यात् ॥ कौट १-२-३०

**स्फिक्**— प्राणायतनविशेषः, कटिप्रोथः ।

स्फिजौ कटिप्रोथौ इति मिताक्षरा ३-९७ ।

स्फिचौ कट्यधस्तनमांसपिण्डौ इति लक्षणप्रकाशे ।

**स्फुरा**— स्पुरा पार्ष्णयोरुपरिभागः ।

स्थुरा इति पाठान्तरम् ॥

गोषु ब्राह्मणसंस्थासु स्थुरायाश्छेदनम् ।

इति नारदसंहिता १९-६१

स्पुरा पार्ष्णयोरुपरिभागः इति चण्डेश्वरः

**स्फुरिका**— बन्ध्या स्थुरिका शब्दो द्रष्टव्यः ।

स्पुरिका बन्ध्या इति चण्डेश्वरः ।

**स्फुलिङ्गः**— तेजोवयव इति विज्ञानेश्वरः ।

निःसरन्ति यथालोहपिण्डात्तप्तात् स्फुलिङ्गकाः ।

सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि ॥

याज्ञ ३-६७

**स्फ्यः**— खदिरकाष्टनिर्मितः अरत्निपरिमितो दीर्घः । चतुरङ्गुलपरिमितविस्तारः आकारेण खड्गसदृशः स्फ्य इत्युच्यते इति श्रौतपदार्थनिर्वचने ।

अरत्निमात्रः खड्गाकार खादिरवृक्षनिर्मितः ।

कर्मसाधनविशेषः स्फ्य इति गोविन्दस्वामी ।

अरत्निमात्र इति नरसिंहवाजपेयी।

स्फ्यः काष्ठच्छुरिका यज्ञाङ्गम् इति मदनपारिजाते।

४४७

**स्मार्त्तकालः** — स्मरणयोग्यः कालः।

इतिव्यवहारकल्पतरौ १८०

स्मार्त्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते।
अस्मार्त्तेऽनुगमाभावात्क्रमात्त्रिपुरुषागता॥

इति कात्यायनः।

स्मार्त्तश्च कालः शतवर्षपर्यन्तः। शतायुर्वै पुरुष इति श्रुते। इति विज्ञानेश्वरः २-२७

स्मार्त्तकालः स्मरणयोग्यः कालः षष्ठिवर्षाख्यो तदति वर्षाख्यो वा। इति व्यवहारनिर्णये १२८

तत्र कात्यायनः—
मुख्या पैतामही भुक्तिः पैतृको चापि सम्मता।
वयोपेतैरविच्छिन्ना स्थिरा षष्ठ्यब्दिकी मता॥

कात्यायनः ३१८

वत्सराणां तु नवतिरथवा स्यान्त्रिपुरुषी।
अतःपरं प्रमाणं स्याद् भुक्तिरेवागमादृते॥

**स्मृतिः**— मन्वादिधर्मशास्त्रम्।

श्रुतिस्मृति च विप्राणां चक्षुषी देवनिर्मिते।
काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्त्तितः।

हारीतस्मृति १-२४

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ।

मनुः २-१०

धर्मशास्त्राणां विस्तरः धर्मशास्त्रशब्दे द्रष्टव्यः

श्रुतिस्मृती ममैवाज्ञे यस्त उल्लङ्घ्य वर्त्तते।
आज्ञाच्छेदी मम द्वेषी न स भक्तो न वैष्णवः॥

इति पराशरमाधवेप्रायश्चित्तकाण्डे ८

**स्यन्दनिका**— छदेरधोभागः।

स्यन्दनिका पटलप्रान्त इत्यपरार्क। याज्ञ २-१५४

पटलप्रान्त इति चण्डेश्वरः। विवादरत्नाकरे।

२१६ व्यवहारकल्पतरौ च ४५३

वृष्ट्युदकनिपातः स्यन्दनिका इति स्मृतिचान्द्रिकायाम्। औलि इति उत्कलभाषायाम्।

वातायनं प्रणालीश्च तथा निर्यूहवेदिका।
चतुःशालस्यन्दनिकाः प्राङ्निविष्टेः न चालयेत्।

इति बृहस्पतिः।

**स्यन्दिनी**—वत्सं विना प्रस्नुता गोरादिः।

स्यन्दिनी स्रवत्पयःस्तनीति विज्ञानेश्वरः।

वत्सं विनैव प्रस्नवत्स्तनी इति कल्पतरौ।

नियत २९५

**स्रक्**— पुष्पमाला।

**स्रक्तिः**— कोणः।

स्रक्तिहीनं त्रिकोणं च यवमध्यं तथैव च।

इति मात्स्ये राजनीतिप्रकाशे १०४

अश्मवर्म मे इति षडश्मनः सम्पातवतः स्रवितप्रु पर्यग्रस्तात् निखनति । कौशिकसूत्रम् ५१-२-१४
नन्दिनि सुभगे सुमङ्गलि भद्रंकरोति स्रवितस्त्वभि प्रदक्षिणम् ॥ विष्णुः ६७-८

**स्रवन्ती** - नदी ।
सर्वे शिलोच्चयाः सर्वाः स्रवन्त्यः पुण्या ह्रयस्तीर्थान्यृषिःनिवासगोष्ठपरिस्कन्दा इति देशाः वसिष्ठः २२-१२, गौतम ३-१-१४

**स्रस्तरः**— स्रस्तरः पलालशय्या इति हरदत्तः आपस्त स्रस्तर इति पाठान्तरम् १-२-८-१३
आसीत गुरुणा साकं स्रस्तरेषु कटेषु च ॥ मनु २-२०४

**स्रुक्** — (१) बाहुमात्रा पाणिमात्रपुष्करा वैकङ्कती इति नरसिंहवाजपेयी १-१७४

(२) ध्रुवोपभृज्जुहुस्रुवाणां चतुर्णां वाचकः स्रुक्शब्दः श्रो, प, निर्वः

**स्रुतिः**— स्रुतिः क्षीरसर इति निर्णयसिन्धौ । तत्र महिषा-प्रवादोऽपरार्के ब्राह्मे—
देयं तक्रं तु सद्यस्कं नवनीतादनुद्धृतम् ।
आरण्यमहिषी क्षीरं शर्करास्रुतिसंयुतम् ॥
शर इति तालव्यादिपाठमशुद्धं मन्ये ।

**स्रुवः**—खदिरकाष्ठनिर्मितः हस्तमात्रः पद्मपत्राकृतिकमलमुकुलाकृतिर्वा अङ्गुष्ठपर्वमात्रखातः वर्त्तुलपुष्करः स्रुवः इति हरिहरः पारस्करः ।

अरत्निमात्रोऽङ्गुष्ठपर्वमात्रपुष्कर इति नरसिंहवाजपेयी । १-१७४
स्रुवार्थे खदिरं शस्तं चन्दनं मधुकं तथा ।
चम्पकं चूतकं सीर्पं पालाशं सामिदेव च ॥
अन्येपि याज्ञिका वृक्षा शस्यन्ते सास्त्वद् दताः ।
इतिनित्याचारप्रदीपोद्धृतहयशीर्षे १-१७६
खदिरकाष्ठतिर्मितः अरत्निमात्रदीर्घः अग्रभागे अङ्गुष्ठ पर्वमात्रवर्त्तुलविलयुक्त आज्यहोमादौ करणभूतः ।
स्रवत्याज्यादिद्रव्यमस्मादितिॱ व्युत्पत्त्या स्रुवपदवाच्यः इतिश्रौतपदार्थनिर्वचने ।

**स्रुवप्रग्रहणः**— यः राजकीयवृत्तिबलेन सर्वेभ्यो वणिग्भ्यः स्रुवेण धान्यादिकमादत्ते ॥ खोचीग्राहक इति भाषायां प्रसिद्ध इति महाभारतव्याख्याने नीलकण्ठः उद् १५-४८
स्रुवप्रग्रहणो व्रात्यः कीनाशश्चात्मवानपि ।
रक्षेत्युक्तश्च यो हिंस्यात् सर्वे ब्रह्महभिः समाः ॥

**स्रोत्या**— नदी ।

**स्रौधम्** स्रुवसम्पाद्यं याजमानिकं कर्म ।

**स्वः**— सामवेदः ।
स्वरिति सामवेदः स्यात् प्रणवो भूर्भुवः सुवः ॥ वृद्धहारीतः ६-७६

**स्वदितम्**— तृप्तिप्रश्न अन्नपूजनं वा स्वदितमिति पित्र्ये । वसिष्ठः ३-७०

**स्वधा** — (१) पितृणामन्नम् ।

(२) पितृभ्यः दानप्रकाशकः शब्दः ।।

स्वाहाकारवषट्कारप्रदानाः देवाः २०

स्वधाकारनमस्कारप्रदानाः पितरः । कौशिकगृ-

१-२-२१

(३) पितृयज्ञः ।

बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः

भूतपित्रमरब्रह्मनुष्याणां महामखाः ।। याज्ञ १-१०२

**स्वधाकरः**— श्राद्धादिपितृकर्मसम्पादकः पुत्रादिः ।

अपुत्रोनेन विधिना सुतां कुर्वीत पुत्रिकाम् ।

यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम ।।

मनुः ६-१२७

**स्वधानिनयनम्**— पितृकर्म ।

प्रेतकर्म इति संस्कारमयूखे ।

स्वधाशब्देन श्राद्धमुच्यते । निनीयते निष्पाद्यते येन ।

तत् स्वधानिनयनमिति कुल्लूकः मनुः २-१७२

**स्वधावन्ति यजूंषि**—सोमाय पितृमीताय स्वधा नमः ।

इत्यादीनि इति गोविन्दस्वामी ।। बोधायनः

२-८-१४-१

**स्वनामाङ्कः**—स्वहस्तः स्वनामाङ्कनमित्यर्थः ।

कूटकारकास्तु —

कुर्वन्ति सदृशं लेख्यं तद्यत्नेन विचारयेत् ।

स्त्रीबालानलिपिज्ञानान् वञ्चयन्ति स्वबान्धवान् ।।

लेख्यं कृत्वा स्वमामाङ्कं ज्ञेयं युक्त्यागमैस्तु तत् ।।

इति व्यासः

**स्वनुजा**— (१) विवाहे अप्रशस्ता कन्या ।

(२) यस्याः शोभना अनुजा सा ।

आप गृह्य १-३-१२

**स्वपुरुषः**— स्वपुरुषः प्रेष्यः व्यवहारचिन्तामणौ ।

अयं साध्यपालनामा शूद्र एवेति व्यवहारप्रकाशे ११

आकारणे रक्षणे च साक्ष्यार्थिप्रतिवादिनाम् ।

सभ्याधीनः सत्यवादी कर्त्तव्यस्तु स्वपुरुषः ।।

स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य

कर्णमूले ।।

परिहर मधुसूदन प्रपन्नान् प्रभुरहमन्यनृणामवैष्णवानाम्

विष्णुपुराणम् ३-७-१४

**स्वप्नपर्यन्ता रात्रिः**— प्रहरावशिष्टा रात्रिः । आपस्त

१-२-६

**स्वभावः**— जन्मस्थानम् ।

स्वभावाः रघुनाथ श्रीकृष्णादीनां जन्मस्थानानि

इति वैजयन्त्यां नन्दपण्डितः ।।

सर्वेष्वपि स्वभावेषु ।। इति श्राद्धदेशकीर्त्तने विष्णुः

८५-५६

**स्वमेकः**—सम्वत्सरः ।

यः समालभते सूर्यं चन्दनागुरुकुङ्कुमैः ।

कर्पूरव्यतिमिश्रैस्तु तथा कस्तुरिकान्वितैः ॥
स्वमेकानां कोटिशतं विहृत्य त्रिदिवालये ।
पुनः संजायते भूमौ राजराजो न संशयः ॥
इति भविष्ये ।

अत्र स्वमेकानां वर्षाणामिति मित्रमिश्रः
तत्र चन्दनागुरुकर्पूरैर्यस्तु दुर्गां प्रपूजयेत् ॥
स स्वमेकशतं दिव्यं शक्रलोके महीयते ॥
एवं यः कुरुते भक्त्या ह्युमामाहेश्वरं व्रतम् ।
स्वमेकमेकं विप्रेन्द्र स याति परम् पदम् ।
इति दम्पत्यष्टमीव्रते कल्पतरौ व्रतकाण्डे - २५५
स्मृतिचन्द्रिकायां सुमेक इति पाठः-३४१ । तत्र
यव्यामासाः सुमेकः सम्वत्सर इति शतपथश्रुतेः ॥ इति

**स्वयंकृतलवणः**— ऊषरलवणः ।

**स्वयंकृतिः**— स्वेच्छाचारः ।

अस्वर्ग्या लोकनाशाय परानीकभयावहा ।
आयुर्बीर्यहरा राज्ञः सति वाक्ये स्वयंकृतिः ॥
अत्र वाक्यं शास्त्रमिति स्मृतिचन्द्रिका ।

**स्वयंदत्तः**— पुत्रविशेषः ।

मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् ।
आत्मानं स्पर्शयेद् यस्मै स्वयंदत्तस्तु स स्मृतः ॥
मनुः ९-१७७

**स्वयमुक्तिः**— असाक्षिविशेषः ।

स्वयमुक्तिरनिर्दिष्टः स्वयमेवैत्य यो वदेत् ।
सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति ॥
इति व्यवहारनिर्णये नारदः ॥ सूची सूचकः ।
अनिर्दिष्टस्तु साक्षित्वे स्वयमेवैत्य यो वदेत् ।
स्वयमुक्तिः स शास्त्रेषु न साक्षित्वमर्हति ॥
इति नारदः १-१६१ ।

**स्वर्गमार्गपदम्**— विशिष्टश्राद्धदेशः विष्णुः ८५-४५
स्वर्गमार्गः रथमार्गः इति पदशालापूर्वभागे प्रसिद्ध
इति वैजयन्ती ।

**स्वर्णनाभः** – शालग्राम इति नीलकण्ठः ॥

दक्षिणावर्त्तशंख इति नारायणः ।
अजोक्षा चन्दनं वीणा आदर्शो मधुसर्पिषी ।
विषमैदुम्बरं शंख स्वर्णनाभोऽथ रोचना ॥
महाभा, उद् ४०-१०
अत्र शंखस्य पुनरुक्तत्वात् दक्षिणावर्त्तशङ्खर्थः न
तथा युज्यते । शालग्रामरूपार्थस्तु साधीयान् ॥

**स्वर्लोकः** — ध्रुवसूर्यान्तरं यत्तु सिद्धादिमुनिसेवितम् ।
भुवर्लोकस्तु सोऽप्युक्तो द्वितीयोनुनिसत्तमाः ॥
ब्रह्म पु २३-१७

**स्ववासिनी**— परिणीता पितृगृहे स्थिता स्ववासिनी
इति विज्ञानेश्वरः १-१०५
स्ववासिन्य ऊढा दुहितर इति कल्पतरुः ॥
नियत—२११

**स्वस्तरः**— पलालशय्या इति हरदत्तः ।

आपस्त १-२-८-१३

**स्वस्ति** – (१) अविनाशिनाम ।

अभिप्रेतार्थस्य अविनाश इति कुल्लूकः मनुः १-१०६

(२) आशीर्वादः ।

शूद्रे कृतप्रणामे तु स्वस्ति चेत् क्रियते द्विजैः ।

अङ्गिरः स्मृतिः ७१

**स्वस्तिकम्**— (१) खाद्यद्रव्यविशेषः ।

अहो हैयंगवीनानां नवनीनां परं मुदा ।

लड्डुकानां शर्कराणां स्वस्तिकानां च यत्नतः ॥

(२) योगासनविशेषः ।

उभे कृत्वा पादतलं जान्वोरन्तरेण हि ।

समासीनात्मनः प्रोक्तमासनं स्वस्तिकं परम् ।

कर्मयु २-११ अध्याये ।

**स्वस्तिकः**— मोदका-स्वस्तिका नन्द्यावर्त्ता गोधूमविकारा इति अष्टावक्रभाष्ये—मानवगृ २–६-४

**स्वस्तिका** --स्वस्तिका स्वस्तिकाकारपिष्टकमिति नित्याचारप्रदीपे ।६६६

स्वस्तिका लोपिका दुग्धग्रीवेष्टकिलाटिका इति देवदेये ।

**स्वस्त्ययनम्** – स्वस्ति ईयते अप्यते येन तत् स्वस्त्ययनमिति मेधातिथिः ॥

मङ्गलार्थं स्वस्त्ययनं यज्ञश्चासां प्रजापतेः ।

प्रयुज्यते विवाहेषु प्रदानं स्वाम्यकारणम् ॥

मनुः ५-१५२

स्वस्त्ययनं स्वस्तिप्रापकमिति कुल्लूकः १-१०६

अनुत्पन्नरिष्टानुत्पत्त्यै क्रियमाणं कर्म स्वस्त्ययनं प्रास्थानिकहोमादि ॥ बहुवचनेन पुण्याहादीनां ग्रहणम् इति वैजयन्त्यां नन्दपण्डितः ।

शान्तिस्वस्त्ययनोपायैर्दैवोपघातान् प्रशमयेत् ।।

विष्णुः ३-६८

प्रत्युत्पन्नरिष्टशमनाय क्रियमाणं कर्म शान्तिरिति स्वस्त्ययतादस्या भिन्नो विषयः ॥

**स्वस्रीयः**— भगिनीपुत्रः ।

मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम् ।

दौहित्रं विट्पतिं बन्धुमृत्यग्याज्यौ च भोजयेत् ।

मनुः ३-१४८

**स्वहस्तः**— स्वहस्ताङ्कितस्वनामाक्षरम् ।

कार्यो यत्नेन महतानिर्णयो राजशासने ।

राज्ञः स्वहस्ततो मुद्रा लेखकाक्षरदर्शनात् ॥

इति कल्पतरौ प्रजापतिः ।

प्रतिग्रहपरीमाणं दानच्छेद्रोपवर्णनम् ।

स्वहस्तकालसम्पन्नं शासनं कारयेत् स्थिरम् ।

याज्ञ १-३२०

**स्वागतम्**— सु आगतम्, इति प्रश्नः ।

अपराह्णे समभ्यर्च्य स्वागतेनागतांस्तुतान् ।

पवित्रपाणिराचान्तानासनेषूपवेशयेत् ॥ याज्ञ ५-२२६

**स्वस्धीयः**— भृशतरम् इति कल्पतरुः हरदत्तश्च ।

अमावास्यायां निशायां स्वाधीय आत्मानो गुप्ति-

मिच्छन् ॥ आपस्त ११-३२-२१

**स्वाध्यायः**— (१) स्ववेदशाखा अधीयत इत्यध्यायो

वेदः । स्वस्याध्यायः स्वाध्यायः स्वपरम्परागता शाखा

इत्यर्थः । संस्कारप्रकाशे -५०४

(२) मन्त्रादिजपः—

वेदान्तशतरुद्रीयप्रणवादिजपं बुधाः ।

सत्त्वसिद्धिकरं पुंसां स्वाध्यायं परिचक्षते ॥

स्वाध्यायस्य त्रयो भेदाः वाचिकोपांशुमानसाः ।

उत्तरोत्तरवैशिष्ट्यं प्राहुर्वेदार्थवेदिनः ॥

यः शब्दबोधजनकः परेषां शृण्वतां स्फुटम् ।

स्वाध्यायो वांशुकः प्रोक्त उपांशोरथलक्षणम् ॥

ओष्ठयोः स्पन्दमात्रेण परस्याशब्दबोधकम् ।

उपांशुरेष निर्दिष्टः साध्वसौ वाचिकाज्जपात् ।

यत् पदान्तर संगत्या परिस्पन्दनवर्जितम् ।

चिन्तनं सर्वशब्दानां मानसं तज्जपं विदुः ॥

कूर्म पु-२-११ अध्याये ।

(३) ब्रह्मयज्ञः याज्ञ १-१०१ स्वधाशब्दे द्रष्टव्यः ।

स्वाध्यायो ब्रह्मयज्ञः । विष्णुः ५६-२१

**स्वाध्यायार्थी**—विद्यार्थी मनुः ११-१

**स्वापतेयम्**— धनम् व्यवहारप्रकाशे ४६३ पृ,

अमरः २-६-६०

**स्वायम्भुव** अदिमनुः मात्स्ये ३-४२

उपयेमे स विश्वात्मा शतरूपामनिन्दिताम् ।

सम्बभूव तया सार्द्धमतिकामातुरो विभुः ॥

ततः कालेन महता तस्य पुत्रोऽभवन्मनुः ।

स्वायम्भुव इति ख्यातः स विराडिति नः श्रुतम् ।

तद्रूपगुणसामान्यादधिपुरुष उच्यते ।

मनुस्मृतौ तु मनुर्विराजः पुत्ररूपेण दर्शितः । १-३३

तपस्तप्त्वाऽसृजद् यं तु स स्वयं पुरुषो विराट् ।

तं मां वित्तस्य सर्वस्य स्रष्टारं द्विजसत्तमाः । इति

पुनश्चास्य इन्द्रादि रूपत्वं वर्णितम् ।

एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ।

इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥

मनुः १२-१२३

**स्वारोचिषः**— मनुविशेषः मनुशब्दे द्रष्टव्यः ।

**स्वाहा**— देवप्रतिपादनकः शब्दः ।

स्वाहाकारवषट्कारप्रदाना देवा इति कौशिकस्र

स्वाहाकारवषट्कारनमस्कारा दिवौकसाम् ॥

स्वधाकारः पितृणां च हन्तकारो नृणां कृतः ॥

इति गोभिलस्मृतौ ३-३६

**स्वेदजः** — मक्षिकादिः ।

स्वेदजं दंशमशकं यूकामक्षिकमत्कुणम् ।

ऊष्मणश्चोपजायन्ते यच्चान्यत् किंचिदीदृशम् ॥

मनुः १-४५

**स्वैरम्**— (१) तूष्णींभावः ।

अपसव्यं कृत्वा गृहेषु स्वैरमापद्येरन् ॥ वसिष्ठः १५-१४

(२) एकान्तम् ।

ततः स्वैरविहारी स्यान् मन्त्रिभिर्वासमागतः ।

बलानां दर्शनं कृत्वा सेनान्या सह चिन्तयेत् ॥

याज्ञ १-३२६

**स्वैरकर्म** — स्वैरकर्म पादप्रक्षालनमुत्सादनमनुलेपनमुद्वर्त्तनमभ्यङ्ग इत्यादि इति नरसिंहवाजपेयी ।

गुरोरुदाचारेष्वकर्त्ता स्वैरकर्माणि । आपस्त १-१-३-१५

स्वैरिकम इति पाठान्तरम् ।

**स्वैरवाक्यम्** — प्रौढिवादः ।

न नर्मयुक्तं वचनं हिनस्ति न स्वैरवाक्यं न च मैथुनार्थे । इति प्रायश्चित्तविवेके यमः । ४३२

प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि अत्र स्वैरवाक्यं प्रौढिवाद इति गोविन्दानन्दः ।

**स्वैरिणी**— या स्वतः पुरुषान्तरं गच्छति ।

सा चतुर्विधा—

स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति ।

कामात् समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा ॥

कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता ।

पुनः पत्युर्गृहं यायात् सा द्वितीया प्रकीर्त्तिता ॥

मृते भर्त्तरि तु प्राप्तान् देवरादीनपास्य या ।

उपगच्छेत् परं कामात् सा तृतीया प्रकीर्त्तिता ।

प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा तु या ।

तवाहमित्युपगता सा चतुर्थी प्रकीर्त्तिता ।

स्वभर्त्तृव्यतिरिक्त चतुष्पुरुषगामिनी स्त्री स्वैरिणीति शूलपाणिः प्रायश्चित्तविवेके—३६१

पाण्डुस्तु पुनरेवैनां पुत्रलोभान् महायशाः ।

वक्तुमैच्छद्धर्मपत्नीं कुन्ती त्वेनमथाब्रवीत् ॥

१२२-७६

नातश्चतुर्थं प्रसवमापत्स्वपि भवन्त्युत ।

अतः परं स्वैरिणी स्याद् बन्धकी पञ्चमे भवेत् ॥

१२२-७७ इति

महाभारते आदिपर्वणि ।

भर्त्तृव्यतिरिक्तचतुष्पुरुषगामिनी स्वैरिणी भर्त्तृव्यतिरिक्त पञ्चपुरुषगामिनी बन्धकीति तयोर्भेदः प्रायश्चित्तविवेके प्रतिपादितः ।

# ( ह )

**हंस**— (१) सूर्यः ।

यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।

याम्या तिथिर्भवेत्सा हि गजच्छाया प्रकीर्त्तिता ॥

इतिमिताक्षरायाम् १-२१८

(२) जलचरपक्षिविशेषः ।

स च अभक्ष्यत्वेन मनुना प्रदर्शितः । ५-१२

स च विषं दृष्ट्वा स्खलद्गतिर्भवति ॥

गतिः स्खलति हंसस्य इ त मत्स्य पु २१८-२०

कोकिलशब्दे द्रष्टव्यम् ।

(३) संन्यासिविशेषः ।

तस्य वृत्तिमाह पितामहः ।

हंसाः कमण्डलुं शिक्यं यज्ञपात्राणि बिभ्रतः ।

ग्रामतीर्थैकरात्रश्च नगरे पञ्चरात्रिकाः ।

त्रिषड्रात्रोपवासाश्च पक्षामासोपवासिनः ।

कृच्छ्रसान्तपनाद्यैश्च व्रतैः कृशवपुर्धराः ॥

इति पराशरमाधवे ।

कुटीचकं तु प्रदेहत पूरयेत्तु बहूदकम् ।

हंसो जले तु निक्षेप्यः परहंसं प्रपूरयेत् ॥

इतिनिर्णयसिन्धौ । ३-३

त्यक्त्वा पुण्ड्रादिकं सर्वं योगमार्गव्यवस्थितः ।

इन्द्रियाणि मनश्चैव कर्षन् हंसोऽभिधीयते ॥

लघुविष्णु ४-१६

पुत्रादिकमितिपाठान्तरम् ।

**हंसपदम्**—परिमाणविशेषः कर्षपर्यायः खारीशब्दे द्रष्टव्यः

**हट्टः**—विपणी ।

संभ्रमे विषमे चैव दुर्गे चैव विशेषतः ।

हट्टपत्तनमार्गे च सम्भवं तु यथा भवेत् ॥

इतिपराशरमाधवे सम्वर्त्तः १२-१४

**हन्त** — मनु ययज्ञादौ मनुष्याय दानसूचकः शब्दः ।

प्राशन्नान्ते सर्वात्रसान् सर्वमन्नमेकतोद्धृत्यार्थेन प्राशयेत् ।

तूष्णीं हन्तेति वा हन्तकारं मनुष्या इति श्रुतेः ॥

पारस्करः १-१६-४

स्वाहाकारवषट्कार नमस्कारा दिवौकसाम् ।

स्वधाकारः पितृणां च हन्तकारो नृणां कृतः ॥

गोभिलस्मृतिः २-३६

**हन्त**— षोडशग्रामपरिमिता भिक्षा ।

ग्रासमात्रा भवेत् भिक्षा पुष्कलं तच्चतुर्गुणम् ।

हन्तस्तु तैश्चतुर्भिः स्यादग्रं तन्त्रिगुणं भवेत् ॥

इतिमिताक्षरायां शात तपः १-१०८

**हन्तकारः**—(१) हन्त इतिशब्दः "हन्तकारंमनुष्या इति श्रुतेः ॥

पारस्करः १-१६-४

श्रुतिश्चतस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं

वषट्कारं च। हन्तकारं मनुष्याः स्वधाकारं पितरः
इत गदाधरभाष्ये।

(२) षोड़शग्रासपरिमिता भिक्षा।

ग्रासप्रमाणा भिक्षा स्यादग्रं ग्रास चतुष्टयम।
अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः॥

इति पराशरः

ग्रासमात्रा भवेद् भिक्षा पुष्कलं तु चतुर्गुणम्।
पुष्कलानि चत्वारि हन्तकारं विदुर्बुधा। इति

**हरणी**— कुल्या।

हरणी कुल्या इति श्रीमूला।
हरणीपर्य्यन्ता हरितकानाम्। इति कौट।

२-२४-२२

**हरिणः** (१) हरितवर्णः।

आच्छादयसि प्रावारानश्नासि पिशितौदनम्।
आजानेया वहन्त्यश्वाः केनासि हरिणः कृशः।

महाभा, शान्ति १२४-१०

(२) ताम्रवर्णमृगः।

एणः कृष्णमृगो ज्ञेयस्ताम्रो हरिण उच्यते इत्यायुर्वेदस्मरणात् इतिमिताक्षराकाम् १-२५६

**हरिणी**—(१) हरितवर्णा।

प्रागस्तमयान्निष्क्रम्य समिध अहरेद्धरिणी ब्रह्मवर्चसकाम

इति श्रुतेः। काढ़कगृ १-१-२६

(२) सुवर्णप्रतिमा।

हिरण्यवर्णा हरीणीं सुवर्णरजतस्रजाम्। इति श्रीसूक्ते

हरिणः पुंसि सारङ्गे विशदे त्वभिधेयवत्।
हरिणी हरितायां च नारीभिद् वृत्तभेदयोः।
सुवर्णप्रतिमाया च इति मेदिनी॥

**हरितम्**— क्षेत्रस्थं धान्यम्।

हरिते क्षेत्रस्थे धान्ये इति कुल्लूकः॥

पुष्पेषु हरिते धान्ये गुल्मावल्लीनगेषु च।
अन्येष्वपरिपूतेषु दण्डस्तात् पञ्चकृष्णलः॥

मनुः ८-३३०

**हरितः**— मण्डपविशेषः राजधर्मकौस्तुभे-मण्डपलक्षणे ५

**हरितकम्**— शाक आर्द्रकादिः।

अन्यत्रमांसहरितक शुष्कशाकफलभक्ष्येभ्यः।

चरकः सू-८

**हरितधान्यम्**— स्तम्बेऽवस्थितव्रीह्यादि इति गौतमीये हरदत्तः॥

फलहरितधान्यशाकादाने पञ्चकृष्णलमल्पम्॥

गौतमः २-१-१५

क्षेत्रस्थमपक्वमिति मेधातिथिः।
हरितं माषातिशमी धान्यमिति मन्वर्थविवृतिः।
क्षेत्रस्थं धान्यमिति मन्वर्थमुक्तावलिः।
क्षेत्रस्थं घासरूपं धान्यमिति विवादरत्नाकरे॥
पुष्पेषु हरिते धान्ये॥ इति मनुश्लोकः हरित-शब्दे द्रष्टव्यः।

**हरितालिका—** भाद्रशुक्लतृतीया गौरीव्रतवासरः।
आलिभि हरिता यस्मात्तस्मात्सा हरितालिका।
इति तिज व्रतकथायाम् ।।

(२) भाद्रशुक्लचतुर्थी। इति कालसारे।
सा हरेः श्रीकृष्णस्या तालिका ताड़िका नाम अपवाद-दायिका इति व्युत्पत्तिः ।।
तत्र चन्द्रदर्शनं निषिद्धम्। दैवात् चन्द्रे दृष्टे धात्रेयिका वाक्यं पठेत् —यथा—
सिंहः प्रसेतमवधीत सिंहो जाम्बवता हतः।
सुकुमारक मारोदीस्तव ह्येष स्यमन्तक ।। इति

**हरिद्रान्नम्—** अन्नविशेषः।
संस्कृतं मथितं गव्यं तण्डुलानां चतुर्गुणम्।
ईषद्धरिद्रया युक्तं मरीचाजाजिसंयुतम्।
एतदुक्तं हरिद्रान्नं सुपक्वं पाचितं यथा।।
इति आचारेन्दौ पारिजातः १६७
अजाजीशब्दो द्रष्टव्यः।

**हरिमन्थः**
**हरिमन्थकः** } बुट इति भाषाशब्दप्रसिद्धः चणकविशेषः चन्द्रश्रीखण्ड़कस्तूरीकुङ्कुमागुरुकर्दमाः।
हरिमन्थसमाः प्रोक्तागुग्गुलुर्वदरीसमः ।।
इति सिद्धान्तशेखरे आहुतिमानम्।

**हरिवासरः—**एकादशी।
आपन्नाऽप्याब्दिकं नैव कुर्यादामेन कर्हिचित्।
अन्नेन तदमायां तु कृष्णो वा हरिवासरे ।।
इति श्राद्धदीपे।

**हर्पुलः—** परिहासशीलः।
हयं वा दन्तिनं वापि रथं वा नृपसत्तम।
अभिशेहन्त्यनाहृत्य हर्पुलेपार्थिवेमृदौ ।।
महाभा, शा ५६-५४

**हलाभियोगः—** कृषिप्रारम्भ इति गोभिलभाष्ये ४-४-२७
हलस्याभिमुख्येन योग इति शूलपाणिः।
हलाभियोगादिषु तु षट्सु कुर्यात पृथक् पृथक्,
इतिनान्दीश्राद्धमधिकृत्य श्राद्धविवेके छन्दोगपरिशिष्टवाक्यम्।

**हविः—** १) हविः हवनार्थं सिद्धं प्राक् होमात्
इति विज्ञानेश्वरः १-१७१
(२) मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम्।
अक्षारलवणं चैव प्रकृत्या हविरुच्यते ।। मनुः। ३-२५७
हविः सर्पिषि होतव्ये इति हेमः।

**हविर्धानम्—** यज्ञमण्ड़पविशेषः।

**हविर्भुजः—** क्षत्रियाणां पितरः।
सोमपानामविप्रापा क्षत्रियाणां हविर्भुजः ।।
वैश्यनामाज्यपानाम शूद्राणां तु सुकालिनः ।।
मनुः ३-१९७

**हविष्कृतम्**— हविष्ट्वेन परिकल्पतं पुरोडाशादि ।
हुतावशेष इति कुल्लूकः ।
न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् ।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ॥
मनुः ४-८०

**हविष्पान्तीयम्**— हविष्पान्तमजरं स्वर्विदि इत्येकोनविंशतिः (ऋक् ४-८०)
ऋच इति कुल्लुकः । नेय मन्त्रा ऋग्वेदस्य दशममण्डले ८८ सूक्ते द्रष्टव्या ।
हविष्पान्तीयमभ्यस्य नतमंह इतीति च ।
जपित्वा पौरुषं सूक्तं मुच्यते गुरुतल्पगः ॥
मनुः ११-२५१

**हविष्यम्**— हविषे योग्यम् ।
हविर्योग्यं हविष्यमिति विज्ञानेश्वरा इति कालसारे ।
हैमन्तिकं सिताखिन्नं धान्यं मुद्गास्तिला यवाः ।
कलायकङ्गुनीवारा वास्तुकं हिङ्मोचिका ॥
कालेयं कालशाकं च मूलकं केवुकेतरत् ।
कन्दं सैन्धवसामुद्रे लवणे दधिसर्पिषी ॥
पयोऽनुद्धृतसारं च पनसाम्रहरीतकी ।
पिप्पली जीरकं चैव नागरं तिन्तिड़ीफलम् ।
कदलीलवली धात्रीफलान्यगुड़मैक्षवम् ।
अतैलपक्वं मुनयो हविष्याणि प्रचक्षते ॥
इति काजसारे भविष्योत्तरम् ।

तत्र छन्दोगपरिशिष्टे—
हविष्येषु यवा मुख्या तदनु व्रीहय स्मृताः ।
माषकोद्रवगौराश्च सर्वालाभेऽपि वर्जयेत् ॥ इति

**हविष्यकल्पः**— कन्याया रजस्वलाहेतुकदोषनिवारणाय विहितं कर्म ।
अथातो हविष्यकल्पं व्याख्यास्याम इत्यादि ॥
काठकगृ २-७-१

**हविष्यपुण्याहम्**— हविष्यपुण्याहमिति कर्मनामधेयम् इति आदित्यनारायणभाष्ये । इयमपि पारिभाषिकी संज्ञा हविष्येण व्रीह्यादिना पुण्येहनि क्रियमाणताशब्द प्रवृत्तिनिमित्तमिति देवपालः ॥ काठकगृ २-८-१

**हव्यम्**— देवानामन्नम् ।
यस्यास्येन सदाश्नन्ति हव्यानि त्रिदिवौकसः ।
कव्यानि चैव पितरः किंभूतमधिकं ततः ॥
मनुः-१-९५

**हस्तः**— (१) करः ।
(२) हस्तानक्षत्रम् ।
सपिण्डीकरण श्राद्धमुक्तकाले न चेत्कृतम् ॥
रौद्रे हस्ते च रोहिण्यां मित्रमेवासमाचरेत् ॥
इति कालसारे गालवः ।
(३) चतुर्विंशतिरङ्गुलाः
वितस्तिद्वितयं हस्तश्चतुर्हस्तं धनुः स्मृतम् ।
स एव दण्डो गदितो विशेषज्ञैर्युधिष्ठिरं ॥
स्कन्द, आव रेवा २२७ ५६

**हस्तलाक्षः**— अधमजातिविशेषः ।

**हस्तिकर्णः**— एरण्ड इति शान्तिमयूखे ।
अश्वगन्धा हस्तिकर्णा हरिद्राद्वितयं तथा ।
इति तत्र शौनकः

**हस्तिपः**— हस्तिपालकः।

हस्तिपत्रात्यदासेपु इत्यादि मिताक्षरायाम् २-२१२

**हस्तोपयामः** — अङ्गुलिनमनम् इति कल्पतरुः।

नियत १०३

आचारादर्शे -- श्रीदत्तउपाध्यायोपि-३२

उदाहरणमस्य इन्द्राक्षशब्दे द्रष्टव्यम्।

**हाटकम्**— सुवर्णम्।

सर्वेषामेव दानानामेकजन्मानुगं फलम्।

हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ॥

सम्वर्त्तः ७६

बृहस्पतिस्मृतावपि-३३

**हानिः** — (१) लाभहानिः।

हानिः लाभहानिः क्षयः मूलहानिः इति चण्डेश्वरः।

विवादरत्नाकरः ११२

(२) मरणम्—

जन्महानौ वितानस्य कर्मलोपो न विद्यते।

शालाग्नौ केवलो होमः कार्य्य एवान्यगोत्रजैः ॥

इति जावालः मन्वर्थमुक्तावल्याम्। ५-८४

**हायनः**— सम्वत्सरः।

घृतकुम्भं वराहे तु तिलद्रोणं तु तित्तिरौ।

शुके द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायनम् ॥

मनुः ११-१३४

**हारीतः** }
**हारीतकः** } हरितपक्षः कपोताकृतिः पक्षिविशेष इति कल्पतरुः। हरड़पक्षी इति उत्कलेषु प्रसिद्धः

पात्रे कांस्ये तु हारीतः कपोतो रौप्यभाजने।

हृत्वा तु कांचनं भाण्डौ कृमियोनौ प्रजायते ॥

इति मार्कण्डेय १५-२६

**हिंसा**— (१) मरणानुकूलो व्यापारः।

या वेदविहिता हिंसा नियतास्मिन् चराचरे।

अहिंसामेव तां विद्याद् वेदाद्धर्मोहि निर्बभौ ॥

मनुः ५-४४

(२) प्राणिपीड़ा-समोभूतेपुहिंसानुग्रहयोः।

गोतमः १-३-२३

दशविधा हिंसा उद्वेगजननं सन्तापजननं रुजाकरणं, शोणितोत्पादनं, पेशुन्यकरणं सुखापकरणम् अतिक्रमः संरोधौ हि हितप्रतिषेध वध इति देवलः कृत्य-कल्पतरौ गार्हे -३०४

**हिंस्रा** -- क्षीणातिथिः।

खर्वासमतिथि ज्ञेया दर्पा वृद्धिमती स्मृता।

क्षीयमाणोतिथि हिंस्रा निर्णयः प्रागुदीरितः ॥

इति कालसारे बौधायनः।

**हिंकारः** - उदयपूर्ववर्त्ती दिवसस्य सप्तमोभागः हिंकार इत्युच्यते। तस्य यत्पुरोदयात् स हिंकार इति छान्दोगोपनिषत्, २-९-२

**हिड़मोचिका**— पत्रशाकविशेषः स्वनाम्ना लोके प्रसिद्ध

हविष्यद्रव्येषु तस्य पाठो विद्यते। हविष्यशब्दे।

गौडेषु हिलासा इत्याचारेन्दुः ॥

**हितम्**— पथ्यम्।

हितं वाच्यं प्रियं वाच्यं नवाच्यं हितमप्रियम्।

प्रियं च नानृतं वाच्यमेष धर्म सनातनः ॥

हितं ब्रूयात् प्रियं ब्रूयात् मितं ब्रूयात्तदर्थवत् ।
एवं वदति यो नित्यं स लोके पूज्यते बुधैः ॥
अभिलषितार्थचिन्तामणि । १-१-६४

सत्यां हितां वदेद् वाचं परलोकहितैषिणीम् ।
एष धर्मः समुद्दिष्टो ब्राह्मणस्य समासतः ॥
हारीतस्मृतिः १-३०

हिता— नदीमध्यसेतुरिति मन्वर्थविवृतिः ।
हिला इति व्यवहारककल्पतरौ पाठः ५५० ।
हिड़इति उत्कलेषु लोकभाषायाम् ॥
हिलाभङ्गः परक्षेत्रोत्पन्नशस्यनाशनमितिमेधातिथिः ।

हिताभङ्गः— जलसेतुभङ्ग इति कुल्लूकः ।
ग्रामघाते हिताभङ्गे पथि मोषाभिदर्शने ॥
शक्तितो नाभिधावन्तो निर्वास्या सपरिच्छदाः ॥
मनुः ६-२७४

हिरण्यम्— सुवर्णम् । हिरण्यं ब्राह्मणाय दद्यात् ॥
गौतमः ३-२-१२

हीनः— हीनवादी इति सरस्वतीविलासे प्रतापरुद्रः ।
अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः ।
आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः ॥
इति नारदः २-३३

सरस्वतीविलासे तु आहूतव्यपवायी इति पाठः ।
आहूतव्यपवायी- अभियोगपरिहारार्थमाह्वानं बुद्ध्वा प्रच्छन्नचारी ।

हीनपत्रकम् – पराजयपत्रम् ।
यस्तु व्यवहारे पराजितो भवति तस्मै हीनपत्रकं देयं कालान्तरे दण्डप्राप्त्यर्थम् ॥

हीनवादी— पूर्ववादं परित्यज्य योन्यमालम्बते पुनः ।
वादसंक्रमणाज् ज्ञेयो हीनवादी स वै नरः ॥
नारदस्मृतिः ।

यो वादी पूर्वपादलिखितप्रतिज्ञानार्थं साधयितुमसमर्थः अन्यपादाश्रितमभियोगमवतारयति स इति असहायभाष्ये ।

हुड़ः— आयुधविशेषः ।
लगुड़ानां गुड़ानां च हुड़ानां परिघैः सह ॥ इति
मात्स्ये २१६-३०

हुतः— होमः ।
जपोऽहुतो हुतो होमः प्रहुतो भौतिको बलिः ।
ब्राह्मयं हुतं द्विजाग्र्यार्चा प्राशितं पितृतर्पणम् ॥
मनुः ३-७४

हुतः होममात्रं यथा सायंप्रातर्होमः इति हरिहरः ।
चत्वारः पाकयज्ञाः हुतोऽहुतः प्रहुतः प्राशित इति
पारस्करः १-४-१

हुताशनी – रम्भातृतीया ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्विलेपिनम् ॥
इति तथितत्त्वे वृहस्पतिः । तथितत्त्व ५५
कृत्यतत्त्वार्णवे,च १०३
तत्र दौर्गनवमीति पाठः ॥

हुतोच्छिष्टः— आहवनीयादिरग्निरिति कालदीपे ।
अन्येन होमं कृत्वा परित्यक्ते इति लक्ष्मीधरः ॥
लौकिके वैदिके वापि हुतोच्छिष्टे जले क्षितौ ।
वैश्वदेवश्च कर्त्तव्य पञ्चसूनापनुत्तये ॥
वैश्वदेवं प्रकुर्वीत इति अत्रिस्मृतौ विशेषः २५६

**हृदयम्**— आम्रसदृशं हृदयकमलम् इति संस्कारप्रकाशे-मित्रमिश्रः।

**हेडः**— क्रोधः।

**हेडावुका**— देशान्तरं गत्वा प्रस्थाप्य वा अश्वविक्रेतारो हेड़ावुकाः॥

**हेतिः**— आयुधम्।

तवाहं वादिनं क्लीवं निर्हेतिपरसंगतम्।
न हन्याद् विनिवृत्तं च युद्धप्रेक्षणकादिकम्॥

इति याज्ञ १-३२६

**हेम**— सुवर्णम्।

तर्जनी रूप्यसंयुक्ता हेमयुक्ता त्वनामिका।
सैव युक्ता तु दर्भेण कार्य्या विप्रेण सर्वदा॥

इति विद्याकरधृतवचनाच्च तर्जन्यामेव रजतंधार्य्य-मिति वदन्ति। इति पूजापङ्कज-भास्करे। २२

**हेमन्तः**— पञ्चम ऋतुः।

पक्षान्तरे तृतीय ऋतुः त्र्यृतुः संवत्सरे ग्रीष्म वर्षा हेमन्त इति मिताक्षरायाम्। ३-५-२

**हैतुकः**— हेत्वाश्रयेण श्रुतिस्मृत्युक्तधर्मदोषयिता।

युक्तिवलेन सर्वत्रसंशयकारीति अपरार्क विज्ञानेश्वरौ। १-२१०

त्र्यैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः।
त्रयश्च श्रमिणः पूर्वे परिषत् स्याद्दशावरा॥

मनुः १२-१११

**हैमन्तिकम्**— हेमन्तपक्वम् शालिधान्यमित्यर्थः कालसारे।

तच्च हविष्यं हविष्यशब्दे द्रष्टव्यम्।

हैमन्तिकं धान्यं कलमा इति आचारेन्दौ।

**हैयंगवीनम्**— ह्यो गोदोहोद्भवम्।

दधि हैयंगवीनं च नवनीतं तथा गुड़म्।
नित्यं भुंङ्क्ते संयमी यो जरा तं नोपगच्छति॥

ब्रह्म, व १६-४५

**होढः**— (१) होढः अपहृतद्रव्यैकदेश इति वरदराजः।

चौर्यधनं चौर्यसाधनं चेति कुल्लूकः।

न होढेन विना चौरं घातयेद्धार्मिको नृपः॥
सहोढं सोपकरणं घातयेदविचारयन्॥

इति मनुः ६-२७०

मत्स्य पु २२६-१६५

(२) होढः-चोरलिङ्गम् इति व्यवहारकल्पतरौ। ५४१

(३) होढशब्दे न व्यभिचारितचिह्नमुच्यते।

व्यवहारकल्पतरौ ४२

**होढा**— लोप्त्रम्, लिङ्गमिति व्यभिचरितचिह्नमिति यावत इति विज्ञानेश्वरः २-५

**होता**— (१) होमकर्त्ता।

न वै कन्या न युवति नाल्पविद्यो न बालिशः।
होता स्यादग्निहोत्रस्य नार्त्तो नासंस्कृतस्तथा॥

मनुः ११-३६

(२) ऋत्विग्विशेषः।

यश्च वेद्युत्तरश्रोण्युत्तरतः प्राङ्मुखो दक्षिणोत्तरे-

णोपयस्थेन उपविशति अवकाशवदङ्गुलीसहितौ पाणी हृदयदेशे अङ्के वा धारयति समिधेनीः प्रयाजान् आज्यभागयाज्यापुरोनुवाक्याः सूक्तवाकं शंयुवाकं च पठति च स होतृपदवाच्य इति श्रौतपदार्थनिर्वचने

**होतृचमसः—** यज्ञपात्रविशेषः।

न्यग्रोधकाष्ठनिर्मितः चतुरस्रोऽल्पदण्डः।

ब्रह्मचमस इत्युच्यते ॥ मण्डलाकारः स दण्डः होतृचमस उच्यते ॥

**होतृसदनम्—** होतृसदनं नाम वेद्युत्तरश्रोण्युत्तरदेशः होतुरुपवेशनस्थानम् ॥

**होमः—** देवतोद्देश्येन प्रक्षेपान्तः स्वत्वत्यागो होम इति हेमाद्रिः परि ३६४

**होरा—** होरादिनपञ्चदशभाग इति परिभाषाप्रकाशे १७०

गुरुशुक्रबुधेन्दूनां द्रेक्काणा दिवसांशकाः।
तेषामुदयहोरा च पुंसवे च शुभावहा ॥ इति बृहस्पतिः

**होलाका—** होला कर्मविशेषः सौभाग्याय स्त्रीणां प्रातरनुष्ठीयते तत्र होलाके राका देवता । अन्ये तु क्वचिद्देशे राकाशब्देन क्वचिद्धोलाकशब्देन क्वचित्सुखकुमारीहोलेत्युच्यते इति देवपालः।

यथा काश्मीरेषु आश्वयुज्यां रात्रौ गृहद्वारोपान्तेषु अग्निप्रज्वालनम् इति काठकगृ ५-१६-१

**होलिका**
**होली** } वसन्तोत्सवः। वत्सरादौ वसन्तादौ इत्यादि।

फाल्गुनपूर्णिमापरदिने इति मयूखे पुराणसमुच्चये।

वृत्ते तुषारसमये सितपञ्चदश्यां
प्रातर्वसन्तसमये समुपस्थिते च।
संप्राश्य चूतकुसुमं सह चन्दनेन
सत्यं हि पार्थपुरुषोऽथ समासुखी स्यात् ॥

**ह्रदः—** स्तमितप्रवाहोऽतिगम्भीरजलो नद्येकदेशो उदकप्रवाहमिघातकृतसजलो महानिम्नमप्रदेशो ह्रद इति हेमाद्रिः

उदकप्रवाहाभिघातकृतसजलो महानिम्नप्रदेशो ह्रदः इति विज्ञानेश्वरः ५१-१५६

**ह्रासनम्—** लघुतासम्पादकं कर्म।

उद्वर्त्तनं नखच्छेदोदनमेव च
संस्रनं मेखलायाश्च ह्रासनानि विदुर्बुधाः ॥
इति गृह्यसंग्रहे-चन्द्रकान्तभाष्ये ॥ गोभिल २-४-६

**ह्रीः—** लज्जा।

ह्रीरकार्यनिवर्त्तनम् । इति महाभारते इति परिभाषा प्रकाशे ३४

**ह्रीतमुखः—** लज्जाकुलमुखः।

यां पराची तस्यै ह्रीतमुख इति तैत्तिरीयश्रुतिः पराचीं ग्रामाद्बहिर्गतामित्यर्थः।
उच्चारणभीत्या वा पराङ्मुखीमिति सायणभाष्ये।

**ह्रीदत्तम्—** ह्रिया दत्तम्।

श्रद्धया देयम् अश्रद्धया देयम् । श्रिया देयम्, ह्रिया देयम्, भिया देयम्, सम्विदा देयम्, तै, आ ७-११-३

ह्रीवेरम् - मुण्ड्बालेति कर्णाटकभाषया महाराष्ट्रभाषया करमाल इति प्रसिद्धमिति मित्रमिश्रः पूजाप्रकाशे ६५

अहोरात्रं न निर्माल्यं पालाशं ब्रह्ममूर्द्धनि ।
केतकं चैव ह्रीवेरं सुगन्धोत्पलमेव च ।।

इत्यादि तत्र विष्णुधर्मोत्तरे ।

स जयति परमात्मा सर्वभूतान्तरात्मा
जनहित धृतशर्मा तज्जलानीतिकर्मा ।
सुकृतकुकृतसाक्षी स्वर्गमोक्षप्रदाता
श्रुतिततिनिगीतः सर्वबन्धादतीतः ॥ १ ॥

कोषेष्वनालक्ष्य विशिष्टशब्दान् वासिष्ठव्याख्या-
परिभुक्त दुःखः ।
शब्दान् समाहृत्त मतस्तदर्थान् ताना निबन्धेषु
बुधैः प्रयुक्तान् ॥ २ ॥

स्वतः प्रवृत्तो भवमत्रकृत्ये धियावियुक्तोपि विधिप्रयुक्तः ।
किं केन सम्पादयितुं विधित्सुर्विधिर्भवत्यत्र नकोऽपि
वेत्ति ॥ ३ ॥

नाहं विपश्चिन्न च योगयुक्तः सहायवान् नापि च
रोगमुक्तः ।
न वित्तयुक्तो न विदग्धबुद्धिर्न देवताराधन-
जातसिद्धिः ॥ ४ ॥

कोरौरशेषैर्दिवसैरनेकै रात्रिंदिवं ग्रन्थविलोड़नेन ।
श्रीशप्रसादाद् गुरुवर्गतोषात् कथंचिदासं
परिपूर्णकर्मा ॥ ५ ॥

प्रायेण वर्षाणि चतुर्द्दशास्मिन् मयैव कृत्ये-
विनियोजितानि ।
सेवाप्रयुक्तान्यपि चावकाशे कर्मान्तराभ्यासपराहतानि॥
रजोगुणाश्लिष्टतया धियां चाभावादभावा बहवो
भवेयुः ।
तत् पूरयिष्यन्ति परे सुधीशा मत्प्रार्थना तेषु च-
सिद्धिमेतु ॥ ७ ॥

पवित्रभूमाविह्चोत्कलोर्व्यां हारिद्रदुर्गे भगवान्पुराख्ये
सच्छासने लब्धजनिर्द्विजेन्द्रान्वये चिराच्छुद्धतया-
प्रसिद्धे ॥ ८ ॥

भाग्योदयात् संस्कृतवित्ततोऽपि श्रीनीलशैलाधिप-
दर्शनाद्यः ।
तत् पादपद्मार्पितबुद्धिरद्धा श्रद्धापरः स्यामिति
मेऽनुबन्धः ॥ ६ ॥ इति ।

---

# धर्मशास्त्रशब्दकोषे उपयुक्तानां ग्रन्थानां सूची

(स्मृतिग्रन्थाः तट्टीकाश्च)

अङ्गिरः स्मृतिः—आड्यार् लाइब्रेरि माड्रास, १९५३, स्मृतीनां समुच्चयः—आनन्दाश्रम, १९०५

अत्रिसंहिता—स्मृतीनां समुच्चयः, आनन्दाश्रम, १९०५

अत्रिस्मृतिः—वीस् स्मृतियां—वरेलि, १९७१, स्मृतीनां समुच्चयः, १९०५

आङ्गिरसस्मृतिः ”

आपस्तम्बधर्मसूत्रम्—संस्कृतसिरिज्, वम्वे, १९३२

आपस्तम्बधर्मसूत्रस्य उज्ज्वलावृत्तिः—चौखम्बा, १९६९

आपस्तम्बधर्मसूत्र विवरणम्— ”

आपस्तम्बस्मृतिः—वीस् स्मृतियां, १९७१—स्मृतीनां समुच्चयः, १९०५

औशनसस्मृतिः—वीस्स्मृतियां, १९७१— ” ”

कात्यायनस्मृतिः— ”

कात्यायनस्मृतिः सारोद्वारः—काणे सम्पादितः, पुना

गोभिलस्मृतिः—स्मृत्यना समुच्चयः आनन्दाश्रम, १९०५

गौतमधर्मसूत्रम्— आनन्दाश्रमः, पुना, १९१०

गौतमधर्मसूत्रमिताक्षरा—चोखम्वा, १९६६

गौतमधर्मसूत्रमस्करीटीका—मैसूर, १९१७

गौतमधर्मसूत्रक्रियाकाण्ड ” ”

गौतमधर्मसूत्रपरिशिष्ट—माड्रास्, १९४८

चतुर्विंशतिमतसंग्रहः—विद्याविलासप्रेस्, वनारस, १९०८

दक्षस्मृतिः—वीसस्मृतियां, १९७१ । स्मृतीनां समुच्चयः, १९२५

देवलस्मृतिः— „

नारदस्मृतिः—प्रकाशक पि. सि. लाहिड़ि, प्रिन्सपाल, संस्कृतकलेज्, कलिकता

नारदीयमनुसंहिता—त्रिवेन्द्रम् १९१९

पराशरसंहिता—ओड़िआ प्रकाशन, कटक

पराशरमाधवभाष्यम्—वम्वे १९११, एसाइटिक् सीसाइटि, कलिकता, १९७१

पुलस्त्यस्मृतिः—वीस स्मृतियां, १९७१

प्रजापतिस्मृतिः—स्मृतीनां समुच्चयः, आनन्दाश्रम, १९०५

वृहद्यमस्मृतिः— „

वृहस्पतिस्मृतिः—वीसस्मृतियाँ, १९७१ । स्मृतीनां समुच्चयः, १९०५

बौधायन धर्मसूत्रम्—चौखम्वा, १९७२

बौधायनधर्मसूत्रविवरणम् „

बौधायनधर्मसूत्रटिप्पणी—चिन्मयस्वामी, १९७२

बौधायनस्मृतिः—वीस स्मृतीयां, १९७१ । स्मृतीनां समुच्चयः, १९०५

मनुस्मृतिः—गुजराटी प्रेस, वम्वे, १९१३

मनुस्मृतिमेधतिथिभाष्यम्—वम्वे, १९२०

मनुस्मृतिमन्वर्थमुक्तावली—गुजराती प्रेस, वम्वे १९१३

मनुस्मृतिः भावार्थचन्द्रिका—भारतीय विद्याभवन, वम्वे, १९७२

मनुस्मृतिः—राघवानन्द टीका— „ „

मनुस्मृतिः—गोविन्दराजटीका— „ „

यमस्मृतिः—वीस स्मृतिया, १६७१। स्मृतीनां समुच्चयः, १६०५

याज्ञवल्क्य स्मृतिः— निर्णयसागर प्रेस, वम्बे, १६४६

याज्ञवल्क्यस्मृतिः—मिताक्षरा— ,, ,,

याज्ञवल्क्यस्मृतिः मिताक्षराबालम्भट्टी—वम्बे, १६१४

याज्ञवल्क्यस्मृतिः—वीरमित्रोदयव्याख्या, चौखम्बा, १६२७

याज्ञवल्क्यस्मृतिः—अपरार्कव्याख्या, आनन्दाश्रम, १६०४

वृ. योगियाज्ञवल्क्यस्मृतिः—पुना, १६५१

लघुविष्णुस्मृतिः—स्मृतीनां समुच्चयः, आनन्दाश्रम, १६०५

लघुशङ्खस्मृतिः ,, ,, ,,

लघुहारीत स्मृतिः ,, ,, ,,

लघुशातातापस्मृतिः ,, ,, ,,

लघ्वाश्वलायनस्मृतिः वीसस्मृतियां, वरेलि १६७१।

लिखितस्मृतिः—वीसस्मृतियां, आनन्दाश्रम, १६०५

वसिष्ठस्मृतिः—पुना, भाण्डार कर, १६३०

विष्णुस्मृतिः, चौखम्बा—१६६२

विष्णुस्मृतिः केशववैजयन्ती—आड्यार लाइब्रेरि, माड्रास्, १६६४

वृद्धशातातपस्मृतिः—स्मृतीनां समुच्चयः, आनन्दाश्रम, पुना, १६०५

वृद्धहारीतस्मृतिः—स्मृतीना समुच्चयः ,, ,,

व्यासस्मृतिः—वीस् स्मृतयां ॥ स्मृतीनां समुच्चयः ,,

शङ्खलिखितस्मृतिः ,, ,,

शङ्खस्मृतिः—वींसस्मृतीयाँ १६७१ „ „

शातातपस्मृतिः „ „ „ „

संवर्त्तस्मृतिः—वींसस्मृतीयाँ „ „ „

हारीतस्मृतिः— „

(गृह्यसूत्रग्रन्थाः)

अग्निवेश्यगृह्यसूत्रम्—त्रिवेन्द्रम्—१६४०

आपस्तम्बगृह्यसूत्रम्—चौखम्बा—१६७१

आश्वलायनगृह्यसूत्रम्—चौखम्बा

आश्वलायन गृह्यसूत्रस्यअनाविलावृत्तिः

आश्वलायनगृह्यसूत्रगार्ग्यनारायणवृत्तिः—वाप्टिष्ट् मिसन् प्रेस, १८६६

काठकगृह्यसूत्रम्— लाहोर, १६२५

काठकगृह्यसूत्रम्—देवपालभाष्यम्— „

काठकगृह्यसूत्रम्—आदित्यदर्शनभाष्यम्— „

कौशिकगृह्यसूत्रम्—मोजाफरपुर, १६४२

कौशिकगृह्यसूत्रटीका „ „

गोभिलगृह्यसूत्रम्—मथुरापुर, १६४२

गोभिलगृह्यसूत्रचन्द्रकान्तटीका—वाप्टिष्ट् मिसन् प्रेस्, १६०८

पारस्करगृह्यसूत्रम्—विद्याविलासप्रेस्, बनारस्, १६२६

पारस्करगृह्यसूत्रकर्कभाष्य—गुजराटि प्रेस्, बम्बे, १६१७

पारस्करगृह्यसूत्रहरिहरभाष्यम्—विद्याविलास प्रेस, १६२६

पारस्करगृह्यसूत्रगदाधरभाष्यम्— ,, ,,

बैजवापगृह्यसूत्रम् ,, ,,

बौधायनगृह्यसूत्रम्—मैसुर, १९०४

मानवगृह्यसूत्रस्य अष्टावक्रभाष्यम्, सेण्ट्राल् लाइब्रेरि, बरोदा, १९२६

मैत्रायणीयमानवगृह्यसूत्रम्—बरोदा, १९२६

लौगाक्षीगृह्यसूत्रम्—निर्णय सागर प्रेस्, १९२८

वराहगृह्यसूत्रम्—मोजाफरपुर, १९१४

वैखानस गृह्यसूत्रम्— ,,

शाङ्खायन गृह्यसूत्रम्—बनारस, १९०८

(इतरसूत्रग्रन्थाः)

कात्यायनशूल्वसूत्रम्—चौखम्बा, १९१९

कात्यायनश्राद्धसूत्रम्—विद्याविलास प्रेस, १९२६

कात्यायनश्रौतसूत्रम्—चौखम्बा संस्कृत सिरिज्, १९२८

कत्यायनस्नानसूत्रम्—विद्याविलास प्रेस्, १९२६

बौधायनशूल्वसूत्रम्—प्राचीनवैज्ञानिकाध्ययन—अनुसन्धान संस्थान, (कलिकता), १९६८

शाण्डिल्यभक्तिसूत्रम्—वाराणसेय संस्कृत विश्वविद्यालय, १९२७

(अर्थशास्त्राणि)

अभिलषितार्थचिन्तामणिः

कौटलीयमर्थशास्त्रम्—चौखम्बा संस्कृत सिरिज्, वाराणसी

कौटलीयार्थशास्त्रटीका (श्रीमूला) त्रिवेन्द्रम्, १९२४

कौटलीयार्थशास्त्रम् - वम्बे, युनिभरसिटि, १६६८

वार्हस्पत्यार्थशास्त्रम्—मोतिलाल वनारसी दास, १६२१

शुक्रनीतिसारः—जीवानन्द प्रकाशित, १८६०

शुक्रनीतिसारः— नूतन प्रकाशनम्

(वेदाः)

अथर्ववेदः—स्वाध्याय मण्डल, पारड़ी

ऋग्वेदः—स्वाध्यायमण्डल, पारड़ी

ऐतरेयब्राह्मणम्—आनन्दाश्रम १७६६

कठोपनिषत्— गीता प्रेस्

कठोपनिषद्भाष्यम्— ,,

छान्दोग्योपनिषत्— ,,

छान्दोग्योपनिषच्छाङ्करभाष्यम्— ,,

तैत्तिरीय संहिता—— आनन्दाश्रम पुना १६००

वृहदारण्यकोपनिषत् —गीताप्रेस्

मन्त्रार्थदीपिका—चौखम्बा १६६७

मुण्डकोपनिषत्—गीता प्रेस्

शुक्लयजुःप्रातिशाख्यम्—गयाघाट वाराणसी, १६७५

शुक्लयजुर्वेदसंहिता— निर्णयसागर प्रेस्, १६२६

शुक्लयजुर्वेदमहीधरभाष्यम्— ,,

सामविधानब्राह्मणम्—केन्द्रीय संस्कृत विद्यापीठ तिरुपति, १६६४

सामवेदः—स्वाध्यायमण्डल, पारड़ी

(पुराणानि)

अग्निपुराणम्—आनन्दाश्रम १९००—नूतन प्रकाशनम्

अध्यात्मरामायणम्—गीता प्रेस,

कालिकापुराणम्—चोखम्बा संस्कृत सिरिज्, १९७२

कूर्मपुराणम्—वेङ्कटेश्वर प्रेस, वम्बे, १९६२ संवत्

देवीपुराणम्—केन्द्रीय संस्कृत विद्यापीठ, दिल्ली, १९७२

देवीभागवतम्— वेङ्कटेश्वर ष्टीम् प्रेस, १८४७ शकाब्द

देवीभागवतटीका— "

नरसिंहपुराणम्—गीता प्रेस

पद्मपुराणम्—आनन्दाश्रम, १८९४

पुरुषोत्तमक्षेत्रमाहात्म्यम्—लक्ष्मीवेङ्कटेश्वर प्रेस, १९६६ संवत्

वृहद्देवता – चौखम्बा संस्कृत सिरिज्, १९६३

वृहद्धर्मपुराणम् एसाइटिक् सोसाइटि. १८९५

वृहन्नारदीयपुराणम्—चोखम्बा-अमरभारती, १९७५

व्रह्मपुराणम्—वेङ्कटेश्वर प्रेस्, वम्बे

व्रह्मवैवर्त्त पुराणम्—लक्ष्मी—लक्ष्मी वेङ्कटेश्वर प्रेस, वम्बे

व्रह्माण्डपुराणम्—मोतिलालवनारसीदास, १९७१

भगवद्गीता विहारिलालटीका—कटक, १९६९

भगवद्गीता शाङ्करभाष्यम्—गीता प्रेस

तात्पर्य्यचन्द्रिका टीका— "

भविष्यपुराणम्—आनन्दाश्रम, १६०७

मत्स्यपुराणम् –आनन्दाश्रम १६०७

महाभारतम्—लक्ष्मीवेङ्कटेश्वर प्रेस् बम्बे, १८५३ शकाब्द

गीताप्रेस् प्रकाशन २०१३ संवत्

महाभारत नीलकण्ठटीका—लक्ष्मीवेङ्कटेश्वर प्रेस्, १८५३ शकाब्द

मार्कण्डेयपुराणम्—एसाइटिक् सोसाइटि १८६२ नूतन प्रकाशनम्

रामायणम् – गीता प्रेस्

वामनपुराणम्—गीता प्रेस

बायुपुराणम् —एसाइटिक् सोसाइटि, १८८०

वराहपुराणम्—एसाइटिक सोसाइटि

विष्णुपुराणम्— गीताप्रेस

विष्णुपुराण (हिन्दिव्याख्या) „

विष्णुधर्मोत्तरपुराणम्—ओरियेण्टालइन्ष्टिच्युट् वरोदा, १६५८

शिवपुराणम् „ „

श्रीमद् भागवतम् „ „

श्रीमद्भागवत श्रीधरस्वामीव्याख्या—राएप्रेस् कटक १८६५

स्कन्दपुराणम्—वेङ्कटेश्वर प्रेस् १८३७

अनन्तव्रत कथा—कोहिनूर प्रेस, कटक, १६३६

तिजव्रत कथा—पुरी, १८४८

नीलाद्रिमहोदय—सोनपुर, १३२६ साल

(स्मृतिनिबन्धग्रन्थाः)

आचारभूषणम्—आनन्दाश्रम, १६०८

आचाररत्नम्— श्री वेङ्कटेश्वर प्रेस, १६१५

आचारसारः—एसाइटिक् सोसाइटि, १६०५

आचारादर्शः—वेङ्कटेश्वर प्रेस, १८२६ शकाब्द

आचारेन्दुः—आनन्दाश्रम, पुना, १६०६

कल्यापद्धर्मसर्वस्वम्—एसाइटिक्सोसाइटि, १३३१ साल

कालदीपः—निजपाण्डुलेखः

कालमाधवः —लक्ष्मीवेङ्कट प्रेस, कल्याण, बम्बेइ, १८३८ शकाब्द

कालसारः—एसाइटिक् सोसाइटि, १६०४

वामण्डा प्रकाशन—१८६८

धर्मग्रन्थ ष्टोर —१६६८

कुलोचितधर्मशिक्षा—लक्ष्मी १६१०

कृत्यकल्पतरुः—गाएकवाड् वरोदा १६४५

कृत्यकौमुदी—तालपत्र पोथि

कृत्यतत्त्वार्णवः—एसाइटिक सोसाइटि, १६७५

कृत्यरत्नाकरः— ,, १६२५

गृहस्थरत्नाकरः— ,, १६२८

चतुवर्ग चिन्तामणिः—(हेमाद्रिः) गणेश प्रेस, कलिकता, १८७१

व्रतखण्डम्— ,,

व्रतखण्डम्— ,,

परिशेषखण्डम्— ,,

दानखण्डम् — ,,

प्रायश्चित्तखण्डम्— ,,

जातभास्करः—क्षेमराज-बम्बे १९८३ संवत्

तीर्थचिन्तामणिः—एसाइटिक सोसाइटि, १९१२

त्रिकाण्डमण्डनम्— ,, १९०३

त्रिस्थली सेतुः—आनन्दाश्रम, पुना, १९१५

दण्डविवेकः—बरोदा, १९३१

दानक्रियाकौमुदी—एसाइटिक सोसाइटि, १९०३

दायभागः— कलिकता, १८९३

दायभाग रघुनन्दनटीका— ,,

दायभाग श्रीकृष्णटीका— ,,

दायभाग श्रीनाथटीका— ,,

दीक्षाप्रकाशः—बनारस, १९३४

द्वैतनिर्णयः—काशी, १९५५ संवत्

धर्मकोशः— प्रज्ञाप्रेस, गङ्गापुरी, १९९७ संवत्

व्यवहारकाण्डम्— ,,

संस्कारकाण्डम्— ,, १९४५

धर्मशास्त्रसंग्रहः—वेङ्कटेश्वर प्रेस, १९१३

धर्मशास्त्रेतिहासः—(काशी) (हिन्दी अनुवाद) लक्ष्णौ, १९७५

धर्मसिन्धुः—चोखम्बा, १९६८

नित्याचारपद्धतिः—(विद्याकर वाजपेयी) एसियाटिक सोसाइटि, १९०३

नित्याचारप्रदीपः—नरसिंहवाजपेयीकृतः ” १९२८

निर्णयसिन्धुः—निर्णसागर प्रेस—१९०४

निर्णयसिन्धु कृष्णभट्टटीका—चोखम्बा १९८६ संवत

पण्डितसर्वस्वम्—हरनाथ प्रेस कटक, १९६३

पुरुषार्थचिन्तामणिः—निर्णयसागर प्रेस, १९२७

पुरुषार्थचिन्तामणि—चिन्तामणि पट्टनायककृतः कलिकता, १९३१

पूजापङ्कजभास्करः—वेङ्कटेश्वर प्रेस, १८३३ शकाद्व

प्रयोगपारिजातः— ,, ,,

प्रायश्चित्तमनोहरः—काहु मिश्रकृतः उत्कलप्रकाशितः

प्रायश्चित्तविवेकः—जीवानन्द प्रकाशितः १८९३

प्रायश्चित्तविवेकव्याख्या— ,,

प्रायश्चित्तेन्दुशेखरः—आनन्दाश्रम १९३१

भगवन्तभास्कर—गुजुराटि प्रिण्टिङ्ग् प्रेस, वम्वे, १८८४

मदनपारिजातः—एसियाटिक सोसाइटि

राजधर्म कौस्तुभः—गाएक वाड, वारोदा

वर्षक्रिया कौमुदी—चौखम्वा

विप्रस्मृतिया—संस्कृत संस्थान, वरेलि, १९७१

विधान पारिजातः—एसियाटिक् सोसाइटि, १९५१

विवाद रत्नाकरः—चौखम्बा, १९३१

विवादार्णव सेतुः ,,

वीरमित्रोदतयः—चोखम्बा संस्कृतःसिरिज वनारस्, १९०६

व्यवहारचिन्तामणिः— ,, ,,

व्यवहार निर्णयः—आड्यार् लाइब्रेरि माड्रास्

व्यवहारमाला—आनन्दाश्रम

व्यवहार समुच्चयः—,,

शम्भुकरवाजपेयीकृतश्राद्धपद्धतिः—पाण्डुलेखः

शाश्वतधर्मदीपिका—वनारस्

श्राद्धदीपः—स्वहस्तलेखः

श्राद्धविवेकः—शूलपाणिकृतः (वङ्ग प्रकाशकः)

श्राद्धविवेक व्याख्या श्रीकृष्णतर्कालंकार कृत्य (वङ्ग प्रकाशकः)

संस्काररत्नमाला—चोखम्वा

समयप्रदीपः—एसियाटिक् सोसाइटि

सरस्वतीविलासः—गमर्णमेण्ट प्रेस, महीशूर

सूरिसर्वस्वम्—भुवनेश्वर, १९७४

स्मृतिचन्द्रिका—गमर्णमेण्ट प्रेस, महीशूर, १९०४

स्मृतितत्त्वम्—सिद्धेश्वर प्रेस, कलिकता

संस्कारतत्त्वम्—ओरिएण्टेल प्रेस, कलिकता

स्मृतिप्रकाशः—एसियाटिक् सोसाइटि

स्मृतीनां समुच्चयः—आनन्दाश्रम, पुना, १९०५

स्मृत्यर्थसारः—श्रीधराचार्य्यस्य आनन्दाश्रम, पुना १९१२

हारलता—एसियाटिक सोसाइटि १९०८

(मीमांसाव्याकरणादिग्रन्थाः)

जैमिनिसूत्रम्—मेड़िकालहल प्रेस, वनारस, १९२३

पातञ्जलमहाभाष्यम्— हरिआना, १९६२

पातञ्जलमहाभाष्य—नागेशव्याख्या— ,,

पातञ्जलमहाभाष्य—प्रदीप व्याख्या— ,,

मीमांसानुक्रमणिका—चोखम्वा १९२८

रुद्रदाम्न शिलालेखः—हिष्टोरिकाल आण्ड़ लिटेरारि इन्ष्टिच्युट, राजबलिपाण्डेयकृत, चौखम्वा १९६२

वेदान्त दर्शनम्—गीताप्रेस

शङ्करदिग्विजयः—निर्णयसागर प्रेस, वम्वे

शास्त्रदीपिका—निर्ण्णयसागर प्रेस, वम्वे, १९१५

श्रौतपदार्थनिर्वचनी (शुन्नस्वामिकृता)

हर्षचरितम्—कलिकता वाचस्पत्य प्रेस, १९०३

चरक संहिता—कलिकता, १८५० शकाब्द

भावप्रकाशः—वेङ्कटेश्वर, १९७० संवत्

वाग्भटः— निर्ण्णयसागर प्रेस, वम्वे, १९१५

सुश्रुत संहिता— ,,

सुश्रुतस्य इन्दुटीका—निर्णयसागर प्रेस, वम्वे, १७३७

संगीतरत्नाकरः—आड्यार लाइब्रेरी, माड्रास, १९५७

(ज्योतिःशास्त्रम्)

मुहूर्त चिन्तामणिः— निर्णयसागर प्रेस, १६१४

मुहूर्त चिन्तामणिटीका— ,,

राजमार्त्तण्डः—वेङ्कटेश्वर प्रेस, १८१४ शकाब्द

सिद्धान्तदर्पणः—कटक, १८६६

सिद्धान्त शिरोमणिः—हिन्दुविश्वविद्यालयः, वाराणसी, १६६४

(कोषादिग्रन्थाः)

अमरकोषः— निर्णयसागर प्रेस, १६४४

अमरकोश व्याख्या सुधा— ,,

गोपिकामोहनकोषः— ,,

त्रिकाण्डशेषः—वेङ्कटेश्वर प्रेस, १६१६

निरुक्तम्— निर्णयसागर प्रेस, १६३०

निरुक्त दुर्गवृत्तिः— ,,

मेदिनीकोषः—कलिकता, १८७२

विश्वकोषः—कलिकता, १६१२

वैद्यकशब्दसिन्धुः— ,,

शब्दकल्पद्रुमः—मोतिलाल वनारसी दास चोखम्वा १६६१

१६६७

हलायुधकोषः—सरस्वतीभवन वाराणसी, १८७६ शकाब्द

हलायुधकोशविजयशङ्कुव्याख्या—लक्ष्नौ, २०१४ संवत्

———